[ 33 ] रूपे त्वनिवृताख्येन दृष्टमव्याकृतेन यत् ।
आरूप्याव्याकृते हित्वा तदन्यैः स्मर्यते पुनः ॥

यत्खलु रूप(3)धातौ अनिवृताव्याकृतेनानुभूतं तदारूप्याव्याकृते हित्वा तदन्यैर्दशभि स्मर्यते ॥

[ 34 ] आरूप्याव्याकृतज्ञातं यश्चैतो नवकेन तत् ।
कामाप्ताव्याकृते हित्वा रूपाप्तानिवृतं तथा ॥

गतमेतदौपोद्घातिकं प्रकरणम् । प्रकृतमेवाभिधीयताम् ॥

य एतेऽष्टादशधातव एषां कति सालम्बनाः कत्यना(4)लम्बनाः कत्युपात्ताः कत्यनुपात्ताः कति सचिताः कत्यसंचिताः ? तदिदमारभ्यते ।

[ 35 ] चित्ताख्याः सप्त सालम्बा धर्माख्यः संप्रयुक्तकः ।

सालम्बना इति वर्तते । शेषास्त्वनालम्बना विषयाग्रहणात् ॥

अमूर्ता ध्वनिना सार्धमनुपात्ताः

य एते सप्तचित्तधातवो धर्मधात्वर्धेन सहोक्तास्ते शब्देन (5)सहानुपात्ताः । अतोऽन्ये

नव द्विधा ॥[1]

ये सन्तानाधिरोहिनः(णः) प्रत्युत्पन्नाश्चक्षुरादयस्तदविनिर्भागिणश्च रूपादयः । शेषास्त्वनुपात्ताः । निश्चेतनत्वादनात्मभावपर्यापन्न[त्वा]च्च । शेषा ये बाह्याः कायेन्द्रियसंतानव्यतिरेकवर्तिनस्तेऽनुपात्ता इति सिद्धम् ॥

कति भूतानि कति भौतिकाः ? तत्राप्युच्यते ।

[ 36 ] (6)स्पृश्यं द्विधा

अत्र भूतानि चत्वारि भौतिकं च गुरुत्वादिसप्तप्रकारम् ।[2]

---

[1] Cf सप्त सालम्बनाश्चित्तधातवोऽर्धं च धर्मत ।
नवानुपात्तास्ते चाष्टौ शब्दश्चान्य नव द्विधा ॥

(3)...आलम्बन पच्चंनमित्रस्वभावम् । (4)...उपात्तमिति कार्थं ? यच्चित्तचैत्तैरधिष्ठानभावेनोपगृहीतमनुग्रहोपघाताभ्यामन्योन्यानुविधानात् । यल्लोके सचेतनमित्युच्यते । *Akb* I 34 See, *Dhs* 1185-1186 and *Aam* p 58

[2] श्लक्ष्ण-कर्कश-गुरुत्व लघुत्व शीत बुभुक्षा पिपासा ।

संधर्मांशाः सह ता नव भौतिकाः ।[1]

सह धर्मधात्वंशेनाविज्ञप्त्याख्येन 'स[ह] ता नव भौतिकाः' ॥

एवं कति मूर्ताः ?

दश सावयवा मूर्ताः

शेषास्त्वमूर्ताश्चक्षुर्विज्ञानधात्वादयः ।

त एव दश संचिताः ॥[2]

परमाणु(णु)संघाता(7) इत्यर्थः । त एवाष्टौ चक्षुर्विज्ञानधात्वादयो [हित्वा शेषा दश] संचिताः ॥

कति च्छेत्तारः कति च्छेद्याः, कति दग्धारः कति दाह्याः, कति तोलयितारः कति तोल्याः ? तदिदमत्रोच्यते ।

[ 37 ] रूपगन्धरसस्पर्शाश्छेत्तृच्छेद्यात्मका मताः ।
दाहकास्तोलकाश्चैते दाह्यास्तोल्यास्त एव वा ॥[3]

'वा' शब्दो मतविकल्पार्थः । केषा(8)ञ्चित्तेजोधातुरेव दग्धा गुरुत्वमेवा(व) तोल्यम् ॥[4]

कति विपाकजाः कत्यौपचयिकाः ?

[ 38 ] पञ्च रूपीन्द्रियात्मानो विपाकोपचयात्मकाः ।

---

[1] Cf. स्प्रष्टव्यं द्विविधं शेषा रूपिणो नव भौतिकाः । धर्मधात्वेकदेशश्च । पञ्चेन्द्रियधातवश्च चत्वारो विषयाः । एते नव धातवो भौतिका एव । *Akb.* I. 35 abc.

The *Akb.* I 35 c contains a discussion on the *bhūta-bhautikavāda* भूतमात्र दशायतनानीति भदन्तबुद्धदेवः । तच्च नैवम् ··। This view of Buddhadeva is referred to in the *Adv. kārikā* 116.

[2] Cf. सञ्चिता दश रूपिणः । *Ak.* I. 35d.

[3] Cf. छिनत्ति छिद्यते चैव वाह्यं धातुचतुष्टयम् ।
दह्यते तुलयत्येवं विवादो दग्धृतुल्ययोः ॥ *Ak.* I. 36.

[4] केचिदाहुः । तदेव धातुचतुष्टय दाहकं च तुल्यम् । केचिदाहुस्तेजोधातुरेव दग्धा गुरुत्वमेव च तुल्यमिति । *Akb.* I. 36.

[1] चक्षुर्धातुं तावल्लभते न चक्षुर्विज्ञानधातुम्। कामधातौ क्रमेण(ण) चक्षुरिन्द्रियं प्रतिलभमानः, आरूप्यधातुच्युतश्च द्वितीयादिषु ध्यानेषूपपद्यमानः। स्याच्चक्षुर्विज्ञानधातुना न चक्षुर्धातुना। द्वितीयादिषु ध्यानेषूपपन्नश्चक्षुर्विज्ञानमसंमुखीकुर्वाणः। ततश्च्युतश्चाधस्तादुपपद्यमानः(3)। उभाभ्यामपि—आरूप्यधातुच्युतः कामधातौ ब्रह्मलोके चोपपद्यमानः। नोभाभ्याम्—एतानाकारान् स्थापयित्वा।

यश्च[क्षु]र्धातुना समन्वागतः चक्षुर्विज्ञानधातुनापि सः? चतुष्कोटिकः।[2] प्रथमा—द्वितीयादिषु ध्यानेषूपपन्नश्चक्षुर्विज्ञानमसंमुखीकुर्वाणः। द्वितीया—कामधातावलब्धि(ब्ध)विहो(4)नं (न) चक्षुः। तृतीया—कामधातौ लब्धाविहीनश्च(न च)क्षुः प्रथमध्यानोपपन्नो द्वितीयादिध्यानोपपन्नश्च पश्यन्। चतुर्थी—एतानाकारान् स्थापयित्वा॥[1]

गतमेतत्। प्रकृतमिदानीमनुवर्त्यताम्। कत्याध्यात्मिकाः कति बाह्याः?[3]

द्वादशाध्यात्मिका ज्ञेयाः[4]

पञ्चेन्द्रियात्मिकः सप्तचित्तधातु(त)वश्च, अहंकारसंश्रि(5)श्रयत्वात्। "आत्मना हि सुदान्तेन स्वर्गं प्राप्नोति पण्डितः।" इति।[5]

बाह्याष्षड्विषयात्मकाः॥

कति दर्शण(न)हेयाः कति भावनाहेयाः कत्यहेयाः?[6] तदारभ्यते।

[ 40 ] त्रयोऽन्त्यास्त्रिविधाः

मनोधातुर्मणो(नो)विज्ञानधातुर्धर्मधातवस्त्रिप्रकाराः। अष्टाशीत्यनुशयसहचरिष्णवस्तत्प्राप्तयश्च दर्शण(न)(6 हेयाः।

---

[1] This whole *Adv.* (from चक्षुर्धातुं तावल्लभते to चतुर्थी—एतानाकारान् स्थापयित्वा) is almost identical with *Akb.* I. 38 cd.

[2] प्रथमे चतुष्कोटिके प्रतिलम्भोऽधिकृतो द्वितीये तु प्राप्तिमात्रम्। *Sakv.* p. 73.

[3] See *Dhs* 1207, 1208 and *Aam* p. 58.

[4] Cf. द्वादशाध्यात्मिका हित्वा रूपादीन्

आत्मन्यसति कथमाध्यात्मिकं बाह्यं वा। अहंकारसंनिश्रयत्वाच्चित्तमात्मेत्युपचर्यते। "आत्मना हि सुदान्तेन…" अत्र आत्मभूतस्य चित्तस्याश्रयभावेन प्रत्यासन्नत्वात्। *Akb.* I. 39 ab

[5] Cf. अत्तनाव सुदन्तेन नाथं लभति दुल्लभं। *Dhammapada*, XII 4.

[6] See *Dhs.* 1002—1008 and *Asm.* p. 26.

शेषा भावनापथसंचयाः ।

ये सास्रवाः । ये त्वनास्रवास्तेऽप्रहेया निर्दोषत्वात् ॥

न रूपमस्ति दृग्घेयं नाक्लिष्टं नाविकल्पकम् ॥[1]

पृथग्जनत्वमिति चेत् ।[2] न । तस्यानिवृताव्याकृतत्वात्, समुच्छिन्नकुशलमूलवीतरागाणामपि तत्समन्वागमात् । आपायिकं च कायवाक्कर्मरूपस्व(7)भावं तदप्यार्यमार्गविरोधित्वाद्विहीनं न तु प्रहीणं(णं) तस्मादुभयं न दर्शन(न)हेयं सत्येष्वविप्रतिपत्तेः । दुःखधर्मज्ञानक्षान्तौ पृथग्जनत्वप्रसंगाच्च ।

पञ्चविज्ञानकाया [अ]विकल्पकास्तेऽपि न दर्शन(न)हेयाः ॥

कति सभागाः कति तत्सभागा ?

[ 41 ] सभाग एव धर्माख्यः शेषास्तूभयथा स्मृताः । [3]

(8)धर्मधातुवर्ज्या अन्ये धातवो द्विधाः । सभागास्तत्सभागाश्च ॥

कः पुनः सभागार्थः को वा तत्सभागार्थः ?

सभागस्तत्सभागत्वे स्वक्रियाभाक्त्व तुल्यते ॥[3]

---

[1] Cf दश भावनया हेया पञ्च चान्यास्त्रयस्त्रिधा ।
न दृष्टिहेयमक्लिष्टं न रूपं नाप्यषष्ठजम् ॥ *Ak.* I 40.

[2] ननु चान्यदपि दर्शनप्रहातव्यमस्ति पृथग्जनत्वमापायिकं च कायवाक्कर्म । आर्यमार्गविरोधित्वात् तद् दर्शनप्रहातव्यम् । *Akb.* I 40a

ननु चान्यदपीति विस्तर । पृथग्जनत्वमनिवृताव्याकृतस्वरसस्वभावत्वाद् भावनाहेयमभ्युपगतम् । अपायसंवर्तनीयं च कायवाक्कर्म रूपस्वभावत्वाद् भावनाहेयमुक्तमिति । अनवबोधयन्ति वात्सीपुत्रीयाः । आर्यमार्गविरोधित्वादिति । पृथग्जनत्वमार्यमार्गोत्पादे न भवति । नियते चापायिके कर्मणि सत्यार्यमार्गो नोत्पद्यते । आर्यमार्गोत्पादे च तदापायिकं कर्म नोत्पद्यते । तस्मात् सत्कायदृष्ट्यादिवत्तदुभयं दर्शनहेयमिति वर्णयन्ति । तत्प्रतिषेधार्थमुक्तमप्येतत् ।.... समुच्छिन्नकुशलमूला कुशलैर्धर्मैरसमन्वागता दृष्टा । पृथग्जनत्वेन तु समन्वागता । यस्मात् ते पृथग्जना इष्यन्ते । तस्मान्न कुशलं पृथग्जनत्वम् । क्लिष्टमपि तन्न भवति । वीतरागाणामपि तेन समन्वागमात् । *Sakv.* pp. 77-8

[3] Cf सभागस्तत्सभागोऽपि शेषो यो न स्वकर्मकृत् ।

या हि विषयो यस्य विज्ञानस्य नियतो यदि तत्र तद्विज्ञानमुत्पन्नं भवत्युत्पत्तिधर्मि वा तत्र स विषयः सभाग इत्युच्यते । न च सोऽस्ति कश्चिद्धर्मधातुर्यत्र नानन्तं मनोविज्ञानमुत्पन्नमुत्पत्स्यते वा ।......तस्माद्धर्मधातुर्नित्यं सभागः । *Akb.* I. 39 cd.

यः स्वक्रियां भजते स सभाग इत्युच्यते। यः स्वक्रियाविरहितः स तत्सादृश्यमात्रभजमानत्वात् तत्सभाग इत्याख्यायते।[१]

[(1)]अत्र सभागस्त्रिविधः। अन्यस्तु स्वक्रियाभेदेन वाच्यः। एवं तत्सभागः क्रियाविरहितो वाच्यः। अनुत्पत्तिधर्मकं चतुर्थमिति काश्मीराः॥[२]

·कति दृष्टिः कति न दृष्टिः?

[ 42 ] चक्षुः सधर्मधात्वंशं नवधा दृष्टिरुच्यते।[3]

चक्षुस्तावल्लोकेऽपि दृष्टिरिति प्रतीतम्। धर्मधातोरपि प्रदेशो [I. A, 6 Fol. 35 b.] दृष्टिस्वभावोऽष्टविधः[४] क्लिष्टाक्लिष्टप्रज्ञात्मकः। शेषस्तु न दृष्टिः।

पाञ्चविज्ञानकी प्रज्ञा न दृष्टिरणि(नि)तीरणात्॥[५]

नितीरिका हि दृष्टयो विचारणाश्रयात्। सा त्वविकल्पिका जडस्वभावा। अत्यल्पमिदमुच्यते। मनोविज्ञानभौम्यभिरासादिसंप्रयुक्ता[(2)] न दृष्टिश्च(रि)त्युपसंख्यातव्यम्॥

कथं पुण(न)रेताः प्रज्ञाः पश्यन्ति? तदिदमाविष्क्रियते।

[ 43 ] समेघामेघरात्र्यह्नोर्दश्यं चक्षुर्यथेक्षते।
क्लिष्टाक्लिष्टदृशौ तद्वच्छैक्षाशैक्षे च पश्यतः॥[६]

---

[१] Cf. सभाग इति कोऽर्थः। इन्द्रियविषयविज्ञानानामन्योन्यभजन कारित्रभजन वा भाग। स एषामस्तीति सभाग.। स्पर्शसमानकार्यत्वाद्वा। ये पुनरसभागास्ते तेषा सभागानां जातिसामान्येन सभागत्वात् तत्सभागाः। *Akb.* I. 39 cd.

[२] Cf. तत्सभाग चक्षुः काश्मीराणां चतुर्विधम्। यद् दृष्ट्वा रूपाणि निरुद्धं निरुध्यते निरोत्स्यते वा यच्चानुत्पत्तिधर्मि। पाश्चात्यानां पुनः पञ्चविधम्। तदेवानुत्पत्तिधर्मि द्विधा कृत्वा विज्ञानसमायुक्तं चासमायुक्तं च। *Ibid.* See *Asm.* p. 29.

[3] Cf. चक्षुश्च धर्मधातोश्च प्रदेशो दृष्टिरष्टधा। *Ak.* I. 41 ab.

[४] पञ्च सत्कायदृष्ट्यादिका दृष्टयः, लौकिकी सम्यग्दृष्टिः शैक्षी दृष्टिरशैक्षीदृष्टिरित्ययमष्टप्रकारो धर्मधातुर्दृष्टिः। *Akb.* I. 41 ab.

[५] Cf. पञ्चविज्ञानसहजा धीर्न दृष्टिरतीरणात्॥ *Ak.* I. 41 cd.

[६] Cf. लौकिकी पुनः सम्यग्दृष्टिर्मनोविज्ञानसंप्रयुक्ता कुशलसास्रवा प्रज्ञा। शैक्षस्यानास्रवा दृष्टिः शैक्षी, अशैक्षस्य अशैक्षी। समेघामेघरात्रिदिवरूपदर्शनवत् क्लिष्टाक्लिष्टलौकिकीशैक्ष्यशैक्षीभिर्दृष्टिभिर्धर्मदर्शनम्। *Akb.* I. 41 cd.

यथा समेघाया(यां) तिमिरपटलावगुण्ठितचन्द्रनक्षत्रचक्रा(क्र)मायां रजन्यां रूपाणि दृश्यन्ते तथा क्लिश.[1]पश्चद्दृष्टयो ज्ञेयं पश्यन्ति। यथा तु विगतरजांसि निशाकरकिरणांशुजालावगुण्ठितायां त्रियामायां रूपाणि दृश्यन्ते, तथा लौकिकी सम्यग्दृष्टिः पश्यति। यथा तु मेघपटलावगुण्ठिते दिवाकरकिरणानुद्भासिते दिवसे रूपाणि दृश्यन्ते तद्वच्छैक्षी दृष्टिः पश्यति। यथा तु द्रुतकनकरसावसेक[4]पिञ्जरदिनकरकिरणोत्सारिततिमिरसंचये दिवसे च(च)क्षुष्मतो देवदत्तस्य रूपं चक्षुरीक्षते, तथा बुद्धानामर्हतां प्रज्ञाचक्षुरविद्याक्लेशोपक्लेशमलदूषिकातिमिरपटलवर्जितं ज्ञेयं पश्यतीति।

अभिधर्मदीपे विभाषाप्रभायां वृत्तौ प्रथमस्याध्यायस्य तृतीय. पाद[5]।



# प्रथमाध्याये

## चतुर्थपादः ।

आह। यदुक्तम्—चक्षुर्दर्श(न)मष्टप्रकारा च प्रज्ञा दृष्टिरिति। अथ विज्ञानं पश्यत्यथ न पश्यति ? यदि पश्यति दशधर्मा दृष्टिस्वभावा भवन्ति। अथ न पश्यति दार्ष्टान्तिकपक्षस्तर्ह्युज्झितो भवति। देवा एनं प्रहीष्यन्ति ग्रहीतव्यं चेन्मंस्यन्ते।

यत्तूक्तं दशधर्मा दृष्टिस्वभावाः [6]प्राप्नुवन्तीत्यत्र विज्ञानस्य मुख्यदर्शनकल्पना(ना)प्रतिषेधमुपरिष्टात् करिष्यामः। इदं तु वक्तव्यम्। चक्षुश्चक्षुर्विज्ञानप्रज्ञासामग्रीणां कः पश्यति ? कुतः संशय इति चेत्। सर्वत्र दोषदर्शणा(ना)त्। यदि तावच्चक्षुः पश्यति यावत्कायः स्पृशति ततो युगपत् सर्वविषयोपभोगप्रसंगः[7]। अथ चक्षुर्विज्ञानं पश्यति कस्तर्हि विजानाति ? व्यवहितमपि किं न पश्यति, अप्रतिघत्वात् ? अथ प्रज्ञा पश्यति श्रोत्रविज्ञानादिष्वपि प्रज्ञा विद्यत इति तत्रापि दर्शण(न) प्रसंगः। अथ चक्षुरादिसामग्री पश्यति सापि खलु चक्षुरादिसामग्र्यङ्गव्यतिरिक्ता स्वभावक्रिया[ऽ]भावान्न विद्यते।

[8]चक्षुरादिसामग्र्यङ्गाणा(ना)मपि प्रत्येकं दर्शण(न)शक्तिक्रिया(ऽ)भावो[ऽ]न्यश(श)तवदित्यसत्त्वम्। सर्वसामग्रीणा(णां) सर्वकार्यकरणापत्तित्वा[त्], विशेषाभावात्।

हेतुप्रत्ययसामग्रीं प्रतीत्य क्रियामात्रं विज्ञानमुत्पद्यत इति चेत्। न। जनिकर्तृभावे जन्मक्रियास्वातन्त्र्यानुपपत्तेः, नश्यादिवत्। हेतुप्रत्य[9]यानां परतन्त्राणां स्वात्मन्यवस्थितानां निरात्मकानां निरात्मककरणशक्त्ययोगात्।

किञ्च, विषयाभावे विज्ञानानुपपत्तेः, दाह्यदहनवत्।

किञ्च, विज्ञानक्रियाश्र(श्रि)ताभावे तदभावाच्चित्रकुड्यवत्। जन्मनाशयोर्द्वमिथमत्व विरुद्धानामन्यतरोपपत्तिर्विणा(ना)शस्य वा सजातिहेतुत्वप्र-[L B 7 Fol 36 a][1]संगः। यज्जात्यनुवृत्तिस्तद्बीजमिति चेत्। न। कुशलाकुशलादिचित्तनिरोधे [बीज]त्वानुपपत्तेः, सामग्रीपक्षोत्सर्गात्सांख्यमताभ्युपगमदोषाच्च। तेषामपि प्रधानाख्याद्बीजादेकस्मान्निरपेक्षात्सर्वं सम्भवति। निमित्तान्तरापेक्षा शक्त्यशक्तेरिति चेत्। न। अक्षणिकत्वदा[पात्]। सर्वसामग्र्यङ्गबीजाभ्युपगमे कार्यस्वभावादिवैचि[2]त्र्यप्रसंगः। तस्मान्निर्दोषः पक्षो वक्तव्यः। सोऽयं प्रक्रम्यते।

[44] चक्षुः पश्यति विज्ञानं विजानाति स्वगोचरम् ।
आलोचनोपलब्धित्वाद्विशेषः सुमहांस्तयोः ॥[1]

चक्षुर्द्रव्यं हि द्रष्टृस्वभावम् । तस्य हेतुप्रत्ययसामग्रीपरिग्रहप्रबोधितशक्तेः रूपदर्शनक्रियामनुत्पद्यते । द्रव्यक्रिययोश्चान्यत्व सिद्धसाध्यमानरूपता(3)न्निरपेक्षसापेक्षव्यपदेशित्वाच्च द्रष्टव्यम् । तत्र चक्षुर्मूर्तिन्द्रियावद्विज्ञानाधिष्ठित दर्शण(न)क्रियामारभते । न विज्ञानशून्यम् । यथैव चक्षुर्विज्ञानमालोचनाधिष्ठितमिव विजानाति, न केवलम्, परस्परानुग्रहबलाद्धयनयोः प्रदीपादिप्रत्ययान्तरपरिगृहीतयोर्युगपदेकस्मिन् विषये वृत्तिलाभो भवति ।

य(4)स्त्वेतदतिपत्ये(त्यै)वं कल्पयति—'कारणभूताभ्यां प्रागुत्पन्नाभ्यां चक्षूरूपाभ्यां कार्यभूत विज्ञान सहैकस्मिन् काले नावतिष्ठते' इति[2] तस्य सक्षाद्विषयानुभवनाभावादनुमानागमाभावप्रसंगः । अनुभवज्ञाने चासति मनोविज्ञानस्मृतिगोचराभावादनुत्पत्तिप्रसंगः । नियतविषयस्मरणाभावाच्च । तस्माद्विज्ञान नि(5)यताश्रयालम्बनलब्धप्रतिष्ठं सहकारिकारणसामग्रीसन्निपातोपजनितक्रिय साक्षाद्विषयमुपलभते । चक्षुरप्यालोचयति प्रदीपस्तत्कालमेवावभासयति । य एते विज्ञानचक्षूरूपादयः स्वहेतुसामग्रीप्रबोधितशक्तयः [ते] विषयप्रतिविम्बस्यालोचनावभासनाख्या युगपत् सार्धा सोर्धा वृत्ति प्रति(6)पद्यन्त इति युक्तिमती नीतिः ।

तस्मात्सत्स्वप्यन्येषु प्रत्ययेषु दर्शण(न)क्रियायाश्चक्षुष प्राधान्यात्, तदेवाञ्जसा पश्यतीत्युच्यते । यथा वा देवदत्तः स्थालीजलज्वलनतण्डुलादिषु सत्स्वपि पाके प्रवर्तमाने स्वस्यामधिश्रयणो(यणो)दकासेचनतण्डुलावपनदर्वीपरिघट्टनाद्यामनिस्रावणक्रियाया लब्ध(7)सामर्थ्यः साधनसन्नियोगे च परप्राप्तैश्वर्यो देवदत्तः प्राधान्यात्पचतीत्युच्यते । यदा पुण(न)स्तण्डुलाना

---

[1] चक्षुः पश्यति रूपाणि सभाग न तदाश्रितम् ।
विज्ञान दृश्यत रूप न किलान्तरित यत ॥ *Ak.* I 42.

The *Akb* I. 42 contains a long discussion on this controversy LVP. gives the following four views Dharmatrāta dit que la connaissance visuelle *(chakshurvijnāna)* voit les visibles Ghoshaka dit que la *prajna* associée a la connaissance visuelle voit les visibles Le Darshtāntika dit que le 'complexe' *(sāmagri)* voit les visibles. Le Vatsiputriya dit qu un seul œil voit les visibles *LVPAk.* I. p. 82.

[2] This is a view of the Darshtantika, cf. दार्ष्टान्तिकस्य हि सर्वप्रत्ययम् । पश्चाता विज्ञानकायानामतीतविषय वाचना सन्, चक्षुः रूप विद्यत तदा विज्ञानमसत् । यदा विज्ञान सत् चक्षूरूप तदासता, विज्ञानक्षणस्थितिप्रभाव स्वार्थोपलब्ध्यनुपपत्तेश्च । V in *ra, Akr kārikā* 71 ed.

विक्लेदो विवक्षितः पाको वा तदा जलानलयो प्राधान्याद्व्यपदेशो भवत्यम्बु क्लेदयत्यग्निः पचतीति। तस्मात्सामग्र्या सत्यां दर्श(8)णे(ने) प्रवर्तमाने प्राधान्याच्चक्षुः पश्यतीत्युच्यते। कथं प्राधान्यमिति चेत् ? तत्प्रकर्षे दर्शण(न)-प्रकर्षात्। तुल्ये हि प्रथमध्यानचक्षुर्विज्ञाने द्वितीयादिषु चक्षुष्प्रकर्षाद्दर्शन-प्रकर्षो दृश्यत इति। तस्माद्युक्तमुक्तम्—"चक्षुः पश्यति नयनः(नम्) पश्यति मनसि तु भक्त्या प्रज्ञावृत्तिरुपचर्यते मनसा पश्यति" इति।[1]

तत्र (9)यदुक्तं कोशकारेण—"किमिदमाकाशं खाद्यते। सामग्र्यां हि सत्यां दृष्टमित्युपचार प्रवर्तते। तत्र क पश्यति ?" इति।[2] तदत्र तेन भदन्तेन सामग्र्यङ्गक्रिया[मपह्न ?] · · क्रियते। अभिधर्मसंमोहाङ्कस्थाने-नात्माप्यङ्कितो भवत्ययोगशून्यताप्रपाताभिमुख्यत्वं प्रदर्शितमिति ॥[3]

[I A 7 Fol 36b](1) किं पुण(न)रेकेनापि चक्षुषा पश्यति, आहोस्विद् द्वाभ्यामेवेति ? नात्र नियमः। यस्मात्

---

[1] एष तु काश्मीरवैभाषिकाणा सिद्धान्त। चक्षु पश्यति श्रोत्र शृणोति, घ्राण जिघ्रति जिह्वा आस्वादयति, काय स्पृशति, मनो विजानातीति। *Akb* I 42

For this controversy, see *Kv* XVIII 9—इदानि चक्खुना रूप पस्सतीति कथा होति। तत्थ "चक्खुना रूप दिस्वा' ति वचन निस्साय पसादचक्खुमेव रूप पस्सतीति यस लद्धि, सेय्यथापि महासङ्घिकान। "इध भिक्खवे भिक्खु चक्खुना रूप पस्सती"ति ससम्भारकथा नयेन वुत्त। यथा हि उसुना विज्झन्तोऽपि धनुना विज्झतीति वुच्चति। एव चक्खुविञ्ञाणेन पस्सन्तोपि चक्खुना पस्सतीति वुत्तो। तस्मा असाधकमेत। *KvA* XVIII 9 Cf चक्खुना रूप दिस्वा ति कारणवसेन चक्खू ति लद्धवोहारेन रूपदस्सनसमत्थेन चक्खुविञ्ञाणेन रूप दिस्वा। पोराणा पनाहु—"चक्खु रूप न पस्सति अचित्तकत्ता, चित्त न पस्सति अचक्खुकत्ता, द्वारारम्मणसङ्घट्टे पन चक्खुप्पसादवत्थुकेन चित्तेन पस्सति।" ईदिसी पनसा, धनुना विज्झती ति आदिसु विय ससम्भारकथा नाम होति। तस्मा चक्खुविञ्ञाणेन रूप दिस्वा ति अयमेवेत्थ अत्थो ति। *Vm* I. 53

For other references, see *LVPAk* I p 82

[2] Cf अत्र सौत्रान्तिका आहु। किमिदमाकाश खाद्यते। चक्षुर्हि प्रतीत्य रूपाणि चोत्पद्यते चक्षुर्विज्ञानम्। तत्र क पश्यति को वा दृश्यते। निर्व्यापार हीद धर्ममात्र हेतुफलमात्र च। तत्र व्यवहारार्थं च्छन्दत उपचारा क्रियन्त। चक्षु पश्यति विज्ञान विजानातीति। नाभिनिवेष्टव्यम। उक्त हि भगवता "जनपदनिरुक्ति नाभिनिवेशेत, सज्ञा च लोकस्य नाभिधावेदिति।' *Akb* I 42

It is interesting to note that the *Adi* here identifies the Kośakāra with the Sautrāntika For an elucidation of this view of Sautrāntika, see Th Stcherbatsky *The Central Conception of Buddhism*, p 62

[3] This statement is very significant It proves the authenticity of a tradition that the Kośakara was a Vaibhāshika before he became a Mahayānist

[ 45 ] एकस्य चक्षुषः कार्यं विज्ञानमथवा द्वयोः ।[1]

इति द्विचन्द्रदर्शना(ना)देर्विज्ञानस्य··· ······॥[2]

[प्राप्तग्राही]नि(णि) आहोस्विदप्राप्तग्राहीणीति ? तदुच्यते ।

अप्राप्यार्थं मनश्चक्षुः श्रोत्रं च त्रीण्यतोऽन्यथा[3] ॥

घ्राणरसनकायेन्द्रि(2)याणि(णि) प्राप्तग्राहीणीत्यर्थः ॥

अत्र काणादः पश्यति । नाप्राप्तग्राहीनी(णी)न्द्रियाणि । चक्षुषो हि रश्मिर्गत्वा पश्यति । श्रोत्रं च सर्वगतं प्राप्यैव सर्वं शृणोति । तं प्रतीदमुच्यते ।

[ 46 ] अप्राप्तग्राहिणः सिद्धा दूरासन्नसमग्रहात् ।

यावता हि कालेन देवदत्त· स्वपाणितलरेखां पश्यति तावतैव चन्द्रलेखाम् । न चायं(3) गतिमतां धर्मः । गतिमन्तो हि देवदत्तादयो दूरं चिराद्गच्छन्त्यासन्नं क्षिप्रमिति । न । प्रदीपवत् तत्सिद्धेः ।

प्रदीपादिप्रभावच्चेत्

यथा खलु यावता कालेन प्रदीपो नेदिष्ठं रूपमभिव्यनक्ति तावता दविष्ठं तद्वदिति । तत्र प्रत्यवस्थानम्—

न समं तत्समुद्भवात् ॥

---

[1] Cf उभाभ्यामपि चक्षुर्भ्यां पश्यति व्यक्तदर्शनात् ।

उभाभ्यामपि चक्षुर्भ्यां पश्यतीत्याभिधार्मिकाः । *Akb* 1 43 ab

[2] Here the Ms is broken This line seems to refer to the view of Vasubandhu See *LVPAk.* 1 p 86 Yaśomitra gives following comment — 'उभाभ्यामपि' इत्यपिशब्दादेकेनापि नात्र नियमः । 'द्वयोर्विवृतयोः परिशुद्धतरं दर्शनम्' इति—उक्तं भवति नैकतरान्यथीभावादिति । 'उन्मीलितार्धनिमीलितयोरक्ष्णोरेकस्यान्यथीभावाद्' द्वयोरेकतरत्वाद्यन्यथीभवति, यदि यदुन्मीलितं तदर्धनिमीलितं क्रियते सर्वनिमीलितं वा तदा द्विचन्द्रदर्शनं न भवति । अतोऽवगम्यते द्वयोरपि चक्षुषोरत्र विज्ञानोत्पत्तौ व्यापारोऽस्तीति । *Saku* p 83

[3] Cf चक्षुःश्रोत्रमनोऽप्राप्तविषयं त्रयमन्यथा ।

प्राप्तविषयमित्यर्थः । घ्राणं कथं प्राप्तविषयम् । निरुच्छ्वासस्य गन्धाग्रहणात् । *Akb* 1. 43 cd.

For details on this topic, see *LVPAk* 1. pp 88—9

The *Akb* 1 43 d contains a discussion किं पुनः परमाणवः स्पृशन्त्यन्योऽन्यमाहोस्वित् ? This discussion is not found in the *Adv*

यदि प्रदीपो गच्छेव्, तत्राप्येष दोषः प्रसज्ये[4]त । प्रभादिमध्यान्तेषु च तापविशेषदर्शणा(ना)त् तदेकत्वासिद्धिः । यस्य पुण(न) प्रतीत्य युगपत् सर्वप्रदीपप्रभो(भासु)पादाय रूपपरमाणूनामुत्पत्तिस्तस्यैष दोषो नास्ति ॥

[ 47 ] सर्वग्रहप्रसंगश्चेन्नायस्कान्तादिदर्शणा(ना)त् ।

यद्यप्राप्तग्राहि चक्षुः ब्रह्मलोके ब्रह्माणं कस्मान्न पश्यति ? तत्रेदमुच्यते । नायस्कान्तवत्तत्सिद्धेः । यथा [5]तुल्येऽप्यप्राप्ताकर्षणे न प्राचीनीऽयस्कान्तो मणिरुदीचीनमयः समाकर्षति तद्वदिति ॥

अत्र पुण(न)विन्ध्यवासी पश्यति सर्वगतत्वमिन्द्रिया(णा)म् । तं प्रतीदमुच्यते ।[१]

सर्वगत्वाददोषश्चेन्नायोगात्तिलतैलवत् ॥

को ह्यनुन्मत्तो ब्रूयात्तिलेषु तैलं सर्वगतमस्तीति ? तद्वच्चक्षुःश्रोत्रादधिष्ठानेभ्यो बहिरिन्द्रि[6]याणि कः कल्पयेदमूढचेताः ?

इदं वक्तव्यम् । [२]यत्र काये स्थितश्चक्षुषा रूपाणि पश्यति किं तानि कायचक्षूरूपविज्ञानानि एकभौमानि, आहोस्विदन्यभौमिकान्यपि ? सर्वेषामनियम । तत्र कामधातूपपन्नस्य तावत् स्वेन चक्षुषा स्वानि रूपाणि पश्यतः सर्वं स्वभौमम् । तस्यैवास्य ध्यानचक्षुषा स्वरूपाणि[7] पश्यतः कायरूपे स्वभूमिके द्वयं प्रथमाद्ध्यानात् । प्रथमध्यानभूमीनि पश्यतो रूपाण्यपि तत्रत्यानि । द्वितीयध्यानचक्षुषा समीक्षमाणस्य कायरूपे स्वभूमिके, चक्षुर्द्वितीयाद् ध्यानात्, विज्ञानं प्रथमात् । प्रथमध्यानभूमीनि पश्यतो विज्ञानरूपे प्रथमाद्ध्यानात्, कायः कामावचरः, चक्षुर्द्वितीयाद्[8]ध्यानात् । द्वितीयध्यानभूमीनि पश्यतश्चक्षूरूपे द्वितीयध्यानभूमिके कायः कामावचरो विज्ञानं प्रथमध्यानात् । एवं तृतीयचतुर्थध्यानभूमिकेन चक्षुषा तद्भूमिकाधरभूमिकानि रूपाणि पश्यतो विज्ञातव्यम् । प्रथमध्यानोपपन्नस्य स्वेन चक्षुषा स्वाणि(नि) रूपाणि पश्यतः सर्वं स्वभूमिकम् । अधराणि [9]रूपाणि पश्यतस्त्रयं स्वभूमिकं रूपाणि कामावचराणि । द्वितीयध्यानचक्षुषा स्वानि रूपाणि पश्यतस्त्रयं स्वभूमिकं चक्षुर्द्वितीयात् । कामावचराणि पश्यतः कायविज्ञाने स्वभूमिके, कामावचराणि रूपाणि, चक्षुर्द्वितीयात् । द्वितीयध्यानभूमीनि पश्यतश्चक्षूरूपे तद्भूमिके शेषं स्वभूमिकम् । [I B, 8 Fol 37a] [1]एवं तृतीयादिध्यानचक्षुषा योज्यम् । द्वितीयादिध्यानोपपन्नस्य स्वपरचक्षुर्भ्यां स्वपरभूमिकानि रूपाणि पश्यतो यथासंभवं द्रष्टव्यम् ॥[२]

---

[१] This refutation is not found in the *Akb*

[२-२] This whole passage (from यत्र काये स्थित to यथासंभवं द्रष्टव्यम् ।) is almost identical with *Akb* I 45 cd Cf *Asm* p 14

नियतस्त्वयम्—

[ 48 ] न ह्यूर्ध्वं चक्षुषः कायो न रूपं नाक्षिजं मनः ।
विज्ञानस्य तु नेत्रार्थस्तौ च कायस्य सर्वतः ॥[1]

पञ्चभौमानि कायचक्षूरूपाणि द्वयोः सवितर्कसविचारयोर्भूम्योश्चक्षु(2)-र्विज्ञानम् । तत्र यद्भूमिकः कायस्तद्भूमिकमूर्ध्वभूमिकं वा चक्षुर्भवति न त्व-धोभौमिकम् । यद्भूमिकं चक्षुस्तद्भूमिकमधरभूमिकं वास्य रूपं गोचरी भवति नोर्ध्वभूमिकम् । एवं चक्षुर्विज्ञानं नाधरिमे चक्षुषि संमुखीभवति । अस्य तु चक्षुर्विज्ञानस्य रूपं सर्वतो विषयीभवति । कायस्याप्युभे रूपविज्ञाने स(3)र्वतो भवत इति ॥

एवं

[ 49 ] नोपरिष्ठाच्छ्रुतेः कायो न शब्दो न स्वकं मनः ।
विज्ञानस्य तु निह्रादस्तौ च कायस्य सर्वतः ॥

घ्राणादीनां पुनः

[ 50 ] त्रयानां(णां) त्रीण्यपि स्वाणि(नि)

कायगन्धादिविषयविज्ञानानि स्वभूमिकान्येव । उत्सर्गस्यायमपवादः क्रियते ।

तनोर्विज्ञानमप्यधः ।[2]

कायस्पृष्टव्ये स्वभूमिके (4)एव । कायविज्ञानं तु केषाञ्चिदधरभूमि-कम् । यथा द्वितीयादिध्यानोपपन्नानामिति ।

मनस्त्वनियतं[2]

समापत्त्युपपत्तिकालेषु कायस्य सर्वतो भावात् । त्रैकालिकाध्वनि-र्मुक्तसर्वधर्मविषयित्वात् ॥

किमर्थं पुण(न)रयमल्पार्थः सुमहाग्रन्थसन्दर्भविधिरारभ्यत इति ?

---

[1] Cf. न कायस्याधरं चक्षुरूर्ध्वं रूपं न चक्षुषः ।
विज्ञानं चास्य रूपं तु कायस्योभे च सर्वतः ॥ Ak. 1 46.

[2] Cf. तथा श्रोत्रं त्रयाणां तु सर्वमेव स्वभूमिकम् ।
कायविज्ञानमधरात्स्वभूम्यनियतं मनः ॥ Ak. 1, 47.

कोशकृदाचष्टे—नह्यत्र किञ्चित्फल(5)मुत्प्रेक्ष्यत इति।[1] तं प्रतीदं फलमादर्श्यते। तत्र खलु

योगिवैश्वरूप्यं प्रदर्शितम् ॥

एतद्वैश्वरूप्यं योगिणां(नां) यदन्यतः कायोऽन्यतश्चक्षुरन्यतः रूपमन्यतो विज्ञानं गृहीत्वा पश्यन्ति। विभूति च शरीराणि निर्माय मनोजवया रि(ऋ)-द्धया गत्वा बुद्धा भगवन्तो यथेच्छं लोकधात्वा(त्व)न्तरेषु विनेयानां बुद्धकार्यं (6)कुर्वंति। दिव्याभ्यां चक्षुःश्रोत्राभ्यां रूपाणि दृष्ट्वा शब्दांश्च श्रुत्वा यथेच्छं युगपदनेकानि पाञ्चगतिकानि शरीराणि निर्मायानेकगतिधात्वा(त्व)न्तरेषु विनेयकार्यं कुर्वन्तीति।

गतमेतत् प्रासङ्गिकं प्रकरणम् ॥

इदमधुना वाच्यम्। स्कन्धोपादानस्कन्धयोः कः प्रतिविशेषः ?[2] तदुच्यते। स्कन्धास्त्रिभिः सत्यैः संगृहीताः(7)। यस्मात्

[ 51 ] सास्रवानास्रवाः स्कन्धा[3] ये तूपादानसंज्ञिताः।
सास्रवा एव ते ज्ञेयास्तत्साचिव्यक्रियादिभिः ॥

कारणैरिति वाक्याध्याहारः। तस्मादुपादानस्कन्धाः सत्यद्वयसंगृहीताः। निरोधसत्यं तु स्कन्धलक्षणानुपपत्तेः स्कन्धलक्षणव्यतिरिक्तमिति द्रष्टव्यम् ॥[4]

[ 52 ] अध्वाद्याः स्कन्धपर्यायाः

अध्वान(8)स्कन्धाः संस्कृताः कथावस्त्वित्येवमादयः।

धर्माद्या वस्तुनः सतः।

---

[1] Cf. अनियत मनः

कदाचित् कायमनोविज्ञानधर्मे समानभूमिक मनो भवति। कदाचिदूर्ध्वभूमिकम्। पञ्चभूमिकेऽपि हि काये सर्वभूमिकानि मनआदीनि भवन्ति समापत्त्युपपत्तिकाले यथायोगमिति विस्तरेण समापत्तिनिर्देशे कोशस्थान एतदाख्यास्यते। अतिबहुग्रन्थभारपरिहारार्थन्तु नेदानीं पुनराख्यायते। अल्पं च प्रयोजनं महांश्च श्रम इति···। *Akb.* I 47 d.

[2] See *Asm* p. 3. and *Vm.* xiv 214

[3] Cf. सास्रवानास्रवा धर्मा *Ak.* I. 4a

[4] Cf. पञ्चुपादानक्खन्धा ति तथा तेभूमका मता।
भेदाभावेन निब्बान खन्धसङ्गहनिस्सटं ॥ *A. Sangaho* VII. 42.

सत् वस्तु धर्मो द्रव्यमायतनं धातुरित्येवमादयः ।

ये तु सास्रवसंज्ञास्ते प्रोक्ता दुःखादिनामभिः ॥[१]

दुःखं लोको भवः समुदय इत्येवमादिभिर्णो(र्ना)मभिः शब्द्यन्ते ॥

अथ कस्माच्चक्षुःश्रोत्रघ्राणानां द्वित्वे सत्येकधातुता ? (9)तदारभ्यते—

[ 53 ] स्वात्म्यगोचरकार्याना(णा)मेकत्वादेकधातुता ।
चक्षुरादिद्विभावेऽपि[२]

त्रयाना(णा)मपि खल्वेतेषामेकस्वभावत्वादेकगोचरत्वादेककार्यत्वाच्च द्वित्वेऽपि स[[३]त्येकाधिपत्यं चैकधातुता च] निर्वर्त(र्ते)ते ।

द्वयुत्पत्तिः कर्मतु(त्रि)त्वशात्[४] ॥

ये तु कथयन्ति "शोभार्थं तु द्वयोद्भवः"[५] इति तेषां श्लीपद- [I A, 8 Fol 37 b] (1)गन्त्र(न्ड)प्रभृतीनां अ[ति]शोभार्थमुत्पत्तिरित्यापन्नम् ॥[६]

---

[१] Cf ते पुन संस्कृता धर्मा रूपादिस्कन्धपञ्चकम ।
त एवाऽध्वा कथावस्तु सनि सारा सवस्तुका ॥
ये सास्रवा उपादानस्कन्धास्ते सरणा अपि ।
दु ख समुदयो लोको दृष्टिस्थान भवश्च ते ॥ *Ak* I 7—8

[२] Cf जातिगोचरविज्ञानसामान्यादेकधातुता ।
द्वित्वेऽपि चक्षुरादीना *Ak* I 19 abc

[३] Here the Ms is broken Only the *avagraha* on त्य is visible For the restoration—*ādhipatyam* etc, see below note 6

[४] This should be त्रित्व-वशात ।

[५] Cf शोभार्थं तु द्वयोद्भव ।

एकधातुत्वेऽपि तु चक्षुरादीना द्वयो सभव आश्रयस्य शाभार्थम । अन्यथा ह्येकचक्षु श्रोत्राधिष्ठानेवनामिवाविरूपभवान महद्वैरूप्य स्यादिति । *Akb* I 19 d

[६] Yaśomitra gives various viewpoints on this controversy आचार्यस्य भदन्तस्य सूत्रस्यायं विचार । शाभार्थमित्याधिपत्यार्थमित्यर्थं । आधिपत्यमपश्यो हि स्रोते शोभन इत्यत्रादिशने । यथा चक्षुरिन्द्रियाणामपृथगधिष्ठानानि तथा परिशुद्धदर्शनश्रवणघ्राणाद्याधिपत्य स्यात् । न हि यथा द्वाभ्या चक्षुर्भ्या परिशुद्ध दर्शन भवति तथैकेन । एवमितरयोरपि । एवं चैषामिन्द्रियत्व हीयेन तदर्थमनर्थक स्यादिति । स्फुटोपलब्ध्यर्थमित्यर्थं । इहापि दशनमत्र वक्तुम । एकमेव परिस्फुटापलब्ध्याश्रयभूत विस्तीर्णं कर्मणो स्थानाम् । विभाषयविरुद्धेदेनेति । विभाषायां तु लिखितमेतत् पक्षद्वयम् । शोभार्थं

इदमिदानीं वाच्यम्। चक्षुरादिकारणसामग्रीसन्निधाने सति चक्षुर्वि-ज्ञानोत्पत्तौ कस्माच्चक्षुःश्रोत्रादिविज्ञानमित्युच्यते ? तत्र [विसर्जनं क्रियते]—

[ 54 ] [असाधारण]विशिष्टत्वादैश्वर्यादान्तरङ्गयतः ।
सत्यप्यणे(ने)कहेतुत्वे विज्ञानं तैर्विशेष्यते ॥[१]

चक्षुरादीन्द्रियविशेषाद्विज्ञान(2)विशेषो दृष्टः। चक्षुरादीनां च चतुर्भिः कारणैरीशित्वं दृष्टम्[२]। असाधारणकारणत्वेन चान्तरङ्गत्व इति ॥

अत्राह। अथ कस्मात् सर्वपदार्था[ना] द्रव्यस्वभावे(त्वे) निर्वाणमेव परमार्थतो द्रव्यमित्युच्यते[३] यतो धर्मधातुरेव तद्योगाद्द्रव्यवानित्याख्यायते ।[४] कस्माच्च सर्वसंस्कृतानां क्षणिकत्वे सति त्रय (3)एवान्त्या धातवः क्षणिका इत्युच्यन्ते ? तदुभयं प्रदर्श्यते ।

[ 55 ] नित्यत्वात्कुशलत्वाच्च[५] निर्वाणं द्रव्यमञ्जसा ।
सारद्रव्येन तेनैको धर्माख्यो द्रव्यवान्मतः ॥

---

द्वयोद्भव इत्येको व्यक्त्यर्थमित्यपर इत्यल प्रसङ्गेन। ननु च कर्मवशादिन्द्रियद्वयोत्पत्ति, किमन्यदेवोच्यते शोभार्थं व्यक्त्यर्थं चेति। कर्मवशादत्रेन्द्रियद्वयाद्भव उक्त । कथमिति। एव विभक्तावयवाश्रयेणानादिकालाभ्यस्त शाभाभिमान सत्त्वाना प्रवर्तते। अतस्तदभिलापपूर्वकेण स्फुटोपलब्ध्यभिलापपूर्वकेण च कर्मणा तदिन्द्रियद्वयमभिनिर्वर्त्यमान शोभार्थं व्यक्त्यर्थं चोद्भवतीत्युच्यते। *Sakv* p 42

[१] Cf तद्विकारविकारित्वादाश्रयश्चक्षुरादय ।
अतोऽसाधारणत्वाच्च विज्ञान तैर्निरुच्यते ॥ *Ak.* I 45

[२] See *Adv kārika* 77

[३] See *Asm* p 16

[४] Cf त्रिधाऽन्ये द्रव्यवानेक क्षणिका पश्चिमास्त्रय । *Ak.* I. 38 ab.
असस्कृत हि सारत्वाद् द्रव्यम् । *Akb* I. 38 ab

[५] For a controversy on the use of the word *kusala* for *Nirvana*, see *Kv* xix 6—इदानि कुसलकथा नाम होति। तत्थ अनवज्जम्पि कुसल इट्ठविपाकम्पि। अनवज्ज नाम किलेसविप्पयुत्त। अय नयो ठपेत्वा अकुसल सब्बधम्मे भजति। इट्ठविपाक नाम आयति उप्पत्तिपवत्तेसु इट्ठफलनिप्फादक पुञ्ञ। अय नयो कुसलत्तिके आदिपदमेव भजति। येस पन इम विभाग अग्गहेत्वा अनवज्जभावमत्तेनेव निब्बान कुसल ति लद्धि, सेय्यथापि अन्धकान ······। *KvA* xix 6

Cf also, स एवानास्रवो धातुरचिन्त्य कुशलो ध्रुव ।
सुखो विमुक्तिकायोऽसौ धर्माख्योऽय महामुने ।
···कुशलो विशुद्धालम्बनत्वात्, क्षेमत्वात्, अनास्रवधर्ममयत्वाच्च। *Trimśikā*, 29

[ 56 ] प्रथमं निर्मलं चित्तमसामान्यात्क्षणः स्मृतः।
तेनाद्भुतक्षणेनैते क्षणिकाः पश्चिमास्त्रयः ॥[1]

किं पुण(न)रेते चक्षुरादयस्तुल्यं विषयं गृह्णन्ति, आहोस्विन्न्यूनम[4]धिकं वा? तदाविष्क्रियते—

[ 57 ] घ्राणं जिह्वा च कायश्च तुल्यार्थग्राहकस्त्रयम्।

द्वयोश्चक्षुःश्रोत्रयोरनि(नि)यम इत्याख्यातं भवति॥

किंपुण(न)रेषां चक्षुर्विज्ञानादीनां सहज एवाश्रयः, आहोस्विदतीतोऽपि? तदुच्यते।

पश्चिमस्याश्रयोऽतीतः

मनोविज्ञानस्य क्रियावतो नित्यमाश्रयोऽतीतः।

पञ्चानां तैः सहापि च ॥

[5]पञ्चानां विज्ञानकायानां तैः सहापि चातीतश्चेति 'च'शब्दात्।

एवं चतुष्कोटिक आरभ्यते। ये धर्मा विज्ञाननिश्रयाः समनन्तरा अपि ते? प्रश्नश्चतुष्कोटिकः। निश्रय एव चक्षुरादयः। समनन्तरा एव वेदनादयः। उभयं समनन्तरवि(नि)रुद्धं विज्ञानम्। नोभयमेतानाकारान् स्थापयित्वा॥

इद[6]मिदानीमभिधर्मसर्वस्वं कोशकारकस्मृतिगोचरातीतं[3] वक्तव्यम्। अथैषामष्टादशानां धातूनां कतमं निश्रयं निश्रृ(श्रि)त्यानास्रवेण मार्गेण कतमो धातुर्णि(र्नि)रुध्यते?

---

[1] Cf क्षणिका पश्चिमास्त्रय·।

मनोधातुर्धर्मधातुर्मनोविज्ञानधातुश्च पाठक्रमेण पश्चिमा। त प्रथमानास्रवे दुःखे धर्मज्ञानक्षान्तिवारे क्षणमेकमनंप्यन्दिरा भवन्त्यत क्षणिका इत्युच्यन्ते। अन्यमभूतसंस्कृतो नास्ति कश्चिदनंप्यन्दिक। तत्र दुःखे धर्मज्ञानक्षान्तिसंप्रयुक्त चित्त मनोधातुर्मनोविज्ञानधातुश्च। शेषास्तत्सहभुवा धर्मधातु। *Akb* I 38 ab

The Pāli tradition has also used the word *kshana* to describe a similar *unique moment* एको व भिक्खव खणो च समयो च ब्रह्मचरियवासाय। *Ang* IV p. 227.

[2] Cf त्रिभिर्घ्राणादिभिस्तुल्यविषयग्रहणं मतम्।
चरमस्याश्रयोऽतीत पञ्चानां सहजश्च तैः॥ *Ak.* I. 44

[3] These topics (from *Ad kārikās* 58—70) are not discussed in the *Akb*

## द्वितीयपादः ।

इन्द्रियप्रस्तावे[1] सर्वं इन्द्रियधर्मा विचार्यन्त इत्यतः पृच्छति । अथैषां कुशलानामिन्द्रि(5)यानां(णां) कतरेणेन्द्रियेन(ण) कतरच्छ्रामन्य(ण्य)फलं प्राप्यत इति ? तदिदं प्रस्तूयते—

[ 92 ] आद्यन्तलाभो नवभिः सप्ताष्टाभिश्च मध्ययोः ।[2]

या खल्वेषा चतुष्फलमयी माला तस्याः प्रथमं स्रोतआपत्तिफलमन्त्य-महर्त्त्वं मध्ये सकृदागाम्यनागामिफले । तत्राद्यन्तयोः फलयोर्ण(र्न)वभिरि-न्द्रियैर्लाभः ।[3] स्रोत(6)आपत्तिफलस्य तावत्—श्रद्धादिभिः पञ्चभिराज्ञा-स्यामीन्द्रियाज्ञेन्द्रियाभ्यामेकमनयोरानन्तर्यमार्गाद्, द्वितीयं विमुक्तिमार्गाद्वे-दितव्यम् ।[4] प्रथमेन क्लेशप्राप्तिच्छेदो द्वितीयेन विसंयोगप्राप्त्याकर्षणम् । मनउपेक्षेन्द्रियाभ्यां चेति । अर्हत्त्वस्य पुनः श्रद्धादिभिराज्ञास्यामीन्द्रियवर्ज्यैः, मनइन्द्रियेन(ण) सुखसौमन(7)स्योपेक्षेन्द्रियानां(णां) चान्यतमेन ।

[5]'सप्ताष्टाभिश्च मध्ययोः ।' सकृदागाम्यनागामिफलयोः पुनः सप्तभि-रष्टाभिर्ण(र्न)वभिश्चेति 'च'शब्दात् । तत्र सकृदागामिफलं तावद्यथानु-पूर्विको[6] लभते, स च लौकिकेन[7] मार्गेन(ण) तस्य सप्तभिर्लाभः । पञ्चभिः

---

[1] इन्द्रियप्रकरणे in *Akb.* II. 16 cd. See *LVPAK* II p. 134. n. 1.

[2] Cf. नवाप्तिरन्त्यफलयोः सप्ताष्टनवभिर्द्वयोः । *Ak.* II. 16 cd.

[3] Cf. नवभिरिन्द्रियैः प्राप्तिरन्त्यफलयोः । के पुनरन्त्ये । स्रोतआपत्तिफलमर्हत्त्वं च । के मध्ये । सकृदागामिफलमनागामिफलं च । तत्र स्रोतआपत्तिफलस्य श्रद्धादि-भिराज्ञास्यामीन्द्रियवर्ज्यैर्मनउपेक्षेन्द्रियाभ्यां नेति नवभिः । आज्ञास्यामीन्द्रियमानन्तर्यमार्गे वेदितव्यमाज्ञेन्द्रियं च विमुक्तिमार्गे । उभाभ्यां हि तस्य प्राप्तिर्विसंयोगप्राप्तेरावाहकसन्नि-श्रयत्वाद्यथाक्रमम् । *Akb.* II. 16 c.

[4] आनन्तर्यमार्गेणाज्ञास्यामीन्द्रियस्वभावेन विमुक्तिमार्गेण चाज्ञेन्द्रियस्वभावेन तस्य प्राप्तिः । *Sakv.* p. 113.

[5] The following *Adv.* upto तस्य नवभिराज्ञेन्द्रिय नवमं भवति, is almost identical with *Akb.* II. 16 d.

[6] तत्रानुपूर्विको य स्रोतआपत्तिफलं प्राप्य क्रमात् सकृदागामिफलं प्राप्नोति । *Sakv.* p. 114.

[7] लौकिको मार्गः शान्ताद्युदारादयाकारः । *Ibid.*

श्रद्धादिभिः, मनउपेक्षेन्द्रियाभ्यां च। अथ लोकोत्तरेण मार्गेण (8)तस्याष्टाभिः, आज्ञेन्द्रियमष्टमं भवति। अथ [1][भूयो]वीतरागः प्राप्नोति, तस्य नवभिर्यैव स्रोतआपत्तिफलस्य। अनागामिफलं यथानुपूर्विकः प्राप्नोति, स च लौकिकेन मार्गेण, तस्य सप्तभिर्यथा सकृदागामिफलस्य।

अथ लोकोत्तरेण, तस्याष्टाभिस्तथैव। अथ वीतरागः[2] प्राप्नोति, तस्य नवभिर्यथा (9)स्रोतआपत्तिफलस्य। तस्य तु निश्रयविशेषात्[3] सुखसौमनस्योपेक्षेन्द्रियाणामन्यतमद्भवति। यदाप्ययमानुपूर्विको नवमे विमुक्तिमार्गं ध्यानं[4] प्रविशति लौकिकेन मार्गेण, तदाप्यष्टाभिरिन्द्रियैरना(ना)गामिफलं लभते। तस्य नवमे विमुक्तिमार्गे सौमनस्यमष्टमं भवति, आनन्तर्यमार्गे तूपेक्षे- [II B, 4 Fol 42 a ](1)न्द्रियमेव। नित्यमुभाभ्यां[5] हि तस्य प्राप्तिः। अथ लोकोत्तरेण प्रविशति, तस्य नवभिराज्ञेन्द्रियं नवमं भवति॥[6]

यत्तर्ह्यभिधर्मे पठ्यते—"अर्हत्फलस्यैकादशभिः" इति।[7] तत्कथमुच्यते 'नवभिस्तस्य प्राप्तिः' इति?[8] नैव दोषः। यस्मात्—

---

[1] भूयावीतराग in *Akb*—भूयोवीतराग इति। यो लौकिकेन मार्गेण पृथग्जनावस्थायां षट्प्रकारापलिखितोऽभूत्, सो भूयावीतराग इत्युच्यते।" अथ हि स्रोतआपत्तिफलमप्राप्यैव षोडशे क्षणे सकृदागामी भवति। *Sakv.* p 115

[2] अथ वीतराग इति। कामधातुमात्रवीतरागो लौकिकेन मार्गेण नवम प्रकार प्रहीणे प्रथमादपि वा ध्यानाद्यावदाकिञ्चन्यादपि वा वीतरागो योऽनागामिफलं प्राप्नोति।' स्रोतआपत्तिफलस्य हि दर्शनमार्गेण प्राप्ति •, अस्य च दर्शनमार्गेणैव प्राप्तिरिति तुल्यत्वम्। *Sakv* p 115.

For a controversy on this point, see *Kv* I 5—जहति पुथुज्जनो कामराग ब्यापाद ति?—इदानि जहति क्या नाम हानि। तत्थ यस झानलाभी पुथुज्जनो सह सच्चाभिसमया अनागामी नाम होति, तस्स पुथुज्जनकाले थव कामरागब्यापादा पहीना ति लद्धि, सय्यथापि एतरहि सम्मितीयानं। तस्स त लद्धि भिन्दितु जहति पुथुज्जना ति पुच्छा सकवादिस्स। *KvA.* I. 5

[3] निश्रयविशेषादिति। यदि तृतीय ध्यान निश्रित्य नियाममवक्रामति। सुखेन्द्रिय तत्र भवति। अथ प्रथमद्वितीय ध्यान निश्रित्य, सौमनस्येन्द्रिय तत्र भवति। अथानागम्य ध्यानान्तरचतुर्थारूप्यानानामन्यतम निश्रित्य उपेक्षेन्द्रिय भवतीति। *Sakv* p 115

[4] तासमिन्द्रियवाद् ध्यान in *Akb*

[5] आनन्तर्यविमुक्तिमार्गाभ्याम्। *Sakv* p. 115

[6] V supra, p 57 n 5

[7] *Jñāna-prasthāna*, 15, 1 See *Sakv* p 116

[8] Cf यत्तर्ह्यभिधर्म उक्तम् "कतिभिरिन्द्रियैरर्हत्त्वं प्राप्नोतीत्याह एकादशभि" इति तत्कथं नवभिरित्युच्यते? नवभिरेव तत् प्राप्नोति। *Akb* II. 16 cd.

एकादशभिरासिस्तु फलस्यान्त्य[स्य] हानितः ॥[१]

परिहाय परिहायाऽयं समयविमुक्तोऽर्हन्निश्रयविशे(2)षात्पुनर्लभते। कदाचित् तृतीयं ध्यानं निश्रित्य। कदाचिद् द्वितीयं प्रथमं वा। कदाचिच्चतुर्थमनागम्यं वा। इत्यतस्तिसृणां वेदनानां संभवादेकादशभिरुक्तम् ॥[२]

अथैषां त्रयानां(णां) कामरूपारूप्यधातूनां कतरधातुभूम्यालम्बनेन मार्गेण कतरस्य धातोः परिज्ञानं भवतीति ?[3] तदाविर्भाव्यते।

[ 93 ab [४] ] स्वस्य धातोः परिज्ञानं स्व(3)विपक्षदृशा पथा।

स्वविपक्षदृशा च मार्गेणे(मार्गेणा)नास्रवेण परिज्ञानं भवति। तत्र स्वधातुदृशा तावद् दुःखसमुदयालम्बनेन, स्वविपक्षदृशा निरोधमार्गालम्बनेन त्रैधातुकपरिज्ञानं भवति। सास्रवेण त्वानन्तर्यमार्गेण संगृहीतेन सन्निकृष्टाऽधोभूमिविषयेणोर्ध्वसन्निकृष्टभूम्यालम्बनेन च विमुक्तिमा(4)र्गसंगृहीतेनाधोभूमिपरिज्ञान भवति। आन[न्ति]र्यमार्गाणामधोभूमिविषयत्वाद्विमुक्त्याख्यानामूर्ध्वभूम्यालम्बनत्वाच्च। अनास्रवाना(णा) तूभयेषामेकभूमिगोचरत्वादिति ॥

अथ कतिभि(र्भी)रिन्द्रियैः कामधातुपरिज्ञानं कतिभि(र्भी) रूपारूप्यधातुपरिज्ञानमिति ? तदिदं प्रतायते—

[ 94 ] कामधातुपरिज्ञानं प्रायः सप्तभिरि(5)ष्यते।
समलैर्निर्मलैस्त्वर्थैरष्टाभिरभिधीयते ॥

कामधातोस्तावद्—सास्रवैः सप्तभिः परिज्ञानं भवति प्रहाणमित्यर्थः। पञ्चभिः श्रद्धादिभि मनउपेक्षेन्द्रियाभ्यां च। प्रायो ग्रहणात्सौमनस्येन्द्रियेना(णा)पि कस्यचित्समापत्त्यभिप्रायस्य योगिनो मौलभूमिप्रवेशात्। अनास्रवैस्त्विन्द्रियैरष्टाभि। एभिरेव सप्तभि(6)राज्ञेन्द्रियेण च। प्रायो वचनात्सौमनस्येन्द्रियेन(ण) च नवमेन ॥

[ 95 ] रूपधातुपरिज्ञानमिदं दशभिरिन्द्रियैः।

---

[१] Cf एकादशभिरर्हत्त्वमुक्त त्वेकस्य सभवात्। *Ak* II 17 ab

[२] Cf अस्ति समवो यदर्हं पुद्गल परिहाय परिहाय सुखसौमनस्यापेक्षाभिरर्हत्त्व प्राप्नुयादत एकादशभिरित्युक्तम्। न तु खलु समवोऽस्ति सुखादीनामेकस्मिन् काले। कथमनागामिनोऽप्यय प्रसगो भवति ? न ह्यसौ परिहीण कदाचित्सुखेन्द्रियेण प्राप्नोति न च वीतरागपूर्वी परिहीयते। तद्वैराग्यस्य द्विमार्गप्रापणात्।। *Akb* II. 17 ab

[3] This topic is not discussed in *Akb*

[४] The ed of the *karika* 93 is missing

पञ्चभिः श्रद्धादिभिः, मन इन्द्रियेण(ण), तिसृभिर्वेदनाभिः, निश्रय विशेषादाज्ञेन्द्रियेण(ण) च ॥

अन्त्यधातुपरिज्ञानमेकादशभिरुच्यते ॥

यथोक्तैर्दशभिराज्ञातवदिन्द्रियेण(ण) च। उभाभ्यां तस्य परिज्ञानमेव (7)वज्रोपमसमाधिसहचरम्, द्वितीय क्षयज्ञानसहगतमिति ॥

इदमिदानीं वक्तव्यम्—कः कतिभिरिन्द्रियैः समन्वागत इति ?[1] तत्र तावदयं नियमः—

[ 96 ] सर्वसत्त्वास्त्रिधातुस्था उपेक्षायुर्मणो(नो)ऽन्विताः।

एभिस्त्रिभिः सर्वसत्त्वाः समन्वागताः।

त्वक्स्त्रीत्वव्यञ्जनैः कामे

कामावचराः सत्त्वा कायपुरुषस्त्री(8)न्द्रियैरेभिः पूर्वोक्तैश्च।

रूपिणश्चक्षुरादिभिः ॥

रूपिणः खलु सत्त्वाश्चक्षुरादिभिस्त्रिभिश्चोपेक्षायुर्मनोभिः ॥

[ 97 ] कामिनः खलु दुःखेन तद्रागी दुर्मण(न)स्तया।

अवीतराग कामधातौ दुःखदौर्मण(न)स्याभ्यां समन्वागतः।

ऊर्ध्वजस्तु सुखेनार्यः शुभाह्लाधरजौ तथा ॥

ऊर्ध्वजो रूपारूप्यधातुज आर्य सुखेन सम(9)न्वागतः। अनास्रवेण शुभश्च[स्तनपरीत्तशुभाप्रमाणशुभाः] क्लिष्टाक्लिष्टेन ॥

[ 98 ] प्रतीत्या(प्रीत्या)माह्लाधरोद्भूतौ

ध्यानान्तरेषूपपन्नस्तदधरजश्च प्रीत्या समन्वागतः।

शुभैः स शुभमूलकः।

श्रद्धादिभिः पञ्चभिः शुभैरसमु(स)च्छिन्नकुशलमूलः सर्वत्र समन्वागतः।

शैक्षाभ्यां मोक्षमार्गिणौ

---

[1] This topic is not discussed in *Akb*

ह्रा [II A, 4 Fol 42 b]भ्यां(1) शैक्षाभ्यां [इन्द्रियाभ्यां दर्शनभावना-मार्गस्थौ] ॥

[अशैक्षोऽर्हन्] स्वमार्गगः ॥

अथ नियमेन कः कतिभिरिन्द्रियैः समन्वागत इति? तदिदमुपदर्श्यते—

[ 99 ] उपेक्षायुर्मणो(नो)युक्तोऽवश्यं त्रयसमन्वितः।[1]

[ए]भिरेव त्रिभिः। न ह्येषामन्योन्येन विना समन्वागतः। शेषै-र्ण(नि)यमः।[2]

[3](2)तत्र तावच्चक्षुरादिभिः सप्तभि[4]रारूप्योपपन्नो न समन्वागतः। कामधातौ च येनाप्रतिलब्धविहीनानि।[5] सुखेन्द्रियेण चतुर्थध्यानादूर्ध्वुपपन्नाः[6] पृथग्जनाः, सौमनस्येन त्रि(तृ)तीयादूर्ध्वुपपन्नाः[7] पृथग्जनाः, दुःखेन्द्रियेन(ण) रूपारूप्योपपन्नाः, दौर्मण(न)स्येन कामवीतरागः, श्रद्धादिभिर्निःशुभः[8], अना-स्रवैस्त्रिभिः पृथ(3)ग्जना[9] न समन्वागताः।[3]

चतुर्भिः कायसुखवान्

यः कायेन्द्रियेण सोऽवश्यं चतुर्भिस्तैश्च त्रिभिः कायेन्द्रियेन(ण) च। योऽपि सुखेन्द्रियेण स चतुर्भिः—तैश्च त्रिभिरुपेक्षादिभिः सुखेन्द्रियेन(ण) च।

चक्षुष्मानपि पञ्चभिः[10] ॥

---

[1] Cf उपेक्षाजीवितमनोयुक्तोऽवश्यं त्रयान्वित ॥ *Ak.* II 17 cd.

[2] Cf शेषैस्त्वनियम। स्यात्समन्वागत स्यादसमन्वागत। तत्र तावत्…*Akb* II 17cd

[3]—[3] This whole passage substantially agrees with *Akb* II. 18ab

[4] चक्षुःश्रोत्रघ्राणजिह्वेन्द्रियैरारूप्योपपन्नो न समन्वागत। *Akb* II 18ab

[5] after this *Akb.* has · कायेन्द्रियेणारूप्योपपन्ना न समन्वागत। स्त्रीन्द्रियेण रूपारूप्योपपन्नः। कामधातौ येनाप्रतिलब्धविहीनम्। एव पुरुषेन्द्रियेण। *Ibid*

[6] चतुर्थध्यानारूप्योपपन्न। *Ibid*

[7] तृतीयचतुर्थध्यानारूप्योपपन्न। *Ibid*

[8] श्रद्धादिभि समुच्छिन्नकुशलमूल। *Ibid*

[9] आज्ञास्यामीन्द्रियेण पृथग्जनफलस्था न समन्वागता। आज्ञेन्द्रियेण पृथग्जनदर्शना-शैक्षमार्गस्था। आज्ञातावीन्द्रियेण पृथग्जनशैक्षा असमन्वागता। *Ibid*

[10] Cf चतुर्भि. सुखकायाभ्यां पञ्चभिश्चक्षुरादिमान्। *Ak.* II. 18 ab

'अपि'शब्दाच्छ्रोत्रघ्राणजिह्वेन्द्रियैर्वेदितव्यम्। यश्चक्षुरिन्द्रियेण सोऽवश्यं पञ्चभिः—उपेक्षाजीवि(4)तमनःरूपेन्द्रियैश्चक्षुषा च ॥

[ 100 ] स्त्रीन्द्रियाद्यन्वितोऽष्टाभिः[1]

तैश्च सप्तभिः स्त्रीन्द्रियेन(ण) च। 'आदि'ग्रहणात् पुरुषेन्द्रियदौर्मण(न)स्यश्रद्धादीनां ग्रहणं वेदितव्यम्। तद्वानपि प्रत्येकमष्टाभिः—तैश्च सप्तभिः पुरुषेन्द्रिये(ण) चाष्टमेन। एभिश्च कायजीवितमनोभिश्चतसृभिर्वेदनाभिः, दौर्मण(न)स्येन्द्रियेण च। श्रद्धा(5)द्वि[भि]स्तैश्च पञ्चभिरुपेक्षाजीवितमनोभिश्च।

दुःखी युक्तस्तु सप्तभिः।[2]

यो दुःखेन स सप्तभिः—कायजीवितमनोभिश्चतसृभिर्वेदनेन्द्रियैर्दौर्मण(न)स्यं हित्वा, तद्वीतरागस्य नाप्नोति।

एकादशभिरन्त्यास्याम्[3]

द्वाभ्यामन्त्याभ्यां युक्तोऽवश्यमेकादशभिः, प्रत्येकं सुखसौमनस्योपेक्षाजीवितमनःश्रद्धादिभि(6)राज्ञेन्द्रियेण च। एवमाज्ञातवदिन्द्रियेण तेन तैश्चेति।

सप्त षड्भिस्तदाद्यवान् ॥[4]

प्रथमेन त्वनाश्रवेण यः समन्वागतः सोऽवश्यं त्रयोदशभिर्मनोजीवितकायेन्द्रियैश्चतसृभिर्वेदनाभिः श्रद्धादिभिस्तेन चेति ॥

अथ सर्वबहुभिः कियद्भिः समन्वागताः[5] ? तदुच्यते—

[ 101 ] त्रिद्वीपनरकोत्पन्ना मिथ्यात्वनियता अ(7)पि।
[बहुभिः] ह्येकान्नविंशत्या स्वल्पैरष्टाभिरन्विताः ॥

[ 102 ] अन्तराभविकप्रेततिर्यक्श्रद्धानुसारिण[ः]।
त्र्यधिकैर्दशभिर्युक्ता दशभिर्वा नवाधिकैः ॥

---

[1] Cf स्त्रीन्द्रियादिमान्। *Ak.* II 18 d.

[2] Cf. सौमनस्यी च दुःखी तु सप्तभिः। *Ak* II. 18 cd

[3] Cf. अष्टाभिरेकादशभिस्त्वाज्ञातेन्द्रियान्वितः। *Ak* II. 19 ab

[4] Cf. आज्ञास्यामीन्द्रियोपेतस्त्रयोदशभिरन्वितः। *Ak* II 19 cd

[5] Cf. यः सर्वबहुभिरिन्द्रियैः समन्वागतः स कियद्भिः ?
बहुभिर्युक्त एकान्नविंशत्यामलवर्जितैः।
द्विलिङ्ग आर्यरागस्यैकलिङ्गद्वयमलवर्जितैः ॥ *Ak.* II. 21.
The *Adv* deals with this topic in detail.

स्वल्पैस्त्रयोदशभी रूपभिः पञ्चभिः श्रद्धादिभिश्च जीवितमनउपेक्षाभिश्च। ण्ा(ना)रकस्य वृच्छिन्नशुभमवीजस्य चक्षुरादीनि पञ्चैकं च व्यञ्जनं वेदनाश्च पञ्च जीवि[8]तं, मनश्च। तिरश्चां नास्त्युच्छेदः। य इहोच्छिनत्ति सोऽवश्यमवीचिं गच्छति। तेन तत्र नरके श्रद्धाद्या न सन्ति। पञ्च चक्षुरादीनि पञ्च च वेदना, एकं व्यञ्जनं जीवितं मनश्चेति त्रयोदश भवन्ति। स्पुर्वहुभिश्चान्तराभविकाद्याः पृथग्जनास्त्रीण्यमलानि हित्वैकान्नविंशतिभिः, आर्यास्तु श्रद्धानुसारिणो द्वे [9]अमले हित्वैकं च व्यञ्जनमित्येकान्नविंशतिभिरेव समन्वागताः ॥

[ 103 ] सम्यक्त्वनियता ये तु ये च श्रद्धाधिमुक्तिकाः ।
त एकादशभिर्युक्ता दशभिर्वा नवाधिकैः ॥

तत्र सम्यक्त्वनियता आर्या इत्यर्थः। ते पञ्चभि. श्रद्धादिभिर्मनोजीविताभ्यां च तिसृभिर्वेदनाभिरेकेण चानास्रवेण(ण)। सर्वप्रभूतैः पुनरेकान्न-
[II B, 5 Fol 43 a][1]विंशतिभिरेकलिङ्गद्वयमलवर्जितैः ॥

[ 104 ] प्रज्ञाविमुक्तनामार्हद् कायसाच्युभयाह्वयाः ।
अर्हैकादशकोपेता यदि वाऽष्टादशान्विताः ॥

सर्वाल्पैरेकादशभिः श्रद्धादिभिः सुखसौमनस्योपेक्षाजीवितमनोभिरेकेन चानास्रवेण। वहुभिस्त्वष्टाद[श]भिः, द्वे अनास्रवे दौर्मण(न)स्यमेकं च व्यञ्जनं हित्वा ॥

[ 105 ] कामदेवा मृ[2]ताः स्वल्पैर्दशभिः सप्तकाधिकैः ।

अनास्रवत्रयं हित्वा दौर्मण(न)स्यं च। तत्रत्यः पृथग्जनो यदि वैराग्यं गच्छति स देवर्षिर्भवति। एकं च व्यञ्जनं हित्वा परिशिष्टैः सप्तदशभिः समन्वागतः।

त एवैकोनविंशत्यां युक्ता वहुभिरिन्द्रियैः ॥

द्वे अनास्रवे हित्यैकं च व्यञ्जनम्। अत्रापि हि सत्यानि दृश्यन्ते ॥

[ 106 ] [द्विर्ध्यान][3]जास्तु सर्वाल्पैर्दशभिः पञ्चकाधिकैः ।

प्रथमद्वितीयध्यानोपपन्नानां पृथग्जनानां दुःखदौर्मण(न)स्ये हित्वा द्वे च व्यञ्जने त्रीणि चामलानि, पञ्चदशभिः समन्यागमः।

दशभिः सचतुष्कैस्तु शुभकृत्स्नाः समन्विताः ॥

शुभकृत्स्नेषु पृथग्जनस्य सौमनस्यं च हित्वा चतुर्दशभिः समन्वागमः।

[ 107 ] बृहत्फला हि (4)अत्यन्पैस्त्रयोदशभिरन्विताः ।

बृहत्फलेषु पृथग्जनस्य सुख च हित्वा दुःखादीनि च पूर्वोक्तानि त्रयोदश भवन्ति ।

युक्ताः षोडष(श)भिस्त्वेते सर्वभूरिभिरिन्द्रियैः ॥

यथार्या भवन्ति तेषां सुखसौमनस्याभ्यामनास्रवाभ्यां समन्वागम इति षोडश भवन्ति ॥

[ 108 ] अष्टाभिर्दशभिः सेकैरारूप्याः स्वल्पभूमिभिः[1] ।

स्वल्पैरष्टाभि.(5) । पृथग्जनस्याष्टा[ः] स्वल्पानि भवन्ति । पञ्च श्रा(श्र)द्धादी(दी)नि, जीवित मनउपेक्षा च । बहुभिरेकादशभिरार्यस्य समन्वागम । पञ्चभिः श्रद्धादिभि., द्वाभ्यां सुखसौमनस्याभ्यामनास्रवाभ्याम्, जीवितमनउपेक्षेन्द्रियैश्चतुर्भिरणा(ना)स्रवेण चैकेन ।

सदेवकौरवाः सत्त्वास्त्रयोदशभिरन्विताः ॥

पञ्चभिः श्रद्धादिभि. (6)पञ्चभि. सुखादिभिः, कायमनोजीवितैश्च त्रिभि' ॥

[ 109 ] अष्टाभिर्निःशुभो युक्तो दशभिर्वा त्रयाधिकैः ।[2]

उच्छिन्नशुभमूलो निःशुभः[3] सर्वाल्पैरष्टाभिः समन्वागतः । सुखादिभि· पञ्चभिः कायजीवितमनोभिश्च । सर्वप्रभूतैस्तु त्रयोदशभिर्यथोक्तैरष्टाभिश्चक्षु रादिभिश्चतुर्भिरेकेन च व्यञ्जनेन ।

द्विलिङ्गाः (7)पश्चिमैः स्वल्पैर्निशत्याप्येकया परम् ॥

उभयव्यञ्जनस्त्रयोदशभिः स्वल्पै सुखादिभिः कायजीवितमनोभि श्रद्धादिभिश्च पञ्चभिः । चक्षुरादीनामलब्धविहीनत्वादनियमः । सर्वबहुभि स्त्वेकोनविंशतिभिस्त्रीण्यमलान्यपास्य । समाप्तोऽय मत्स्यकग्रन्थसमुद्रः ॥

---

[1] Cf युक्तो बालस्तयाल्पैः उपेक्षायुमन शुभे । Ak II 20 cd

[2] Cf अथ य सर्वाल्पैः समन्वागत स कियद्भिरिन्द्रियै ?
सर्वाल्पैर्निःशुभाऽष्टाभिर्विमन कायजीविते । Ak. II 20 ab

[3] समुच्छिन्नकुशलमूलो निःशुभ । Akb II 20 ab

अनाज्ञातमाज्ञास्यामीन्द्रियादीनां तु श्रयाना(णा)मुत्तरोत्तरप्राप्तौ नि(नि)र्वाणे चाधिपत्यमिति[१] ॥

कः पुण(न)रेषामिन्द्रि(य)याणामनुक्रमः ?[२] ब्रूमः—

फलसंक्लेशसंभारविशुद्धित्वादनुक्रमः ॥

प्राक्कर्म फलं तावदष्टौ विपाकजत्वात्तस्मात्तानि पूर्वमुक्तानि । तस्मिन् विपाके सति संक्लेशसुखादिभिः । पञ्चभिर्मार्गसंभारश्रद्धादिभिः । विशुद्धिरणा(ना)स्त्रवैस्त्रिभिः ॥

कस्मात् पुनर्द्वाविंशतिरेव यथा परिकीर्तितान्युक्तानि न (7)भूयांसि नाल्पीयांसीति ? तदपदिश्यते—

[ 79 ] सत्त्वाख्या सत्त्ववैचित्र्य(त्र्यं) धृति(तिः) क्लेशोद्भवश्च यैः ।
मार्गोपायः फलप्राप्तिस्तेषामिन्द्रियता मता ॥[१]

सत्त्वाख्या खलु प्रवर्तते चक्षुरादिषु मनःपर्यन्तेषु षट्सु । एतद्धि मौलसत्त्वद्रव्यम् ।[3] सत्त्ववैचित्र्यं द्वाभ्यां स्त्रीपुरुषेन्द्रियाभ्याम् । धृतिर्जीवितेन्द्रियेन(ण) । क्लेशोद्भवः (8)पञ्चभिर्वेदनाभिः । मार्गोपायः श्रद्धादिभिः । फलप्राप्तिस्त्रिभिरन्त्यैः । इत्येतस्मादेषामिन्द्रियता मता ॥[४]

---

[१] Cf. आज्ञास्याम्याख्यमाज्ञाख्यमाज्ञातावीन्द्रियं तथा ।
उत्तरोत्तरसम्प्राप्तिनिर्वाणाद्याधिपत्यत. ॥

आदिशब्दोऽन्यपर्यायद्योतनार्थः । क्रमोऽन्यः पर्यायः । दर्शनहेयक्लेशप्रहाण प्रत्याज्ञास्यामीन्द्रियस्याधिपत्यम । भावनाहेयक्लेशप्रहाण प्रत्याज्ञेन्द्रियस्य । दृष्टधर्मसुखविहार प्रत्याज्ञातावीन्द्रियस्य । *Akb.* II 4

See *Vm* XVI. 10, *Dhs.* 296, 505, 553, *Aam.* p. 75, and *Asm.* p. 75.

[२] Cf. *Vm.* XVI. 8

Cf. चित्ताश्रयस्तद्विकल्प स्थितिः संक्लेश एव च ।
संभारो व्यवदानं च यावता तावदिन्द्रियम् ॥ *Ak.* II. 5.

[३] एतच्च 'षडायतनं मौल सत्वद्रव्यम्' इति । तदितरेषां तदाश्रितत्वात् । तथा हि षडिन्द्रियाधिपत्यसम्भूतमिन्द्रियाधिष्ठानम् । षड वा विषया विज्ञानकायाश्च । तदेतानि सत्वद्रव्यमिष्यते न तु मौलम् । न ह्यधिष्ठानाद्याधिपत्यसंभूतं षड् आयतनमिति । *Sakv.* p. 98. Also cf. तत्थ अञ्ञत्तधम्मं परिञ्ञाय अरियभूमिपटिलाभो होती ति सत्तभावपरियापन्नानि चक्खुन्द्रियादीनि पठम देसितानि । *Vm.* XVI 8.

[४] See *Vbh A.* p. 126.

[ 80 ] स्पर्शाश्रयोऽङ्ग्याधारसंभोगत्वाच्चतुर्दश ।
स्वर्गापवर्गहेतुत्वात् तदन्यद्वेन्द्रियाष्टकम् ॥[1]

तत्र स्पर्शाश्रयश्चक्षुरादीनि षडिन्द्रियाणि(णि) । प्रादुर्भावः स्त्रीपुरुषेन्द्रियाभ्याम् । आधारो जीविते[(9)]न्द्रियेण । संभोगो वेदनाभिः पञ्चभिः । अतस्तावच्चतुर्दशोक्ताणि(नि) । स्वर्गोपपत्तिनिमित्तानि श्रद्धादीनि पञ्च । अपवर्गकारणानि [त्रीण्यनाज्ञातमाज्ञास्यामीन्द्रियादीनि । अत एतावन्त्येव ॥]

यद्याधिपत्यार्थ इन्द्रियार्थः कस्माच्छन्दस्पर्शमनस्कारसंज्ञाचेतनामहाभौमानां [II. A, 2. Fol 39 b] [(1)]सत्याधिपत्ये नेन्द्रियत्वम् ?[2] उक्तं हि भगवता—"छन्दमूलकाः सर्वधर्माः[3] स्पर्शजातीयाः मनस्कारप्रभवाः ।" संज्ञाचेतनयोश्च संक्लेशव्यवदानयोराधिपत्यमुक्तमेव कुशल[चेतनायाश्च । एवं] क्लेशानामपि संसारहेतुप्रवर्तणे(ने) आ[धिपत्यम्] । निर्वाणस्य च धर्माग्र्यत्वे कस्मान्नेन्द्रियत्वम् ? तदिदमुच्यते—

[ 81 ] छन्दं वी[(2)]र्याङ्गभूतत्वात् स्पर्शो वित्त्यनुबृंहणात् ।
संज्ञा प्रज्ञाभिभूतत्वान्नेन्द्रियं मुनिरभ्यधात् ॥

छन्दो हि कर्तुकामता सा च वीर्याङ्गभूता । वीर्यं तु साक्षात् क्रिययाऽभिसंबध्यते । तदेवेन्द्रियमुक्तम् । स्पर्शोऽपि "स्पर्शप्रत्यया वेदना" इति तदुत्पत्तौ परिक्षीणशक्तिः । संज्ञापि प्रायोऽपि(प्रायो) लोकव्यवहारपतिता । सा प्रज्ञया परमार्थकर[(3)]तयाऽभिभूतेति नेन्द्रियमुक्ता ॥

[ 82 ] श्रद्धादीनां विदां चैव दोषः शुद्धौ मलोदये ।
प्रधानत्वान्मनस्कारो नेन्द्रियं समुदाहृतम् ॥

---

१ Cf प्रवृत्तेराश्रयोत्पत्तिस्थितिप्रत्युपभोगत ।
चतुर्दश तथाऽन्यानि निवृत्तेरिन्द्रियाणि वा ॥
मतविकल्पार्थो वा शब्द । अपरे पुनराहु । प्रवृत्तेराश्रय षडिन्द्रियाणि · तेनैव प्रकारेण निवृत्तेरन्यानि । श्रद्धादीनि हि निवृत्तेराश्रया । आज्ञास्यामीन्द्रिय प्रभव, स्थितिराज्ञेन्द्रियम्, उपभोग आज्ञातावीन्द्रियेण । *Akb* II 6

२ This topic (*Ad kārikās* 81—85) is not discussed in *Akb* But, it deals in brief with other *dharmas* · आधिपत्यादिन्द्रियत्वेऽविद्यादीनामुपसंख्यानं कर्तव्यम् । अविद्यादीनामपि हि संस्कारादिष्वाधिपत्यमत एतेषामपीन्द्रियत्वमुपसंख्यातव्यम् । वागादीना च वचनादानविहरणोत्सर्गानन्देष्वाधिपत्यमत एषामपि चेन्द्रियत्वमुपसंख्यातव्यम् । ···न तदुपसंख्यातव्यम् । *Akb* II 4

३ Cf. इमे खो मन्ते पञ्चुपादानक्खन्धा किम्मूलका ति ? इमे खो भिक्खु पञ्चुपादानक्खन्धा छन्दमूलका ति । *S.* III. p. 100.

योनिशो मनसिकारः खलु श्रद्धादीनां सङ्गीभवति । अयोनिशो मनसिकारोऽपि वेदनादीनां रागादिसंप्रयुक्तानामिति सोऽपि नेन्द्रियम् ॥

[ 83 ] संभावनानुकूलत्वादधिमोक्षोऽपि नेन्द्रियम् ।

अधिमोक्षोऽपि (4)श्रद्धोपकारीति नेन्द्रियम् ॥

कालान्तरफलोत्पादसंदेहाभ्यां न चेतना ॥

चेतनायाः खल्वपि कालान्तरेण फलमिति तस्या नासतिफले शक्तिराविर्भवति । लोको पि तस्याः फलसत्त्वाविनाशं दृष्ट्वा विप्रतिपन्नः । कश्चिद् ब्रूते निर्हेतुकं फलमिति कश्चिदीश्वरकृतं कश्चिद्दृष्टादिहेतुकमिति ।[1] चेतनायाः फलमनभिव्यक्त(5)मिति । ईशित्वं भगवता जानानेनाप्यतस्तस्यास्त्रैलोक्यकारणत्वेऽपि सति चेतना नेन्द्रियेषु व्यवस्थापिता ॥

कुशलमहाभौमेभ्योऽपि[2]

[ 84 ] नाप्रमादोऽप्यसौ वीर्यात्, न ह्रीः प्रागल्भनिग्रहात् ।
नोपेक्षा नापि चालोभो वीर्यश्रद्धाभिभूतितः ॥

अप्रमादस्तावद्वीर्यस्य माण्डागारिकस्थानीयः । वीर्यं कुशलान् धर्मानुपार्जय(6)ति सतान् रक्षति । ह्रीरपि वैशारद्यसपत्नभूता नववधूरिवाप्रगल्भा । तस्याः कुत आधिपत्यम् ? उपेक्षापि श्रद्धाभिभूता । अलोभश्च वीर्यविरोधीति नेन्द्रियम् ॥

[ 85 ] न प्रश्रब्धिर्विदौत्कच्याद्विनिन्द्यत्वाच्च नास्रवाः ।

प्रश्रब्धिः खलु वेदनायाः वृत्तिप्राधान्येनाभिभूता । सापि नेन्द्रियम् । अकुशलानामपि धर्माणां विनिन्द्य(7)त्वात्तु नास्रवाश्चण्डालराजवत् ॥

विप्रयुक्तानामपि[3]

जात्यादयो न पारार्थ्यात्

परतन्त्रा हि जात्यादयो धर्माः परिचारकवत् तेषां कुतः प्रमुत्वम् ?

---

[1] Cf. सन्ति भिक्खवे एके समणब्राह्मणा एववादिनो · य किञ्चाय पुरिसपुग्गलो पटिसंवेदेति···सब्बं त पुब्बेकतहेतू ति । सन्ति···एके···सब्बं त इस्सरनिम्माणहेतू ति । ···एके···सब्बं त अहेतु-अप्पच्चया ति । *Ang* I p 173

[2] V. infra, *Adi kārikā* 112.

[3] V. infra, *Adi. kārikā* 127.

निष्क्रियत्वान्न निर्वृतिः ॥

निर्वाणमपि निष्क्रियमसत्फलं सत्क्रियाश्च धर्माः फलवन्त आधिपत्य-युक्ता इति भगवता(8) निर्वाणं नेन्द्रियं व्यवस्थापितमिति। नात्र किञ्चिदुप-संख्येयं णा(ना)प्यपनेयमिति ॥

लक्षणमिदानीमिन्द्रियाणां वक्तव्यम्। तत्र चक्षुरादीनामुक्तम्। जीवित-श्रद्धादीनां संप्रयुक्तविप्रयुक्तेषूच्यमानेषु वक्ष्यते। दुःखादीनां त्वधुनोच्यते।

[ 86 ] कायस्य बाधनं दुःखं दौर्मनस्यं तु चेतसः।

बाधन[मिति वर्तते]।

सुखं च सुमनस्ता च सातं शारीरमानसम् ॥[1]

सातमिति प्रह्लादनापर्यायः।

[ 87 ab. ] वैशिष्ट्यान्मानसं सातं सुखं क्वचिदुदाहृतम्।

तृतीये ध्याने मानसं सातं सुखमित्युदाहृतं भगवता पञ्चेन्द्रियसुखाति-शयत्वात्।[2] सौमनस्यं तु प्रीतिस्वभावं[3] सा च तृतीयध्याने नास्तीति सुखं च तत्रोक्तमिति। [Fol. 40 lost.][4]......

......[II. B, 3 Fol 41 a] (1)भौमम् तदुपादिश्यते—

[ 88 ] षट्सु भूमिषु विज्ञेयं नीरजस्काद्यमिन्द्रियम्।

---

[1] Cf. दुःखेन्द्रियमसाता या कायिकी वेदना सुखम्।
साता ध्याने तृतीये तु चैतसी सा सुखेन्द्रियम् ॥ *Ak* II, 7.

[2] Cf. तृतीये तु ध्याने सैव साता वेदना चैतसी सुखेन्द्रियम्। नहि तत्र कायिकी वेदनाऽस्ति। पञ्चविज्ञानकायाभावात् *Akb* II. 7.

[3] Cf. अन्यत्र सा सौमनस्यं
...तृतीये तु ध्याने प्रीतिविरागत्वात् सुखेन्द्रियमेव सा न सौमनस्येन्द्रियम्। प्रीतिर्हि सौमनस्यम्। *Akb*. II. 8 a.

[4] In this lost folio, the *Adv.* might have discussed the following topics, which are dealt with in *Akb*. II. 8—11.

(१) कतीन्द्रियाणि विपाकः कति न विपाकः ?

(२) कतीन्द्रियाणि सविपाकानि, कत्यविपाकानि ?

and (३) कति कुशलानि, कत्यकुशलानि, कत्यव्याकृतानि ?

अनाज्ञातमाज्ञास्यामीन्द्रियं षट्सु भूमिषु, चतुर्षु ध्यानेष्वनागमे(म्ये) ध्यानान्तरिकायां च ।

तदन्ये निर्मले त्वत्रे द्रष्टव्ये नवभूमिके ॥

आज्ञेन्द्रियमाज्ञातवत(अज्ञातावि)इन्द्रियं च नवसु भूमिषु—आस्वेव षट्सु त्रिषु चाद्यास्वारूप्यभूमिषु ॥

अथ का[(2)]नि द्वाविंशतिरिन्द्रियानि(णि) कानि किं प्रहातव्यानि? तदुदाह्रियते[१]—

[ 89 ] दौर्मण(न)स्यं द्विहातव्यं

दर्शनभावनाप्रहातव्यम् ।

मनोवित्तित्रयं त्रिधा ।[२]

मनइन्द्रियं सुखसौमनस्योपेक्षाश्च दर्शण(न)भावनाहेयाश्चाहेयाश्च ।

नवाभ्यासप्रहेयानि(णि)

चक्षुरादीनि जीवितावसानान्यष्टौ दुःखेन्द्रियं च ।

द्विधा[(3)] [पञ्च][३]

श्रद्धादीनि भावनाहेयान्यहेयानि च । सास्रवानास्रवात् ।

न तु त्रयम् ॥

त्रीण्यनास्रवाण्यप्रहेयान्येव निर्दोषत्वात् ॥

यदि तर्हि श्रद्धादीनि सास्रवानास्रवत्वात्प्रहेयानि चाप्रहेयानि च द्विधा भवन्ति, त्रयमेवानास्रवम् ।[४] इदं तर्हि सूत्रं कथं नीयते ? यदुक्तं भगवता—

---

[१] See *Aam*. p. 76

[२] *Cf*. मनोवित्तित्रय त्रेधा द्विहेया दुर्मनस्कता ।
नव भावनया पञ्च त्वहेयान्यपि न त्रयम् ॥ *Akb*. II 13

[३] *Cf*. द्विधा नव ।

मनःसुखसौमनस्योपेक्षा श्रद्धादीनि च पञ्च एतानि नवेन्द्रियाणि सास्रवानास्रवाण्यपि । अनास्रवाण्येव श्रद्धादीनीत्येके । उक्तं हि भगवता "यस्येमानि···वदामि" इति । *Akb*. II. 9d. See *Aam* p. 76.

[४] For this controversy, see *Kr*. XIX. 8.

"तस्यैतानि (यस्येमानि) पञ्चेन्द्रियाणि(णि) सर्वेण स(4)र्वं न सन्ति तमहं बाह्यं पृथग्जनपक्षावस्थितं वदामि" इति ।[1]

[2]अनास्रवाधिकाराद्व्यापकमेतत् । अनास्रवाणि खल्वधिकृत्यैतदुक्तम् । यस्मादार्यपुद्गलव्यवस्थानं कृत्वा "यस्येमानि" इति भगवानवोचत् । पृथग्जनो वा द्विविधः ।[3] आभ्यन्तरश्चासमुच्छिन्नकुशलमूलः, बाह्यश्च समुच्छिन्न-कुशलमूलः । तमधिकृ(5)त्योक्तम्—"बाह्यं पृथग्जनपक्षावस्थितं वदामि" इ[ति]। "सर्वेण सर्वाणि(णि)" इति वचनाद्वा 'यस्य लौकिकान्यपि न सन्ति' इत्या-कूतम् । बाह्यमित्यशाक्यपुत्रीयं पृथग्जनपक्षावस्थितमित्यार्यधर्मविपक्षाव-स्थितम् । अन्यथा ह्येवमवक्ष्यत्—'यस्येमानि पञ्चेन्द्रिया(णि) न सन्ति तमहं पृथग्जनपक्षावस्थितं वदामि' इति । उक्तं हि—"स(6)न्त्रसन्ति सत्त्वा लोके जाता लोके वृद्धास्तीक्ष्णेन्द्रिया अपि मध्येन्द्रिया अपि मृद्विन्द्रिया अपि" इत्यप्रवर्तित एव धर्मचक्रे[4] । पुनश्चोक्तम्—"यावच्चाहमेषां पञ्चानामि-न्द्रियानां(णां) समुदयं चास्तङ्गमं चास्वादं चादीनवं च निःसरणं च यथाभूतं

---

[1] See *LVPAk* II p 119, n. 1.

Cf. "पञ्चिमानि भिक्खवे इन्द्रियानि । कतमानि पञ्च ? सद्धेन्द्रिय···पञ्ञिन्द्रिय इमानि खो भिक्खवे पञ्चिन्द्रियानि । इमेसं खो भिक्खवे पञ्चन्नं इन्द्रियानं समत्ता परिपूरत्ता अरहा होति, ततो मुदुतरेहि अरहत्तफलसच्छिकिरियाय पटिपन्नो होति; ततो मुदुतरेहि अनागामी होति, ततो मुदुतरेहि अनागामिफलसच्छिकिरियाय पटिपन्नो होति, ततो मुदुतरेहि सकदागामी होति, ततो मुदुतरेहि सकदागामीफलसच्छिकिरियाय पटिपन्नो होति; ततो मुदुतरेहि सोतापन्नो होति, ततो मुदुतरेहि सोतापत्तिफलसच्छिकिरियाय पटिपन्नो होति। यस्स खो भिक्खवे इमानि पञ्चिन्द्रियानि सब्बेन सब्बं सब्बथा सब्बं नत्थि, तमहं 'बाहिरो पुथुज्जनपक्खे ठितो' ति वदामीति । *S* v p 194.
Also cf *Saks.* p. 103.

[2] This whole passage, from अनास्रवाधिकाराद्व्यापकमेतत् to न चायमनास्रवाणां धर्माणां परिज्ञाप्रकार, is almost identical with *Akb* II 9d.

[3]Cf द्वे पुथुज्जना वुत्ता बुद्धेनादिच्चबन्धुना ।
अन्धो पुथुज्जनो एको कल्याणेको पुथुज्जनो ॥ *Digha A.* I p 59.

[4] Cf अद्दस खो भगवा बुद्धचक्खुना लोकं वोलोकेन्तो सत्ते अप्परजक्खे महारजक्खे तिक्खिन्द्रिये मुदिन्द्रिये स्वाकारे द्वाकारे सुविञ्ञापये दुविञ्ञापये अप्पेकच्चे परलोकवज्जभयदस्साविनो विहरन्ते । *Vinaya* I. p 6

It is interesting to note that the Sthaviravādin quotes precisely the same *Sutta*, while dealing with a controversy : नत्थि लोकियानि पञ्च इन्द्रियानीति ? *Kv.* XIX. 8 —[illegible] इन्द्रियपच्चया नाम होन्ति । तत्थ 'लोकिया सद्धा सद्धा एव नाम न सद्धिन्द्रियं । तथा लोकियं विरियं सति समाधि पञ्ञा पञ्ञा एव नाम, न पञ्ञिन्द्रियं' ति येसं लद्धि, सेय्यथापि हेतुवादानञ्चेव महिंसासकानञ्च । *KvA.* XIX. 8.

नाप्यहमासिषं न तावदहमस्मात्सदेवकाल्लोकात्" इति विस्तरः[1]। न[(7)] चायमनास्रवानां(णां) धर्माणां परीक्षाप्रकारः।

वयं त्वत्रेममागमं ब्रूमः[2]—"त्रीणीमानि श्राद्धस्य श्रा(श्र)द्धालिङ्गाणि(नि)" इति विस्तरः। कथं कृत्वा ज्ञापकम्? श्रद्धायां ह्यसत्यामार्याणां दर्शण(न)कामता न भवेत्। सद्धर्मश्रोतुकामता च, विगतमात्सर्येण चेतसा अगारमध्यवस्तुकामता [च]। यस्य च पृथग्जन[(8)]स्यैतानीन्द्रियाणि न सन्ति स सर्व[था बाह्यपृथग्जनो] भवति कुशलधर्मोपणि(नि)पद्धेतुवैकल्यात्। तस्मात्सास्रवाणा(ना)स्रवाणीति सिद्धम्॥[3]

उक्तः प्रकारभेदः। लाभ इदानीं वक्तव्यः। कतीन्द्रियानि(णि) कस्मिन् धातौ विपाकः प्रथमतो लभ्यन्ते? तदिदमारभ्यते।

[ 90 ] पूर्वं क्रमोद्भवैः कामे विपाको [[(9)]लभ्य]ते द्वयम्।[4]

कामधातौ क्र[मोद्भवैः—अण्डजजरायुजसंस्वेदजैः पूर्वं] इन्द्रियद्वयं लभ्यते। कायेन्द्रियं जीवितेन्द्रियं च। एतद्धि द्वयं तस्मिन् शुक्रशोणितविन्दौ प्रथमं विपाकजं भवति। क्लिष्टत्वात्तु न मनउपेक्षेन्द्रिये विपाकः।[5]

अन्यैः षट् सप्त वाऽष्टौ वा

[1] Cf पञ्चिमानि भिक्खवे, इन्द्रियानि, कतमानि पञ्च? सद्धिन्द्रिय···पञ्ञिन्द्रिय। यतो खो भिक्खवे, भिक्खु इमेस पञ्चन्न इन्द्रियान समुदयञ्च अत्थगमञ्च अस्सादञ्च आदीनवञ्च निस्सरणञ्च यथाभूत विदित्वा अनुपादा विमुत्तो होति, अय वुच्चति भिक्खवे, भिक्खु 'अरहा खीणासवो···सम्मदञ्ञाविमुत्तो' ति। *S.* v. p 205

[2] The Kośakāra closes this controversy with the remark—न चायमनास्रवाणा धर्माणा परीक्षाप्रकार। *Akb*, II 9d

[3] Immediately after dealing with this topic, the *Akb.* II 10. deals with 'कतीन्द्रियाणि विपाक कति न विपाक ?'. This is lost in our text V.supra, p. 52. n.4.

[4] Cf. कामेष्वादौ विपाको द्वे लभ्येते नोपपादुकं। *Ak* II. 14 ad.

[5] For a controversy on the Development of Sense-organs, see *Kv.* xiv. 2.—इदानि सळायतनुप्पत्तिकथा नाम होति। तत्थ उपपत्तेसियेन पटिसन्धिचित्तेन सहेव ओपपातिकान सळायतन उप्पज्जति। गब्भसेय्यकान अञ्ञतिकायतनेसु मनायतनकायायतनानेव पटिसन्धिक्खणे उप्पज्जन्ति, सेसानि चत्तारि सत्तसत्ततिरत्तिहि। तानि च खो येन कम्मुना पटिसन्धि गहिता, तस्सेव कम्मस्स वा कतत्ता ति अय सकसमयं वादो। येस पन एककम्मसम्भवत्ता सपत्तसाखाविटपान रुक्खादीन अङ्कुरो विय बीजमत्त सळायतन मातुकुच्छिस्मि पटिसन्धिक्खणे येव उप्पज्जतीति लद्धि, सेय्यथापि पुब्बसेलियानं। *Kv.A.* xiv. 2.

औपपादुके पुनः षट्। चक्षु[II A. 3 Fol 41b ](1)रादीनि पञ्च जीवितेन्द्रियं च। [षड्व्यञ्जना भवन्ति यथा प्राथम]कल्पिकाः। सप्त पुण(न)र्येकव्यञ्जना यथा देवादिषु। अष्टौ वा यद्युभयव्यञ्जना भवन्ति यथाऽपायेषु। एवं तावत् कामधातौ।

षड् रूपे

रूपधातौ पुनः षडिन्द्रियाणि वि[पाक]ः प्रथमतो लभ्यन्ते। चक्षुरादीनि पञ्च जीवितेन्द्रियं च।

अन्त्ये (2)तु जीवितम् ॥[1]

[आरूप्ये जीवितेन्द्रिय] विपाको लभ्यते। उक्तो लाभ ॥

त्यागो वक्तव्य.। सोऽयमाधिक्रियते—

[ 91 ] म्रियमाणे(नि)रोध्यन्ते त्रीण्यन्ते

जीवितम्, मन, उपेक्षा चेति।

अष्टौ तु मध्यमे[2]।

रूपधातौ म्रियमाणैरष्टौ निरुध्यन्ते। तानि च त्रीणि, चक्षुरादीनि च पञ्च।

दशाष्टौ नव चत्वारि[3] कामे पञ्च शुभानि वा[3] ॥

[4]उभयव्यञ्जनैर्दश निरोध्यन्ते। तानि चाष्टौ स्त्रीपुरुषेन्द्रिये च। एक व्यञ्जनैर्न(न)व। अव्यञ्जनैरष्टौ। सकृन्मरणे खल्वेष न्यायः। क्रमेन(ण) तु म्रियमाने(णे)श्चत्वारि णि(नि)रोध्यन्ते कायजीवितमनउपेक्षेन्द्रियानि(णि)। न ह्येषा पृथङ्निरोध। एष च विधिः क्लिष्टाव्याकृतचित्तस्य मरणे द्रष्टव्यः। (4)कुशले तु चित्ते सर्वत्र श्रद्धादीनि पञ्चाधिकानि। एवमारूप्येष्वष्टौ, रूपेषु त्रयोदश। इत्येव विस्तरेण गणयितव्यानि ॥[4]

अभिधर्मदीपे विभाषाप्रभायां वृत्तौ द्वितीयस्याध्यायस्य प्रथम पाद ॥

---

[1] Cf तं षड् वा सप्त वाऽष्टौ वा षड् पेक्वैकमुत्तरे। *Ak.* II. 14

[2] Cf निरोधयत्युपरमाऽऽरूप्ये जीवित मन।
उपेक्षा चैव रूपेऽष्टौ कामे दश नवाष्ट वा ॥ *Ak.* II. 15

[3] Cf क्रममृत्यौ तु चत्वारि शुभे सर्वत्र पञ्च च। *Ak.* II. 16 ab
See *Asm* p 76

[4] This passage is idential with *Akb* II. 16 ab.

# द्वितीयाध्याये

## द्वितीयपादः ।

इन्द्रियप्रस्तावे[१] सर्वं इन्द्रियधर्मा विचार्यन्त इत्यतः पृच्छति । अथैषां कुशलानामिन्द्रि(5)यानां(णां) कतरेणेन्द्रियेन(ण) कतरच्छ्रामन्य(ण्य)फलं प्राप्यत इति ? तदिदं प्रस्तूयते—

[ 92 ] आद्यन्तलाभो नवभिः सप्ताष्टाभिश्च मध्ययोः ।[२]

या खल्वेषा चतुष्फलमयी माला तस्याः प्रथमं स्रोतआपत्तिफलमन्त्यमर्हत्त्वं मध्ये सकृदागाम्यनागामिफले । तत्राद्यान्तयोः फलयोर्ण(र्न)वभिरिन्द्रियैर्लाभः ।[3] स्रोत(6)आपत्तिफलस्य तावत्—श्रद्धादिभिः पञ्चभिराज्ञास्यामीन्द्रियाज्ञेन्द्रियाभ्यामेकमनयोरानन्तर्यमार्गाद्, द्वितीयं विमुक्तिमार्गाद्वेदितव्यम् ।[४] प्रथमेन क्लेशप्राप्तिच्छेदो द्वितीयेन विसंयोगप्राप्त्याकर्षणम् । मनउपेक्षेन्द्रियाभ्यां चेति । अर्हत्त्वस्य पुन श्रद्धादिभिराज्ञास्यामीन्द्रियवर्ज्जैः, मनइन्द्रियेन(ण) सुखसौमन(7)स्योपेक्षेन्द्रियानां(णां) चान्यतमेन ।

[५]'सप्ताष्टाभिश्च मध्ययोः ।' सकृदागाम्यनागामिफलयोः पुनः सप्तभिरष्टाभिर्ण(र्न)वभिश्चेति 'च'शब्दात् । तत्र सकृदागामिफलं तावद्यद्यानुपूर्विको[६] लभते, स च लौकिकेन[७] मार्गेन(ण) तस्य सप्तभिर्लाभः । पञ्चभिः

---

[१] इन्द्रियप्रकरणे in *Akb* II 16 cd See *LVPAK* II p. 134 n. 1

[२] Cf नवाप्तिरन्त्यफलयो सप्ताष्टनवभिर्द्वयो. । *Ak* II 16 cd.

[३] Cf नवभिरिन्द्रियैं प्राप्तिरन्त्यफलयो । के पुनरन्त्ये । स्रोतआपत्तिफलमर्हत्त्व च । के मध्ये । सकृदागामिफलमनागामिफल च । तत्र स्रोतआपत्तिफलस्य श्रद्धादिभिराज्ञातावीन्द्रियवर्ज्यैर्मनउपक्षेन्द्रियाभ्या चेति नवभि । आज्ञास्यामीन्द्रियमानन्तर्यमार्गे वेदितव्यमाज्ञेन्द्रिय च विमुक्तिमार्गे । उभाभ्या हि तस्य प्राप्तिर्विसयोगप्राप्तेरावाहकसन्निश्रयत्वाद्यथाक्रमम् । *Akb* II. 16 c

[४] आनन्तर्यमार्गेणाज्ञास्यामीन्द्रियस्वभावेन विमुक्तिमार्गेण चाज्ञेन्द्रियस्वभावेन तस्य प्राप्ति । *Sakv* p 113

[५] The following *Adv* upto तस्य नवभिराज्ञेन्द्रिय नवम भवति, is almost identical with *Akb* II 16 d.

[६] तत्रानुपूर्विको य स्रोतापत्तिफल प्राप्य क्रमात् सकृदागामिफल प्राप्नोति । *Sakv.* p. 114

[७] लौकिको मार्ग शान्ताद्युदाराद्याकार । *Ibid.*

श्रद्धादिभिः, मनउपेक्षेन्द्रियाभ्यां च। अथ लोकोत्तरेण मार्गेण (8)तस्याष्टाभि, आज्ञेन्द्रियमष्टम भवति। अथ [1][भूयो]वीतरागः प्राप्नोति, तस्य नवभिर्यैव स्रोतआपत्तिफलस्य। अनागामिफल यद्यानुपूर्विकः प्राप्नोति, स च लौकिकेन मार्गेण, तस्य सप्तभिर्यथा सकृदागामिफलस्य।

अथ लोकोत्तरेण, तस्याष्टाभिस्तथैव। अथ वीतरागः[2] प्राप्नोति, तस्य नवभिर्यथा (9)स्रोतआपत्तिफलस्य। तस्य तु निश्रयविशेषात्[3] सुखसौमनस्योपेक्षेन्द्रियाणामन्यतमद्भवति। यदाप्ययमानुपूर्विको नवमे विमुक्तिमार्गे ध्यानं[4] प्रविशति लौकिकेन मार्गेण, तदाप्यष्टाभिरिन्द्रियैरना(ना)गामिफल लभते। तस्य नवमे विमुक्तिमार्गे सौमनस्यमष्टम भवति, आनन्तर्यमार्गे तूपेक्षे[II B 4 Fol 42 a](1)न्द्रियमेव। नित्यमुभाभ्या[5] हि तस्य प्राप्ति.। अथ लोकोत्तरेण प्रविशति, तस्य नवभिराज्ञेन्द्रियं नवम भवति ॥[6]

यत्तर्ह्यभिधर्मे पठ्यते—"अर्हत्फलस्यैकादशभि." इति।[7] तत्कथमुच्यते 'नवभिस्तस्य प्राप्ति' इति ?[8] नैष दोष.। यस्मात्—

---

[1] भूयोवीतराग in *Akb*—भूयोवीतराग इति। यो लौकिकेन मार्गेण पृथग्जनावस्थाया षट्प्रकारोपलिखिताऽभूत सो भूयोवीतराग इत्युच्यत। अय हि स्रोतआपत्तिफलमप्राप्यैव षोडशे क्षणे सकृदागामी भवति। *Sakv* p 115

[2] अथ वीतराग इति। कामधातुमात्रवीतरागो लौकिकेन मार्गेण नवम प्रकारे प्रहीण प्रथमादपि वा ध्यानाद्यावदाकिञ्चन्यादपि वा वीतरागो योऽनागामिफल प्राप्नोति। स्रोतआपत्तिफलस्य हि दर्शनमार्गेण प्राप्ति अस्य च दर्शनमार्गेणैव प्राप्तिरिति तुल्यत्वम्। *Sakv* p 115

For a controversy on this point, see *Kv* 1 5—जहति पुथुज्जनो कामराग ब्यापाद ति ?—इदानि जहति कथा नाम होति। तत्थ यस झानलाभी पुथुज्जनो सह सच्चाभिसमया अनागामी नाम होति, तस्स पुथुज्जनकाले येव कामरागब्यापादा पहाना ति लद्धि, सम्मयापि एतरहि सम्मितीयान। तेस त लद्धि भिन्दितु जहति पुथुज्जनो ति पुच्छा सकवादिस्स। *KvA* 1 5

[3] निश्रयविशेषादिति। यदि तृतीय ध्यान निश्रित्य नियाममवक्रामति। सुखेन्द्रिय तत्र भवति। अथ प्रथमद्वितीय ध्यान निश्रित्य सौमनस्येन्द्रिय तत्र भवति। अथानागम्य ध्यानान्तरचतुर्थध्यानानामन्यतम निश्रित्य उपेक्षेन्द्रिय भवतीति। *Sakv* p 115

[4] तादृशेन्द्रियत्वाद् ध्यान in *Akb*

[5] आनन्तर्यविमुक्तिमार्गाभ्याम्। *Sak.* p 115

[6] V supra, p 57 n 5

[7] *Jñāna prasthāna*, 15 1 See *Sakv* p 116

[8] Cf यत्तर्ह्यभिधर्म उक्तम 'कतिभिरिन्द्रियैरर्हत्त्वं प्राप्नोतीत्याह एकादशभि" इति तत्कथ नवभिरित्युच्यते ? नवभिरेव तत् प्राप्नोति। *Akb* 11 16 cd

एकादशभिराप्तिस्तु फलस्यान्त्य[स्य] हानितः ॥[1]

परिहाय परिहायाऽयं समयविमुक्तोऽर्हन्निश्चयविशे(2)पात्पुनर्लभते । कदाचित् तृतीयं ध्यानं निश्रित्य । कदाचिद् द्वितीयं प्रथमं वा । कदाचिच्चतुर्थमनागम्यं वा । इत्यतस्तिसृणां वेदनानां संभवादेकादशभिरुक्तम् ॥[2]

अथैषां त्रयानां(णां) कामरूपारूप्यधातूनां कतरधातुभूम्यालम्बनेन मार्गेण कतरस्य धातोः परिज्ञानं भवतीति ?[3] तदाविर्भाव्यते ।

[ 93 ab [4] ] स्वस्य धातोः परिज्ञानं स्व(3)विपक्षदृशा पथा ।

स्वविपक्षदृशा च मार्गणे(मार्गेण)नास्रवेण परिज्ञानं भवति । तत्र स्वधातुदृशा तावद् दुःखसमुदयालम्बनेन, स्वविपक्षदृशा निरोधमार्गालम्बनेन त्रैधातुकपरिज्ञानं भवति । सास्रवेण त्वानन्तर्यमार्गेण संगृहीतेन सन्निकृष्टाऽधोभूमिविषयेणोर्ध्वसन्निकृष्टभूम्यालम्बनेन च विमुक्तिमा(4)र्गसंगृहीतेनाधोभूमिपरिज्ञानं भवति । आन[न्त]र्यमार्गाणामधोभूमिविषयत्वाद्विमुक्त्याख्यानामूर्ध्वभूम्यालम्बनत्वाच्च । अनास्रवानां(णां) तूभयेषामेकभूमिगोचरत्वादिति ॥

अथ कतिभि(र्भी)रिन्द्रियैः कामधातुपरिज्ञानं कतिभि(र्भी) रूपारूप्यधातुपरिज्ञानमिति ? तदिदं प्रताप्यते—

[ 94 ] कामधातुपरिज्ञानं प्रायः सप्तभिरि(5)ष्यते ।
समलैर्निर्मलैस्त्वर्थैरष्टाभिरभिधीयते ॥

कामधातोस्तावत्—सास्रवैः सप्तभिः परिज्ञानं भवति प्रहाणमित्यर्थः । पञ्चभिः श्रद्धादिभिः मनउपेक्षेन्द्रियाभ्यां च । प्रायो ग्रहणात्सौमनस्येन्द्रियेना(णा)पि कस्यचित्समापत्त्यभिप्रायस्य योगिनो मौलभूमिप्रवेशात् । अनास्रवैस्त्विन्द्रियैरष्टाभिः । एभिरेव सप्तभि(6)राज्ञेन्द्रियेण च । प्रायो वचनात्सौमनस्येन्द्रियेन(ण) च नवमेन ॥

[ 95 ] रूपधातुपरिज्ञानमिदं दशभिरिन्द्रियैः ।

---

[1] Cf. एकादशभिरर्हत्त्वमुक्तं त्वेकस्य संभवात् । *Ak.* II 17 ab

[2] Cf अस्ति समयो यदेक पुद्गल परिहाय परिहाय सुखसौमनस्योपेक्षाभिरर्हत्त्वं प्राप्नुयादत एकादशभिरित्युक्तम् । न तु खलु समयोऽस्ति सुखादीनामेकस्मिन् काले । कथमनागामिनोऽप्येष प्रसङ्गो भवति ? न ह्यसौ परिहीणः कदाचित्सुखेन्द्रियेण प्राप्नोति न च वीतरागपूर्वी परिहीयते । तद्वैराग्यस्य द्विमार्गप्रापणात् । *Akb* II. 17 ab.

[3] This topic is not discussed in *Akb*

[4] The cd of the *kārikā* 93 is missing.

पञ्चभि श्रद्धादिभि, मन इन्द्रियेन(ण), तिसृभिर्वेदनाभि, निश्रय विशेषादाज्ञेन्द्रियेन(ण) च ॥

अन्त्यधातुपरिज्ञानमेकादशभिरुच्यते ॥

यथोक्तैर्दशभिराज्ञातवदिन्द्रियेन(ण) च। उभाभ्या तस्य परिज्ञानमेक (7)वज्रोपमसमाधिसहचरम्, द्वितीय क्षयज्ञानसहगतमिति ॥

इदमिदानीं वक्तव्यम्—क कतिभिरिन्द्रियै समन्वागत इति ?[1] तत्र तावदय नियम —

[ 96 ] सर्वसत्त्वास्त्रिधातुस्था उपेक्षायुर्मणो(नो)ऽन्विताः।

एभिस्त्रिभि· सर्वसत्त्वा समन्वागता ।

त्वक्स्त्रीत्वव्यञ्जनैः कामे

कामावचरा सत्त्वा कायपुरुषस्त्री(8)न्द्रियैरेभि पूर्वोक्तैश्च ।

रूपिणश्चक्षुरादिभिः ॥

रूपिणः खलु सत्त्वाश्चक्षुरादिभिस्त्रिभिश्चोपेक्षायुर्मनोभिः ॥

[ 97 ] कामिनः खलु दुःखेन तद्रागी दुर्मण(न)स्तया ।

अवीतराग कामधातौ दु खदौर्मण(न)स्याभ्या समन्वागत ।

ऊर्ध्वजस्तु सुखेनार्यः शुभाह्वाधरजौ तथा ॥

ऊर्ध्वजो रूपारूप्यधातुज आर्य सुखेन सम(9)न्वागत । अनास्रवेण शुभद[त्स्नपरीत्तशुभाप्रमाणशुभा] त्रिधात्रिधेन ॥

[ 98 ] प्रतीत्या(प्रीत्या)भाह्वाधरोद्भूतौ

आभास्वरेषूपपन्नस्तदधरजश्च प्रीत्या समन्वागत ।

शुभैः स शुभमूलकः ।

श्रद्धादिभि पञ्चभि कुशलैरछु(स)च्छिन्नकुशलमूल सर्वत्र समन्वागत ।

शैवाभ्यां मोक्षमार्गस्थौ

---

[1] This topic is not discussed in *Akb*.

द्वा [II A, 4 Fol 42 b ]भ्यां[(1)] शैक्षाभ्यां [इन्द्रियाभ्यां दर्शनभावना-मार्गस्थौ] ॥

[अशैक्षोऽर्हन्] स्वमार्गगः ॥

अथ नियमेन कः कतिभिरिन्द्रियैः समन्वागत इति ? तदिदमुपदर्श्यते—

[ 99 ] उपेक्षायुर्मणो(नो)युक्तोऽवश्यं त्रयसमन्वितः ।[1]

[ए]भिरेव त्रिभिः । न ह्येषामन्योन्येन विना समन्वागतः । शेषै-रवि(नि)यमः ।[2]

[3](2)तत्र तावच्चक्षुरादिभिः सप्तभि[4]रारूप्योपपन्नो न समन्वागतः । कामधातौ च येनाप्रतिलब्धविहीनानि ।[5] सुखेन्द्रियेण चतुर्थध्यानाद्युपपन्नाः[6] पृथग्जनाः, सौमनस्येन त्रि(तृ)तीयाद्युपपन्नाः[7] पृथग्जनाः, दुःखेन्द्रियेन(ण) रूपारूप्योपपन्नाः, दौर्मण(न)स्येन कामवीतरागः, श्रद्धादिभिर्निःशुभः[8], अना-स्रवैस्त्रिभिः पृथ(3)ग्जना[9] न समन्वागताः ।[3]

चतुर्भिः कायसुखवान्

यः कायेन्द्रियेण सोऽवश्यं चतुर्भिस्तैश्च त्रिभिः कायेन्द्रियेन(ण) च । योऽपि सुखेन्द्रियेण स चतुर्भिः—तैश्च त्रिभिरुपेक्षादिभिः सुखेन्द्रियेन(ण) च ।

चक्षुष्मानपि पञ्चभिः[10] ॥

---

[1] Cf उपेक्षाजीवितमनोयुक्तोऽवश्य त्रयान्वित ॥ *Ak.* II 17 cd

[2] Cf शेषैस्त्वनियम । स्यात्समन्वागत स्यादसमन्वागत । तत्र तावत *Akb* II 17cd

[3]—[3] This whole passage substantially agrees with *Akb* II 18ab

[4] चक्षु श्रोत्रघ्राणजिह्वेन्द्रियैरारूप्योपपन्नो न समन्वागत । *Akb* II 18ab

[5] after this *Akb* has कायेन्द्रियेणारूप्योपपन्नो न समन्वागत । स्त्रीन्द्रियेण रूपारूप्योपपन्न । कामधातौ येनाप्रतिलब्धविहीनम् । एव पुरुषेन्द्रियेण । *Ibid*

[6] चतुर्थध्यानारूप्योपपन्न । *Ibid*

[7] तृतीयचतुर्थध्यानारूप्योपपन्न । *Ibid*

[8] श्रद्धादिभि समुच्छिन्नकुशलमूल । *Ibid*

[9] आज्ञास्यामीन्द्रियेण पृथग्जनफलस्था न समन्वागता । आज्ञेन्द्रियेण पृथग्जनदर्शनाशैक्षमार्गस्था । आज्ञातावीन्द्रियेण पृथग्जनशैक्षा असमन्वागता । *Ibid*

[10] Cf चतुर्भि सुखकायाभ्या पञ्चभिश्चक्षुरादिमान् । *Ak.* II 18 ab

'अपि'शब्दाच्छ्रोत्रघ्राणजिह्वेन्द्रियैर्वेदितव्यम्। यश्चक्षुरिन्द्रियेण सोऽवश्यं पञ्चभिः—उपेक्षाजीवि(4)तमनःरूपेन्द्रियैश्चक्षुषा च ॥

[ 100 ] स्त्रीन्द्रियाद्यन्वितोऽष्टाभिः[1]

तैश्च सप्तभिः स्त्रीन्द्रियेण(ण) च। 'आदि'ग्रहणात् पुरुषेन्द्रियदौर्मण(न)-स्यश्रद्धादीनां ग्रहणं वेदितव्यम्। तद्वानपि प्रत्येकमष्टाभिः—तैश्च सप्तभिः पुरुषेन्द्रिय(ण) चाष्टमेन। एभिश्च कायजीवितमनोभिश्चतसृभिर्वेदनाभिः, दौर्मण(न)स्येन्द्रियेण च। श्रद्धा(5)दि[भि]स्तैश्च पञ्चभिरुपेक्षाजीवितमनोभिश्च।

दुःखी युक्तस्तु सप्तभिः।[2]

यो दुःखेन स सप्तभिः—कायजीवितमनोभिश्चतसृभिर्वेदनेन्द्रियैर्दौर्मण(न)स्यं हित्वा, तद्वीतरागस्य नास्तीति।

एकादशभिरन्त्याभ्यां[3]

द्वाभ्यामन्त्याभ्यां युक्तोऽवश्यमेकादशभिः, प्रत्येकं सुखसौमनस्योपेक्षाजीवितमनःश्रद्धादिभि(6)राज्ञेन्द्रियेण च। एवमाज्ञातवदिन्द्रियेण तेन नैश्चेति।

सप्त षड्भिस्तदाद्यवान् ॥[4]

प्रथमेन त्वनास्रवेण यः समन्वागतः सोऽवश्यं त्रयोदशभिर्मनोजीवितकायेन्द्रियैश्चतसृभिर्वेदनाभिः श्रद्धादिभिस्तेन चेति ॥

अथ सर्वबहुभिः कियद्भिः समन्वागताः[5] ? तदुच्यते—

[ 101 ] त्रिद्वीपनरकोत्पन्ना मिथ्यात्वनियता अ(7)पि।
[बहुभिः] ह्येकान्नविंशत्या स्वल्पैरष्टाभिरन्विताः ॥

[ 102 ] अन्तराभविकप्रेततिर्यक्श्रद्धानुसारिण[ः]।
त्र्यधिकैर्दशभिर्युक्ता दशभिर्वा नवाधिकैः ॥

---

1 Cf. स्त्रीन्द्रियादिमान्। *Ak.* II 18 d

2 Cf. सौमनस्यी च दुःखी तु सप्तभिः। *Ak.* II 18 cd

3 Cf. अष्टाभिरेकादशभिस्त्वाज्ञातेन्द्रियान्वितः। *Ak.* II 19 ab

4 Cf. आज्ञास्यामीन्द्रियोपेतस्त्रयोदशभिरन्वितः। *Ak.* II 19 cd

5 Cf. यः सर्वबहुभिरिन्द्रियैः समन्वागतः स कियद्भिः ?
बहुभिर्युक्त एकान्नविंशत्याऽमलवर्जितैः।
द्विलिङ्ग आर्यरागस्यैकलिङ्गद्वयमलवर्जितैः ॥ *Ak.* II. 21.
The *Adv* deals with this topic in detail

स्वल्पैस्त्रयोदशमी रूपभिः पञ्चभिः श्रद्धादिभिश्च जीवितमनउपेक्षाभिश्च। णा(ना)रकस्य तूच्छिन्नशुभवीजस्य चक्षुरादीनि पञ्चैकं च व्यञ्जनं वेदनाश्च पञ्च जीवि[8]तं मनश्च। तिरश्चां नास्त्युच्छेदः। य इहोच्छिनत्ति सोऽवश्यमवीचिं गच्छति। तेन तत्र नरके श्रद्धाद्या न सन्ति। पञ्च चक्षुरादीनि पञ्च च वेदना, एकं व्यञ्जनं जीवितं मनश्चेति त्रयोदश भवन्ति। स्युर्वहुभिश्चान्तराभविकाद्याः पृथग्जनास्त्रीण्यमलानि हित्वैकान्नविंशतिभिः, आर्यास्तु श्रद्धानुसारिणो द्वे [9]अमले हित्वैकं च व्यञ्जनमित्येकान्नविंशतिभिरेव समन्वागताः ॥

[ 103 ] सम्यक्त्वनियता ये तु ये च श्रद्धाधिमुक्तिकाः ।
त एकादशभिर्युक्ता दशभिर्वा नवाधिकैः ॥

तत्र सम्यक्त्वनियता आर्या इत्यर्थः। ते पञ्चभि. श्रद्धादिभिर्मनोजीविताभ्यां च तिसृभिर्वेदनाभिरेकेण चानास्रवेन(ण)। सर्वप्रभृतैः पुनरेकान्न- [II B, 5 Fol 43 a ][1]विंशतिभिरेकलिङ्गद्वयमलवर्जितैः ॥

[ 104 ] प्रज्ञाविमुक्तनामार्हद् कायसान्युभयाह्वयाः ।
अत्रैकादशकोपेता यदि वाऽष्टादशान्विताः ॥

सर्वाल्पैरेकादशभिः श्रद्धादिभिः सुखसौमनस्योपेक्षाजीवितमनोभिरेकेन चानास्रवेण। वहुभिस्त्वष्टाद[श]भिः, द्वे अनास्रवे दौर्मण(न)स्यमेकं च व्यञ्जनं हित्वा ॥

[ 105 ] कामदेवा मृ[2]ताः स्वल्पैर्दशभिः सप्तकाधिकैः ।

अनास्रवत्रयं हित्वा दौर्मण(न)स्यं च। तत्रत्यः पृथग्जनो यदि वैराग्य गच्छति स देवर्षिर्भवति। एकं च व्यञ्जनं हित्वा परिशिष्टैः सप्तदशभिः समन्वागतः।

त एवैकोनविंशत्या युक्ता बहुभिरिन्द्रियैः ॥

द्वे अनास्रवे हित्वैकं च व्यञ्जनम्। अत्रापि हि सत्यानि दृश्यन्ते ॥

[ 106 ] [द्विध्यान][3]जास्तु सर्वाल्पैर्दशभिः पञ्चकाधिकैः ।

प्रथमद्वितीयध्यानोपपन्नानां पृथग्जनानां दुःखदौर्मण(न)स्ये हित्वा द्वे च व्यञ्जने त्रीणि चामलानि, पञ्चदशभिः समन्वागमः।

दशभिः सचतुष्कैस्तु शुभकृत्स्नाः समन्विताः ॥

शुभकृत्स्नेषु पृथग्जनस्य सौमनस्यं च हित्वा चतुर्दशभिः समन्वागमः।

[ 107 ] बृहत्फला हि [4]अल्पैस्त्रयोदशभिरन्विताः ।

बृहत्फलेषु पृथग्जनस्य सुखं च हित्वा दुःखादीनि च पूर्वोक्तानि त्रयोदश भवन्ति ।

युक्ताः षोडष(श)भिस्त्वेते सर्वभूरिभिरिन्द्रियैः ॥

यथार्था भवन्ति तेषां सुखसौमनस्याभ्यामनाज्ञाताभ्यां समन्वागम इति षोडश भवन्ति ॥

[ 108 ] अष्टाभिर्दशभिः सेकैरारूप्याः स्वल्पभूमिभिः[1] ।

स्वल्पैरष्टाभिः [5] । पृथग्जनस्याष्टा[ ] स्वल्पानि भवन्ति । पञ्च श्रा(श्र)द्धाद्यी(दी)नि, जीवित मनउपेक्षा च । बहुभिरेकादशभिरार्यस्य समन्वागमः । पञ्चभिः श्रद्धादिभिः, द्वाभ्यां सुखसौमनस्याभ्यामनाज्ञाताभ्याम्, जीवितमनउपेक्षेन्द्रियैश्चतुर्भिरणा(ना)ज्ञेण चैकेन ।

सदेवकौरवाः सत्त्वास्त्रयोदशभिरन्विताः ॥

पञ्चभिः श्रद्धादिभिः [6]पञ्चभिः सुखादिभिः, कायमनोजीवितैश्च त्रिभिः ॥

[ 109 ] अष्टाभिर्निः शुभो युक्तो दशभिर्वा त्रयाधिकैः ।[2]

उच्छिन्नशुभमूलो निःशुभः[3] सर्वाल्पैरष्टाभिः समन्वागतः । सुखादिभिः पञ्चभिः कायजीवितमनोभिश्च । सर्वप्रभूतैस्तु त्रयोदशभिर्यथोक्तैरष्टाभिश्चक्षुरादिभिश्चतुर्भिरेकेन च व्यञ्जनेन ।

द्विलिङ्गाः [7]पश्चिमैः स्वल्पैर्विशत्याप्येकया परम् ॥

उभयव्यञ्जनस्त्रयोदशभिः स्वल्पैः सुखादिभिः कायजीवितमनोभिः श्रद्धादिभिश्च पञ्चभिः । चक्षुरादीनामलब्धविहानत्वादनियमः । सर्वबहुभिः स्थैकोनविंशतिभिर्ज्ञाण्यमलान्यपास्य । समाप्तोऽयं मत्स्यकग्रन्थसमुद्रः ॥

---

[1] Cf. युक्तो बाऽल्पतमाष्ट्ष्य उपेक्षायुमनः शुभैः । *Ak* II 20 cd

[2] Cf. बह्व एकान्नविंशत्या ... ? सर्वाल्पैर्निःशुभोऽष्टाभिर्विमनः कायजीवितैः । *Ak*. II 20 ab

[3] समुच्छिन्नकुशलमूलो निःशुभः । *Akb* II. 20 ab

[१]व्याख्यात इन्द्रियानां(णां) धातुगतिप्रभेदम(8)दर्शनागतानां विस्तरेण प्रभेदः। अधुना तु मीमांस्यते। किमेते संस्कृता धर्मा यथा भिन्नस्वभावाः, एवं भिन्नोत्पादा अथ नियतसहोत्पादा अपि केचिद्विद्यन्त इति? विद्यन्त इत्याह।

तत्र संक्षेपेण पञ्चेमा धर्मजातयः—रूपं चित्तं चैतसिकाश्चित्तविप्रयुक्ता असंस्कृतं च।

तत्रासंस्कृतं नोदेति न च व्येति।[१]

रूपि(9)णां तु धर्माणामयं नियमः—

[ 110 ] सप्तद्रव्याविनिर्भागी परमाणुर्बहिर्गतः।
कामेष्वेकाधिकः काये द्व्यधिकश्चक्षुरादिषु ॥[२]

सर्वसूक्ष्मः खलु रूपसंस्कारोपादानसंचयभेदपर्यन्तः परमाणुरिति प्रज्ञाप्यते। स तु सप्तद्रव्याविनिर्भागी चतुर्भिर्भूतैस्त्रिभिश्चोपादायरूपैस्त्रिभिस्त्रिभिर्वा भूतैश्चतुर्भिश्चो[II. A, 5. Fol 43b]पादायरूपैरविनिर्भागवर्त्यसावष्टम इति।

कोशकारस्त्वाह—"सर्वसूक्ष्मो रूपसंघातः परमानुः(णुः)" इति।[3] तेन संघातव्यतिरिक्तं रूपमन्यद्वक्तव्यम्। यदि नास्ति संघातोऽपि नास्ति। अतः सिद्धं 'सर्वसूक्ष्मं रूपपरमानुः(णुः)'[४] इति॥

---

[१—१] This *Adv.* (from व्याख्यात. to न च व्येति) is identical with *Akb.* II. 21.

[२] Cf. कामेऽष्टद्रव्यकोऽशब्द. परमाणुरनिन्द्रियः।
कायेन्द्रियो नवद्रव्यो दशद्रव्योऽपरेन्द्रियः॥ *Ak.* II. 22.

[३] Cf. सर्वसूक्ष्मो रूपसघातः परमाणुरित्युच्यते। यतो नान्यतरो विज्ञायेत। स कामधातावशब्दको अनिन्द्रियश्चाष्टद्रव्यक उत्पद्यते नान्यतमेन हीन.। अष्टौ द्रव्याणि। चत्वारि महाभूतानि चत्वारि चोपादायरूपाणि रूपगन्धरसस्प्रष्टव्यानि। सेन्द्रियस्तु परमाणुरशब्दको नवद्रव्यक उत्पद्यते दशद्रव्यको वा। *Akb.* II. 22ab.

—सर्वसूक्ष्मो रूपसंघातः परमाणुरिति। संघातपरमाणुर्न द्रव्यपरमाणुः। यत्र हि पूर्वापरभागो नास्ति तत्सर्वरूपापचित द्रव्य द्रव्यपरमाणुरितीष्यते। तस्माद्विपिनष्टि सघातः परमाणुरिति। *Sakv.* p 123.

[४] Compare this view with the view of Saṃghabhadra :—D'après Saṃghabhadra (xxIII. 3, Fol 52a): Parmi les *rūpas* 'susceptibles de résistance (*sapratigha*), la partie la plus subtile, qui n'est pas susceptible d'être scindée

कायेन्द्रियसहगतस्त्वष्टाभिश्चक्षुरादिसहिता(तो) नवभि ॥

[ 111 ] एवं रूपेऽपि विज्ञेयो हित्वा गन्धरसद्वयम् ।

रूपधातौ बहिर्गत पञ्चद्रव्याविनिर्भागी गन्धरसौ हित्वा । कायसहगतस्तु षड्भिश्चक्षुरादिषु सप्तभिरविनिर्भागिभि । यदा पुनस्सशब्दक स सघातो[1] जायते, तदा सर्वत्र यथोक्तेषु शब्दोऽधिको गणयितव्य ।

अत्र पुनर्महाभूतानि सर्वोपादायरूपाश्रयभावप्राधान्याद्यतस्तो द्रव्य जातयो विवक्ष्यन्ते । उपादाय(3)रूपधातुचतुष्टयं तु घटादिद्रव्यप्रज्ञप्तिनिमित्तत्वादायतनगणनया गण्यत इति विवक्षितापरिज्ञानान्नास्ति चोद्यावकाश ॥[2]

---

a nouveau s appelle *paramanu* C est-a d re le *paramanu* n est pas susceptible d etre devise en plus eurs par un autre *rupa* par la pensee C est ce qu on dit etre le plus petit *rupa* comme il n a pas de part es on lui donne nom de plus pet t' De meme un *kshana* est momme le plus petit temps et ne peut etre devise en dem *kshanas* (iii. 86) *LVPAk.* ii p 144 n. 3

Also cf यत्पुनरुच्यते रूपसमुदाय इति तत्र निःशरीर परमाणवदितव्य । बुद्ध्या पर्यन्तप्रभेदतस्तु परमाणुव्यवस्थान पिण्डसञ्ज्ञाविभावनतामुपादाय रूपे द्रव्यापरिनिष्पत्ति प्रवेशता वेदितव्य । *Asm* pp 41—2

On the Buddhist theory of Atoms and Molecules See W M Mc Govern *A Manual of Buddh st Ph losophy* vol. i pp 125—128 S Z Aung *Compendium of Philosophy* pp 268—273 and Th Stcherbatsky *The Central Conception of Buddhism* pp 11—14

[1] The Kośakara deals here with one more topic — कथमिहाविनिर्भागभूताना कश्चिन्व सघात काठन उत्पद्यते कश्चिदेव द्रव उष्णो वा समदीरणो वा । *Akb* ii. 22d.

[2] Cf किं पुनरत्र द्रव्यमेव द्रव्य गह्यते आहोस्विदायतनम । किञ्चात यदि द्रव्यमेव द्रव्यं गृह्यत अस्पल्पमिदमुच्यत अष्टद्रव्यको नवद्रव्यक इति । अवश्य हि तद्द्रव्यसस्थानमपि भवितव्यम । तस्यापि परमाणुसञ्चितत्वात । अथाप्यायतनद्रव्य गह्यते अति बहिरमुच्यते—अष्टद्रव्यक इति । चतुर्ष्वेव हि वक्तव्यो यावता भूतान्यपि स्प्रष्टव्यायतनम । किञ्चिदत्र द्रव्यमेव द्रव्य गृह्यते यदाश्रयभूत किञ्चिदत्रायतन द्रव्य गह्यते यदाश्रितभूतम । अत्र पुनर्जातिद्रव्य गह्यते । भूतचतुष्कान्तराणा स्वजात्यनतिक्रमात । क पुनरस एव विस्तरेण वक्तुम् । च्छन्दतोऽपि वाचा प्रवृत्तिरथस्तु परीक्ष्य । *Akb* ii 22cd

मुख्यवृत्त्या यत् द्रव्यं यस्य स्वलक्षणमस्ति तत् द्रव्य गह्यते । आहोस्विदायतनम द्रव्यमित्यधिकृतम् । आयतन पि हि द्रव्यमिति शक्यत वक्तु सामान्यविशेषलक्षणसद्भावात्।

अरूपिणां पुनः

चित्तं चैतसिकैः सार्धं[१]

अविनिर्भागेन(ण) जायत इति वर्त्तते ।

संस्कृतं तु स्वलक्षणैः ॥[१]

सर्वं हि संस्कृतं स्वलक्षणैः[२] सह जात्यादिभिरुत्पद्यत इति वेदितव्यम् ॥

(3)अभिधर्मदीपे विभाषाप्रभायां वृत्तौ द्वितीयस्य[अध्यायस्य] द्वितीयः पादः ॥

---

•••यद्भूतचतुष्कमाश्रय एकस्योपादायरूपस्य•••न तदेवान्यस्योपादायरूपस्य गन्धस्य रसस्य वाऽश्रयः । किं तर्हि ? 'अन्यदेव भूतचतुष्कं तस्याश्रयः' इति वैभाषिकसिद्धान्तः । *Sakv.* p 125. For the term *dravya*, see *Asm.* p. 16.

[१] Cf. चित्तचैत्ताः सहावश्यं सर्वं संस्कृतलक्षणैः । Ab. II. 23 ab.

[२] See *Asm.* p. 19.

# द्वितीयाध्याये

## तृतीयपादः ।

यदुक्तं चैतसिकास्तु सहोत्पद्यन्त इति तदभिधीयताम्। के पुनस्ते चैतसिका धर्मा ?[1]

ते पञ्चप्रभेदा —महाभौमा, कुशलमहाभौमा, क्लेशमहाभौमा, अकुशलमहाभौमा, परीत्तक्लेशमहाभौमिकाश्च ।[2] महती चित्त(5)भूमिरेषामिति त इमे महाभौमा । भूमिर्गतिरित्यर्थः । एवं सर्वत्र विग्रहः कार्यः ।

तत्र तावन्महाभौमा निर्दिश्यन्ते ।

[ 112 ] दशधर्मा महाभौमा वित्संज्ञाचेतनास्मृतिः ।
छन्दः स्पर्शोऽधिमोक्षश्च धीः समाधिर्मनस्कृतिः ॥[3]

एते दशधर्माः सर्वास्या चित्तभूमौ त्रैधातुक्यामनास्रवाया च समग्रा भव(6)न्ति ।[4]

---

[1] For the Sarvästivadins list of the *Chaitasika dharmas* see Th Stcherbatsky *The Central Conception of Buddhism* pp 100—105 and *LVPAk* II p 150 n 2 For the Sthaviravadins list see S Z Aung *Compendium of Philosophy* pp 14 fol and Nyanaponika *Abhidhamma Studies* pp 10-14 For the Yogacharas list see N A Sastri *Ālambanaparikshā* pp 113 5 (Appendix) and *Asm* pp 5 11 The *Vigrahavyavartani* (pp 4-5) gives a list of 119 *Kuśala dharmas* For a detailed account of this topic see W M Mc Govern *A Manual of Buddhist Philosophy* vol I pp 137 162

[2] Cf प्राप्त्या वा पञ्चधा चैत्ता महाभूम्यादिभेदतः । *Ak* II 23 cd

[3] Cf वेदना चेतना संज्ञा छन्दः स्पर्शो मतिः स्मृतिः ।
मनस्कारोऽधिमोक्षश्च समाधिः सर्वचेतसि ॥ *Ak* II 24

[4] Cf इमे किल दश धर्माः सर्वत्र चित्तक्षणे समग्रा भवन्ति । *Akb* II 24 But Vasubandhu holds a different view इमे किल इति । किलशब्दः परमतद्योतनः । स्वमतं तु छन्दादयः सर्वचेतसि न भवन्ति । तथा स्थविरवाचार्येण पञ्चस्कन्धके लिखितम् । *Sakv* p 127 See *LVPAk* II pp 150 n 2

According to the Sthaviravādins only seven *chaitasikas* are *sarva-chitta sādharana* फस्सो वेदना सञ्ञा चेतना एकग्गता जीवितिन्द्रियं मनसिकारो चेति सत्तिमे सब्बचित्तसाधारणा नाम । *A Sangaho* II 2

The Yogāchāra list has only five —
सदा स्पर्शमनस्कारवित्संज्ञाचेतनान्वितम् । *Triṃśikā* 3 cd

तत्र वेदना सुखादिस्त्रिविधोऽनुभवः। त्रिविधं संवेदितमिति पर्यायः। इष्टानिष्टोभयविपरीतविषयेन्द्रियविज्ञानसन्निपातजा धर्मयोनिः कायचित्ताधस्या विशेषः प्रह्लाद्युपतापी तदुभयविपरीतश्च तृष्णाहेतुर्वेदि(द)नेत्युच्यते।[१]

निमित्तनामार्थैक्यज्ञा संज्ञा[२] वितर्कयोनिः।

चित्ताभिसंस्कारश्चेतना।[३]

(?)चित्तव्यापाररूपा स्मृतिः।[४] चित्तस्यार्थाभिलपना कृतकर्तव्यक्रियमान(ण)कर्मान्ताविप्रमोपलक्षणाः(णा)।

च्छ(छ)न्दः[५] कर्तुकामता वीर्याङ्गभूतः।

विषयेन्द्रियविज्ञानसन्निपातजा चित्तस्य विषयस्पृष्टिः, चैतसिकधर्मो[६] जीवनलक्षणः स्पर्शः।

---

[१] *Cf* वेदना अनुभवस्वभावा। सा पुनर्विषयस्याह्लादकपरितापकतदुभयाकारविविक्तस्वरूपसाक्षात्करणभेदात् त्रिधा भवति ··। एवं त्वन्ये मन्यन्ते। शुभाशुभाना कर्मणा फलविपाक प्रत्यनुभवन्त्यनेनेत्यनुभव। *Tvb* 3 cd.

[२] *Cf* नीलादिभेद आरम्मण सञ्जानाती ति सञ्ञा। सा सञ्जाननलक्खणा पच्चाभिञ्ञाणरसा। ··· अपरो नयो—सब्बसगाहिकवसेन हि सञ्जाननलक्खणा सञ्ञा। *Dhs A* III 188-9 Also cf. सज्ञा विषयनिमित्तोद्ग्रहणम्। विषय आलम्बनम्। निमित्त तद्विशेषो नीलपीताद्यालम्बनव्यवस्थाकरणम्। तस्योद्ग्रहण निरूपण नीलमेतन्न पीतमिति। *Tvb* 3 cd For the different functions of *samjñā, vijñāna* and *prajñā*, see *Vm* XIV. 3—6

[३] *Cf.* चेतना चित्ताभिसस्कारो मनसश्चेष्टा। यस्या सत्यामालम्बन प्रति चेतस प्रस्यन्द इव भवति अयस्कान्तवशादय प्रस्यन्दवत्। *Tvb.* 3 cd. Also cf. चेतयतीति चेतना, सद्धि अत्तना सपयुत्तधम्मे आरम्मणे अभिसन्दहती ति अत्थो। *DhsA.* III. 190. For *chetanā* and its relation to the *Samskāra-skandha*, see A *Manual of Buddhist Philosophy*, *Vol.* I pp 86-89

[४] *Cf* स्मृतिः सस्तुते वस्तुन्यसप्रमोषश्चेतसोऽभिलपनता। *Tvb* 3 cd. चित्तसस्कारे चैतसिकधर्मसतानस्य सततमविच्छिन्न चिन्तन नाम स्मृति। *Aam.* p. 123. For the omission of *smriti* in the Sthavira-vādins' list of *sabba chitta-sādhārana*, see *Abhidhamma Studies*, p 39.

[५] Cf. छन्दो ति कत्तुकम्यतायेत अधिवचन। *Dhs A* III. 254.
छन्दोऽभिप्रेते वस्तुन्यभिलाप। *Tvb.* 3 cd.

[६] Cf. फुसती ति फस्सो। स्वाय फुसनलक्खणो, सघट्टनरसो, सनिपातपच्चुपट्ठानो, आपाथगतविसयपदट्ठानो। अय हि अरूपधम्मो समानो पि आरम्मणे फुसनाकारेनेव पवत्तती ति फुसनलक्खणो। *Dhs A.* III. 179. Also cf. स्पर्शस्त्रिकसनिपाते इन्द्रियविकारपरिच्छेद.

चित्तस्य विषयेऽधिमुक्तिरवि(घ)मोक्षा[1] रुचिद्वितीयनामा[2] चित्तस्य(8) विषयाप्रतिसंकोचलक्षण ।

धी प्रज्ञा धर्मसंग्रहाद्युपलक्षणस्वभावा[3] ।

चित्तस्यैकाग्रता समाधिश्चित्तस्थितिलक्षण ।

चित्तस्याभोगो मनस्कार पूर्वानुभूतादिसमन्वाहारस्वरूप ।[4]

सूक्ष्म खलु चित्तचैत्ताना विशेषो दुरवधारो रूपिनी(णी)नामेव तावदो षधीना बहुरसानामिन्द्रियग्रा(9)ह्योऽपि रसविशेषो दुरवधार, किमङ्ग पुनर

---

वेन्नामनिश्चयकमक । इन्द्रियविषयविज्ञानानि त्रीण्यत्र त्रिक तस्य कार्यकारणभावेन समवस्थान त्रिकसंनिपात । तस्मिन सति तत्समकालमेवेन्द्रियस्य सुखदु खादिवेदनानुकूलो यो विकारस्तेन सदृशो विषयस्य सुखादिवेदनीयाकारपरिच्छेदो य स स्पर्श । इन्द्रिय पुनर्येन विज्ञाण सुख दु खादिहेतु'व प्रतिपद्यन्त स तस्य विकार । स्पर्श पुनरिन्द्रियविकारसादृश्यमिन्द्रिय स्पृशतीन्द्रियेण वा स्पृश्यत इति स्पर्श उच्यते । *Tvb* 3 cd

[1] Cf. अधिमोक्ष कतम । निश्चिते वस्तुनि यथानिश्चय धारणा । असहार्यता कर्मक । *Asm* p 6

अधिमोक्षो निश्चिते वस्तुनि तथवावधारणम । निश्चितग्रहणमनिश्चितप्रतिषेधार्थम । युक्तित आप्तोपदेशतो वा यद्वस्तु असन्दिग्धं तन्निश्चित यनवाकारेण तन्निश्चितमनित्यदु खाद्या कारेण तेनवाकारेण तस्य वस्तुन'चेतस्यभिनिवेशमेवमतन्न यथत्यवधारणमित्यधिमोक्ष । *Tvb* 10 c. अधिमुक्तिर्निश्चयावधारणम । *Aaa* p 353

[2] Cf अधिमुक्तिस्तदालम्बनस्य गुणतोऽवधारणम(णात) । रुचिरित्यन्य । यथानिश्चय धारणति योगाचारचित्ता । *Sakv* p 128 For various nterpretat ons of this term see *LVPAk* II. p 154

Also cf अधिमुच्चन अधिमोक्खो । सो सन्निट्ठानलक्खणो असंसप्पनरसो निच्छय पच्चुपट्ठानो आरम्मण निच्चलभावेन इन्दखीलो विय दट्ठब्बो । *Dhs A* III 254

[3] Cf तेन तेन वा अनिच्चादिना पकारेन धम्मे जानाती ति प — वतुमन्चधम्मे विचिनातीति धम्मविचयो । *Dhs A* III 287

[4] Cf किरिया कारो मनसिकारो मनसिकारो । पुरिममनतो विसदिस मन करोति ति पि मनसिकारो । स्वाय आरम्मणपटिपादको वीथिपटिपादको जवनपटिपादको ति तिप्पकारो । *Dhs A* III 254

Also cf मनस्कारश्चेतस आभोग । आभुजनमाभोग । आलम्बन यत चित्तमभि मुखीक्रियते । स पुनरालम्बन चित्तधारणकर्मा । चित्तधारण पुनस्तत्र आलम्बन पुन पुनश्चित्तस्यावर्जनम् । एतच्च कर्म चित्तसंततेरालम्बननियमेन विशिष्ट मनस्कारमधिकृत्योक्त न तु य प्रतिचित्तक्षणं तस्य हि प्रतिक्षणमेव व्यापारो न क्षणान्तरे । *Tvb* 3 cd Also cf मनस्कार कतम ? चतस आभोग । आलम्बनचित्तधारणकर्मक । *Asm* p 6

मूर्ताणां(नां) चित्तचैतसिकानां धर्माणामेककलापवर्ति(णां)नां बुद्धिगम्यः ?[१]
स तु हेतुफलस्वभावैर्मतिमद्भिरभ्यूह्य इति ॥[२]

कुशलमहाभौमे भवाः कुशलमहाभौमाः । ते पुणः(नः)

[113] श्रद्धोपेक्षाऽप्रमादश्च प्रस्रब्धिह्रीरपत्रपा ।
मूलवीर्यमहिंसा च शुभ-
[II B, 6. Fol 44a][(1)] भूका दशस्मृताः ॥[3]

तत्र श्रद्धा चेतसः प्रसादो[४] गुणिगुणार्थित्वाभिसंप्रत्ययाकारः, चित्तकालुष्यापनायी । तद्यथोदकप्रसादको मणिः सरसि प्रक्षिप्तः सर्वं कालुष्यमपनीयाच्छतामुत्पादयति तद्वचि(च्चि)त्तसरसि जातः श्रद्धामणिरिति ।[५]

अ[प्र]मादः कुशलधर्मभावना तदवहिततेत्यर्थः ।[६]

---

[१] Cf. सम्मासम्बुद्धेन पन इमेस अरूपीन चित्तचेतसिकान धम्मान एकारम्मणे पवत्तमानान पाटियेक्क विनिब्भोग कत्वा पञ्ञत्ति उद्धरमानेन अतिदुक्कर कत । तेनाह आयस्मा नागसेनत्थेरो—'दुक्कर महाराज भगवता कत'''य इमेस अरूपीन'''ववत्थान अक्खात अय फस्सो'''इद चित्त' ति । (*Milinda*. p. 87.) *Dhs A*. III. 277.

[२] Cf. सूक्ष्मो हि चित्तचैत्ताना विशेष । स एव दु परिच्छेद प्रवाहेष्वपि तावत् कि पुन क्षणेषु । रूपिणीनामपि तावदोषधीना बहुरसाना कासाचिदिन्द्रियग्राह्या रसविशेषा दुरवधारा भवन्ति कि पुनर्ये धर्मा अरूपिणो बुद्धिग्राह्या । *Akb*. II. 24.

[३] Cf. श्रद्धाऽप्रमादः प्रश्रब्धिरुपेक्षा ह्रीरपत्रपा ।
मूलद्वयमहिंसा च वीर्यञ्च कुशले सदा ॥ *Ak*. II. 25
Also cf श्रद्धाथ ह्रीरपत्रपा ॥
अलोभादित्रय वीर्यं प्रश्रब्धिः साप्रमादिका ।
अहिंसा कुशलाः । *Trimśikā*, 10d, 11abc.

[४] Cf. तत्र श्रद्धा चेतस प्रसाद । सत्यरत्नकर्मफलाभिसप्रत्यय इत्यपरे । *Akb* II.25. तत्र श्रद्धा कर्मफलसत्यरत्नेष्वभिसप्रत्यय प्रसादश्चेतसोऽभिलाप । *Tvb* 11 abc. श्रद्धा कतमा । अस्तित्वगुणवत्त्वशक्तत्वेष्वभिसप्रत्यय प्रसादोऽभिलाषा । *Asm* p 6

[५] Cf. सद्धा'''सा पनेसा सम्पसादनलक्खणा च सद्धा पक्खन्दनलक्खणा च । यथा हि'''उदकप्पसादको मणि''कद्दम सन्निसीदापेति'''एवमेव सद्धा उप्पज्जमाना नीवरणे विक्खम्भेति, किलेसे सन्निसीदापेति, चित्त पसादेति । *Dhs A*. III 213

[६] Cf अप्रमाद कुशलाना धर्माणा भावना । का पुनस्तेभ्योऽन्या भावना ? या तेष्ववहितता । चेतस आरक्षति निकायान्तरीया सूत्रे पठन्ति । *Akb*. II 25. अप्रमादः कतम' । सवीर्यकानलोभाद्वेषामोहान्निश्रित्य या कुशलाना धर्माणा भावना सास्रवेभ्यश्च धर्मेभ्यश्चित्तस्यारक्षा । *Asm* p 6 कतमोऽप्रमाद । चित्तस्य कुशलधर्मप्रतिनयोग. । *Aam* p. 68. अप्रमाद प्रमादप्रतिपक्ष । अलोभाद्यावद्वीर्यमप्रमादः । यैरलोभादीन्निश्रित्याकुशलान्धर्मान्प्रजहाति तत्प्रतिपक्षाश्च कुशलान्धर्मान् भावयति तेऽलोभादयोऽप्रमाद. । *Tvb*. 11. abc.

प्रश्रब्धिश्चि2)त्तकर्मण्यता। कायप्रश्रब्धिरप्यस्ति।[1] सा तु तदानुकूल्याद्बोध्यङ्गशब्दं लभते। तद्यथा प्रीतिः। प्रीतिस्थानीयाश्च धर्मा प्रीतिबोध्यङ्गमुक्तं भगवता। सम्यग्दृष्टिसंकल्पव्यायामाश्च प्रज्ञानुकूल्यात् प्रज्ञास्कन्ध इत्युक्ताः। तद्वत्कायकर्मण्यता चित्तकर्मण्यता बोध्यङ्गावाहकत्वाच्छब्देनोक्ता।

उपेक्षा चित्तसम(3)ता चित्तानाभोगः[2] संस्कारणि(नि)मित्ताभोगमध्युपेक्षानिमित्तप्रगुण(ण)ता।[3]

---

[1] Cf प्रश्रब्धिर्दौष्ठुल्यप्रतिपक्ष कायचित्तकर्मण्यता। दौष्ठुल्य कायचित्तयोरकर्मण्यता सावद्यधर्मबीजानि च। तदपगमे प्रश्रब्धिसद्भावात्। तत्र कायकर्मण्यता कायस्य स्वकार्येषु लघुसमुत्थानता यतो भवति। चित्तकर्मण्यता सम्यङ्मनसिकारसम्प्रयुक्तस्याह्लादलाघवनिमित्तं चैतसिक धर्मान्तरं यद्योगाच्चित्तमालम्बने प्रवर्तते। तस्माच्चित्तकर्मण्यतेत्युच्यते। कायस्य पुनः स्प्रष्टव्यविशेष एव प्रीत्या हृत कायप्रश्रब्धिर्वेदितव्या। प्रीतमनसः कायः प्रश्रभ्यत इति सूत्र वचनात्। इयं तद्गतावरणाश्रयपरावृत्तितोऽशेषक्लेशावरणनिष्कर्षणकर्मिका। साप्रमाणिका। का पुनरसौ। उपेक्षा। Trb 11 abc प्रश्रब्धिः कतमा। कायचित्तदौष्ठुल्यानां प्रतिप्रश्रब्ध्या कायचित्तकर्मण्यता। Asm p 6

Also cf ननु च सूत्रे कायप्रश्रब्धिरप्युक्ता। न खलु नोक्ता। सा तु यथा कायिकी वेदना तथा वेदितव्या। कथं सा बोध्यङ्गेषु योक्ष्यते। तत्र तर्हि कायकर्मण्यतैव कायिकी प्रश्रब्धिर्वेदितव्या। कथं सा बोध्यङ्गमित्युच्यते। बोध्यङ्गानुकूल्यात्। Akb ii 25

The Sthaviravadins however take the word *kaya* to mean the *nama-skandhas* कायपस्सम्भन कायपस्सद्धि चित्तपस्सम्भन चित्तपस्सद्धि। कायो ति चेत्थ वेदनादयो तयो खन्धा। उभो पि पनेता एकतो कत्वा कायचित्तानं अवूपसमकरउद्धच्चादिकिलेसपटिपक्खभूता ति दट्ठब्बा। *Vm* xiv 144 For the *sambodhi anga*, cf पीतिमनस्स कायोपि पस्सम्भति। अयं वुच्चति पस्सद्धिसम्बोज्झङ्गो। *Vbh* p 227

[2] Cf उपेक्षा चित्तसमता चित्तानाभोगता। कथमिदानीमेतद्योक्ष्यते। तत्रैव चित्ताभोगात्मको मनस्कारो अनाभोगात्मिका चोपेक्षा इति। ननु चोक्तं—दुर्ज्ञानाः खल्वेते विशेषा इति। अस्ति हि नाम दुर्ज्ञानमपि ज्ञायते। इदं तु खल्वतिदुर्ज्ञानं यद्विरोधेऽप्यविरोध इति। अन्यत्राभोगोऽन्यत्रानाभोग इति कोऽत्र विरोधः। न तर्हीदानीमेकालम्बनाः सर्वे सम्प्रयुक्ताः प्राप्नुवन्ति। एकत्रालम्बने ... [V infra *Adv karika* 123] यस्तस्य नय सोऽप्यपि वेदितव्य। *Akb* ii 25

Also cf उपेक्षा चित्तसमता चित्तप्रशठता चित्तानाभोगता। एभिस्त्रिभिः पदैः ... आदिमध्यावसानावस्था द्योतिता। *Trb* 11 abc

For ten kinds of *upekshā* see *Dhs A* iii 348—354

[3] *Cf* तत्रमज्झत्तता—सा चित्तचेतसिकानं समवाहितलक्खणा ऊनाधिकनिवारणरसा पक्खपातुपच्छेदनरसा वा मज्झत्तभावपच्चुपट्ठाना। चित्तचेतसिकानं अज्झुपेक्खनवसेन समप्पवत्तानं आजानेय्यानं अज्झुपेक्खनसारथि विय दट्ठब्बा। *Dhs A* iii 254

ह्रीः स्वात्मापेक्षा। अकार्यकरणे लज्जा।[१]

अपत्राप्यन्तु परापेक्षाः(क्षा)।[१]

द्वे तु कुशलमूले अलोभाद्वेषौ। अमोहस्तु प्रज्ञास्वभावत्वान्महाभौमेपूक्त इति न गण्यते।[२]

वीर्यं कुशलाकुशलधर्मोत्पादनिरोधाभ्युत्साहः, संसारनिमग्नस्य चे(ऽ)तसोऽभ्युन्नतिरित्यर्थः।[३]

अविहिंसा सत्त्वाविहेठना।

उक्ताः कुशलमहाभौमाः॥

[ 114 ] स्त्यानं प्रमत्तिराश्रद्ध्यमालस्यं मूढिरुद्धति[ः]।[४]
क्लिष्टे षट्

तत्र

---

[१] Cf. कायदुच्चरितादीहि हिरियती ति हिरि; लज्जायेतं अधिवचन। तेहि येव ओत्तप्पती ति ओत्तप्प; पापतो उब्बेगस्सेतं अधिवचन। तेस नानाकरणदीपनत्थं···अयं वित्थारकथा वुत्ता—अज्झत्तसमुट्ठाना हिरि नाम; बहिद्धासमुट्ठानं ओतप्प नाम। अत्ताधिपति हिरि; लोकाधिपति ओत्तप्प नाम। लज्जासभावसण्ठिता हिरि नाम; भयसभावसण्ठित ओत्तप्प नाम। सप्पटिस्सवलक्खणा हिरि नाम; वज्जभीरुकभयदस्साविलक्खणं ओत्तप्पं नाम। *Dhs A.* III. 234.

Also cf. ह्रीरात्मन धर्मं वाधिपतिं कृत्वावद्येन लज्जा।···अपत्राप्य लोकमधिपतिं कृत्वावद्येन लज्जा। *Tvb.* 11. abc.

[२] See *Dhs A.* III. 241—245

[३] Cf. वीर्यं कौशीद्यप्रतिपक्षः। कुशले चेतसोऽभ्युत्साह। न तु क्लिष्टे। क्लिष्टे तूत्साह. कुत्सितत्वात्कौशीद्यमेव। *Tvb.* 11. abc.

Also cf. उपत्थम्भनलक्खण च विरिय पग्गहनलक्खण च।···अपरो नयो—उस्साहनलक्खणं विरियं सहजातधम्मानं उपत्थम्भनरस। *Dhs A.* III. 217—9

[४] Cf. मोहः प्रमादः कौशीद्यमाश्रद्ध्यं स्त्यानमुद्धवः।
क्लिष्टे सदैव। *Ak.* II. 26 abc.

Also cf. क्लेशा रागप्रतिघमूढयः॥
मानदृग्विचिकित्साश्च। *Trimśikā.* 11. d, 12a.

स्त्यानं कायचित्ताकर्मण्यता ।[1]

प्रमादः कुशलानां धर्माणामभावना । भावनाविपक्षभू(5)तो धर्मः ।

आश्रद्ध्यं चित्ताप्रसादः, चित्तकालुष्यमित्यर्थः । गुणेषु गुणवत्सु चासंप्रत्ययोऽनर्थित्व च ।

कौसीद्य चित्तस्यानभ्युत्साहः ।

मूढिरविद्यानुकाराऽसंप्रख्यानरूपा ।

औद्धत्यं चित्तस्याव्युपशमः ।

उक्ताः षट् क्लेशमहाभौमाः ।

---

[1] Cf स्त्यानं कतमत् । या कायगुरुता चित्ताकर्मण्यता । 'कायिकं स्त्यानं चैतसिकं स्त्यानमिति' उक्तमभिधर्मे । [Jnanaprasthana, 2, 9 ]कथं चैतसिको धर्मः कायिक इत्युच्यते । यथा कायिकी वेदना । Akb ii 26

The Sthaviravādin's definition of *styana (thina)* is तत्थ कतमं थीनं ? या चित्तस्स अकल्यता अकम्मञ्ञता, ओलीयना सल्लीयना, थीयितत्तं चित्तस्स, इदं वुच्चति थीनं । *Dhs* 1156 The *thina* is always accompanied by *middha* It is defined as तत्थ कतमं मिद्धं ? या कायस्स अकल्यता अकम्मञ्ञता मिद्धं सोप्पं पचलायिका सोप्पं सुपिना सुपितत्तं इदं वुच्चति मिद्धं । *Dhs* 1156 The *Dhs A* discusses in detail the controversy whether *middha* is *rupa* The word *kaya* here means *nama-kaya* and not the *rupa-kaya* न वत्तब्बं एतं रूपं मिद्धं ति । नामकायो हि एत्थ कायो नाम । *DhsA* ii 80 94 See P V Bapat "*Middha and Middhavādins*" in *A Volume of Eastern and Indian Studies*, pp 4—18

The Yogāchāra-definitions of these two terms are स्त्यानं चित्तस्याकर्मण्यता स्तैमित्यम् । यद्योगाच्चित्तं जडीभवति स्तिमितं भवति नालम्बनं प्रतिपत्तुं समुत्सहते । मोहांशः प्रत्यन्तरत्वाच्च मोहादन्यदेव न पृथगुच्यते । मिद्धमस्वतन्त्रवृत्तिचेतसोऽभिसंक्षेपः । कायधारणासमर्थो वा वृत्तिश्चेतसोऽभिसंक्षेपो यतो भवति तन्मिद्धम् । अभिसंक्षेपः स्वतन्त्रवृत्तेर्दर्शनादिव्यापारवृत्तिः । एतच्च मोहांशः प्रमादश्च मोहादिना कृत्यादिपतनसंनिश्रयकर्मकम् । *Trb* 14

Also cf स्त्यानं कतमत् ? मोहांशिका चित्ताकर्मण्यता । सर्वक्लेशोपक्लेशसहायकर्मकम् । *Asm* p 9

मिद्धं कतमत् ? मिद्धनिमित्तमागम्य मोहांशिकश्चेतसोऽभिसंक्षेपः कुशलो अकुशलो अव्याकृतो कालेन वा अकालेन वा युक्तो वा अयुक्तो वा । कृत्यातिपत्तिसंनिश्रयदानकर्मकम् । *Asm* p 10 स्वतन्त्रवृत्तिश्चेतसोऽभिसंक्षेपः मोहांशिकः स्त्यानसहितोऽभिसंक्षेपो मिद्धम् । *Akb* p. 243

अभिधर्मे तु दश पठ्यन्ते—"आश्रद्ध्यम्, कौसीद्यम्, मुषितस्मृतिता, चेतसो वि(6)क्षेपः,[1] अविद्या, असंप्रजन्यम्, अयोनिशो मनसिकारः, मिथ्याधिमोक्षः, औद्धत्यम्, प्रमादश्च" इति ।[2]

तत्र मुषितस्मृतिविक्षेपासंप्रजन्यायोनिशोमनसिकारमिथ्याधिमोक्षाः पञ्चमहाभौमेषु पठिताः । क्लिष्टाक्लिष्टानामुभयेषां स्मृत्यादिस्वाभाव्यादितीह न पृथग्गण्यन्ते । तस्मात् षडेव क्लेशमहाभौमाः ।

अ(7)शुभे तु द्वे आह्रीक्यमनपत्रपा ॥[3]

अकुशले तु चेतसि आह्रीक्यमनपत्राप्यं च द्वौ धर्मावकुशलमहाभौमिकौ भवतः ।[4] तत्राह्रीक्यं ह्रीविपक्षभूतो धर्मः । अनपत्राप्यमत्राप्यस्येति । अकार्यं कुर्वाणस्यालज्जा स्वात्मनो[ऽ]ह्रीः । परेभ्यो[ऽ]लज्जा अनपत्राप्यमित्यपरे ॥[5]

परीत्तक्लेशमहाभौमा निर्दिश्य(8)न्ते ।

[ 115 ] मायाशाठ्यमदक्रोधविहिंसेर्ष्याप्रदष्टयः[6] ।

---

१ Cf विक्षेप कतम । रागद्वेषमोहांशिकश्चेतसो विसार । स पुन स्वभावविक्षेप बहिर्घाविक्षेप अध्यात्मविक्षेप दौष्ठुल्यविक्षेप मनसिकारविक्षेपश्च । *Asm* p 9

२ Cf ननु चाभिधर्मे दश क्लेशमहाभूमिका पठ्यन्ते । "आश्रद्ध्य प्रमादश्चेति ।" प्राप्तिज्ञो देवानांप्रियो न त्विष्टिज्ञ । का पुनरत्रेष्टि । मुषितस्मृतिविक्षेपासंप्रजन्यायोनिशोमनसिकारमिथ्याधिमोक्षा महाभूमिकत्वात् न क्लेशमहाभूमिका एवावधार्यन्ते ।' अत एवोच्यते 'ये महाभूमिका क्लेशमहाभूमिका अपि ते इति । चतुष्कोटिक । स्त्यान पुनरिष्यते सर्वक्लेशसंप्रयोगीति क्लेशमहाभूमिकेषु तस्यापाठे कस्यापराध । एव त्वाहु । पठितव्य भवेत्समाध्यनुगुणत्वात्तु न पठितम् । क्षिप्रतर किल स्त्यानचरित समाधिमुत्पादयेनोद्धत्यचरित इति । न ह्येते जातु सहचरिष्णुता जहीत । अत षडेव क्लेशमहाभौमिका सिद्ध्यन्ति । *Akb* II 26

—'स्त्यान पुनरिष्यते' इति विस्तर । 'तस्यापाठे कस्यापराध' इति । किमस्य स्त्यानस्यापाठे ममापराध । किमाभिधार्मिकस्येति । अभिधर्मकारस्यायमपराधो न ममेत्यभिप्राय । स्त्यानस्य सर्वक्लेशसंप्रयोगित्वेनाभिमतत्वात् । 'एव त्वाहु' इति । तत्र शास्त्रे स्त्यानस्यापाठे कारणमाहुराभिधार्मिका । कथ हि नाम क्लिष्टो धर्म शुक्लस्य समाधेरनुगुणो भविष्यति । *Sakv* p 131

See *LVPAk* II pp 151 and 161 and *Asm* p 9

३ Cf अकुशले त्वाह्रीक्यमनपत्रपा । *Ak* II 26 d.

४ The Pali Abhidharma has four —अकुसलेसु पन मोहो, अहिरिक, अनोत्तप्प उद्धच्चञ्चेति चेतसिका अकुसलसाधारणा नाम । *A Sangaho* II 13

५ V supra, p 73 n 1

६ This should be प्रदाश and म्रक्ष

म्रक्षोपणा(ना)हमात्सर्याण्यल्पक्लेशभुवो दश ॥[1]

एते हि क्लेशा भावनाहेयेनाविद्यामात्रेण मनोभूमिकेनैव सम्प्रयुज्यन्ते ।[2] एषां तु लक्षणमुपक्लेशचिन्ताया[3] पञ्चमेऽध्यायेऽभिधायिष्यते ॥

कथं पुण(न)रिदं विज्ञायते चित्तादर्थान्तरभूताश्चैतसि(?)का: ?[4] चित्तमेव हि तद्वेदनादिनामभिर्व्यपदिश्यत इत्येव चेष्यमाने बुद्धसूत्रमनुलोमित भवति । यदुक्त भगवता—"षड्धातुरय भिक्षवः पुरुषपुद्गलः"[5] इत्यत्र विज्ञान धातुरेनोक्त ।[6] तस्मान्नार्थान्तरभूताश्चैतसिका इति भदन्तबुद्धदेवः ।[7] त प्रतीदमभिधीयते—

---

[1] *Cf* क्रोधोपनाहशाठ्येर्ष्याप्रमादम्रक्षमत्सरा ।
मायामदविहिंसाश्च परीत्तक्लेशभूमिका ॥ *Ak* II 27

Also cf क्रोधोपनहन पुन ।
म्रक्ष प्रदाश ईर्ष्याथ मात्सर्यं सह मायया ॥
शाठ्य मदा विहिंसाऽह्रीरत्रपा स्त्यानमुद्धव ।
आश्रद्धयमथ कौसीद्य प्रमादो मुषिता स्मृति ॥
विक्षेपोऽसम्प्रजन्य च कौकृत्य मिद्धमेव च ।
वितर्कश्च विचारश्चेत्युपक्लेशा द्वय द्विधा ॥ *Trimsika*, 12 cd– 14

[2] अविद्यैव केवलेत्यर्थं । नाप्यन रागादिना क्लेशेन । भावनाहेयनेति न दर्शनहेयन । मनोभूमिकेनैवेति न पञ्चविज्ञानकायिकेन । यस्मादिमे क्रोधादय उपक्लेशा मनोभूमिका एव भवन्ति । *Sakv* p 132. For details, see *LVPAk* II. p 164, n. 4

[3] V infra, *Ad karika* 371

[4] V supra, p 25 n 1

This topic is discussed in *Akb* I. 35c.

This controversy is also founds in the *Kt* VII 3 —इदानि चेतसिककथा नाम होति । तत्थ यस्मा फस्सिकादयो नाम नत्थि तस्मा चेतसिकेनापि न भवितब्ब, इति नत्थि चेतसिको धम्मोति यस लद्धि सेय्यथापि राजगिरिकसिद्धत्थिकान । *KvA* VII 3

[5] Cf छधातुरो अय भिक्खु पुरिसो । *M sutta* 140

[6] The Kośakāra points out that this is wrong —'षड्धातुरय भिक्षो पुरुष' इति गर्भावक्रान्तौ मौलसत्त्वसन्दर्शनार्थम । *Akb* I 35c. This interpretation of the Kośakāra agrees with the Pāli passage —छ इमा भिक्खवे धातुयो-पठवीधातु आपोधातु तेजोधातु वायोधातु आकासधातु विञ्ञाणधातु । छन्न भिक्खवे धातून उपादाय गब्भस्सावक्कन्ति होति । *Aṅg* I. p 176.

[7] LVP gives the following note —Le commentaire du *Vijñapti mātratāsiddhi* dit que les Sautrāntikas ont deux systèmes Les uns, les Dārshṭāntikas, soutiennent que la pensee seule existe, que les mentaux n'existent pas,

[ 116 ] पृथिव्यादि यथा द्रव्यं [II. A, 6 Fol 44b ][(1)]
नीलादिगुणयोगतः।
तैस्तैर्विशेष्यते शब्दैश्चैत्तयोगान्मनस्तथा ॥

यथा हि पृथिवी धातुरब्धातुर्वा रूपरसगन्धाद्युपादायरूपैर्विशेष्यते। नीला ग्र(ग्रा)वाणः, नीलमुदकं मधुरा द्राक्षा मधुराः खर्जूरा मधुरतरो गुड इत्येवं सुखितं चित्तं दुःखितं चित्तं समाहितं चित्तं सोत्साहं कुसीदं मूढं रक्तं द्विष्टमित्येव[(2)]मादिभि शब्दैश्चैतसिकैर्धर्मैर्योगाद्विशेष्यते।[1] साध्यसमत्वाद-युक्तमिति चेत्। न। उक्तोत्तरत्वात्। विहितमत्र—भूतभू(भौ)तिकान्यत्व-चिन्तायामुत्तरमिति[2]। तस्माद्विशेषप्रत्ययानामनाकस्मिकत्वात्सिद्धमन्यत्वं चैतसिकानामिति ॥

इतश्च चित्तचैतसिकान्यत्वम्—

[ 117 ] भूतभौतिकनानात्वं स्वरूपेहाकृतं यथा।
तथैव चित्त[(3)]चैत्तानां पृथक्त्वमुपधार्यताम् ॥

यथा खलु भूतानां भौतिकस्य च रूपस्य स्वभावभेदात्, क्रियाभेदाच्चा-न्यत्वम्; तथा चित्तस्य चैत्तानां च स्वभावक्रियाभेदादन्यत्वं द्रष्टव्यम् ॥

[ 118 ] यथा संबन्धिसंबन्धाद्विकारोऽम्भसि लक्ष्यते।
तथा संसर्गिसंसर्गाच्चेतोविकृतिरीक्ष्यताम् ॥

यथा खलु धत्तिहरीतकीगुडलवणादिद्रव्यसंबन्धा[(4)]द्विकारोऽम्बुनि दृश्यते, उष्णमम्लं कषायं मधुरं लवन(ण)मिति। तद्वच्चैतसिकसंबन्धाच्चि-त्तमपि सुखितं दुःखितं प्रसन्नमभ्युन्नतं सालोकं सान्धकारमिति।

---

d'accord avec Buddhadeva. ·· les autres admettent l'existence des mentaux et se divisent en plusieurs opinions en outre certains Sautrāntikas admettent tous les mentaux des Sarvāstivādins *LVPAk* II. p 150 n. 2

[1] The *Kv* quotes a similar *āgama* in this context

ननु वुत्तं भगवता—इध केवट्ट भिक्खु परसत्तान परपुग्गलान चित्तं पि आदिसति, चेतसिकं पि आदिसति, वितक्कितं पि आदिसति विचारितं पि आदिसति, 'एवं पि ते मनो इत्थं पि ते मनो, इति पि ते चित्त न्ति," अत्थे' व सुत्तन्तो ति ? (*Dīgha* I p 213)

आमन्ता।

तेन हि अत्थि चेतसिको धम्मो ति। *Kv* VII 5

[2] V. supra, p 25, n. 1 This topic belongs to some lost portions of the *Adv.* first *Adhyāya* V. supra, p. 4 n. 1.

सूत्रेऽपि चान्यत्वमुक्तम्—"संज्ञा च वेदना च चैतसिक एव धर्मः" इति ॥[1]

इदमिदानीं वक्तव्यम्। युगपदुत्पन्नानां चित्तचैतसिकानां धर्माणां कथं चैतसि[5]का धर्मा इत्युच्यन्ते? को वा धर्मार्थः? तदपदिश्यते—

[ 119 ] गुणो विशेषणं धर्मो मात्रावृत्तिस्तथाश्रयी।
इत्येवमादयः शब्दाः प्रधानापेक्षवृत्तयः ॥

प्रधानं हि द्रव्यं विशेष्यभूतमपेक्ष्य (क्ष्य) गुणधर्मविशेषेण मात्रावृत्तय. शब्दाः प्रवर्तन्ते। किं पुण(न)रत्र प्रधानम्?

[ 120 ] चित्तं प्रधानमेतेषां

कुत इति चेत्।

वस्तु[6]मात्रग्रहादिभिः।

वस्तूपलब्धिमात्रं हि चित्तं तेनोपलब्धे वस्तुनि संज्ञास्मरणे लक्षणानुस्मरणाभिनिरूपणादयो विशेषाः संज्ञाप्रज्ञास्मृत्यादिभिर्गृह्यन्ते।[2] 'आदि'-ग्रहणाद्यारमाभिनिवेशाद्राजस्थानीयत्वाच्च। किञ्च,

बीजं चैतत्प्रवृत्तीनां शुद्धिसंकरयोरपि ॥

उक्तं हि भगवता—"चित्तसङ्क्लेशा[7]त्सत्त्वाः संक्लिश्यन्ते। चित्तव्यवदानहेतोर्विशुध्यन्ते" इति।[3] तस्मात्प्रधानं चित्तम्। यथोक्तम्—

"दूरङ्गममेकचरमशरीरं गुहाशयम्।
ये चित्त(त्तं) दमयिष्यन्ति ते मोक्ष्यन्ते मारबन्धनात् ॥"[4]

---

[1] Cf न च युक्तं चित्तमेव चैत्ता इत्यभ्युपेतुम्। "संज्ञा च वेदना च चैतसिक एव धर्मश्चित्तान्वयाश्चित्तनिश्रित' इति सूत्रे वचनात्सरागश्चित्तादिवचनाच्च। *Akb* I 35c

Also Cf सञ्ञा च वेदना च चेतसिका एते धम्मा, चित्तपटिबद्धा, तस्मा सञ्ञा च वेदना च चित्तसङ्खारोति। *M sutta* 44.

[2] Cf चेतसि भव तदायत्तवुत्तितायाति चेतसिक; न हि त चित्तेन विना आरम्मणगहणसमत्थ। असति चित्त सब्बेन सब्ब अनुप्पज्जनतो, चित्त पन केनचि चेतसिकेन विनापि आरम्मण पवत्तती ति त चेतसिकमेव चित्तायत्तवुत्तिक नाम। तेनाह भगवा "मनोपुब्बङ्गमा धम्मा" ति। *A Vibhāvini* p 40

[3] Cf चित्तसंकिलेसा भिक्खवे सत्ता संकिलिस्सन्ति, चित्तवोदाना विसुज्झन्ति। *S* III p 151

[4] Cf दूरङ्गम एकचरं असरीरं गुहासयं।
ये चित्तं सञ्ञमेस्सन्ति मोक्खन्ति मारबन्धना ॥ *Dhammapada*, III 4.

[1]तत्र दूरङ्गमं शास्तुः सर्वलोकधातुस्थविनेयकार्यकरणात्। एकचरं युगपद् द्वितीयचित्ताभावात्। अशरीरं मूर्त्यभावात्, क्रि(?)याभात्रानुमेयस्वभावत्वाच्च। गुहाशयं शरीरबलेन। तद्वृत्तिव्यक्तेरिति।[1] तस्य धर्माः संप्रयोगिणश्चैतसिका इति।

व्याख्याताः पञ्चप्रकाराश्चैत्ताः। अन्येऽपि चानियता. पठ्यन्ते—वितर्कविचारकौकृत्यमिद्धादयः।[2]

तत्रेदं वक्तव्यम्। कस्मिंश्चित्ते कति चैत्ता भवन्ति?

कामावचरं तावत् पञ्चप्रकारं चित्तम्। कुशल(?)म्, अकुशलं द्विविधमावेणिकमन्यत्क्लेशसंप्रयुक्तं च। अव्याकृतं द्विविधं निवृतानिवृताव्याकृताख्यम्॥[3]

---

[1-1] Cf तत्थ दूरङ्गम ति चित्तस्स मक्कटसुत्तमत्तकम्पि पुरत्थिमादिदिसाभागेन गमन नाम नत्थि, दूरे सन्तम्पि पन आरम्मण सम्पटिच्छतीति दूरङ्गम नाम जात। सत्तट्ठचित्तानि पन एकतो कण्णिकाबद्धानि एकक्खणे उप्पज्जितु समत्थानि नाम नत्थि। उप्पत्तिकाले एकमेव चित्त उप्पज्जति तस्मा एकचर नाम जात। चित्तस्स सरीरसण्ठान वा नीलादिप्पकारो वण्णभेदो वा नत्थीति असरीर नाम जात। गुहा नाम चतुमहाभूतगुहा, इद च हदयरूप निस्साय वत्ततीति गुहासय नाम जात। *Dhammapada A* p 304

[2] मिद्धादय इति। आदिशब्देनारतिविजृम्भिकातन्द्रीभक्तेऽसमतादय उपक्लेशा क्लेशाश्च रागादयोऽप्यनियतत्वेन गृह्यन्ते। न ह्येते रागादय पञ्चाना प्रकाराणा अन्यतमस्मिन्नियता भवन्ति। आचार्यवसुमित्र सग्रहश्लोकमाह—

वितर्कचारकौकृत्यमिद्धप्रतिघसक्तय।
मानश्च विचिकित्सा चेत्यष्टावनियता स्मृता॥

इति। तदिदमष्टानियमवचन न बुध्यामहे। दृष्टयोऽपि कस्मान्नानियता इष्यन्ते। न हि सप्रतिघे सविचिकित्से वा चित्ते मिथ्यादृष्टि प्रवर्तते। तस्माद्यद्वा तद्वेदमुक्तमिति पश्याम। *Sakv.* p 132. See *Tvb* 14

[3] अव्याकतभावो द्विविध। सनिवृत अनिवृतश्च। सयोजनावृत अनिवृत। अनावृतोऽनिवृत।

कतमे सनिवृताव्याकृता धर्मा। कामधातौ सत्कायदृष्टि अन्तग्राहदृष्टि तत्सप्रयुक्ता अविद्यासहभुवो धर्मा। रूपारूप्यधातौ सर्वसयोजनानि रूपधातुकायवाक्कर्माणि। इति सनिवृताव्याकृता धर्मा।

कतमे अनिवृताव्याकृता धर्मा। आसन शयन स्थान चक्रमण विपाकधर्मा नैर्माणिक चित्त आकाश अज्ञान प्रत्ययोच्छेद। इत्यनिवृताव्याकृता धर्मा। *Aam* pp 47—8

Also cf क्लेशाच्छादित कुशलाकुशलत्वेनाव्याकृत यत् तन्निवृताव्याकृतम्। अनाच्छादितं त्वनिवृताव्याकृत विपाकजैर्यापथिकशैल्पस्थानिकनैर्माणिकस्वभावम्। *Sakv* p 134

तत्र तावत्कामावचरं चित्तमवश्यं सवितर्कसविचारम्। अतस्तत्

[ 121 ] अभ्युद्गच्छति कामाप्तं धर्मैर्द्वादशभिः सह।
अक्लिष्टाव्याकृतं चित्तं रश्मिमानिव रश्मिभिः ॥[1]

कामावचरमनिवृताव्याकृतं चित्तं द[ II B, 7 Fol 45 a ]शभिर्महाभौमैर्वितर्कविचाराभ्यां च सहावश्यमुदेति ॥[1]

[ 122 ] तथाष्टादशभिश्चित्तैर्निवृतं जायते मनः।[2]

सत्कायान्तग्राहदृष्टिसंप्रयुक्तं चित्तं कामधातौ निवृताव्याकृतम्[3]। तथाष्टादश चैतसिका भवन्ति। दशमहाभौमाः[ षट् क्लेशमहाभौमाः ] वितर्कविचारौ च। दृष्टिर्नाधिका पूर्व[वत्]।

द्वाविंशत्या सहावश्यं शुभं भवति मानसम् ॥[3]

दशमहाभौ(2)माः दशकुशलमहाभौमाः वितर्कविचारौ च ॥

[ 123 ] चेतसोऽस्मद् विंशत्या चित्तमुत्पद्यतेऽशुभम्।[4]

यदकुशलं चित्तमावेनि(णि)कं तत्र विंशतिश्चैत्ताः--दशमहाभौमाः षट्क्ले(क्ले)शमहाभौमाः द्वावकुशलमहाभौमौ वितर्कौ विचारश्च। आवेणिकं नाम चित्तं यत्राविद्यैव केवला नान्यः क्लेशोऽस्ति रागादिः।

ह[3]ह्रीहमानयुक्तं यत्

---

क्लेशा अपि द्विविधा। अकुशला निवृताव्याकृताश्च। अकुशलेभ्यो विशेषार्थमाह निवृताव्याकृतैरिति। न हि निवृतेन विज्ञानेनाकुशलाना संप्रयोग संभवति। निवृता क्लिष्टत्वात्। अव्याकृता कुशलाकुशलत्वेनाव्याकरणात्। *Tvb* 6ab

[1] Cf अन्यत्र द्वादशाव्याकृते मता।

निवृतादयदव्याकृतमनिवृताव्याकृतम्। तत्र द्वादश चैत्ता इष्टा। वहिर्देशिका अव्याकृतमपि कौकृत्यमिच्छन्ति। तेषा तत्संप्रयुक्ते चेतसि त्रयोदश भवन्ति। *Akb* II 30 ab

[2] Cf निवृतेऽष्टादश। *Ak.* II. 30 a.

[3] Cf सवितर्कविचारत्वात् कुशले कामचेतसि।
द्वाविंशतिश्चैतसिका कौकृत्यमधिक क्वचित ॥ *Ak.* II 28

The *Akb* II 28 d deals in detail with the nature of *kaukrtya*

[4] Cf आवेणिके त्वकुशले दृष्टियुक्ते च विंशति।
क्लेशैश्चतुर्भि क्रोधाद्यं कौकृत्येनैकविंशति ॥ *Ak.* II 26.

दृष्टियुक्तेऽप्यकुशले विंशतिर्यं एवावेनि(णि)के । ननु च दृष्टिरधिका ? नाधिका, प्रज्ञाविशेष एव हि कश्चिद् दृष्टिरित्युच्यते । स च महाभौमेषु पठितः ।[१]

कः पुण(न)रयं वितर्कः को वा विचारः ? वितर्को णा(ना)म चित्तौदार्यलक्षणः संकल्पद्वितीयनामा विषयनिमित्तप्रकारविकल्पी संज्ञाप(4)वनोद्धतवृत्तिः, औदारिकपञ्चविज्ञानकायप्रवृत्तिहेतुः । विचारस्तु चित्तसौक्ष्म्यलक्षणो मनोविज्ञानप्रवृत्त्यनुकूलं(लः) । इत्येतौ द्वौ धर्मौ[२] कामावचरे चेतसि सर्वस्मिन्नियमेनोत्पद्येते ।

तदिदमतिसाहसं वर्तते यद्विरुद्धयोरपि द्वयोर्धर्मयोरेकत्र चित्ते समवधानं प्रतिज्ञायते[३] । न ह्येतल्लोके दृष्टं यद्विरुद्ध(5)योरेकत्र सहावस्थानमिति कोशकारः ।[४]

---

[१] After this *Akb* II 32 discusses *ahrī anapatrāpya* and *prema-gaurava*

[२] Cf वितक्केतीति वितक्को "ऊहन ति वुत्त होति । स्वाय आरम्मणे चित्तस्स अभिनिरोपनलक्खणो । नागसनत्थेरो पनाह—आकोटनलक्खणो वितक्को । "यथा महाराज भेरी आकोटना एव वितक्को दट्ठब्बो । यथा पच्छा अनुरवना···एव विचारो दट्ठब्बो"ति ।··· आरम्मणे तेन चित्त विचरती ति विचारो "अनुसञ्चरण ति वुत्त होति । *Dhs A.* III 198-9

Also cf वितर्कश्चित्तस्यालम्बने स्थूल आभोग । सूक्ष्मो विचार । *Yoga-sutra-bhāshya*, I. 17.

3 V. supra, p. 72 n 2.

[४] Cf. वितर्कचारावौदार्यसूक्ष्मते

चित्तौदारिकता वितर्क । चित्तसूक्ष्मता विचार । कथ पुनरनयोरेकत्र चित्ते योग ?···नैव हि वितर्कविचारावेकत्र चित्ते भवत इत्यपरे । कथमिदानीं प्रथम ध्यान पञ्चाङ्गमुक्तम् । भूमितस्तत् पञ्चाङ्गमुक्त न क्षणत । *Akb.* II 33 a

'नैव हि वितर्कविचारावेकत्र चित्ते भवत इत्यपर' इत्याचार्यमतम् । अस्मिन्मते यथोक्तदोषप्रसङ्गो न भवति । कस्तवनयो पर्यायवर्तिनोर्विशेष ? अत्र पूर्वाचार्या आहु — "वितर्क कतम । चेतना वा निश्रित्य प्रज्ञा वा पर्येषको मनोजल्पोऽभ्यूहाभ्यूहावस्थयोर्यथाक्रम सा च चित्तस्यौदारिकता । विचार कतम । चेतना वा निश्रित्य प्रज्ञा वा प्रत्यवेक्षको मनोजल्पोऽभ्यूहाभ्यूहावस्थयोर्यथाक्रमम् । सा च चित्तसूक्ष्मता' इति ।

अस्मिन् पक्षे वितर्कविचारावेकस्वभावौ समुदायरूपौ पर्यायवर्तिनौ पर्येषणप्रत्यवेक्षणाकारमात्रेण भिद्यावेर्ध्येते ।···'भूमितस्तत्पञ्चाङ्गमुक्त न क्षणत' इति । प्रथमध्यानभूमि कदाचिद्वितर्केण व्यवकीर्णा, कदाचिद्विचारेण । तदत्र ध्यानमधिकृत्य पञ्चाङ्गमुक्तम्, न क्षणमधिकृत्येत्यदाय । *Sakv* p 138

The view of the *Purvāchāryas* as quoted by Yaśomitra, is found in *Asm* Cf वितर्क कतम । चेतना वा निश्रित्य प्रज्ञा वा पर्येषको मनोजल्प । सा च चित्तस्यौ-

[1]तत्र केचिदाहुः—सर्पिर्यथाऽप्सु निष्ठ्यूतं नातिश्यायते नातिविलीयते, एवं वितर्कविचारयोगाच्चित्त नातिसूक्ष्मं भवति नात्युदारमित्युभयोरपि तत्र व्यापारः। एवं तर्हि णि(नि)मित्तभूतौ वितर्कविचारावौदार्यसूक्ष्मतयोः प्राप्नुतो यथाऽऽपश्चातपश्च सर्पिषः (6)श्यानत्वविलीनत्वयोर्ण(र्न) पुण(न)स्तत्स्वभावौ ।[2]

[3]अन्ये पुण(न)राहुः—वाक्संस्कारा वितर्कविचाराः सूत्रेऽभिहिताः।

---

दारिकता। विचार कतम। चतना वा निश्रित्य प्रज्ञा वा प्रत्यवक्षका मनोजल्प। सा च चित्तस्य सूक्ष्मता। *Asm* p 10 For an examination of this passage, see E. Frauwallner *On the Date of the Buddhist Master of the Law Vasubandhu*, pp 21 2, Orientale Roma, 1951

Also cf वितर्क पर्येषको मनोजल्प प्रज्ञाचेतनाविशेष। पर्येषक किमेतदिति निरूपणाकारप्रवृत्त। मनसो जल्पो मनोजल्प। जल्प इव जल्प। जल्पोऽयकथनम्। चेतनाप्रज्ञाविशेष इति। चेतनायाश्चित्तपरिस्पन्दात्मकत्वात्। प्रज्ञायाश्च गुणदोषविवेकाकारत्वात्तद्वशेन चित्तप्रवृत्ते। कदाचिच्चित्तचेतनयोर्वितर्कप्रज्ञप्ति। कदाचित्प्रज्ञाचेतसार्यथाक्रममनभ्यूहावस्थयो। अथ वा चेतनाप्रज्ञयोरेव वितर्कविज्ञप्तिस्तद्वशेन चित्तस्य तथाप्रवृत्तत्वात्। स एव चित्तस्यौदारिकता। औदारिकतेति स्थूलता वस्तुमात्रपर्येषणाकारत्वात्। एव च तथा विचारोऽपि द्रष्टव्य। विचारोऽपि हि चेतनाप्रज्ञाविशेषात्मक प्रत्यवक्षका मनोजल्प एव। इद तदिति पूर्वाधिगतनिरूपणात्। अत एव च चित्तसूक्ष्मतेत्युच्यते। एतौ च स्पर्शास्पर्शविहारसनिश्रयदानकर्मकौ। अनयोश्चौदारिकसूक्ष्मतया व्यवस्थापनात्पृथक्करणम्। *Tvb* 14

[1] *Cf* केचिदाहु। यथाप्सु निष्ठ्यूत सर्पि सूर्यरश्मिभिरुपरिष्टात् स्पृष्ट नातिश्यायते नातिविलीयते। एव वितर्कविचारयोगाच्चित्त नातिसूक्ष्म भवति नात्यौदारिकमित्युभयोरपि तत्रास्ति व्यापार। एव तर्हि निमित्तभूतौ वितर्कविचारावौदारिकसूक्ष्मतयो प्राप्नुतो यथा पयश्चातपश्च सर्पिष श्यानत्वविलीनत्वयोर्न पुनस्तत्स्वभावौ। आपेक्षिकी चौदारिकसूक्ष्मता भूमिप्रकारभेदादित्याभवाग्राद्वितर्कविचारौ स्याताम्। न चौदारिकसूक्ष्मतया जातिभेदा युक्त। *Akb* ii. 33 a.

[2] LVP says that this is an opinion of the *Vibhasha* See *LVPAk* ii p 173, n. 2

[3] This whole passage (upto मृदुधिमात्रतात्) is identical with the *Akb* ii. 33 a After यदि जातिभेद स्यात् the *Akb* has वेदनासंज्ञावत्।

'अन्ये पुनराहु' इति सौत्रान्तिका। 'वाक्संस्कारा' इति वाक्समुत्थापका इत्यर्थ। एतस्या कलनाया समुदायरूपा वितर्कविचारा पर्यायभाविनश्च भवन्ति, चित्तचैत्तकलापस्य वाक्समुत्थापकत्वात्। कथ पुनरनयोरेकत्र चित्ते योग इत्युक्तम्। अतो वैभाषिक आह। 'यदि चैकत्र चित्तेऽन्यो धर्म औदारिक' इति विस्तर। 'न मृदुधिमात्रतया जातिभेदो व्यक्तो भवतीत्यर्थ। *Sakv* p 139

"वितर्क्य विचार्य वाचं भाषते नावितर्क्याविचार्य" इति ।[1] तत्र य औदार्यास्ते वितर्काः । ये सूक्ष्मास्ते विचाराः । यदि चैकत्र चित्तेऽन्यो धर्म औदारिकोऽन्यः सूक्ष्मः कोऽत्र विरोध इति ?[2] न विरोधो यदि जातिभे(?)दः स्यात् । एकस्यान्तु जातौ मृद्वधिमात्रता युगपन्न संभवति । जातिभेदोऽप्यस्ति स तर्हि वक्तव्यः । दुर्वचो ह्यसौ । अतो मृद्वधिमात्रतया व्यज्यते । नैवं व्यक्तो भवति । प्रत्येकं जातीनां मृद्वधिमात्रत्वात् ।

तदिदमन्धविलासिनीकटाक्षगुणोत्कीर्तण(न)कल्पं चोद्यमारभ्यते । यदनवबुध्य तल्लक्षणं चोद्यवि(?)धिः मिथ्या प्रतार्य(य)ते । तयोर्हि यथोक्तलक्षणयोरेकस्मिंश्चेतसि सद्भावमात्रं प्रतिज्ञायते न तु युगपद् वृत्त्युद्रेकतालाभः ।[3] यथा विद्याविद्ययोः संशयनिर्णययोश्चेति तूष्णीमास्व । मा विद्वद्भिरवजीहसः स्वमात्मानम् ॥

सा पुनर्दृष्टिस्त्रिप्रकारा, मिथ्यादृष्ट्याद्या वेदितव्याः ।

क्रोधाद्यैस्त्वधिकं वदेत् ॥

---

[1] Cf. पुब्बे खो, आवुसो विसाख, वितक्केत्वा विचारेत्वा वाच भिन्दति, तस्मा वितक्कविचारा वचीसंखारो । *M. sutta* 44.

[2] The Sthaviravādin takes this standpoint as is evident from the following :—सन्ते पि च नेस कत्थचि अवियोगे ओळारिकट्ठेन च पुब्बङ्गमट्ठेन च घण्टाभिघातो विय अभिनिरोपनट्ठेन चेतसो पठमाभिनिपातो वितक्को । सुखुमट्ठेन अनुमज्जनसभावट्ठेन घण्टानुरवो विय अनुप्पबन्धो विचारो । विप्फारवा चेत्थ वितक्को, पठमुप्पत्तिकाले परिप्फन्दभूतो चित्तस्स । आकासे उप्पतितुकामस्स पक्खिनो पक्खविक्खेपो विय ।···सन्तवुत्ति विचारो नातिपरिप्फन्दनभावो चित्तस्स, आकासे उप्पतितस्स पक्खिनो पक्खप्पसारण विय······तथा मण्डल करोन्तस्स मज्झे सन्निरुम्भित्वा ठितकण्टको विय अभिनिरोपनो वितक्को, बहिपरिब्भमनकण्टको विय अनुमज्जनो विचारो । *DhsA.* 1. 200 and 201.

[3] This view agrees quite well with the view of Saṃghabhadra as quoted and criticised by Yaśomitra : अत्र संघभद्र आचार्य आह—'एकत्र च चित्ते औदारिकसूक्ष्मते भवतः । न च विरोधः प्रभावकानान्यत्वात् । यदा हि चित्तसंतकलापे वितर्क उद्भूतवृत्तिर्भवति तदा चित्तमौदारिकं भवति । यदा विचारस्तदा सूक्ष्मम् । रागमोहचरितव्यपदेशवत् । रागमोहयोगपद्येऽपि हि तयोरन्यतरोद्भूतवृत्तियोगाद् रागचरितो मोहचरित इति वा व्यपदिश्यते । तदिहापि द्रष्टव्यम्' इति ।

अत्र वयं ब्रूमः । भवति कस्मिंश्चित्कलापे कस्यचिद्धर्मस्योद्भूतवृत्तित्वम् । किन्त्वनयोर्लक्षणं विशेषितमिति न किञ्चिदेतत् । ननु च चित्तौदारिकतासूक्ष्मतालक्षणौ वितर्कविचारावुक्तौ । सत्यमुक्तौ । प्रत्येकं तु जातीनामौदारिकसूक्ष्मत्वे इति नावौदारिकसूक्ष्मतालक्षणौ भवितुमर्हतो यथोक्तमिति नैतदस्मानाराधयति । *Sphu* p. 140.

(७)क्रोधाद्यैस्तूपक्लेशैरधिकं भवति। स च क्रोधादिरुपक्लेशोऽधिक। क्लेशैश्च संप्रयुक्तं रागप्रतिघमानविचिकित्साभिश्च युक्तं चित्तं तेन च क्लेशाधिकं भवतीत्येकविंशतिर्भवन्ति ॥

[ 124 ] सर्वत्र संभवान्मिद्धं[१] यत्र स्यात्तत्र निर्दिशेत्।
तद्वदेव च कौकृत्यमधिकं गणयेत्क्वचित् ॥[२]

यत्र मिद्धं तत्र त[II A, 7 Fol 45b ]देवाधिकं गणयेत्। यत्रापि तदेवाधिकमिति य एष कामधातौ चैत्तानां नियम उ[क्तस्त]तः ॥

[ 125 ] साशुभं मिद्धकौकृत्यं रूपधातौ न विद्यते।
ध्यानान्तरे वितर्कश्च विचारश्चापि नोपरि ॥[3]

[४] न किञ्चिदकुशलं मिद्धं कौकृत्यं च प्रथमध्यानादौ विद्यते। तेन तत्र प्रतिघशाठ्यमदमायावर्ज्याश्च क्रोधादयः, आह्रीक्या(२)नपत्राप्ये च न सन्ति। य एव प्रथमे ध्याने सन्ति त एव 'ध्यानान्तरे', 'वितर्कश्च' न विद्यते। पूर्वोक्ताश्च न सन्तीति 'च'शब्दात्। 'विचारश्चापि नोपरि।' ध्यानान्तरादूपरि विचारश्चापि नास्ति पूर्वोक्ताश्च। 'च'शब्दात् माया शाठ्यं च नास्तीति गम्यते।

ब्रह्मनो(णो) हि यावच्छाठ्यं पठ्यते, पर्षत्संबन्धात्। स हि स्वस्यां पर्षदि अश्वजिता भिक्षुणा प्रश्नं पृष्ट "कुत्र तानि चत्वारि महाभूतान्यपरिशेषं निरुध्यन्ते" इत्यप्रजानन् क्षेपमकार्षीत्—"अहमस्मि ब्रह्मा महाब्रह्मा ईश्वरः कर्त्ता निर्माता स्रष्टा सृजः पितृभूतो भावानाम्" इति।[५] गतमिदम् ॥[६]

---

[१] On *middha*, v supra, p 74, n 1

[२] मिद्ध सर्वाविरोधित्वाद्यत्र स्यादधिक हि तत्। *Ak* II 30cd

[३] कौकृत्यमिद्धाकुशलान्याद्ये ध्याने न सन्त्यत।
ध्यानान्तरे वितर्कश्च विचारश्चाप्यतः परम् ॥ *Ak* II 31

[४] The *Adv kārikā* 125 is almost identical with *Akb* II 31

[५] Cf कत्थ नु खो आवुसो इमे चत्तारो महाभूता अपरिसेसा निरुज्झन्ति सेय्यथीदं पठवीधातु—पे—वायोधातू ति ?" एवं वुत्ते भेवट्ट, सो महाब्रह्मा त भिक्खु एतदवोच "अहमस्मि भिक्खु ब्रह्मा महाब्रह्मा अभिभू अनभिभूतो अञ्ञदत्थुदसो वसवत्ती इस्सरो कत्ता निम्माता सेट्ठो सञ्जिता वसी पिता भूतभव्यान'न्ति।" *Dīgha* XI 81.

[६] After this the *Akb* (II 32 and 33) deals with the following topics, which are not discussd in *Adv*—

(१) आह्रीक्यस्यानपत्राप्यस्य कि नानाकरणम्।
(२) मानमदयो कि नानाकरणम्।

इदं वक्तव्यम् । संप्रयुक्ताः संस्काराः कस्मादुच्यन्ते ? तदारभ्यते ।

[ 126 ] संप्रयुक्तः संस्कारः समता यस्य पञ्चधा ।
विप्रयुक्तश्च बोद्धव्यः(6)समता यस्य नास्त्यसौ ॥[१]

पञ्चभिः समताभिः संप्रयुक्ताः संप्रयुक्ताः । ताः पुनराश्रयालम्बनाकारकालद्रव्यसमताख्याः । "यथैव ह्येकं चित्तमेवं चैत्ता अप्येकैकाः" इति विस्तरः ।[२] यस्य पुण(न)रेताः समता न विद्यन्ते स विप्रयुक्त इति ॥

चोदकः—कश्चिद्रूपं तर्हि विप्रयुक्तं[३] प्राप्नोति, असंस्कृतं चेति ?(5) संप्रत्युच्यते ।

[ 127 ] विशिष्टाणा(ना)मसद्भावात्प्रसंगो नास्ति रूपिणाम् ।
संस्कारग्रहणाच्चैव खादीनां ण(न) प्रसज्यते ॥

विशिष्टेन खलु निरोगेण(नियोगेन) रूपिषु संज्ञा सन्निविशन्त इति तेष्वप्रसंगः । संस्कारग्रहणाच्च खादिषु विप्रयुक्तसंज्ञा न प्रवर्तत इति सिद्धम् ॥

के पुनस्ते विप्रयुक्ताः संस्काराः ? कियन्तो वेति ? नहि व(6)यमेतेषां स्वभावमुपलभामहे । नापि कृत्यम् । नचैते धर्मा लोके प्रसिद्धा नापि बुद्धवचने । न वेदादिषु शास्त्रेष्विति । तदत्रोपव्याह्रीयते—

[ 128 ] प्राप्त्यादयस्तु संस्कारा विप्रयुक्तास्त्रयोदश ।[४]
आप्तोक्तिस्वक्रियालिङ्गा लिङ्गमेषां गदिष्यते ॥

---

१ Cf चित्त मनोऽथ विज्ञानमेकार्थं चित्तचैतसा ।
साश्रयालम्बनाकाराः संप्रयुक्ताश्च पञ्चधा ॥ *Ak* II 34.

२ Cf.……पञ्चभिः प्रकारैराश्रयालम्बनाकारकालद्रव्यसमताभिः । केयं समता । यथैव ह्येकं चित्तमेवं चैत्ता अप्येकैका इति । *Akb* II 34 d

३ चित्तविप्रयुक्ता इति चित्तग्रहणं चित्तसमानजातीयप्रदर्शनार्थम् । चित्तमिव चित्तेन च विप्रयुक्ता इत्यर्थः । किं च तेषां चित्तेन समानजातीयत्वम् ? यदरूपिणोऽमी भवन्ति । रूपित्वादेव हि विप्रयुक्तत्वेऽपि रूपं न विप्रयुक्तत्वे नाम लभते । यद्वामीषां नामरूपमिति नामत्वम् । तत्तेषां चित्तेन समानजातीयत्वम् । चैत्ता अपि चित्तेन तुल्यजातीयाः । ते तु चित्तेन सहालम्बने संप्रयुक्ताः । तद्विशेषणार्थं विप्रयुक्तग्रहणम् । असंस्कृतमपि तत्समानजातीयमनालम्बनत्वेनेति तत्परिहारार्थं संस्कारग्रहणम् । *Sakv* p 142

४ The thirteen *Viprayukta samskaras* are प्राप्ति, अप्राप्ति, सभागता, आसंज्ञिकम्, निरोधसमापत्ति, जीवितेन्द्रियम्, जाति, जरा, स्थिति, अनित्यता, नामकाय, पदकाय, व्यञ्जनकाय ।

यत्तावत् स्वभावक्रियाभावादिति । तदत्रोभयमभिधायिष्य[6]ते । यदपि बुद्धवचने न पठ्यन्त इति । तत्राप्युत्तरवचनं सावंश व्याहरिष्यते । यत्तु लोके न वेदादिषु पठ्यन्त इति तच्चोद्यम् । ये खलु सर्वज्ञविषया धर्माः प्रतिसंविल्लाभिनां बुद्धिवृत्तिविषयमायान्त्यार्यमैत्रेयस्थविरवसुमित्राचार्याश्वघोषप्रमुखा(नां)णां च बोधिसत्त्वानां बुद्धिप्रसादविधायिन[7]स्ते· जाल्पानां स्तनन्धयबुद्धीनामभिधर्मपरोक्षमतिवृत्तीनां च कथं सान्धकारेषु मनस्सु गोचरतामायान्तीति ॥

तत्र तावत्

[ 129 ab ] प्राप्तिः समन्वितिर्लब्धि धर्मवत्ता व्यवस्थितिः ।

---

Cf विप्रयुक्तास्तु संस्कारा प्राप्त्यप्राप्ती सभागता ।
आसंज्ञिकसमापत्ती जीवित लक्षणान्यपि ॥
नामकायादयश्चेति । *Ak* ii 35 and 36 a

Also *cf* कतमे चित्तविप्रयुक्ता संस्कारा । प्राप्ति जाति स्थिति जरा अनित्यता असंज्ञिसमापत्ति आसंज्ञिकायतन विविधा देशप्राप्ति वस्तुप्राप्ति नामकाय पदकाय व्यञ्जनकाय पृथग्जनत्वम इत्येव विविधा धर्मादिचित्तविप्रयुक्ता संस्कारा । *Aam* p 61

चित्तविप्रयुक्ता संस्कारा कतमे । प्राप्तिरसंज्ञिसमापत्तिर्निरोधसमापत्तिरासंज्ञिकं जीवितेन्द्रियं निकायसभागता जातिर्जरास्थितिरनित्यता नामकाया पदकाया व्यञ्जनकाया पृथग्जनत्वं प्रवृत्तिः प्रतिनियमो योग जवोऽनुक्रम कालो देश संख्या सामग्री च । *Asm* p 10

For the different lists of the *Chitta viprayukta dharmas* see

(1) W M Mc Govern *A Mannual of Buddhist Philosophy* vol i pp 161 162,

(2) Th Stcherbatsky *The Central Conception of Buddhism*, pp 105 106,

(3) *LVPAk* ii p 178

and (4) N Aiyaswami Sastri *Ālambanaparīksha* (Appendix) p 114

[6] Cf प्राप्तिर्लाभ समन्वय ।
प्राप्त्यप्राप्ती स्वसन्तानपतितानां निरोधयो ॥

प्राप्तिर्नामास्ति किञ्चिद्द्रव्यान्तरमिति कुत एतत् ? आह सूत्रात् । सूत्रे ह्युक्तम्—'स एषां दशानामशैक्षाणां धर्माणामुत्पादात् प्रतिलम्भात् समन्वागमादार्यो भवति पञ्चाङ्गविप्रहीण' इति विस्तरः । तस्मादाऽऽर्याणामपि पृथग्जनानां पृथक् च वशित्वकाले समन्वागमाख्यं लभते नान्यत् द्रव्यम् । एवमयं समन्वागम सर्वथा प्रज्ञप्तिधर्मो न द्रव्यम । तस्य च प्रतिपक्षोऽसमन्वागम इति । द्रव्यमेव तु वैभाषिका उभयं वर्णयन्ति । किं कारणम् ? एष हि न सिद्धान्त इति । *Akb* ii. 36 bcd

Also Cf प्राप्ति कतमा । कुशलाकुशलाना धर्माणामाचयापचये प्राप्ति प्रतिलम्भ समन्वागम इति प्रज्ञप्ति । *Asm* p 10

प्राप्तिर्णा(र्ना)म समन्वागमो लाभ इति पर्यायः[1]। सर्वथा भावाञ्छब्दैरेव शब्दानाचष्टे। यथैव खलु प्राप्तिरित्येतच्छ(6)ब्दगडमात्रं श्रूयते तथैव समन्वागमो लाभ इत्येतदपि पदद्वयं वाग्वस्तुमात्रमिति न पर्यायनाम्ना लक्षणमुद्योतितं भवति[2]। तस्मादव्यभिचारि तत्प्रसाद(ध)कं लिङ्गमुच्यताम्। इमे ब्रूमः। श्रोत(त्र)मवधत्स्व मनश्चैकाग्रतायां सन्नियुक्त्वा। 'धर्मवत्ता व्यवस्थितिः।'[3] धर्माः खलु त्रिधाः कुश[लाः]···[Fol 46 lost][4]······

······[II B, 8. Fol 47 a ](1) रूपेऽपि कुशलया विज्ञप्त्या वर्तमानया यावद्विज्ञापयति, अतीतया च समन्वागतः।

[ 130 cd ] श्रुतचिन्तामयानां च समापत्तिद्वयस्य च।

श्रुतचिन्तामयानामपि। सहजा पश्चाद्भवति। द्वयोश्चाश्चि(चि)त्तसमापत्त्योस्सह पश्चाद्भवतीति।

[ 131 ] नि[:]क्लेशसंस्कृतापूर्व(र्वं) शुभानां तु रजस्वताम्।
आदिलाभे सह प्राक्च तदूर्ध्वं वा त्रि(2)धेष्यते॥

अनास्रवानां(णां) च स्कन्धानां, अनुचितानां च कुशलसास्रवानां(णां) न पूर्वजा। एषामेव यथोक्तानां 'तदूर्ध्वं तु द्व(त्रि)धेष्यते।' यदा तेन संमुखीभूता तदा द्विधैवेति वर्तते॥

---

[1] Though the Pali tradition does not recognise the *Prāpti* as an element, the use of such terms as *samannāgama* and *lābha* indicate the knowledge of such force as *Prapti*. Vide *Kv* ix. 12

The *KvA* refers to the two *paññattis*, viz, *samannāgata paññatti* and *paṭilābha-paññatti* —इदानि अतीतानागतेहि समन्नागतकथा नाम होति। तत्थ समन्नागत-पञ्ञत्ति पटिलाभ-पञ्ञत्तीति द्वे पञ्ञत्तियो वेदितब्बा। तासु पच्चुप्पन्नधम्मसमङ्गी समन्नागतोति वुच्चति।···पटिविज्झित्वा अपरिहीनताय पन लाभीति। *KvA*. ix. 12

[2] Cf कतमश्च लक्षणनिर्देशः। न हि भेदविवक्षायामपि पर्यायवचनेन लक्षणनिर्देशः कल्पते। प्राप्तिः कतमा। यः प्रतिलम्भो यः समन्वागम इति। पर्यायवचनमपि कदाचित् लक्षणाय कल्पते। अनलो जातवेदा अग्निरिति। *Sakv* p 143.

[3] This definition of *Prāpti* agrees quite well with Saṃghabhadra's definition as quoted by Yaśomitra —इदमस्येति ज्ञानचिह्नं प्रतिलब्धधर्माविप्रणाशकारणं च प्राप्तिरित्याचार्यसंघभद्रः। *Saku*. p 148

[4] This lost folio must have contained a very valuable discussion on *prapti-aprāpti* and also an examination of the arguments forwarded by the Kośakāra. V infra, *Adv kārikā* 199

[ 132 ] क्लिष्टाणां कुशलानां च तदन्येषां त्रिधा मता ।

क्लिष्टाणां च स्कन्धानां त्रैयध्विकी प्राप्तिः । 'कुशलानां च तदन्येषां' तेभ्योऽनाम्रवे[3]भ्यस्तेभ्यश्चानुचितेभ्य कुशलसास्रवेभ्योऽन्येषां कुशलसास्र वाना(णा) त्रैयध्विक्येव ।

निवृताव्याकृता ज्ञाननिर्माणमनसा तथा ॥

त्रैयध्विकीति वर्तते ॥

[ 133 ] निर्वाणस्यादितो लाभे नित्यस्यान्यस्य सर्वदा ।

निर्वाणस्य तत्प्रथमतो लाभे द्वैयध्विक्येव । अनागतवर्तमानालब्धस्या तीताऽपि । 'नित्यस्यान्यस्य सर्वदा ।

अजा[4]तवर्तमाना च

अप्रतिसंख्यानिरोधस्यानागतवर्तमानैव नित्यम् ।

कदाचित्तु त्रिधेष्यते ॥

येन लब्धस्तस्य त्रैयध्विकीत्युक्तमेतत् ।

व्याख्याते प्राप्त्यप्राप्ती ॥[१]

---

[१] Cf सा किलषा प्राप्ति

त्रयध्विकानां त्रिविधा शुभादीनां शुभादिका ।
स्वधातुका तदाप्तानामनाप्तानां चतुर्विधा ॥
त्रिधा न शैक्षाऽशैक्षाणामहेयानां द्विधा मता ।
अव्याकृताप्तिः सहजाऽभिज्ञानर्माणिकादृते ॥
निवृतस्य च रूपस्य कामे रूपस्य नाग्रजा ।
किमप्राप्तेरपि प्राप्तिवत्प्रकारभेदः ? न ।
अक्लिष्टाव्याकृताप्राप्तिः सातीताजातयोस्त्रिधा ॥
कामाद्याप्तामलानां च मार्गस्याप्राप्तिरिष्यते ।
पृथग्जनत्व तत्प्राप्तिभूसंचाराद्विहीयते ॥ *Ak* II 37 40

The Kośakara discusses one more point —किं पुनरप्राप्तिप्राप्त्योरपि प्राप्त्यप्राप्ती भवतः ? उभयोरप्युभये भवत इत्याहुः । ननु चैवमनवस्थाप्रसङ्गः ? नानवस्थाप्रसङ्गः । परस्परसम्बन्धमात्रं । एवमुत्तरोत्तरवृद्धिप्रसङ्गेन प्राप्तया विसृष्यन्त्य सर्वेषाम् तातानागतानां क्लेशोपक्लेशगणानामपरिनिर्वाणिकानां च क्लेशलक्षणानां अनन्ता एकस्य प्राणिनः क्षणे क्षणे उपजायन्ते । इत्यनन्ताः प्रतिसन्तानमसमावरणा सत्त्वानां भवन्ति ।

समागता वक्तव्या । केयं सभागता नाम ? नहीह प्रवचने तीर्थ्यपरिकल्पितसामान्यविशेषपदार्थगन्धोऽप्यस्ति । तत्केयं तदभ्यासगतेति ? तदिदं (5)प्रतार्य(य)ते ।

[ 134 ] एकार्थरुचिहेतुर्यः सत्त्वानां स सभागता ।[१]

[२]सभागता नाम द्रव्यम् । सत्त्वानामेकार्थरुचिः सादृश्यहेतुभूतम् । निकायसभाग इत्यस्य शास्त्रसंज्ञा ।[३] सा पुनरभिन्ना भिन्ना च ।[४] अभिन्ना सर्वसत्वानां सत्त्वसभागता । सा प्रतिसत्त्वं सर्वेष्वात्मस्नेहाहाररतिसाम्यात् । भिन्ना पुनस्तेषामेव स(6)त्त्वानां धातुभूमिगतियोनिजातिस्त्रीपुरुषोपासकभिक्षुशैक्षाशैक्षादीनामेकार्थरुचित्वभेदप्रतिनियमहेतुः । तस्यां सत्यसत्यां सर्वार्थाणा(ना)र्थलोकव्यवहारसंकरदोषः प्रसज्येत । तस्यां तु सत्यामेष दोषो न भवतीत्यस्ति सभागता नाम धर्मः, 'एकार्थरुचिहेतुः' इति ।[५]

---

अत्युत्सवो वताय प्राप्तीनां वर्तते । केवल तु अप्रतिघातिन्यो यतोऽवकाशमाकाशे लभन्ते । इतरथा ह्याकाशेऽप्यवकाशो न स्यात् द्वितीयस्य प्राणिन. । *Akb* II 40 d

For the *Viprayuktatva* of *Prāpti*, see an allied controversy :—

"न वत्तब्ब पत्ति असङ्खता ति" ?

आमन्ता ।

पत्ति रूप वेदना सञ्ञा सङ्खारा विञ्ञाण ति ?

न हेव वत्तब्बे ।

तेन हि पत्ति असङ्खता ति । *Kv* XIX 4

इदानि पत्तिकथा नाम होति । तत्थ यं य पटिलब्भति तस्स तस्स पटिलाभो पत्ति नाम । सा च असङ्खता ति येस लद्धि, सेय्यथा पि पुब्बसेलियानञ्ञेव ।···न हि पत्ति नाम कोचि धम्मो अत्थि ··*KvA* XIX 4

१ Cf सभागता सत्त्वसाम्यम् । *Ak* II 41 a

२ Cf सभागता नाम द्रव्यम् । सत्त्वाना सादृश्य निकायसभाग इत्यस्या शास्त्रे सज्ञा । सा पुनरभिन्ना भिना च । अभिना सर्वसत्त्वाना सत्त्वसभागता । प्रतिसत्त्व सर्वेषु भावात् । भिन्ना पुनरतेषामेव सत्त्वाना धातु···अशैक्ष्यादिभेदेन प्रतिनियता धर्मसभागता । पुन स्कन्धायतनधातुत यदि सत्त्वसभागता द्रव्यमविशिष्ट न स्यात्, अन्योन्यविशेषभिन्नेषु सत्वेषु 'सत्त्वसत्त्व' इत्यभेदेन बुद्धिर्न स्यात् प्रज्ञप्तिश्च । एव स्कन्धादिबुद्धिप्रज्ञप्तयोऽपि योज्या. । *Akb* II 41 a.

३ 'निकायसभाग इत्यस्या शास्त्रे सज्ञा' इति ज्ञानप्रस्थानादिके शास्त्रे निकायसभाग इत्यनया सज्ञयाय चित्तविप्रयुक्तो निदिश्यते । *Sakv*. p 157.

४ 'सा पुनरभिना भिन्ना च' इति । ··नहि सा यथा वैशेषिकाणामेका नित्या चेति । *Sakv* p 157

५ Compare with Saṃghabhadra's definition as given by Yaśomitra: शरीरेन्द्रियसस्थानचेष्टाहारादिसाभाग्यकारणम्, अन्योन्याभिरभिसम्बन्धनिमित्त च समागतेत्याचार्यसघभद्रः । *Sakv* p 159.

[१]स्याच्च्यवेतोपप(7)द्येत न च स्व[स]भागता[२] यजह्यात्, न [च] प्रति लभेतेति ? चतुष्कोटिक । प्रथमा कोटि—यतश्च्यवते तत्रैवोप[प]द्यमान । द्वितीया—नियाममवक्रामत्, स हि पृथग्जनसभागता विजहात्यार्यसभागता प्रतिलभते। तृतीया—गतिसचारात् । चतुर्थी—एतानाकारान् स्थापयित्वा ।[१]

अथ पृथग्जण(न)त्वस्यास्याश्च(8) क प्रतिविशेष ? पृथग्जनसभागता खलूक्तरूपा। पृथग्जनत्व[३] तु सर्वानर्थकरभूतमिति सुमहास्तद्विशेष ।[४] आप्तवचनेनापि तदन्यत्वसिद्धि । उक्त हि भगवता—"सचेदित्थत्वमागच्छति मनुष्याना(णा) सभागता प्रतिलभते" इति ।[५] न चैव पृथग्जनत्व प्रतिलभ्यते वा त्यज्यते वा ।

(9)सिद्धा सभागता। कोशकार: पुनस्ता वैशेषिकपरिकल्पितजाति पदार्थेण(न) समीकुर्वन् व्यक्त पायसवायसयोर्वर्णसाधर्म्यं पश्यतीति ॥[६]

---

[१–१] This passage is identical with *Akb* II 41 a

[२] सत्त्वसभागता in *Akb ibid*—सत्त्वसभागताम इति । सत्त्वाना सभागता सत्त्व सभागता मनुष्यत्वादिलक्षणा । सत्त्वग्रहण हि धर्मविशेषणार्थम । सत्त्वसभागता ह्यत्र चतुष्कोटिके विवक्षिता न धर्मसभागतेति । *Saku* p 157

[३] Cf पृथग्जनत्वम्

पृथग्जनत्व कतमत् । आर्यधर्माणामलाभ इति शास्त्रपाठ । अलाभश्च नामा प्राप्ति । दुःख धर्मज्ञानक्षान्तितत्सहभुवामलाभ इत्यपरे । एव तु साधु यथा सौत्रान्तिकानाम— अनुत्पन्नार्यसन्तति पृथग्जनत्वम इति । *Akb* II 40 c

Also cf पृथग्जनत्व कतमत । आर्यधर्माणामप्रतिलाभ पृथग्जनत्वमिति प्रज्ञप्ति । *Asm* p 11

[४] This seems to be a rejoinder to the Kośakara यदि पृथग्जनसभागता नाम द्रव्यमस्ति कि पुन पृथग्जनत्वेन । नहि मनुष्यसभागताया अन्य मनुष्यत्व कल्प्यते । नैव च लोक सभागता पश्यत्यरूपिणीत्वात न चैना प्रज्ञया परिच्छिनत्ति । प्रतिपद्यते च सत्त्वाना जात्यभेदमिति सत्या अपि तस्या कथ तत्र व्यापार । अपि चासत्त्वसभागतापि कि नेष्यते । *Akb* II 41 a

[५] V infra, *Adv karika* 204 cd For other references see *LVPAk* II p 198 n 1

[६] Cf वर्णविकारश्चैव द्योतिता भवन्ति । तपामपि ह्येष सिद्धान्त । सामान्यपदार्थो नामास्ति यत समानप्रत्ययोत्पत्तिरतुल्यप्रकारेष्वपीति । अय तु तेषा विशेष । स एकोऽप्य नेकस्मिन् वर्तत । यदि द्योतिता यदि न द्योतिता । अस्त्यपा तु सभागता सूत्रे वचनादिति वैभाषिका । उक्त हि भगवता स चेदित्थत्वमागच्छति मनुष्याणा सभागताम इति । उक्तमेतत्र सूत्रे द्रव्यान्तरमिति । का तर्हि सा । त एव हि तथाभूता सस्कारा यषु मनुष्या इति प्रज्ञप्ति शाल्यादिषु सभागतावत् । तत्त्वेनान्ये वर्णयन्ति । *Akb* II 41 a

अथ किमिदमासंज्ञिकं नाम ? तदपदिश्यते।

आसंज्ञिकं विपाको यच्चित्तोपच्छेदसंज्ञिषु ॥[१]

[२]असंज्ञिसत्त्वेषु देवेषूपपन्नानां यच्चित्तोपच्छे[II. A, 8 Fol 47 b](1)दि, धर्मान्तरं विप्रयुक्तं विपाकजमुत्पद्यते तदासंज्ञिकं नाम। येन तत्रोपपन्नानां चित्तमनागतत्वे(ते)ऽध्वनि कालान्तरं सन्निरुध्यते, नोत्पत्तुं लभते। तत्पुनरेकान्तेन विपाकजस्वभावम्। कस्य विपाकः ? असंज्ञिसमापत्तेः पूरकस्य कर्मणः। केषु पु[नस्तत्] ? देवनिकायेषु भवति। तदाह—"असंज्ञिषु। असंज्ञिसत्त्वा(2) नाम देवा बृहत्फलदेवनिकायसंगृहीता ध्यानान्तरिकावत्।"[३] किं पुनस्ते नैव कदाचित् संज्ञिनो भवन्ति ? भवन्त्युत्पत्तिकाले च्युतिकाले च। "प्रकृष्टमपि कालं [स्थित्वा सह]संज्ञोत्पादात्तेषां सत्त्वानां तस्मात् स्थानाच्च्युतिर्भवति" इति सूत्रपाठः।[४] ते च ततो दीर्घस्वप्नव्युत्थिता इव च्युत्वा कामधातावुपपद्यन्ते, नान्यत्र। तदुप(3)पन्नानामवश्यं कामावचराऽपरपर्यायवेदनीयकर्मसद्भावात्। यथोत्तरकौरवानां(णां) देवोपपत्तिवेदनीयं कर्मेति ॥[२]

---

This view of Kośakāra is identical with the Yogāchāra view:—निकायसभागः कतमः ? तेषां तेषां सत्त्वानां तस्मिंस्तस्मिन् सत्त्वनिकाये आत्मभावसदृशताया निकायसभाग इति प्रज्ञप्तिः। *Asm* p 11

[१] Cf. आसंज्ञिकमसंज्ञिषु।
निरोधश्चित्तचैत्तानां विपाकस्ते बृहत्फलाः ॥ *Ak*. 41, bcd. See *Tvb*. 16.

[२] *Cf* असंज्ञिसत्त्वेषु देवेषूपपन्नानां यश्चित्तचैत्तानां निरोधस्तदासंज्ञिकं नाम द्रव्यं येन चित्तचैत्ता अनागतेऽध्वनि कालान्तरं सन्निरुध्यन्ते नोत्पत्तुं लभन्ते। नदीतोयसंनिरोधवत्। तत्पुनरेकान्तेन विपाकः। कस्य विपाकः। असंज्ञिसमापत्तेः। कतमे ते सत्त्वा येष्वसंज्ञिसत्त्वाः ? ते बृहत्फलाः।

बृहत्फला नाम देवा येषां केचिदसंज्ञिसत्त्वाः प्रदेशे भवन्ति ध्यानान्तरिकावत्। किं पुनस्तेनैव...ditto ...नान्यत्र। पूर्वसमापत्तिसंस्कारपरिक्षयात् अपूर्वानुपचयाच्च क्षिप्ता इव क्षीणवेगा इषवः पृथिव्यां पतन्ति। येन च तत्रोपपत्तव्यं तस्यावश्यं कामावचरं कर्मापरपर्यायवेदनीयं भवति। यथोत्तरकौरवाणां देवोपपत्तिवेदनीयम्। *Akb*. ii 41. cd

Also cf "...असञ्ञीसु निब्बत्तन्ति। चित्तमस्स चुतिचित्तनिरोधेन इधेव निवत्तति; रूपक्खन्धमत्तमेव तत्थ पातुभवति। ते तत्थ यथा नाम जियावेगक्खित्तो सरो यत्तको जियावेगो तत्तकमेव आकासे गच्छति, एवमेव झानवेगक्खित्ता उपज्जित्वा यत्तको झानवेगो तत्तकमेव कालं तिट्ठन्ति। झानवेगे पन परिहीणे तत्थ रूपक्खन्धो अन्तरधायति। इध पटिसन्धिसञ्ञा उप्पज्जति। *Digha A* i 2. 30.

[३] *Vibhāshā*, 194 8

[४] Cf. सन्ति भिक्खवे, असञ्ञसत्ता नाम देवा। सञ्ञुप्पादा च पन ते देवा तम्हा काया चवित्वा इत्थत्तं आगच्छन्ति। *Digha*. xxiv. 2, 20 Also cf. *Kv*. iii 11.

का पुनरसावसंज्ञिसमापत्तिरिति ? तदुपदिश्यते—

[ 135 ] शुभाऽसंज्ञिसमापत्तिर्ध्यानेऽन्त्ये चित्तरोधिनी ।[1]

आसंज्ञिकमव्याकृतम् । विपाकफलत्वात् । इयं तु शुभाः(भा) । सा पुनरियं 'ध्यानेऽन्त्ये' (1)चतुर्थध्यानसंगृहीतेत्यर्थः । 'चित्तरोधिनी', यथैव तत्फलं चित्तसन्निरोधि तथैवेयमपि चित्तसंरोधिनी । चित्तग्रहणाच्च चैताना-मनुक्तसिद्धिरादित्यास्तगमने किरणास्तगमनवत् ।

किमर्थं पुण(न)रेतां योगिणः(नः) समापद्यन्ते ?

निःसृतीच्छाप्रवृत्तित्वात्

ते हि निस्सरणसंज्ञापूर्वकेण मनस्कारेण तां समा(1)पद्यन्ते मोक्षका-ङ्क्षया । सा पुनरियम्—

नार्यस्य

आर्या हि तामपायस्थानमिव मन्यन्ते । पृथग्जनास्तु केचिन्मोक्ष-स्थानमिति ।

किं पुण(न)रियमुपपत्त्या वा वैराग्येण वा लभ्यते ? नेत्याह । किं तर्हि ?

---

[1] Cf. तथाऽसंज्ञिसमापत्तिर्ध्यानेऽन्त्ये निःसृतीच्छया ।
शुभोपपद्यवेद्यैव नार्यस्यैकाध्विकाप्यते ॥ *Ak.* II 42

Also cf असंज्ञिसमापत्तिः कतमा ? शुभकृत्स्नवीतरागस्य नोर्ध्वं निःसरणसंज्ञापूर्वकेण मनसिकारेणास्थावराणां चित्तचैतसिकानां धर्माणां निरोधे असंज्ञिसमापत्तिरिति प्रज्ञप्तिः । *Asm* p 10

For various controversies on this *Samāpatti*, see *Kv.* xv 7—10. The *KvA.* gives some very valuable information about this *Samāpatti* and shows the distinction between this and the next one, viz., the *Nirodhasamāpatti*: "इदानि सञ्ञावेदयितनिरोधकथा नाम होति । तत्थ सञ्ञावेदयितनिरोधसमापत्ति नाम न कोचि धम्मो, चतुन्नं पन खन्धानं निरोधो, इति सा नेव लोकिया, न लोकुत्तरा । "

इदानि असञ्ञसत्तुपिकाकथा नाम होति । तत्थ सञ्ञाविरागवसेन पवत्तत्ता असञ्ञसमापत्तिं पि निरोधसमापत्तिं पि सञ्ञावेदयितनिरोधसमापत्तिं नाम । इति द्वे सञ्ञा-वेदयितनिरोधसमापत्तियो लोकिया च लोकुत्तरा च । तत्थ लोकिया पुथुज्जनस्सेव असञ्ञ-सत्तुपिका होति लोकुत्तरा अरियानं । सा च नासञ्ञसत्तुपिका । इमं पन विभागं अकत्वा अविसेसेन सञ्ञावेदयितनिरोधसमापत्तिं असञ्ञसत्तुपिका ति येसं लद्धि, सेय्यथापि हेतुवादानं । *KvA.* xv. 7 and 10.

आप्या प्रयोगतः ॥[१]

यत्नेन तामुत्पादयतीति ॥

[ 136 ] निरोधाख्या तु विज्ञेया विजिहीर्षोर्भवाग्रजा ।[१]

निरोधसमापत्ति[(6)]रपि चित्तचैत्तानां धर्माणां कञ्चित्कालमुत्पत्तिसन्निरोधिनी। सा पुनरियं *विहारसंज्ञापूर्वकेन(ण) मनसिकारेण निर्वाणसदृशं* सुखमनुभवितुकामैर्योगिभिः संमुखीक्रियते। 'भवाग्रजा' चेयं समापत्तिः।

शुभाऽर्यस्य प्रयोगाप्या द्विवेद्याऽनियता मता ॥[२]

द्वयोः कालयोर्वेद्या 'द्विवेद्या'। उपपद्यवेद[(7)]नीया चापरपर्यायवेदनीया च। अनियतवेदनीया चेयम्। यो ह्येतामुत्पाद्य परिणि(नि)र्वाति स नास्या विपाकं प्रतिसंवेदयते। तस्या हि भवाग्रे चतुस्कन्धको विपाको विपच्यते। आर्यश्चैतामुत्पादयितुं शक्नोति नानार्य.। उच्छेदभीरुत्वाच्छाश्वतदृष्टिप्रहाना-(णा)दार्यमार्गबलोत्पादनाच्च। आर्यस्या[(8)]पि चेयं प्रयोगलभ्या न वैराग्यलभ्येति।[3]

अत्र पुन. कोशकारः प्रतिजानीते—"सचित्तिकेयं समापत्तिः" इति।[४]

---

[१] Cf निरोधाख्या तथैवेय विहारार्थं भवाग्रजा। *Ak* ɪɪ 43 ab

Also cf निरोधसमापत्ति कतमा? आकिञ्चन्यायतनवीतरागस्य भवाग्रादुच्चलितस्य *शान्तविहारसंज्ञापूर्वकेण मनसिकारेणास्थावराणा चित्तचैतसिकाना धर्मणा निरोधं* निरोधसमापत्तिरिति प्रज्ञप्ति.। *Asm* p 10

[२] Cf शुभा द्विवेद्याऽनियता चार्यस्याप्या प्रयोगत। *Ak* ɪɪ 43 cd

[३] The *Akb* (ɪɪ 43—44) deals with this topic in great detail In verse 44, it discusses a controversial point, viz, किं भगवतोऽपि प्रायोगिकी? and gives the views of the Bahirdeśika and Kaśmira Vaibhashikas on this point The *Adv* is silent on this topic The *Adi* might have dealt with this topic in folio no 48, which is lost

[४] The whole controversy centres around a question कथमिदानीं बहुकालनिरुद्धाच्चित्तात पुनरपि चित्त जायते। *Akb* ɪɪ 44

The Kośakāra gives following views —(1) अतीतस्याप्यस्तित्वात् इष्यते वैभाषिकै· समनन्तरप्रत्ययत्वम्।

(ii) अपरे पुनराहु कथ तावदारूप्योपपन्नाना चिरनिरुद्धेऽपि रूप पुनरपि रूप जायते। चित्तादेव हि तज्जायते न रूपात्। एव चित्तमप्यस्मादेव सेन्द्रियात्कायाज्जायते न चित्तात्। अन्योन्यबीजक ह्येतदुभय यदुत चित्त च सेन्द्रियश्च काय इति पूर्वाचार्या।

(iii) भदन्तवसुमित्रस्त्वाह परिपृच्छायाम—"यस्याचित्तिका समापत्तिस्तस्यैष दोषो मम तु सचित्तिका समापत्तिरिति"।

तदेतद्यौद्धीयम् । कुतः ?

[ 137 ] (9)चेतश्चतुष्टयायोगादागमादुपपत्तितः ।
निर्वेदितमनोमायात्सिद्ध्यतीयमचित्तिका ॥

भवाग्रे खलु चत्वारि चित्तानि विद्यन्ते । विपाकजं निवृताव्याकृतं कुशलमुपपत्तिलाभिकं प्रायोगिकं च । तेभ्यश्चतुर्भ्यः कतरच्चित्तं यन्निरोधसमापन्नस्यान्यचित्तनिरोधीत्युच्यते ?

तत्र तावद्विपाकजं तत्रत्यं ··· [Fol. 48 lost]······[1]

"·········[III B, 1. Fol 49 a.] धर्मे प्रतिपत्त्यैवाज्ञामाराधयति । नापि मरणकालसमये । भेदाच्च कायस्यातिक्रम्य देवान् कवडीकारभक्षानन्यतमस्मिन् दिव्ये मनोमये काय उपपद्यते । स तत्रोपपन्नः [अभीक्ष्णं] संज्ञावेदितनिरोधं समापद्यते च व्युत्तिष्ठते च । अस्ति चैतत्स्थानमिति यथाभूतं प्रजानाति" इति[2] ।

---

समापत्तिचित्तादनन्तर चित्तान्तरोत्पत्तिविरुद्ध आश्रय प्राप्यत इति समापत्तिरित्युच्यते । निरोधसमापत्ति ···ससप्रयोगस्य मनोविज्ञानस्य क्लिष्टस्य च मनसो यो निरोध । इयमप्यसञ्ज्ञिसमापत्तिवदाश्रयस्यावस्थाविशेषे प्रज्ञप्यते ।···एवमासञ्ज्ञिकादिषु मनोविज्ञाने निरुद्धे तदनगमे पुन कुत उत्पद्यते । यत्तस्य कालक्रिया न भवति । तत्पुनरालयविज्ञानादवोत्पद्यते । तद्धि सर्वविज्ञानबीजकमिति । *Tvb* 16

On this controversy, LVP says 'Le Darshtantika et le Vibhajyavâdin soutiennent qu'une pensée subtile n'est pas interrompue dans le recueillement d'arrêt 'Ils disent : 'Il n'y a pas d' êtres qui soient en même temps son pansée et sans *rupa*, il n'y a pas, non plus de recueille qui soit sans pensée Si le recueillit était sans pensée, l' organe vital serait coupé, on l'appellerait, non pas · installé dans le recueillement mais bien mort" *LVPAk.* II p 212, n. 2.

[1] In this lost folio the *Adv* had discussed this very controversial topic In the corresponding portion, the *Akb* ( II. 44 ) has discussed two topics, (१) अनयो समापत्त्योर्बहुप्रकारो विशेष । and (२) किमतोऽपि (निरोधसमापत्तितोऽपि) अस्ति परिहाणि ?

The *Adv* also might have discussed the first topic. The beginnig portion of the second topic is lost It is continued in the next folio

[2] The problem under discussion centres around a controversy about the possibility of falling *(Parihani)* from the *nirodha samāpatti* निरोधसमापत्ति प्रथमतो मनुष्येषूत्पाद्यते पश्चाद्रूपमातो परिहीणपूर्वं । किमतोऽप्यस्ति परिहाणि । अस्तीत्याह । अन्यथा हि उदायिसूत्र विरुध्येत । इहायुष्मन्तो भिक्षु······अस्ति चैतत्स्थानमिति यथाभूत प्रजानाति" इति । अत्र हि दिव्यो मनोमय कायो रूपावचर उक्तो भगवता । इयं च समापत्तिर्भावाग्रिकी । तत्क्षयमपरिहीणस्य तत्लाभिनो रूपधातो स्यादुपपत्ति । *Akb* II 44 d Yaśomitra gives the following comment ·—

[1]अत्र स्थविर उदायी स्थविरशारि[पु]त्रमिद(2)मवोचत्—"मा त्वमायुष्मन्नेव वोच !" स हि मन्यते स्म भावाग्रिकीय समापत्तिर्दिव्यश्च मनोमय कायश्चतुर्थध्यानभूमिक उक्तो भगवता तत्कथमेतदुपपत्स्यते । तदेतद् भदन्तोदायिना परिहानि(णि)मजानानेनाभिधर्मसंमूढेन प्रत्युक्त । स भगवता परमाभिधार्मिकेणावसादनार्थमभिहित —"(3)त्वमपि माहपुरुष शारिपुत्रेण भिक्षुणा सार्धं गम्भीरेऽभिधर्मे संलपितु मन्यसे?" [इति][1]

[2]निकायान्तरीयाश्चतुर्थध्यानभूमिकामपि निरोधसमापत्तिमिच्छन्ति । तेषा विना परिहान्या(ण्या) सिद्धत्येतत्सूत्र[म्] । ये(ए)तदेव तु न सिद्ध्यति—चतुर्थध्यानभूमिकाप्यसावस्तीति ।[3] कथम्? "नवानुपूर्वसमापत्तय"[4]

---

य आया निरोधसमापत्तिमुत्पाद्य तत परिहीणा ध्यान च लब्ध्वा रूपधातावुपपद्यन्त त परिहाणपूर्वं पूर्वाभ्यासवशाद्रूपधातो निरोधसमापत्तिरुत्पाद्यत । किमतोऽप्यस्ति परिहाणिरिति ? निर्वाणसदृशीयं समापत्ति कथमत परिहाणिरित्यसभावयन् पृच्छति । उदायिसूत्रमिति । 'इहायुष्मन्तो भिक्षु शीलसम्पन्नश्च भवति समाधिसम्पन्नश्च प्रज्ञासम्पन्नश्च । सोऽभीक्ष्ण सज्ञावेदितनिरोध समापद्यते व्युत्तिष्ठते च । अस्ति चतत स्थानमिति यथाभूत प्रजानाति । स न हव दृष्ट एव धर्मे प्रतिपत्त्यवाज्ञामारागयति । नापि (ditto) अस्ति चतत स्थानमिति यथाभूत प्रजानाति इति । *Sakv* p 164

[1]—[1] Cf एव वुत्त आयस्मा उदायी आयस्मन्त सारिपुत्त एतदवोच अट्ठान खो एत आवुसो सारिपुत्त, अनवकासो य सो भिक्खु अतिक्कम्मेव कबळिकाराहारभक्खान देवान सहब्यत अञ्ञतर मनोमय काय उपपन्नो सञ्ञावेदयितनिरोध समापज्जेय्यपि वुट्ठहेय्यपि नत्थेत ठान ति । अथ खो भगवा आयस्मन्त उदायि आमन्तेसि । क पन त्व उदायि मनोमय काय पच्चेसी ति । य ते भन्ते देवा अरूपिनो सञ्ञामया ति । किन्नु खो तुय्ह उदायि बालस्स अब्यत्तस्स भणितेन त्व पि नाम भणितब्ब मञ्ञासी ति । *Ang* v p 166

[2] This whole passage (upto वचनात्) is identical with *Akb* ii 44 d.

[3] तस्मादस्त्यत परिहाणिरिति गम्यते । युज्यत एतनद् वभाषिकाणाम् । सौत्रान्तिकानान्तु कथमेतत् । आर्य एव हि निरोधसमापत्तिलाभी । स चार्यमार्गादस्ति परिहाणिरिति सौत्रान्तिकसिद्धान्त । तस्यार्यस्य कथमुपरिभूमिकादार्यमार्गात् परिहाणिरित्युच्यते । तेषामप्येतत सूत्र न विरुध्यत । कथम् । या हि कश्चित् सर्वाप्यन्ता निरोधसमापत्तिलाभी नरिरोधसमापत्तिमुत्पाद्यत् । स भवाग्रात्निरोधसमापत्तश्च परिहीयते । न तु मार्गात् । ऊर्ध्वभूमिकध्यानसमापत्तिवर्गादिपरिहाणात् । स परिहीणो भूत्वा ध्यानमुत्पाद्य रूपधातावुपपद्यत । तस्मादस्त्यत परिहाणिर न चार्यमार्गात् परिहाणिरिति न सिद्धान्त विरोध । *Sakv* p 165

[4] नवानुपूर्वसमापत्तय इति । चत्वारि ध्यानानि चत्वार आरूप्या निरोधसमापत्तिश्च । *Ibid* p 166

इति सूत्रे वचनात् ।[१] प्राप्तकामवशि[(4)]त्वात्तु सन्तः पश्चाद्विलंघ्यापि व्युत्क्रान्तसमापत्तिं[२] समापद्यन्त इति ॥

व्याख्याते समापत्ती ।

[ 138 ] गतिप्रज्ञप्त्युपादानमायुश्चित्तोष्मणोः स्थितिः ।[३]
आगमाद्युक्तितश्चैव द्रव्यतस्तत्प्रदिष्यते ॥

आयुर्जीवितमित्यनर्थान्तरम् । उक्तं ह्यभिधर्मे—"जीवितेन्द्रियं कतरत् ? त्रैधातुकमायुः" इति ।[४] तत्पुनः 'गतिप्रज्ञप्त्युपादानं' वि[(5)]पाकजस्वभावत्वात् । उक्तं हि सूत्रे—"निर्वृत्ते विपाके नारक इति संख्यां गच्छति । एवं यावन्नैवसंज्ञानासंज्ञायतनोपगसंख्यां गच्छति" इति । न चान्यदिन्द्रियं विपाकजं त्रैधातुकव्याप्यस्ति यज्जन्मप्रबन्धाऽविच्छेदेन वर्तमानं गतिप्रज्ञप्त्युपादानं स्यात्, अन्यत्र जीवितेन्द्रियात् ।

तत्पुनरस्तीति कथं गम्यते ? [(6)]आगमाद्युक्तितश्च । आगमस्तावदयम्—

---

[१] After this the *Akb* reads यद्येष नियम कथ व्युत्क्रान्तसमापत्तयो भवन्ति । प्राथमकल्पिके प्रत्येष नियम । प्राप्तकामवशित्वात्तु सन्तो विलंघ्यापि समापद्यन्ते । एवमनयो समापत्त्योर्भूमितोऽपि विशेष । चतुर्थध्यानतयाग्रभूमिकत्वात् ।

[२] On *vyutkrānta samapatti*, see *Ak.* viii 19 and *Aaa* p. 503

[३] Cf आयुर्जीवितमाधार ऊष्मविज्ञानयोर्हि य. । *Ak* ii 45b.

[४] *Jñanaprasthāna*, 14, 19 (Indriyaskandhaka)

Cf कतम तस्मि समये जीवितिन्द्रिय होति ? या तेस अरूपीन धम्मान आयु ठिति यपना यापना इरियना वत्तना पालना जीवित जीवितिन्द्रिय, इद तस्मि समये जीवितिन्द्रिय होति । *Dhs* i 19

The Theravādins hold that the *Jīvitendriya* is twofold · *Rūpa jīvitendriya* and *Arūpa jīvitendriya* A controversy about such division is recorded in the the *Kv* viii 10 The *KvA* gives some interesting information about the theory of its being a *Viprayukta dharma* —इदानि जीवितिन्द्रियकथा नाम होति । तत्थ येस जीवितिन्द्रिय नाम चित्तविप्पयुत्तो अरूपधम्मो, तस्मा रूपजीवितिन्द्रिय नत्थीति लद्धि, सेय्यथापि पुब्बसेलियानञ्चेव सम्मितीयानञ्च ।···नत्थि रूपीन धम्मान आयूति पञ्हे उपादिन्नरूपानम्पि निब्बत्तकचेतनम्पि सन्तानवसेन पवत्तिमेव आयु, ठिति यपना यापना इरियना वत्तना पालनानि इच्छति, तस्मा पटिक्खिपति । ···अत्थि अरूपजीवितिन्द्रिय ति पञ्हे अरूपधम्मान चित्तविप्पयुत्त जीवितिन्द्रियसन्तान नाम अत्थीति इच्छति, तस्मा पटिजानाति···। *KvA* viii 10

"आयुरूष्माथ विज्ञानं यदा कायं जहत्यमी।
अपविद्धस्तदा शेते यथा काष्ठमचेतनम् ॥"[1]

सर्वं हि जीवितेन्द्रियं कामधातावश्यं कायेन्द्रियोष्मसहचरिष्णु। तत्त्ववश्यं विज्ञानसहवर्ति नापि चक्षुरादीन्द्रियसहवर्ति। रूपधातौ तु सर्वं कायादिपञ्चेन्द्रियस(?)हवर्ति। न त्ववश्यं चित्तसहचरिष्णु। आरूप्यधातौ तु सर्वं विज्ञानसहवर्ति, अन्यत्र निरोधसमापत्तेः।

जीवितेन्द्रियं[2] गतिप्रबन्ध्युपादानमस्तीति द्रव्यम्[3]। अन्यथा हि कुशलनिवृते चेतसि निर्मलो(ले) वाऽधोभूमौ तद्गतिप्रबन्ध्युपादानविपाकजं किं कल्प्येत यत्सद्भावादसौ ततो न प्रच्युतः स्यात्? न च शक्यं (8)प्रतिज्ञातुमनास्रवाना(णा)[म]धोभूमिविज्ञानबीजं तद्गतिप्रबन्ध्युपादानं कल्पयितुम्, अनास्रवस्य चित्तस्य समुच्छेदाय प्रवृत्तत्वात्। न चान्यद्विज्ञानं तद्बीजं शक्यं कल्पयितुं मनोविज्ञानधातुव्यतिरिक्तस्यानाकारमालम्बनस्य विज्ञानस्याप्रसिद्धत्वात्। मनोधातुरिति चेत्। न। मनोविज्ञानधातोरेवाव(?)स्थान्तरे तन्नाम प्रज्ञप्तेः। युक्तिरपि—चक्षुरादिवत्तदाधिपत्यविशेषात्।

"समाधिबलेन कर्मजं जीविताधेयं निर्वर्त्यायुःसंस्काराधिष्ठानजम्, आयुर्न विपाकं" इति कोशकारः।[4] तत्र किमुत्तरमिति? न तथावश्यमुत्तर

---

[1] Quoted in *Akb* II 45 ab

*Cf* आयु उस्मा च विञ्ञाणं यदा कायं जहन्तिमं।
अपविद्धो तदा सेति परभत्तं अचेतनं ॥ *S* III p 143

Also cf यन्त्र खो आवुसो इमं कायं तयो धम्मा जहन्ति आयु उस्मा च विञ्ञाणं अथायं कायो उज्झितो अवक्खित्तो सेति यथा कट्ठं अचेतनं ति। *M* *sutta* 43

[2] यथानुबद्धजीवनलक्षणमिति जीवितेन्द्रियम्। *Aam* p 74

[3] This is a rejoinder to the Kośakāra's view —एवं तर्ह्युक्तमभिधर्मे जीवितेन्द्रियं कतमत्। त्रैधातुकमायुरिति।' एतत्त्वेव न ज्ञायते आयुर्नाम क एष धर्म इति। य ऊष्मणो विज्ञानस्य चाधारभूतो धर्मः स्थितिहेतुरायुः। नहि नास्तीति ब्रूमः किं तु द्रव्यान्तरम्। किं तर्हि। त्रैधातुकेन कर्मणा निकायसभागस्य स्थितिकालावेधः। यावद्धि कर्मणा निकायसभागस्यावेधः कृतः ... तावत् सोऽवतिष्ठते ... तस्यायुरित्याख्या। ... स्थितिकालावेधवत्त्व। एवं तु वर्णयन्ति द्रव्यान्तरमेवायुरस्तीति। *Akb* II 45 ab

*Cf* जीवितेन्द्रियं कतमत्। निकायसभागे पूर्वकर्माविद्धे स्थितिकालनियमे आयुरिति प्रज्ञप्तिः। *Irw* p 11

[4] While discussing the topic कर्मजं द्रव्यं विपाक उत न विपाक?, the Kośakāra takes a view ... —अथ यत्तद् भिक्षुरायुः संस्कारान् स्थापयति तत्कर्मविपाकः उत न विपाक? and gives the following views —

वक्तव्यं यस्मान्नैतत्सूत्रेऽवतरति, विनये न संदृश्यते, धर्मतां च विलोम[III. A,

---

*(१) शास्त्र उक्त 'कथमायु संस्कारान् स्थापयति ? अर्हन् भिक्षु ऋद्धिमाश्चेतोवशित्व प्राप्त संघाय वा पुद्गलाय वा'''जीवितपरिष्कार वा दत्वा तत् प्रणिधाय प्रान्तकोटिक चतुर्थध्यान समापद्यते । स च तस्मात् व्युत्थाय चित्तमुत्पादयति 'यन्मे भोगविपाक तदायुर्विपाक भवत्विति । तस्य यत् भोगविपाक तदायुर्विपाक भवति ।

(२) येषा पुनरयमभिप्रायो विपाकोच्छेप विपच्यत इति । त आहु "पूर्वजातिकृतस्य कर्मणो विपाकाच्छेषम् । स भावनाबलेनाकृष्य प्रतिसंवदयते" इति ।

(३) भदन्त घोषकस्त्वाह । तस्मिन्नेव आश्रये रूपावचराणि महाभूतानि ध्यानबलेन सम्मुखीकरोत्यायुषोऽनुकूलानि वैरोधिकानि च । एवमायु संस्कारान् स्थापयत्येवमुत्सृजतीति ।

Then the Kośakara gives his own view —एवन्तु भवितव्यम् । समाधिप्रभाव एष स तेषां तादृशो ये पूर्वकर्मज च स्थितिकालावेधमिन्द्रियमहाभूतानां व्यावर्तयन्त्यपूर्वं च समाधिजमावेधमाक्षिपन्ति । तस्मात्र तज्जीवितेन्द्रियं विपाक ततोऽन्यत्तु विपाकः । *Akb* II. 10 a

This controversy seems to arise from the legend of Buddha's declaration to Ānanda 'यस्स कस्सचि आनन्द चत्तारो इद्धिपादा भाविता बहुलीकता यानिकता वत्थुकता अनुट्ठिता परिचिता सुसमारद्धा, सो आकङ्खमानो कप्प वा तिट्ठेय्य कप्पावसेसं वा । तथागतस्स खो आनन्द, चत्तारो इद्धिपादा'''सुसमारद्धा । आकङ्खमानो आनन्द तथागतो कप्प वा तिट्ठेय्य कप्पावसेसं वा'ति । *Digha* XVI 3, 3

This controversy is recorded in the *Kathāvatthu* There also a similar question is raised—whether this extended *āyu* is *iddhimayika* or *vipāka*?

इद्धिबलेन समन्नागतो कप्प तिट्ठेय्याति ?

आमन्ता ।

इद्धिमयिको सो आयु, इद्धिमयिका सा गति, इद्धिमयिको सो अत्तभावपटिलाभो ति ?

न हेवं वत्तब्बे'''। *Kv* XI. 5

इदानि इद्धिबलकथा नाम होति । तत्थ इद्धिपादभावनानिस्सरस अथ अयोनिसो गहेत्वा इद्धिबलेन समन्नागतो कप्प तिट्ठेय्याति येस लद्धि, सेय्यथापि महासङ्घिकानं । ते सन्धाय'''पुच्छा सकवादिस्स ।'''अथ न सकवादी सचे ते इद्धिबलेन समन्नागतो 'यो चिर जीवेय्य सो यस्मगत अत्तो या भिन्नो' ति एव परिच्छिन्ना आयुकप्पा उद्ध मरणं वा जीवेय्य, इद्धिमयिकेन'स्स आयुना भवितब्बं ति चोदेतु 'इद्धिमयिको सो आयु' ति इच्चाह । इतरो जीवितिन्द्रियं नाम इद्धिमयिकं नत्थि, कम्मसमुट्ठानमेवाति वुत्तत्ता पटिक्खिपति । *KvA* XI. 5

The Kośakāra explains the difference between the *āyu-saṃskāras* and the *jīvita-saṃskāras* as below :—सूत्र उक्तम—'भगवान् जीवितसंस्कारानधिष्ठायायु-संस्कारानुत्सृष्टवान् । तेषां को विशेष ? न कश्चिद्विशेष । "पूर्वकर्मजमायुःसंस्कारान्

1. Fol. 49 b ](1)यति । तस्माद् बालवचनवदप्युपेक्ष्यमेतत् ।[1]

कथं तावत्सूत्रे नावतरति, विनये न संदृश्यते ? सूत्रे ह्युक्तम्— "अस्थानमनवकाशो यत्प्रहान(ण)हेतोर्वा उपक्रमहेतोर्वा अपक्वं परिपाचयेत्, परिपक्वं वा अन्येन नयेन नयेत्" इति विस्तरः ।[2]

विनयेऽपि "नियतवेदनीय त्रि[प्रका]रं कर्म संदेवकेनापि लोकेन न शक्यं व्यावर्तयितुम्"[3] इति(2) परिग्रहः ।

---

[1]प्रत्युत्पन्नकर्मफल जीवितसंस्कारा' इत्यपरे । येषां निकायसभागस्थितिस्त आयुःसंस्काराः, यैस्तु कालान्तरं जीवन्ति ते जीवितसंस्कारा इति । बहुवचनं बहूनामायुर्जीवितसंस्कारक्षणानामुत्सर्जनाधिष्ठानात् । न ह्येकस्य क्षणस्योत्सर्जनमधिष्ठानं चास्ति । *Akb* II. 10 a.

[2] Cf इध भिक्खव भिक्खु एवं वदेय्य —"अयं धम्मो अयं विनयो इदं सत्थुसासनं ति ।"तानि"पदब्यञ्जनानि साधुकं उग्गहेत्वा सुत्ते ओतारेतब्बानि, विनये सन्दस्सेतब्बानि । तानि चे सुत्ते ओतारियमानानि विनये सन्दस्सियमानानि न चेव सुत्ते ओतरन्ति, न विनये सन्दिस्सन्ति" इति हेतं भिक्खवे छड्डेय्याथ । *Digha* xvi 4, 7

The Cy on this passage contains various interpretations of the terms *Sutta* and *Vinaya* Buddhaghosha sums up this तस्मा सुत्ते ति तेपिटकबुद्धवचने ओतारेतब्बानि, विनये ति एतस्मिं रागादिविनयकारणे सन्दस्सेतब्बानीति अयमेत्थ अत्थो ।" सुत्तपटिपाटिया कत्थचि अनागन्त्वा वेदल्लपिटकतो अञ्ञतरतो आगता" "इति हेतं भिक्खवे छड्डेय्याथा'ति । *Digha A* xvi 4, 7

[3] Compare with this the Ājīvika view तत्थ नत्थि इमिनाहं सीलेन वा" अपरिपक्कं वा कम्मं परिपाचेस्सामि, परिपक्कं वा कम्मं फुस्स फुस्स ब्यन्तिकरिस्सामीति । *Digha* II. 20

The *Ks* xi. 5 too quotes a similar *agama* against Mahāsāṅghika — "चतुन्न भिक्खवे धम्मानं नत्थि कोचि पाटिभोगो"यानि सा तानि कम्मानि"आयतिं आनिसंसगामिकानि, तस्स विपाको न निब्बत्तीति नत्थि कोचि पाटिभोगो"।" (*Ang* II p 172)

[4] Cf ननु कृतकर्माविप्रणाशवादी भगवान् । सत्यमिदमुच्यते ["युगान्तकालानल-वत्महान्ति पापानि यदिर्दहति क्षणेन इति] ?" निरवद्याभिसन्धिना तदुक्तम् ।"अन्यं पुनरनियतविपाकापेक्षया सर्वमेतदुच्यते, नियतविपाकस्य तु कर्मणः केनचित् प्रतिबन्धुम-शक्यत्वात् । *Bodhicaryāvatāra-Pañjikā*, I 14 ab.

Also cf सन्ति भिक्खवे सत्वेतनिकानं कम्मानं कतानं उपचितानं अप्पटिसंवेदित्वा ब्यन्तिभावं वदामि, तञ्च खो दिट्ठे व धम्मे उपपज्जे वा अपरे वा परियाये ति । न त्वेवाहं भिक्खवे सञ्चेतनिकानं कम्मानं कतानं उपचितानं अप्पटिसंवेदित्वा दुक्खस्सन्तकिरियं वदामि । *Ang* v p. 292. See *Akv* p 56

अभिधर्मेऽपि सर्वापरिमितमायुराक्षिप्यते । तस्यापक्षालाः कालस्थानान्तरावस्थानादिषु नियम्यन्ते । इत्येवं तावदागमादपेतं नोत्तरार्हम् ।

तथापि तु युक्तिमदुत्तरमुच्यते । यदि भगवान् समाधिबलेन स्वेच्छया-[ऽ]पूर्वं सत्त्वं सविज्ञानकं सेन्द्रियमुत्पादयेत्, स्वात्मनो वा जीवितमनाक्षिप्तं(3) प्राक्कर्मभिर्योगबलेनाक्षिपेत्,[1] ततो बुद्धो भगवान्नारायनी(णी)कृतः स्यात्, अपूर्वसत्त्वनिर्माणात् । स च कारुणिकत्वान्नैव परिणि(नि)र्वायात्, शासनं-(न)सम्भेदसंदेहांश्च छिन्द्यात् ।[2] तस्माद्धैतुलिकशास्त्र[3]प्रवेशद्वारमारब्धं तेन भदन्तेनेत्यप्युपेक्ष्यमेतत्[4] ।

---

[1] The *Akb* ii 10 a (विपाको जीवितम् ।) contains a long discussion on the problem of Buddha's power to extend his life for a *Kalpa* The belief in this particular power of Buddha is pretty old as is evidenced from the passage of the *Mahāparinibbana sutta* (v supra, p 99 n ) But according to the Theravādins, the *kalpa* in this passage meant only an *Āyu kalpa* and not the *Mahākalpa* The Commentary on this passage says —एत्थ च कप्प ति आयुकप्प,तस्मि तस्मि काले य मनुस्सान आयुप्पमाण हाति त परिपुण्ण करान्तो तिट्ठेय्य, कप्पावसेस ति 'अप्पो वा भिय्यो' ति वुत्तवस्ससततो अतिरेक वा । महासीवत्थेरो पनाह —बुद्धान अट्ठाने गज्जित नाम नत्थि'' इद भद्दकप्पमेव तिट्ठेय्य । कस्मा पन न ठितोति ? उपादिन्नकसरीर नाम खण्डिच्चादीहि अभिभूयति, बुद्धा च खण्डिच्चादिभाव अप्पत्वा 'पियमनापकाले येव परिनिब्बायन्ति ।''... एव वुत्तेपि यो पन रुच्चति, आयुकप्पो ति इदमेव अट्ठकथाय नियामित । *Digha A* xvi 3,3

Also cf तत्थ कप्पो नाम महाकप्पो, कप्पेकदेसो, आयुकप्पो ति तिविधो ।...एत्थ आयुकप्पो अधिप्पेतो । 'को पनत्थ इद्धिमतो विसेसो ननु अनिद्धिमापि आयुकप्प तिट्ठेय्याति ? अथ विसेसो इद्धिमा हि यावतायुक जीवितप्पवत्तिया अन्तरायकरे धम्मे इद्धिबलेन पटिबाहित्वा अन्तरा अकालमरण निवारतु सक्कोति । अनिद्धिमतो एत बल नत्थि । *KvA* xi 5

[2] Cf प्रश्नात् प्रश्नान्तरमुपजायत । किमर्थमायुःसंस्कारानाधितिष्ठन्ति ? परहितार्थं शासनस्थित्यर्थं वा ।' 'अथ किमर्थं उत्सृजन्ति ? अत्र च परहित जीवित पश्यन्ति, रोगाभिभूत चात्मभावम् ।'...

किमर्थं पुनर्भगवता आयुःसंस्कारा उत्सृष्टाश्चाधिष्ठिताश्च । मरणवशित्वज्ञापनार्थमुत्सृष्टा जीवितवशित्वज्ञापनार्थमधिष्ठिता । त्रैमास्यमेव नोर्ध्वम्, विनेयकार्याभावात् ।... स्कन्धमरणमारयोर्निर्जयार्थमिति वैभाषिका । बोधिमूले क्लेशदेवपुत्रमारौ निर्जिताविति । *Akb* ii 10 a

[3] Cf वैतुल्य यत्सूत्र । बोधिसत्त्वपिटकमप्रयुक्त भाषितम् । यदुच्यते वैपुल्यं तद् वैदल्यमप्युच्यते वैतुल्यमप्युच्यते ।'' किमर्थमुच्यते वैतुल्यम् । उपमानधर्माणा तुल्नाऽभावत । *Asm* p 79.

[4] V. supra, p 33 n 3

[1]अथ किमायुःक्षयादेव मरणं भवत्याहोस्विदन्यथाऽपि ?[2] प्रज्ञप्त्यामु-[3] (4)क्तम्—"अस्त्यायुःक्षयान्मरणं न पुण्यक्षयादिति ? चतुष्कोटिकः । प्रथमा कोटिः—आयुर्विपाकस्य कर्मणः पर्यादानात् । द्वितीया—भोगविपाकस्य । तृतीया—उभयोः । चतुर्थी—विषमापरिहारेण ।[4]

[5]ज्ञानप्रस्थाने [6]उक्तम्—"आयुः सन्तत्युपनिबद्धं वर्तत इति वक्तव्यम् ? सकृदुत्पन्नं तिष्ठतीति वक्तव्यम् ? आह—कामावचराणां सत्त्वानाम्(5)संज्ञिसमापत्तिं निरोधसमापत्तिं वा समापन्नानां सन्तत्युपनिबद्धं वर्तत इति वक्तव्यम् । समापन्नानां सन्तत्युपनिबद्धं वर्तत इति वक्तव्यम् । समापन्नानां रूपारूप्यावचराणां च सत्त्वानां सकृदुत्पन्नं तिष्ठतीति वक्तव्यम् ।"

कः पुन(र)स्य भाषितस्यार्थः ? यस्याश्रयोपघातादुपघातस्तत्सन्तत्यधीनत्वात् प्रथमम् । यस्याश्रयोपघात एव नास्ति तदयोत्पन्नाव(6)स्थानाद् द्वितीयम् । सान्तरायं प्रथमं निरन्तरायं द्वितीयमिति काश्मीराः ।[7] तस्मादस्त्यकालमृत्युः* ।[8]

---

[1-4]This whole passage is almost identical with *Akb* II 45ab After विषमापरिहारेण the *Akb* has आयुःक्षयाच्चेति वक्तव्यम् ? न वक्तव्यम् । आयुःक्षयादेव तन्मरणम् । प्रथमकोट्यन्तर्गमात् । क्षीणे त्वायुषि पुण्यक्षयस्य मरणे नास्ति सामर्थ्यम् । तस्मादुभयक्षये सति मरणमायुःक्षयादित्युक्तम् ।

[2] Cf तत्थ मरणं ति एकभवपरियापन्नस्स जीवितिन्द्रियस्स उपच्छेदो । तं कालमरणं अकालमरणं ति दुविधं होति । तत्थ कालमरणं पुञ्ञक्खयेन वा आयुक्खयेन वा उभयक्खयेन वा होति । अकालमरणं कम्मुपच्छेदककम्मवसेन । *Vm* VIII 1 2.

Also cf आयुःक्षय कतमं । काले मरणम् । पुण्यक्षय कतमं । अकाले मरणमनुत्तमम् । यन मन्त्रा आस्वादसमापत्त्यो रक्षन्ति । पुण्यक्षयाच्च हतो हि जीवितात्स्यवन्ते । कर्मक्षय कतमं । उपपद्यवेदनीयकर्मणः अपरपर्यायवेदनीयकर्मणश्च उभयोः क्षयान्मरणम् । *Asm* p. 39

[3] *Karmaprajñaptiśāstra* chap XI

[5-8] From ज्ञानप्रस्थाने उक्तम् to तस्मादस्त्यकालमृत्युः is identical with *Akb* II 45ab

[6] *Jñānaprasthāna* 15 12.

[7] [illegible] सन्तत्युपनिबद्धम्' इति । [illegible] [illegible] सन्तत्युपनिबद्धमित्युच्यते । काश्मीरास्तु न तथा [illegible] नु सिद्ध । [illegible] निरन्तरायमिति । अथ वा सन्तत्युपनिबद्धमिति [illegible] [illegible] [illegible] [illegible] इति [illegible] *Sakv* p 1[illegible]

* Cf. अस्ति अकाले अकालमृत्युः [illegible] *Ls* XVII 2—[illegible]

[१]सूत्र उक्तम्—"चत्वार आत्मभावप्रतिलम्भाः । अस्त्यात्मभावप्रतिलम्भो यत्रात्मसंचेतना क्रामति न परसंचेतना" इति चतुष्कोटिकः[२] । आत्मसंचेतनायक्रामति कामधातौ क्रीडाप्रमोषकाणां देवानां मनःप्रदोष(7)काणां च देवानाम् । तेषां हि प्रहर्षमनःप्रदोषाभ्यां तस्मात्स्थानाच्च्युतिर्भवति, नान्यथा ।[३] बुद्धानां चेति वक्तव्यम्, स्वयंमृत्युत्वात् । परसंचेतनैव क्रामति गर्भाण्डागतानाम् । उभयम्—अन्येषां कामावचराणां प्रायेण । नोभयम्—सर्वेषामन्तराभविकानां रूपारूप्यावचराणामेकत्तीयानां च कामावचराणाम् । तद्य(8)था नारकाणां च दर्शण(न)मार्गमैत्रीनिरोधसमापत्तिसमापन्नानां राजर्षिजिनदूतजिनादिष्टप्रभृतीनां[४] सर्वेषां च चरमभविकानां बोधिसत्त्वानां मातुस्तद्गर्भायाश्चक्रवर्तिण(न)श्च तद्गर्भायाः ।"[१]

व्याख्यातं जीवितेन्द्रियम् ॥

संस्कृतलक्षणानीदानीं व्याख्यायिष्यन्ते । तानि पुणः(नः) कानि कियन्ति (9)वेति ? तदुपव्याख्यायते—

---

सञ्चेतनिकानं कम्मानं कतानं उपचितानं विपाकं अप्पटिसंवेदित्वा ब्यन्तिभावं वदामी'ति सुत्तस्स अथ अयानिमा गहेत्वा अरहतो नाम सब्बकम्मविपाकं पटिसंवेदयित्वाव परिनिब्बायितब्बं । तस्मा नत्थि अरहतो अकालमच्चू ति येसं लद्धि, सेय्यथापि राजगिरिकानञ्चेव सिद्धत्थिकानञ्च । *KvA*. xvii 2.

[१]—[१] This whole passage (from सूत्र उक्तम् to तद्गर्भाया.) fairly agrees with *Akb*. ii. 45 ab The *Akb*. examines one more *Sūtra* passage afer this

[२] Cf चत्तारो'मे भिक्खवे अत्तभावपटिलाभा ।···अत्थि भिक्खवे अत्तभावपटिलाभो यस्मिं अत्तसञ्चेतना कमति नो परसञ्चेतना ।···परसञ्चेतना कमति नो अत्तसञ्चेतना ।···अत्तसञ्चेतना च कमति परसञ्चेतना च ।···नेव अत्तसञ्चेतना कमति नो परसञ्चेतना । *Ang* ii p 147

—अत्तसञ्चेतना कमती ति अत्तना पकप्पितचेतना हेतु चवन्ति···खिड्डापदोसिका देवा अत्तसञ्चेतना हेतु चवन्ति,···मनोपदोसिका नाम देवा परसञ्चेतना हेतु चवन्ति,···मनुस्सा अत्तसञ्चेतना च परसञ्चेतना च हेतु चवन्ति,···[चतुत्थेन नेवसञ्ञानासञ्ञूपगा देवा दट्ठब्बा ति]···तेन अत्तभावेन दट्ठब्बा, अयं पन पञ्हो हेट्ठा कामावचरे पि रूपावचरे पि लब्भति समग्गेन पन परिच्छिन्दित्वा कथितो···। *Ang A* iii. p. 147.

[३] Cf. सन्ति भिक्खवे खिड्डापदोसिका नाम देवा । ते अतिवेलं हस्सखिड्डारतिधम्मसमापन्ना विहरन्ति तेसं अतिवेलं हस्सखिड्डारतिधम्मसमापन्नानं विहरतं सति सम्मुस्सति, सतिया सम्मोसा ते देवा तम्हा काया चवन्ति···सन्ति भिक्खवे मनोपदोसिका देवा ।···ते अतिवेलं अञ्ञमञ्ञं उपनिज्झायन्ति···ते देवा तम्हा काया चवन्ति । *Digha* i. 2. 7 and 10

[४] राजर्षयश्चक्रवर्तिपूर्वाः प्रव्रजिताः । जिनदूतो यो बुद्धेन भगवता दूतः कश्चिन् प्रेषितः ।···जिनादिष्ट इयन्तं कालमनेन जीवितव्यमिति य आदिष्टो भगवता । धर्मिलादय पूर्वयोगविद्रूप आगमितव्या । *Sakv* p 170.

[ 139 ] जातिः स्थितिर्जराणा(ना)शः संस्कृताङ्कचष्टतुयी ।[1]

एतानि खलु चत्वारि संस्कृतलक्षणानि भगवताऽभिधर्मेऽभिहितानि । एतान्येव विनेयप्रयोजनवशात् सूत्रे[2] स्थित्यन्यथात्वमेकीकृत्य त्रीण्युक्तानि[3] । गाथायां स्वेभ्योऽह्नह्य सामर्थ्याद्गम्यमानमन्तर्णीय [III 3, 4 Fol 50 a] (1)प्रदर्श्यन्ते । स्थितिर्हि धर्मायोगमिच्छन्ती तद्धर्ममुपगुह्यावतिष्ठते । सा च तथा प्रवर्तमाना लोकस्य चित्तोन्नतिविशेष जनयति । ततो भगवताऽन्यथा-

---

[1] Cf लक्षणानि पुनर्जातिजरास्थितिरनित्यता । Ak II 45 cd

[2] Cf तीणिमानि भिक्खवे सङ्खतस्स सङ्खतलक्खणानि कतमानि तीनि ? उप्पादो पञ्ञायति वयो पञ्ञायति ठितस्स अञ्ञथत्त पञ्ञायति । इमानि खो भिक्खवे तीनि सङ्खतस्स सङ्खतलक्खणानीति । Ang I p 152

The Commentary on this passage throws some light on the place of *sthiti* and the *prajñapti dharmata* of these four *lakshanas* —

सङ्खतस्मानि पच्चयहि समागन्त्वा कतस्स सङ्खतलक्खणानी ति सङ्खत एतन्ति सञ्जाननकारणानि निमित्तानि, उप्पादो ति जाति, वयो ति भदो ठितस्स अञ्ञथत्त नाम जरा, उप्पादादयो सङ्खतलक्खणा नाम लक्खण न सङ्खत सङ्खत न लक्खण लक्खणेन पन सङ्खत परिच्छिन्न, यथा हत्थि अस्सगोणमहिसादीन सत्तिमूलादीनि सञ्जाननलक्खणानि न हत्थिआदयो • लक्खणेहि पन त अमुकस्स हत्थि असुकस्स अस्सो ति वा पञ्ञायन्ति एव सम्पदमिद दट्ठब्ब । *Ang A*

[3] Cf ननु 'त्रीणीमानि संस्कृतलक्षणानि' इति सूत्र उक्तम ? चतुर्थमप्यत्र वक्तव्य स्यात् । किं चात्र नोक्तम् ? आह । स्थिति । यत्तर्हि 'इद स्थित्यन्यथात्व मिति ? जराया एष पर्याय । ये हि धर्मा संस्काराणामध्वसंचाराय प्रवृत्तास्त एव सूत्र लक्षणान्युक्तान्युद्वेजनार्थम् । स्थितिस्तु तान् संस्कारानुपगृह्य तिष्ठत्यवियोगमवच्छन्ती । अतोऽसौ संस्कृतलक्षण न व्यवस्थापिता । असंस्कृतस्यापि च स्वलक्षण स्थितिभावात् । *Akb* II 45 cd

'ननु च त्रीणीमानि' इति विस्तर । 'किं चात्र नोक्तम्' इति चोदक । 'स्थिति' इति वैभाषिका । यत्तर्हीद स्थित्यन्यथात्वमपानि स्थितिशब्दोऽत्र श्रूयत । कथमिदमुच्यत स्थितिर्नोक्तेति चोदकाभिप्राय । जरयमुक्ता स्थितेरन्यथात्व स्थित्यन्यथात्वमिति । कस्मात्पुनर्लक्षणचतुष्ट सति भगवता त्रयमेवोक्तानि । अत आह । ये हि धर्मा इति विस्तर । • आभिप्रायिका हि सूत्रनिर्देशा न लाक्षणिका यथाऽभिधर्म । असंस्कृतस्यापि च स्वलक्षणस्थितिभावात इति । स्थितिह्यसंस्कृतावस्थाविशेषलक्षणया स्थित्या सदृशीति तस्यासंस्कृतस्य संस्कृतात्समगपरिजिहीर्षया न लक्षणमुक्तमित्यभिप्रायो भगवता धर्मस्वामिन । *Saku* pp 171 2

There were some *Sthavira-vādins* who did not recognise the *sthiti* कचानि अभयगिरिवासिनो 'त पन ठितस्स ट्ठितिलक्खण न इच्छन्ति । *Amt* p 140

त्वाख्यया जरया सहोका श्रीरिव कालकर्ण्यानुबद्धा संवेगानुकूला भविष्यतीत्येपोऽर्थ[वि]शेषो दृश्यते ।[1] तस्माच्चत्वारि । इतश्च—

चत्वारि स्थित्यनास्तित्वे हेतु[2]त्वायप्रसिद्धितः ॥

यदि हि धर्मस्य स्थितिर्ण(र्न) स्यात्, तस्यारमन्यवस्थितस्य हेत्वाख्यः शक्तिप्रभावविशेषो न स्यात् । अनित्यताय[स्त]स्य च नोत्पत्तिशक्तिरित्यतश्च क्रियां न कुर्यात् । क्रियाऽभावात्फलाभावः स्यात् । फलार्थश्चायमारम्भः । तस्मादास्तिकैर्णा(र्ना)स्तिकपक्षं[2] विक्षिप्य स्थितिः प्रतिगृह्यत इति सिद्धम् ॥

चत्वारीति न सि[3]द्ध्यन्ति जराभावात् । भवतु स्थितिः, जरा तु सर्वथा न युज्यते । कथम् ? उक्तं हि—

"तथात्वेन जरासिद्धिरणय(न्य)थात्वेऽन्य एव सः ।

तस्मान्नै(न्नै)कस्य भावस्य जरा नामोपपद्यते ॥"[3]

---

[1] Cf अन्ये पुन कल्पयन्ति स्थिति जरा चाभिसमस्य स्थित्यन्यथात्वमित्येक लक्षणमुक्त सूत्रे । किं प्रयोजनम् ? एषा ह्येषु सगास्पदमत श्रियमेवैना कालकर्णीसहिता दर्शयामास तस्यामनासगार्थमिति । *Akb* II 45cd See *JpL* pp 46-7.

[2] This refers to the Sautrantikas, whose views are given in detail by the Kośakāra — तदेतमाकाश पाट्यत इति सौत्रान्तिकाः । न ह्येते जात्यादयो धर्मा द्रव्यत सविद्यन्ते यथाऽभिव्यज्यन्ते । "भगवान् "संस्कारप्रवाहस्य संस्कृतत्व प्रतीत्यसमुत्पन्नतां द्योतयितुकाम इदमाह 'त्रीणीमानि संस्कृतस्य संस्कृतलक्षणानि', न तु क्षणस्य । न हि क्षणस्योत्पादादय प्रज्ञायन्ते ।""तत्र प्रवाहस्यादिरुत्पादो निवृत्तिर्व्यय । स एव प्रवाहोऽनुवर्तमान स्थिति । तस्य पूर्वापरविशेष स्थित्यन्यथात्वम् ।" आह चात्र ।

जातिरादि प्रवाहस्य व्ययच्छेद. स्थितिस्तु स ।

स्थित्यन्यथात्व तस्यैव पूर्वापरविशिष्टता ॥

"तस्मात्प्रवाह एव स्थिति ।""प्रतिक्षण चापि संस्कृतस्यैतानि लक्षणानि युज्यन्ते विनाऽपि द्रव्यान्तरकल्पनया ।""न वै संस्कृतस्य स्थितिरेवोच्यते । लक्षणमपि तु स्थित्यन्यथात्वम् । " समासनाऽन्यत्र सूत्रे संस्कृतस्यैव लक्षणमिति द्योतित भगवता—"संस्कृत नाम यदभूत्वा भवति भूत्वा च पुनर्न भवति यश्चास्य स्थितिसज्ञक: प्रबन्ध सोऽन्यथा चान्यथा च भवति" इति किमत्र द्रव्यान्तरैर्जात्यादिभि ? *Akb* II 46 ab

See *LVPAk.* II. pp 227 ff, *Atm* p 19, and *The Central Conception of Buddhism*, pp 37-43

[3] Cf स्याच्च तावदस्य धर्मस्यानागतस्याविनाश स्थिति विनाशोऽनित्यता । जरा तु खलु सर्वथा तेन न तथ । पूर्वापरविशेषात् विपरिणामश्च । अनन्यदन्यथात्वेऽन्य एव । उक्त हि 'तथात्वेन जरासिद्धि…।' *Akb* II. 46 ab

तं प्रतीदमुच्यते—

[140] शक्तिहानेर्जरासिद्धिः

उन्मिषितो हि धर्मो जायते ह्यपितः फलमाक्षिपतीति। तस्य यदि जरसा शक्तिर्न विहन्येत स [4]द्वितीयमपि फलमाक्षिपेत्। न च शक्नोत्याक्षेप्तुम्। तस्मादृम्यते कश्चिज्जराख्यः शत्रुस्तं जर्जरीकृत्योपहतसामर्थ्यमनित्यतापिशाच्याः समर्पयतीति युक्तमुक्तम् 'शक्तिहानेर्जरासिद्धिः' इति। नैतयुक्तमुक्तं परिणामदोषप्रसङ्गात्। एवं लघ्वाचक्षाणेन भवता सांख्यीयः परिणामोऽभ्युपग[5]तो भवति। नाभ्युपगतः, यस्मात्—

नान्यत्वात् परिणामिता।

अन्य एव हि नो जराख्यो धर्मो, अन्यश्च धर्मी। सांख्यस्य व्यवस्थितस्य धर्मिणः स्वात्मभूतस्य धर्मान्तरस्योत्सर्गः स्वात्मभूतस्य चोत्पादः परिणाम इति।

कथं पुनः(नः) क्षणिकस्य धर्मस्य शक्तिहानिर्भवति? एवम्—यस्मादस्याजहदात्मकस्य—

[6]एककारित्रनाशाभ्यां शक्तिहानिः प्रसिद्ध्यति॥

येन खलु दार्ढ्येणोपेतो यमेकं फलमाक्षिपते, यदि तेनैव युक्तः स्याद् द्वितीयमप्याक्षिपेत्। न चैनं शक्तिमन्तमनित्यता हिंस्यात्। तस्माद् गम्यतेऽन्यथीभूतोऽयमनित्यताव्याघ्रीमुखं प्रविशति। इत्येकं फलमाक्षिप्य नश्यतीत्युक्तमेतत्—'एककारित्र[7]नाशाभ्यां शक्तिहानिः प्रसिद्ध्यति।'

न प्रसिद्ध्यति, निर्हेतुकत्वाद्विनाशस्य। ये ह्यर्थात्मानो हेतुमन्तस्ते खल्वनित्या दृष्टाः। कथम्? अंकुरवत्। न विनाशस्य विनाशोऽस्ति, तस्मादहेतुकः। किञ्च, ये चार्थात्मानः पश्चाद्भवन्ति तेषां पूर्वहेतुरस्ति तद्यथा भस्मनो बीजाग्निसंयोगः। न च विनाशस्य हे[8]तुरस्ति। तस्मादसौ न पश्चाद्भवतीति॥

तत्र यदुक्तं जातस्य स्थित्यन्यथात्वमपेक्ष्य विनाशो भवतीति तदयुक्तम्। अत्र प्रत्ययस्थानम्—

[ 141 ] मति जन्मनि तद्भावाद् द्रव्यकारित्रनाशतः।
आगमादुपपत्तेश्च विनाशोऽपि सहेतुकः॥

सहेतुर्विनाश[1] इति स्थापना।[2] कुतः? 'सति जन्मनि तद्भावात्।' उक्तं(9) हि भगवता—"अस्मिन् सतीदं भवति। यावदविद्याप्रत्ययाः संस्काराः।" सति चोत्पत्तिमति विनाशो भवति। तस्मात्सहेतुकः। यस्य पुनरहेतुकस्तस्य प्रागपि जन्मनः सोऽस्तीति जन्मैव न स्यात्, विरुद्धानामन्यतरोपपत्तेः। तयोरविरोधाद्वा तद्व्यपदेशानुपपत्तिरतद्धर्म्य च [III. A, 4. Fol. 50 b] (1)संस्काराणामिति।[3]

धर्मा(र्म)णा(ना)स्तित्वमात्रं विनाश इति चेत्। न। तदस्तित्वपूर्वकत्वात्। अस्तित्वपूर्वकं हि तन्नास्तित्वमिति तदपि सहेतुकम्। नास्ति किञ्चित्तदिति चेत्। न। अस्तित्वविरोधानुपपत्तेः। किञ्च, भावविरोधित्वे सत्यभावस्य भवतापत्तेः। अवि[रोधि]त्वे भावनित्यत्वप्रसंगादुभयाभावे वाङ्मात्रत्वात्। का चैषा वाचो (2)युक्तिः सति च भवति तद्विशेष्यश्चा-

---

[1] For a discussion on the *Nirhetuka-vināśa-vāda*, see *Pramāṇa vārtika (Karṇagomi ṭīkā)*, p 366, *Tattva-saṅgraha*, pp 315 ff, *Hetubindu ṭīkā*, p. 141. For a criticism of the same topic, see *Madhyamaka-vṛtti*, p 113 and *Nyāyamañjarī*, pp. 61 and 457.

[2] Cf योऽप्याह निकायान्तरीयो "विनाशकारण प्राप्यानित्यता विनाशयति" इति तस्य हरीतकी प्राप्य देवता विरेचयतीत्यापन्न भवति किं पुनस्ता कल्पयित्वा। तन एवास्तु विनाशकारणाद्विनाश, चित्तचैत्ताना च क्षणिकत्वाभ्युपगमात्तदनित्यताया विनाशकारणानपेक्षत्वात् स्थित्यनित्यते कारित्रमभिन्नकाल कुर्वाणाभित्येकस्यैकत्र काले स्थितिविनष्टता सम्प्रसज्येत। तस्मात् प्रवाह प्रत्येतानि संस्कृतलक्षणानीत्येवमेतत्सूत्रं सुनीत भवति। *Akb.* ii 46 ab

योऽप्याह निकायान्तरीय इति। आर्यसम्मतीय। स घटादेर्मुद्गरादिकृतो विनाश इति मन्यते। कालान्तरावस्थायि हि तस्य रूपम्। चित्तचैत्ताना च क्षणिकत्वम्। *Sakv.* p. 179.

This view, attributed to the ārya-Sammatīya, is shared by the Sthaviravādins. See *K.* xxii 8 —इदानि खणिककथा नाम होति। तत्थ यस्मा "सब्बसङ्खतधम्मा अनिच्चा, तस्मा एकचित्तक्खणिका एव। समानाय हि अनिच्चताय एको लहुं भिज्जति, एको चिरेनाति, को एत्थ नियमो ?" ति येसं लद्धि, सेय्यथापि पुब्बसेलीयापरसेलीयानं। ते सन्धाय पुच्छा सकवादिस्स···। *Kvā* xxii 8 Also cf. उप्पादट्ठितिभङ्गवसेन खणत्तयं एकचित्तक्खणं नाम। तानि पन सत्तरस चित्तक्खणानि रूपधम्मानमायु। *A Saṅgaho*, iv 8.

[3] The Kośakāra favours the Sautrāntika view:—नहि विना हेतुप्रत्ययसामग्र्या जातिर्जनिका भवति। हेतुप्रत्ययानामेव तर्हि सामर्थ्यं पश्याम।···सिद्धा एव तु द्रव्यभावेन जात्यादय इति वैभाषिका। न हि दुष्करा सर्वेऽप्यागमा आगमयन्ते···। तस्माद्योगेनु प्रतिविधातव्यं सिद्धान्तश्चानुवर्तितव्य। *Akb.* ii. 46 cd.

तद्विरोधी च। न च किञ्चिदित्येवैषा वाचो युक्तिरसबद्धा (द्धा)। निरर्थिका चैषा वाचोयुक्ति। अतस्ते भावाभावो वाग्वस्तुमात्रम्। प्रतिषेधसामर्थ्यात् प्रतिषेध्यो भावोऽस्तीति चेत्। नास्ति। शशविषाणवच्छब्दो शब्दमात्रत्वात् प्रतिषेधद्वयार्थानुपपत्तेश्च। किञ्च, कारित्रमात्रनाशाच्च। (3)विरुद्धप्रत्यय सान्निध्ये क्रियामात्र हि नो[दि]ति, नश्यति। तस्मादनार्थवान् विनाशशब्द। कुतश्च? आगमादुपपत्तेश्च।

उक्त हि भगवता—"उत्पन्नानामकुशलाना धर्माणा निरोधाय' इति।[1] तथोक्तम्—"इहैकतीय प्राणातिपातिको भवति" इति विस्तर[2]। तथा—"तिस्र सवर्तन्योऽनलजलानिलाख्या याभि क्रमेण यावच्छुभकृत्स्ना विन(4)श्यन्ते" इति।[3] तथा—'जातिप्रत्यय जरामरणम्" इति।[4]

उपपत्तिरपि। जन्मनोऽप्यहेतुकत्वप्रसगात्। यदि खल्वसति सद्भावेऽप्यहेतुको विनाश, जन्माप्यहेतुक भवत्विति। तत्समर्थहेतुसामग्रीसन्निधाने जन्मदर्शणा(ना)द्, तत्सहेतुकत्वमिति चेत्। न। तद्विनाशे तुल्यत्वात्तस्यापि समर्थहेतुसाम(5)ग्र्यन्तरसन्निधानाभ्युपगमात्।

व्याख्यातानि लक्षणानि॥

नामकायादयो वक्तव्या। न खलु वक्तव्या। न हि ते शब्दादन्ये विद्यन्ते, स्वभावक्रियाभावादिति।[5] तदुपदर्शनार्थमिदमारभ्यते।

[142] वाक्छब्दाधीनजन्मानः स्वार्थप्रत्यायनक्रियाः।
संज्ञाद्यपरणा(ना)मानस्त्रयो नामादयः स्मृता॥[6]

विप्रयुक्ता ख(6)लु नामादय संस्कारस्कन्धसंगृहीता। वाक् तु रूपस्कन्धसंगृहीता वाग्भीर्निवृत्तिरित्यर्थ। ते च तदधीनोत्पत्तयो निरुपत्य

[1] Cf चत्तारो सम्मप्पधाना—इध भिक्खु उप्पन्नानं अकुसलानं धम्मानं पहानाय छन्दं जनेति वायमति चित्तं पग्गण्हाति पदहति। *Vbh* p 208

[2] Cf इध माणव एकच्चो पाणातिपाती होति लुद्दो लोहितपाणी होति। *M sutta* 135

[3] Cf अग्गिनाभस्सरा हेट्ठा आपेन सुभकिण्हतो।
वेहप्फलतो वातेन एवं लोको विनस्सति॥ *A Vibhāvinī* p 94

[4] Cf जातिपच्चया जरामरणं। *Vbh* p 135

[5] This is a view of the Sautrāntika ननु चैते वाक्स्वभावत्वाच्छब्दात्मका इति रूपस्वभावा भवन्ति। कस्माच्चित्तविप्रयुक्ता इत्युच्यन्ते? *Akb* ii 47 ab—'ननु चैते इति सौत्रान्तिकवचनम्। *Saks* p 183

[6] Cf नामकायादयः संज्ञावाक्याक्षरसमुक्तयः। *Ak.* ii 47 ab

धीनार्थप्रवृत्तयश्च ज्ञानवदर्थस्य प्रतिनिधिस्थानीयाः। निरुक्ति[ः]नाम संज्ञा। नार्थाणा(ना)मेकसंज्ञत्वात् । यथा तु चक्षुर्विज्ञानकायादयः पञ्चरूपाद्यायत्त-वृत्तयः, तद्व(7)त्तेऽपि 'वाक्छब्दाधीनजन्मानः' । अतश्चोक्तम्—"वाङ् नाम्नि प्रवर्तते, नामार्थं द्योतयति ।"[1] इति । "वाचा सह कचटतपादयो जायन्ते तया निधीयन्ते" इति । प्रतिवर्णानुवर्तिनीनां वाचां 'सावयवत्वेऽपि सति तदभिधानानुपपत्तिरिति चेत् । न । शब्दभेदसंचयस्य प्रत्ययत्वे तदभिधान-सामर्थ्योपप(8)त्तेः ।

किञ्च, क्रियया च तदस्तित्वं निर्धार्यते । का च सेत्युच्यते । स्वार्थ-प्रत्यायनं क्रिया । स्वं स्वमर्थं प्रत्याययत्यपौरुषेयत्वान्नामार्थसंबन्धस्यैष[ः] तेषां कृतान्तः ।

ते पुनर्नामसंज्ञाद्यपरनामानः ।

तत्र नामपर्यायः संज्ञाकरणं यथा घट इति ।

पदपर्यायो वाक्यम् । यथा घटो दृश्यत इति ।(9) येन क्रियागुणकाल-विशेषा गम्यन्त इति कश्चित् । "यावद्भिरर्थवद्भिः पदैर्विवक्षितार्थपरिपूरिर्भवति तावतां समूहः पदम्" इत्याभिधर्मिकाः ।[2]

व्यञ्जनपर्यायोऽक्षरं[3] यथा क इत्येतदक्षरं निरवयवममूर्तमप्रतिघं रूप-लक्षणविमुक्तं त्रैकालिकार्थप्रत्यायनसमर्थं मनोवद्[III B,3 Fol 51a] (1)प्रति-हतगमनमिति ।[4]

---

[1] नैते वाक्स्वभावा. । घोषो हि वाक्, न च घोषमात्रेणार्था. प्रतीयन्ते । किं तर्हि । वाङ नाम्नि प्रवर्तते । नामार्थं द्योतयति । *Akb* II. 47ab —'नैते वाक्स्वभावा.' इति विस्तरेण वैभाषिकवचनम् । *Sakv*. p 183

[2] वाक्य पद यावतार्थपरिसमाप्तिस्तद्यथा 'अनित्या बत सस्कारा' इत्येवमादि । *Akb* II 46

[3] Cf. सज्ञासमुक्तयो नामकाय: । वाक्यसमुक्तय. पदकाय । अक्षरसमुक्तयो व्यञ्जन-नकाय । *Sakv*. p 181. See *JpJ* pp 15-6.

Also cf नामभिरिति पदसमुदायैर्वाक्यैः । पदैरिति सुप्तिङन्तैरक्षरसमुदायै. । अक्षरैरिति एवमित्यादिवर्णै. । *Aaa* p 279.

For the Pāli definitions of अक्षर, पद, व्यञ्जन and वाक्य, see *Netti-A.* p. 209.

[4] Cf. अस्तु वा व्यञ्जनमात्रस्य द्रव्यान्तरभावपरिकल्पना । तत्समूहा एव नामका-यादयो भविष्यन्तीत्यपार्थिका तत्प्रज्ञप्ति' । सन्त्येव तु विप्रयुक्तसस्कारभावना नामकायादयो द्रव्यत इति वैभाषिका. । न हि सर्वधर्मास्तर्कगम्या भवन्तीति । *Akb*. II. 47 ab.

न, असिद्धत्वात्। न खलु वाक्छब्दादन्ये नामादयः सिद्ध्यन्ति। वाक्छब्द पदार्थेषु संज्ञाकर्तृकृतावधिः स्मृत्या गृहीतावयवसमुदायः श्रोतुरर्थं प्रत्याययतीति किमन्यैर्नामादिभिः परिकल्पितैः?[1] तत्रेदं प्रत्यवस्थीयते—

[ 143 ] अन्ये नामादयः शब्दादप्राप्तार्थप्रकाशनात्।

शब्दो हि (2)परमानु(णु) संचयः।[2] स प्राप्यार्थं प्रकाशयेत्, प्रदीपवत्। नाजातव्यस्तस्वर्गादिदेशस्याना(न)र्थ (र्था)न् प्राप्तुं शक्नोति। तस्मात्प्रतिपद्यस्व शब्दोऽर्थं प्रत्याययतीति। [इ]तश्च क्रमयौगपद्यप्रत्यायनासंभवात्। कथम्? वल्वजवत्। इह हि बहूनि वल्वजद्रव्याणि प्रत्येकमसमर्थाणि(नि) संभूय रज्वा(ज्ज्वा)त्मनावस्थितानि (3)दार्वाद्याकर्षणक्रियासामर्थ्योपेतानि भवन्ति। न चैवं वाक्यात्मानः शब्दाः बुद्ध्युपगृहीतावयवसमुदायसंक्षेपाः क्रमलब्धजन्मानः प्रत्येकमर्थ(र्थं)प्रत्यायनसमर्थाः, ण(ना)पि संभूय प्रत्याययन्ति, संभूयानवस्थानाद् वल्वजवत्। तस्मात्क्रमयौगपद्यात्प्रत्यायनाऽसंभवाच्च शब्दाः कश्चिदर्थं प्र(4)त्याययन्तीति सिद्धम्।

इतश्च, प्रत्याय्यप्रत्यायकादिसंबन्धानुपपत्तेः। कथम्? प्रदीपवत्। तद्यथा प्रदीपस्तमसि घटादिप्रत्याय्यप्रत्यायकशक्तियुक्तो घटदर्शणा(ना)र्थि भिरुपादीयते न च कश्चिच्छब्दः कस्मिंश्चिदर्थे केनचित्संबन्धिविशेषेण नियतवृत्तिः, यस्तं गृहीत्वा प्रत्याययेमे(दि)ति।

तत्र तावत्। [न] (5)प्रदीपस्यै(स्ये)व प्रत्याय्यप्रत्यायकसंबन्धोऽस्ति। अकृतसंकेतस्याप्रत्यायनात्। नापि संयोगाख्यः संबन्धोऽस्ति सदसतोस्तदनुपपत्तेः। गुणत्वाच्चेति कस्मिंश्चित्। न समवायाख्यः। अत एवाद्य गुणत्वाच्चेति[3] कश्चित्। तस्मात्प्रत्याय्यप्रत्यायनादिसंबन्धानुपपत्तेः यदगादिम्म न शब्दोऽर्थं प्रत्याय[य]तीति (6)तरसम्यगभ्यधामेति।

---

[1] Cf. यदि हि मन्यसे 'नामार्थं द्योतयति' इति तेनाप्येतदवश्यमभ्युपगन्तव्यं यदि प्रतीतपदार्थकं भवतीति। तच्चैतच्छब्दमात्रादेव प्रतीतपदार्थकत्वात् सिध्यतीति किमर्थान्तरं नाम कल्पयिष्यते। इह चापि न ज्ञायते कथं वाङ् नाम्नि प्रवर्तत इति। किं तावदुत्पादयत्याहोस्वित् प्रकाशयति। यद्युत्पादयति। घोषस्वभावत्वाद्वाचः सर्वं घोषमात्रं नामोत्पादयिष्यति, यादृशो वा घोषविशेष इष्यते नाम्न उत्पादकः स एवार्थस्य द्योतको भविष्यति। अथ प्रकाशयति। घोषस्वभावत्वाद्वाचः सर्वं घोषमात्रं नाम प्रकाशयिष्यति, यादृशो वा घोषविशेष इष्यते नाम्नः प्रकाशकः स एवार्थस्य द्योतको भविष्यति। न खल्वपि शब्दानां सामग्र्यमस्ति एकैकशः। न चैकस्य भागस्य उत्पादो युक्त इति कथमुत्पादयन्ती वाङ् नामोत्पादयेत्।..." *AKBh* II 47 ab

[2] For a similar Jaina view, see *Nyāyakumudacandra*, p. 242.

[3] See the Commentary by Vyomaśiva on the *Praśastapādabhāṣya*, p. 322.

सामयिकः शब्दोऽर्थप्रत्यायनलिङ्गमिति चेत् । न । साध्यत्वाद्वितर्कविचाराधीनजन्मनः शब्दस्य क्रमयौगपद्यप्रत्यायनानुपपत्तेश्च । प्रतिवर्णविषया स्मृतिः प्रत्याययतीति चेत् । न । तत्समानदोषत्वात्पूर्वपक्षोत्सर्गत्वाच्च । संस्कार इति चेत् । न । असिद्धत्वादुक्तोत्तरत्वा(7)च्च(श्च) । यादृच्छिकसंवृतिशब्दमात्राभ्युपगमे वक्ष्यमाण(ण)दोषप्रसंगाच्चेति ।

किं पुनरेते नामकायादयो नित्या आहोस्विदनित्या इति ?

अनित्यास्ते तु विज्ञेयाः

तु शब्दो[ऽ]नित्यत्ववादविशेषणार्थो हेतुः । क इति चेत् । सोऽयमुच्यते—

सापेक्षार्थविभावनात् ॥

कथम् ? ज्ञानवत् । तद्यथा ज्ञानं च(8)क्षुरादीन् हेतूनपेक्ष्यार्थं विभावयति तद्वन्नामादयोऽपि घोषादीन् हेतूनपेक्ष्यार्थं प्रत्याययन्ति । तस्मात्सापेक्षप्रत्यायनादनित्या इति ॥

यदि तर्हि नामादयोऽर्थं प्रत्याययन्ति, तत्कथमिदं सद्भिरप्युच्यते—'शब्दोऽर्थं प्रत्याययति' इति ? तदत्राभिधीयते—

[ 144 ] स्वरूपं वेदयंश्छब्दो व्यञ्जना(9)दीनि च ध्रुवम् ।
अर्थप्रत्यायकः प्राज्ञैर्भक्तिकल्पनयोच्यते ॥

श्रावसा हि वाङ् नाम्नि प्रवर्तते नामाभिलपतीत्यर्थः । नाम त्वर्थं द्योतयतीति प्रतिवर्णानुवर्तिनी वाक् खलु नामाभिलपन्ती स्वञ्च रूपमुद्भावयन्ती सन्तानेन प्रवर्तमाना गुणकल्पनयाऽर्थं प्रत्याययतीत्य [III A, 3 Fol. 51 b] (1)पदिश्यते । न त्वर्थः शब्दवाच्यो द्योत्यो वा ॥

इतश्च न शब्दोऽर्थं प्रत्याययति । यस्मात्—

[ 145 ] परमानु(णु)स्वभावत्वाद् घोषैकत्वं न युज्यते ।

"एदैतौ कण्ठतालव्यौ"[१] इति प्रतिक्षये(यै)तेन चैकस्थानवचनस्य विश्लिष्टस्थानद्वये वृत्तिरुपपद्यते । परमाणुसंघातस्य तूपपद्यते । परमान(ण)वोऽपि प्रत्येकं [न] प्रत्याययन्ति, दिग्भागास्तित्वनास्तित्वे तदभावाच्चेति । स(2)मुदायोऽपि मध्यस्थैरप्रत्यायनानुमानादनु(णु)द्वयेनापि न प्रत्याययतीत्य-

[१] Cf. एऐ तु कण्ठतालव्यौ । *Pāninīya-śikshā*, 18

व्यवसीयते। न चार्यान्तरं समुदायिभ्यः समुदायोऽस्ति। स कथमर्थं प्रत्याययिष्यतीति। अतीतवर्णसमुदायस्त्वन्त्यवर्णापेक्षो मनोबुद्ध्योपगृहीतस्वरूपः संबन्धिन्यर्थे बुद्धिमुत्पादयत्प्रत्याययतीति युक्तरूपो व्यपदेशः।

अत्र [3]मीमांसा(सक)[1]वैयाकरणौ [2]प्रत्याचक्ष(क्षे)ते। नासिद्धत्वात्। न खलु शब्दस्य परमानु(णु)मयत्वं सिद्धम्। तस्मादनुत्तरमेतत्। तौ प्रत्यभिधीयते।[3]

तादात्म्यं प्रतिघातित्वात्

प्रतिहन्यते खलु शब्दः प्राकारभित्त्यादिषु तस्मात्प्रतिघाती शब्द इति। न। असिद्धा(द्धम्)। सिद्धसाधनादसिद्धेः। यत्खलु भवता प्रतिघातित्वेनाप्रसिद्ध परमानु(णु)मयत्वं साध्य[4]त इत्यसदेतत्। तत्रेदं प्रत्यवस्थीयते।

तत्सिद्धिर्वरणादिभिः ॥

आलाङ्गलप्राहेभ्यः सिद्धमेतद्धर्मगृहान्तर्गतेन पिहिते कपाटेऽभिहन्यमाना. पटहाः ध्माप्यमानाश्च शङ्खा न श्रूयन्ते। हूणनाडी[4]निर्घोषेण च नगरप्राकाराणि पात्यन्ते। तस्मात्सिद्धेन ज्ञापज(जे)नासिद्धस्य साधनमिदमानिष्क्रियते नासि[5]द्धेनेति ॥

यदप्युच्यते स्फोटः शब्दो ध्वनिः शब्दगुण[5] इति तत्रापदिश्यते—

[ 146 ] स्फोटाख्यो नापरो घोषाच्छब्दो नित्यः प्रसिद्ध्यति।

तस्माद्ध्वनिः शब्दः स्फोट इत्यनर्थान्तरम्। यथा हस्त. करः पाणिरिति लोकप्रसिद्धमेतत्। तस्मात्—

क्रमवृत्तेर्ण(र्न) शब्देन कश्चिदर्थोऽभिधीयते ॥

---

[1] See *Slokavartika*, 5, 106.

[2] Cf वायारणूनां ज्ञानस्य शब्दत्वापत्तिरिष्यते।
कैश्चिद्घनमदोऽत्र प्रवादेष्वनवस्थित ॥
यथापमान्तरो ज्ञाता सूक्ष्मवागात्मना स्थित।
व्यक्तये स्वस्य रूपस्य शब्दत्वेन विवर्तते ॥

*Vakyapadiya*, 1 107 and 112

[3] This discussion is not found in the *Akb*

[4] This appears to be a reference to the cannon.

[5] See *Sphotasuddhi*, *karika* 29 For details on this topic, see *Nyayakumudachandra*, pp 747 757

इति प्रागाविष्कृतमेतत् । तन्मा प्रमोषीः ॥

यदप्युच्यते (6)वैयाकरणैः शब्दो बुद्धिनिर्ग्राह्य[1] एव वैशेषिकैरपि श्रोत्रग्राह्यः,[2] शब्दश्चा(स्या)न्यत्वेऽपि च शब्दत्वादयः श्रोत्रेण गृह्यन्त इति। तयोरिदमुच्यते—[3]

[ 147 ] न श्रुत्या श्रूयते शब्दस्तदन्या च गतिः श्रुतेः ।
यो ब्रूयात्स स्वमात्मानं विद्वद्भिरपहासयेत् ॥

इति । तस्मात्प्रतीतपदार्थको लोके ध्वनिः शब्दः । ततश्चान्ये नामादयः सर्वार्थविषया (7)इति स्थापना ।

[ 148 ] प्रतिद्योत्यं यथायोगं नियतानियताश्च ते ।[4]

तत्र य आर्यया निरुक्त्या निरुच्यन्ते द्वादशायतनविषयास्ते नियताभिधेयं(यस्सं)दन्धाः, लौकिक्याश्च केचिन्नियताभिधेया निरुच्यन्ते । उभयेऽप्येते कृतसंकेतस्यार्थं प्रत्याययन्ति । ये तु यथेच्छं पित्रादिभिः क्रियन्ते नामकायादिभिस्ते ह्यनियता यदृच्छिका इत्यु(8)च्यन्ते । तद्यथा डित्थडवित्थादयः ।

प्रथमास्तु बुद्धोत्पाद एव प्रवर्तन्ते नान्यदेति । उक्तं हि भगवता—"तथागतानामुत्पादान्नामपदव्यञ्जनकायानामुत्पादो भवति" इत्येतस्मात्—

नियतोद्भावनाद् बुद्धः सर्वज्ञ इति गम्यते ॥

ये ह्यपौरुषेया धात्वायतनस्कन्धाद्यवद्योतकास्ते प्रथमं बुद्धविषया एव । तद्वचोवाच्य (9)भगवान्सर्वज्ञ इत्यभिधीयते । ते पुन(न)रेते—

[ 149 ] सत्त्वाख्याः कामरूपाप्ता निष्यन्दाऽव्याकृतास्तथा ।[5]

सत्त्वाख्या ह्येते । यश्च द्योतयति स तैः समन्वागतः । न यो द्योत्यते ।

---

[1] Cf. नादैराहितबीजायामन्त्येन ध्वनिना सह ।
आवृत्तपरिपाकायां बुद्धौ शब्दोऽवभासते ॥ *Vākyapadīya*, 1. 84

[2] Cf. शब्दोऽम्बरगुणः श्रोत्रग्राह्यः । *Praśastapāda-bhāshya*, p. 645.

[3] This discussion is not found in *Akb*

[4] For the fourfold *nāma*, see *Vm*. VII. 54 and *Dhs A*. V. 112.

[5] Cf. कामरूपाप्तसत्त्वाख्या निःष्यन्दाव्याकृतास्तथा । *Ak* II 47cd.

कामास[ः] रूपाप्ताश्चैते[1] वाक्छन्दाधीनजन्मत्वात्। नैष्यन्दिका अनिवृताव्या कृताश्चैव।[2]

यथा चैते नामादयः

तथैव च निपाकश्च सामान्यं [प्राप्तयो द्विधा]।[3]

[Fol 52-90 lost][4]

[ अभिधर्मदीपे विभाषाप्रभाया वृत्तौ द्वितीयस्याध्यायस्य तृतीय पाद ॥[4] ]

[ द्वितीयोऽध्याय समाप्त ॥ ][4]

---

[1] [आख्याता] ते त्वनभिलाप्या इति। ते त्वाख्याता नामकायादयोऽनाख्याता। वाचस्तत्राभावात्। कथं त सन्तीति गम्यन्ते यदा ते नाभिलप्यन्ते? तस्मात् नामाख्याता एव नाख्याता इति वैभाषिका। *Sakv* p 186

[2] नैष्यन्दिका सभागहेतुजनितत्वात्। न विपाकजा इच्छात प्रवृत्ते। नौपचयिका अमूर्तित्वात् घयाभावादिति। अनिवृताव्याकृताश्च। न कुशला नाकुशला। कस्मात्? इतरथा ह्यत्र समुच्छिन्नकुशलमूल कुशलान् धर्मान् द्योतयति तदाऽस्य कुशलधर्मसमन्वागम स्यात्। एवं कामवीतरागस्याप्यकुशलधर्मद्योतने वाच्यम्। तस्मादनिवृताव्याकृता एव। *Ibid*

[3] *Cf* समागता सा तु पूर्वविपाकोऽप्याप्तयो द्विधा।
लक्षणानि च निष्यन्दा समापत्त्यसमन्वया ॥ *Ak* ii. 48

[4] A large portion of the ii *Adhyāya* of *Adv* is lost The iii *pāda* of this *Adhyāya* might have come to an end with the discussion on the *Viprayukta dharmas* The iv *pāda* might have contained a discussion on such topics as *Hetu Pratyaya* and *Phala* which are dealt with in detail, in the corresponding *Akb* ii. 49—73 V infra, *Adv* *Kārikā* 205

# तृतीयोऽध्यायः ।

## चतुर्थपादः ।[१]

[VI B, 8. Fol. 80 a. -- २ ](1)-- ........।[२] द्वितीयं द्वितीयस्याः । तृतीयं तृतीयस्याः । वायुसंवर्तण्या(न्या)श्चतुर्थध्यानं शीर्षमिति ।[३]

अत्राह—चतुर्थध्याने संवर्तनी कस्मान्न भवति ? तदुच्यते—

[ 150 ] सत्त्वाख्योपद्रवाभावान्न चतुर्थेऽस्ति सुव्रतः ।
विमानस्य समस्तस्य प्रध्वंसान्नित्यता कुतः ॥[४]

चतुर्थे खलु ध्याने बाह्याध्यात्मिका अपक्षाला न विद्य[न्ते(2) तस्मान्न संवर्तनी] उत्पाद्यते । प्रथमे हि ध्याने वितर्कविचारावग्निकल्पावपक्षालभूतौ विद्येते । द्वितीये प्रीतिरप्कल्पा चेतोपक्षारिणी । तृतीये ध्याने आश्वास-

---

१ A large portion of the III *Adhyāya*, (First three *pādas* and some portion of the fourth *pada*) corresponding to the III *Kosasthāna* of *Akb*, is lost In this *Adhyaya*, the *Adv* might have discussed the following topics — ( १ ) कामरूपारूप्यधातव । ( २ ) पञ्च गतय । ( ३ ) अन्तराभव । ( ४ ) द्वादशाङ्ग प्रतीत्यसमुत्पाद । (५) च्युत्युपपत्ती (६) भाजनलोक (७) परमाण्वक्षरक्षणा । (८) कल्प । and (९) संवर्तन्य । These topics are discussed in full detail in the III *Kośasthāna* of *Akb*

२ This folio is misplaced in the sheet No VI. The leaf is broken on the right, and a part of about an inch, which contained the number of the folio, is lost. As its preceding and following folios are also missing (Fol. 52-90), it is not possible to number this one It is provisionally numbered 80

३ Prior to this, the Kośakāra discusses the following topics : (१) अथ कतीमा संवर्तन्य ? (२) अथ कस्या संवर्तन्या कतमच्छीर्षं भवति ? (३) किं पुन कारण प्रथमद्वितीयध्यानानि तेजोजलवायुभिर्ध्वंस्यन्ते ? (४) अथ चतुर्थध्याने कथ न संवर्तनी ? *Akb* III. 100 For *samvartani*, see *Vm* XIII. 30-65

४ Cf तदपक्षालसाधर्म्यान्न चतुर्थेऽस्त्यनिञ्जनात ।
न नित्य सह सत्त्वेन तद्विमानोदयव्ययात् ॥ *Ak.* III. 101

Also cf नव अनुपुब्बनिरोधा । पठम झान समापन्नस्स कामसञ्ञा निरुद्धा होति । दुतिय झान समापन्नस्स वितक्कविचारा निरुद्धा होन्ति । ततिय झान समापन्नस्स पीति निरुद्धा होति । चतुत्थ झान समापन्नस्स अस्सासपस्सासा निरुद्धा होन्ति.... । *Dīgha*, XXXIII 3 2. See *Aṅg* V p 133.

प्रश्वासा वाय्वात्मकाः। इत्यतो यस्यां ध्यानसमापत्तौ यथाभूतोऽपक्षालस्तथाभूतेन बाह्येन विनाशः। चतुर्थे तु [बाह्योऽपक्षालो (3)न प्रवर्तत इति] नास्ति संवर्तनी।[१] नित्यं तर्हि चतुर्थध्यानं प्राप्तम्। न प्राप्तम्। कस्मात्? 'विमानस्य समत्वस्य' कर्मक्षयेन 'प्रध्वसात्' इति॥

कथं पुनरेताः संवर्तन्यः कया वाऽनुपूर्व्या भवन्ति? तदुच्यते। निरन्तरं तावत्—

[ 151 ] सप्त तेजोभिरेकाऽद्भिर्गतेऽद्भिः सप्तके पुनः।
तेजसा सप्तकान्त्यैका वायु[संवर्तनी ततः]॥[२]

(4)[सप्त सवर्तन्यस्तेजोभिः] भवन्ति। अष्टमोऽपाम्। [एवं] सप्तको भवति। तस्मिन् सप्तकेऽनिक्रान्ते पुनस्तेजसा सप्तक। तस्मिन्नप्यतिक्रान्ते वायुसंवर्तन्यैकया सा(ना)शो भवति। सा तु नित्यं तेजस सप्तकपृष्ठे वायुसंवर्तनी भवति। त एते पिण्डेन भवन्ति ष[ट्पञ्चाशत्] तेज संवर्त[न्य]³, सप्ताप्संवर्त[न्यः, एका वायुसवर्तनी]॥

(5)[किं पुनस्तत्र कारणं य]त्पश्चाद्वायुसंवर्तन्येकैव भवति? तदुच्यते—

---

[१] शुद्धावासप्रभवादित्यपरे। नहि ते शक्यमारूप्यान प्रवेष्टु नाप्यन्यत्र गन्तुमिति। नित्य तर्हि ध्यानभाज प्राप्नोति? नहि चतुर्थध्यानमेकभूमिसवद्धम। किं तर्हि? विच्छिन्न स्थानान्तर तारकावत्। तत्राप्यय सत्त्व उपपद्यते च्यवते वा। स साध विमानेनेति नास्त्यस्य नित्यत्वम्। *Akb* III 101 See *Asm* p 39

[२] Cf सप्ताग्निनाद्भिरेकैव गतेऽद्भि सप्तके पुन।
तेजसा सप्तक पश्चाद्वायुसवर्तनी तत॥ *Ak.* III 102.

(Here ends the III *Kośasthana* of *Akb*)

Also cf तथा हेस ञोको सत्तवारेसु अग्गिना विनस्सति अटठम वारे उदकेन, पुन मत्तवारेसु अग्गिना, अट्ठमे उदकेनाति एव अट्ठसु अट्ठकेसु परिपुण्णेसु पच्छिमवारे वातेन विनस्सति, तत्थ पठमज्झानतलं उपादाय अग्गिना दुतियततियज्झानतलं उपादाय उदकेन, चतुत्थज्झानतलं उपादाय वातन विनस्सति। वुत्तम्पि चेत –

"सत्त सत्तग्गिना वारा अट्ठमे अट्ठमोदका।
चतुसट्ठि यदा पुण्णा एको वायुवरो सिया॥
अग्गिनाभस्सरा हेट्ठा आपेन सुभकिण्हतो।
वेहप्फलतो वातेन एव लोको विनस्सती ति॥ *A Vibhavini* p 94

³ तेजःसवर्तनीति नरकान्निमुपादाय यावद्ब्रह्मलोके कश्चित्सत्त्वो नावशिष्टो भवति तदा शून्यभाजने सप्त सूर्याः प्रादुर्भूय क्रमशोऽपाण्डलमारभ्य यावत् प्रथमं ध्यानं दहन्ति।
*Asm* p 259

[ 152 ] आग्नेयात्सप्तकादेक[ः] पावनीकिमनन्तरम् ।
आयुष्परिग्रहादेवं शुभकृत्स्नायुरेधनम् ॥

एवं च कृत्वा प्रज्ञप्तिभाष्यमनुलोमितं भवति[1]—"चतुःषष्टिःकल्पाः शुभकृत्स्नां(त्स्ना)[नां] देवनामायुष्प्रमाणम्" इति ॥[2]

अथ कस्मात्[पृथिवीसंवर्तनी न] भवति ?[3] (6)तदत्र कारणमुच्यते—

[ 153 ] वातादिदोषसाधर्म्या[त्सत्त्वा]णा(नां) [तद्विनाशकाः] ।
आध्यात्मिकेति सारूप्यान्न भूसंवर्तणी(नी) मता ॥

यथा खलु वातपित्तश्लेष्मभिस्त्रिभिः सत्त्वानां मर्मच्छेदः पृथिवीधातुस्थलक्षणो भवति तद्वदग्नि[जल]वायुभिर्भूरुत्साद्यते । किञ्च, एते [तद्विनाशकाः] ……तन्नाशाय प्रवृत्तत्वात् । किञ्च, 'आध्यात्मिकेति सारूप्याच्च' ।(7) यथा चाध्यात्मिकस्याग्निस्त्रिश्चित्तस्य तयोर्भवन्ति वितर्कविचारप्रीत्युच्छ्वासप्रश्वासलक्षणैस्त[था]गाह्या अप्युपद्रवा वह्नयम्भोवायुप्रकोपलक्षणा भवन्तीति ॥

अभिधर्मदीपे [विभाषाप्रभाया वृत्तौ तृतीयस्याध्यायस्य(8)च]तुर्थः पादः समाप्तः ॥[4]

[ तृतीयोऽध्यायः समाप्तः ॥ ]

---

[1] एवं च कृत्वेति । यस्मादष्टकृत्वस्तेजःसंवर्तनीसप्तका इति षट्पञ्चाशत्तेजःसंवर्तन्यो भवन्ति सप्ताप्संवर्तन्य, एका वायुसंवर्तनीति चतुःषष्टिसंवर्तन्यो भवन्ति । तस्माद्यदुक्तं प्रज्ञप्तिभाष्ये "तत्सूक्तं भवति । "शुभकृत्स्नानां चतुःषष्टियोजनानां शरीरप्रमाणम् । शरीरप्रमाणेन च तेषामायुःप्रमाणमुक्तम् । 'आयुस्तु कल्पं स्वाश्रयम्' इति वचनात् । एकैका संवर्तनी महाकल्प इति कृत्वा । इयता हि कालेन तेषामायुषः परिसमाप्तिरिति । *Sphu* p 344

[2] Cf तेसु…सुभकिण्हानं चतुसट्ठि कप्पानि आयुप्पमाणं । *A Sangaho* v 17
—एवं परिच्छिन्नस्स अन्तराकप्पस्स वसेन चतुसट्ठि अन्तरकप्पप्पमाणो होति । वीसति अन्तरकप्पप्पमाणोति च वदन्ति । *A Vibhāvini* p 94

[3] एकत्र ध्याने सत्त्वाः समं संवर्तन्ते एतस्यामिति संवर्तनी । सप्तभिः सूर्यैस्तेजःसंवर्तनी भवति, वर्षोदकेनाप्संवर्तनी, वायुप्रकोपाद्वायुसंवर्तनी । ताभिश्च भाजनानां सूक्ष्मोऽप्यवयवो नावशिष्यते । *Akb* iii 100 ab कस्मात् पृथिवी संवर्तनी न भवति ? पृथिव्येव हि भाजनाख्या तस्या तेजोजलवायुभिर्विरोधो न पृथिव्येति । *Akb* iii 100 a

[4] V. supra, p 115, n. 1.

# चतुर्थोऽध्यायः ।

## प्रथमः पादः ।

अथ यदुक्तं ["सत्त्वकर्मद्विधाख्येन पूरितं वायुमण्डलम्"] इत्येतदुच्यताम्। कानि तानि कियन्ति वा कर्माणीत्यतः कर्माणि प्रस्तूयन्ते।

[154] सत्त्वोपपत्तिहेतूनां [विपत्संप]द्विधायिना(ना)म् ।
[लोकवैचित्र्यकर्तॄणां कर्म हेतुरितीष्यते ॥][1]

(9[दृश्यते] खलु सत्त्वाना हीनमध्योत्कृष्टजातिपरिग्रहायामाश्रयभोगादिसम्पद्विपत्तिश्च। यच्च द्विविधस्य लोकस्य विचित्रता तत्र कर्माणि हेतु। अतस्तेषा तत्त्वानि वक्ष्यामि। यदप्युक्त कानि कियन्ति वेति तदुपव्याख्यायते॥

सूत्रे द्वे कर्म[णी] निर्दि[श्योक्तम—"द्वे कर्मणी चेतना कर्म चेतयित्वा] [VI A 8 Fol 80 b][2](1) च" इति।[3] तानि पुनस्त्रीण्युक्तानि। कथम्?

[155] कायिकं वाड्मयं चैव चेतनाख्यं च मानसम् ।[4]
कर्माण्येतानि लोकस्य कारणं नेश्वरादयः ॥

एतानि खलु त्रीणि कर्माणि शुभाशुभानि द्विविधस्यापि सत्त्वभाजन लोकस्य हिताहितनिमित्तान्युत्पत्तौ च सम्पत्तौ च वैचित्र्यस्य च कारणम्।[5] नेश्वरकालपुरुषप्रधानादय ॥

---

[1] Cf कर्मजं लोकवैचित्र्य चेतना तत्कृत च तत। *Ak* IV 1 ab

[2] V supra, p 115, n. 2

[3] Cf चेतनाहं भिक्खवे कम्म वदामि चेतयित्वा कम्म करोति। *Ang* III p 415

[4] Cf चेतना मानस कर्म तज्जे वाक्कायकर्मणी। *Ak* IV 1 cd
Also cf चेतना कम कतमत। पुण्यकर्म अपुण्यकर्म आनिञ्ज्यकम च। चेतयित्वा कर्म कतमत। कायकर्म वाक्कम मनस्कम च। *Asm* p 53

[5] For a controversy 'सब्बमिद कम्मतो ति?' See *Kv* XVII 3—इदानि सब्बमिद कम्मतोति कथा नाम होति। तत्थ

कम्मुना वत्तति लोको कम्मुना वत्तति पजा।
कम्मनिबन्धना सत्ता रथस्साणीव यायतो ॥

(*Sutta-nipata* 654) ति सुत्त निस्साय सब्बमिद कम्मतोव होतीति यस लद्धि, सेय्यथापि राजगिरिकानञ्चेव सिद्धत्थिकानञ्च। कम्मुना वत्तती ति सुत्त नत्थि कम्म ति अकम्मवादिन पटिसेधेतित्वा 'अत्थि कम्म ति कम्मवादिन कम्मस्सकत दीपेति, न सब्बमेव कम्मतो निब्बत्ति। *KvA* XVII 3 See *Milinda*, pp 137 ff and *Kv* VII 7 8, XII 3, XVI 8

तत्र ताव(2)द्यथा नेश्वरः कारणं तथा पूर्वमुल्लिखितम्[१], इदानीं तु विस्पष्टतरमाविष्क्रियते—

[ 156 ] वैश्वरूप्यात्क्रमोत्पादात्तद्वदन्यत्प्रसङ्गतः ।

यदि खल्वेको नित्यश्चेश्वरो लोकस्योत्पत्तिस्थितिप्रलयकारणं स्यात्, तेन खलु कारणानुविधायित्वात्कार्यस्यैतत् त्रयं विरुद्धं युगपत् स्यात्। न चैतद् दृष्टमिष्टं वेत्यसदेतत्। किञ्च, (3)लोकश्चाप्यविचित्रः स्यात्। युगपच्चोत्पद्येत नग्नः कपालपाणिश्च पर्यटेत्तदिच्छानुविधायी च स्यात्। न चैतदेवम्। तस्मान्नेश्वरः कारणम्।

ग्रामाद्यधिपतिविशेषोत्कर्षावस्थानादीश्वरप्रसिद्धिरिति चेत्। न। ग्रामाधिकृतादिद्द परतन्त्रत्वानित्यत्वकार्यान्तरशक्तिविघातादिदर्शणा(ना)त्, गोमयपिण्डोप(4)मसूत्रोक्तेश्च।[२]

---

[१] The Kośakāra deals with this topic not here, but in the II *Kośasthāna* of *Ak*.—'नेश्वरादे क्रमादिभि' II. 64 d. It is possible that the *Adv.* also might have discussed this topic in its last portion of the II *Adhyāya*, which is lost. (V. supra, p. 114, n 3)

The *Brahmajāla sutta* gives the following origin of the concept of God: होति खो सो समयो य कदाचि करहचि···अयं लोको विवट्टति···सुञ्ञं ब्रह्मविमानं पातुभवति। अथ खो अञ्ञतरो सत्तो···आभस्सरकाया चवित्वा सुञ्ञं ब्रह्मविमानं उपपज्जति।···तत्थ तस्स एककस्स दीघरत्तं निवुसितत्ता अनभिरति परितस्सना उपपज्जति। 'अहो वत अञ्ञेपि सत्ता इत्थत्तं आगच्छेय्युं' ति। अथ अञ्ञतरेपि सत्ता···ब्रह्मविमानं उपपज्जन्ति तस्स सत्तस्स सहब्यतं। तत्र भिक्खवे यो सो सत्तो पठमं उपपन्नो तस्स एवं होति—'अहमस्मि ब्रह्मा महाब्रह्मा अभिभू अनभिभूतो अञ्ञदत्थुदसो वसवत्ती इस्सरो कत्ता निम्माता सेट्ठो सज्जिता वसी पिता भूतभव्यानं, मया इमे निम्मिता।···ममं च मनो पणिधि इमे च सत्ता इत्थत्तं आगता। येपि ते सत्ता पच्छा उपपन्ना तेसम्पि एवं होति: अयं खो भवं ब्रह्मा···इमिना मयं निम्मिता। *Dīgha*. I. 2. 2-5

For a discussion on ईश्वरसिद्धि, see *Nyāyasūtra*, IV. 1. 14-43, *Nyāyāvatāraṭīkā*, pp 457-467, *Nyāyakandalī-ṭīkā*, p. 54, *Nyāyamañjarī*, p. 178 and *Nyāyāvatāra-vārtika-tātparya-ṭīkā*, p. 598.

For the refutation of ईश्वरकर्तृत्ववाद, see *Ślokavārtika*, (*sambandhākshepa*,) v. 44, *Pramāṇavārtika*, II. 10-28, *Bodhicharyāvatāra-Pañjikā*, IX. 119, *Tattvasangraha*, 46-87, *Nyāyāvatārasūtravārtika-vritti*, *kārikā* 8 and *Nyāyakumudachandra*, pp. 101-109.

[२] Cf. अथ खो भगवा परित्तं गोमयपिण्डं पाणिना गहेत्वा तं एतदवोच···एत्तको पि खो भिक्खु अत्तपटिलाभो नत्थि निच्चो धुवो सस्सतो अविपरिणामधम्मो तथेव ठस्सति। *S.* III. p. 142

भागवतादितन्निग्दादर्शणा(ना)च। भागवताश्चा हि महेश्वरं णि(नि)-न्दन्तो दृश्यन्ते। माहेश्वराश्च विष्णुमिति।

कारणसापेक्षं तपःसामर्थ्यादुत्पादयतीति चेत्। तत्रापदिश्यते।

नान्यापेक्षा तपोयोगो पक्षहान्यादिदोषतः ॥

यदि खलु सहकारिकारणापेक्षः तपोबललब्ध्यैश्व[(5)]र्यश्च लोकं सृजति कुम्भकारवद्घटादीन्। न। चै(ए)वं सति पूर्वपक्षोत्सर्गः कृतो भवति। यदुक्तं नित्यश्चैकश्च स्वतन्त्रः कारणमिति तद्धीनम्। तपोबलसामर्थ्याभ्युपगमे चानित्यत्वं पारतन्त्र्यं चाभ्युपगतं भवति। तदभ्युपगमाच्चानैश्वर्यमिति। एतेन कालपुरुषप्रधानादिकारणपरिग्रहाः[1] [(6)]प्रत्यूढा वेदितव्याः ॥

यदि खलु कर्म कारणं नेश्वरादयः कथं तर्हि लोकस्तत्कारणपरिग्रहं करोतीति? अत्र ब्रूमः—

[ 157 ] कर्मणां बोध्यते शक्तिर्विधिकालग्रहादिभिः।
यतोऽनस्तेषु ताच्छब्दयं गौन्या(ण्या) वृत्त्या प्रयुज्यते ॥

यथोक्तम्—

"विधिर्विधानं नियतिः स्वभावः
कालो ग्रहा ईश्वरकर्मदैवम्।
पुण्यानि मा[(7)न्या]णि(नि) कृतान्तयोगः
पर्यायनामाणि(नि) पुराकृतस्य ॥"[2]

---

[1] तीणिमानि भिक्खवे नित्यायतनानि यानि पण्डितेहि समनुयुञ्जियमानानि ··अकिरियाय सण्ठहन्ति। कतमानि तीणि? सन्ति भिक्खवे एके समणब्राह्मणा एव वादिनो ··य किञ्चाय पुरिसपुग्गलो पटिसवेदति सब्ब त पुब्बे कतहेतू ति। सन्ति···एके 'सब्ब त इस्सरनिम्माणहेतू ति। सन्ति एक सब्ब त अहेतु-अप्पच्चया ति। *Ang* I p 173

[2] Cf काल स्वभावो नियतिर्यदृच्छा
भूतानि योनि पुरुषेति चिन्त्या।
संयोग एषां न तु आत्मभावाद्
आत्माप्यनीश सुखदुःखहेतो ॥ *Swetāśwatara Up* I. 2

स्वभावमीश्वरं काल यदृच्छा नियतिं तथा।
परिणाम च मन्यन्त प्रकृतिं पृथुदर्शिन ॥ *Suśruta saṃhitā*, I. 11

For the refutation of *kāla*, *swabhāva* and *niyati*, see *Sūtrakṛtāṅga-Śīlāṅka Ṭīkā*, I 2, 1-10 V supra, p 119, n. 1

किञ्च, यतश्च

> "ग्रहयोगो भुजास्पन्दः स्वप्नः पूर्णघटादयः।
> सूचयन्ति नृणामेते वृत्तिलाभं स्वकर्मणः॥"

इत्यतोऽपि तेषु ताच्छब्द्यं प्रयुज्यत इति॥

कथं पुन(न)रेषां त्रयाणां कर्मणां व्यवस्थानम्? यथाश्रयतः, सर्वेषां कायाश्रितत्वादेकत्वम्। स्वभाव[(8)तश्चे]त्, वाक्कर्मैवैकं प्राप्तम्। समुत्थानतश्चेत्, मनःकर्मैकं प्राप्तम्। सर्वेषां मनसोत्थापितत्वात्। त्रिभिरपीति वैभाषिकाः[1]॥

ते पुन(न)रेते प्रथमे द्वे कर्मणी प्रत्येकं द्विप्रभेदे। कथम्? तदपदिश्यते—

[158 ab.] पूर्वे विज्ञप्त्यविज्ञप्ती[2]

कायकर्म खलु कायविज्ञप्तिः कायाविज्ञप्तिश्च। वाक्कर्मापि वाग्विज्ञप्ति-र्वा(9)गविज्ञप्तिश्च। तृतीयं तु कर्म—

चेतना मानसी क्रिया।

उक्तं हि भगवता—"चेतना कर्म चेतयित्वा।" तत्पुनस्त्रिधोक्तम्—"कायकर्म वाक्कर्म मनस्कर्म च" इति।[3]

किं स्वभावं पुनरिदं कायकर्म किं तावत्कायस्वभावम्? यथा वाक्कर्म

---

[1] यथाक्रम त्रिभि कारणैस्त्रयाणामिति वैभाषिकाः। *Akb* IV 1 ab.

[2] Cf. ते तु विज्ञप्त्यविज्ञप्ती। *Ak* IV. 2 a

*See Aam* pp 47—8.

[3] किं पनेत कम्म नामा नि? चेतना चेव, एकच्चे च चेतनासम्पयुत्ता धम्मा।

तत्थ चेतनाय कम्मभावे इमानि सुत्तानि—चेतनाहं भिक्खवे कम्मं वदामि, चेतयित्वा कम्मं करोति कायेन वाचाय मनसा [*Ang* III p. 415] . *Dhs A.* III. 115-6—चेतयित्वा कम्म करोतीति एत्थ यस्मा पुरिमचेतनाय चेतयित्वा सन्निट्ठानकम्म करोति। तस्मा चेतनापुब्बक कम्म, न चेतनासभावमेवाति चेतन अहं कम्म वदामीति अत्थो। अथवा समानकालत्तेपि कारणक्रिया पुब्बकाला विय वत्तु युत्ता। फलक्रिया च अपरकाला विय। यस्मा च चेतनाय चेतयित्वा कायवाचाहि चोपनक्रिय, मनसा च अभिज्झादिक्रिय करोति तस्मा तस्सा क्रियाय कारिक चेतन अहं कम्म वदामीति अत्थो। *A. Mūlaṭīkā*, p. 58.

वाक्स्वभावम्, आहोस्वित्कायादन्यद्यथा मनस्कर्म मनसोन्यदित्येतदा[ह]।
[Folios upto No 90 lost][१]

[ अभिधर्मदीपे विभाषाप्रभाया वृत्तौ चतुर्थाध्यायस्य प्रथम पाद ][२]

---

[१] Folios following this, upto No 90, are lost V supra, p 115, n 2 In these lost folios, the *Adv* might have discussed the following topics, which are dealt with in the corresponding *Akb* IV 2—30

(१) कायविज्ञप्ति (संस्थान कायविज्ञप्ति, न गति) ।

(२) वाग्विज्ञप्ति ।

(३) विज्ञप्त्यविज्ञप्त्याख्यकर्मणी ।

(४) कुशलाकुशलाव्याकृतकर्माणि ।

(५) त्रिविधाऽविज्ञप्ति ।

(६) त्रिविध सवर ।

(७) उपवासक, उपासकस्य, भिक्षुश्च ।

(८) अथैषा सवराणा केन क समन्वागत ?

(९) क कनमया विज्ञप्त्याऽविज्ञप्त्या वा कियन्त कालं समन्वागत ?

(१०) कोऽसमसवरो नाम ?

(११) अथैते सवरा कथ लभ्यन्त ?

(१२) प्रातिमोक्षसवर समादीयमान कियन्त काल समादातव्य ?

(१३) असवरस्य क कालनियम ?

(१४) अहारात्रं गृह्यमाण उपवास कथ गृहीतव्य ?

(१५) किमर्थं पुनरष्टाङ्गान्युपादीयन्त ?

(१६) कि सर्वस्यमुपवासकस्यैवास्यात आहोस्विदन्यस्यापि ?

[२] A major portion of the 1 *pāda* of this *Adhyāya* is lost

## द्वितीयपादः ।[1]

.. ...[III. B, 5. Fol 91 a][2] (1)परामयन्तीत्यपदिश्यते ।

[ 159 ] अन्नमत्यग्निशि(नि)र्दग्धं यथा स्थाली च संस्कृता ।
पापदृष्टेस्तथा शीलं शाठ्येर्ष्यादिहतात्मनः ॥

[ 160 ] संवृत्सद्दृष्ट्युपेतातो भिक्षुत्वं परमार्थतः ।
एकसम्पत्तु संवृत्या द्वयाभावे द्विधाऽपि न ॥

दृष्टिसम्पद्विशुद्धा खलु श[ी]लसम्पत् 'भिक्षुत्वं परमार्थतः' । अन्यतर-विकलस्तु संवृत्या भिक्षुर्भवति । (2)द्व्यङ्गविकलस्तु नापि संवृत्या नापि परमार्थत इति ।[2]

[3]यदि खलु विना संवरेणाष्टौ निकाया[4] न व्यवस्थाप्यन्ते कथं तर्हि

---

[1] The beginning portion of the II *pāda* is lost in the lost folios (V. supra, p 122 n 1)     [2] V infra, *Adv kārika* 169

[3] The problem under discussion is *upavāsa samvara* A question is raised, whether a layman *(upasaka)* practising the *upavāsa*, can be said to be in possession of the *upavasa samvara*, even without his declaration of its acceptance in a prescribed ceremonial form? The Kosakāra explains this —

किं खल्वयमुपवासकस्यैव आहोस्विदन्यस्यापि ? अन्यस्याप्युपवासोऽस्ति शरणत्वगतस्य न । अनुपवासकोऽपि यस्तमहोरात्रं बुद्धधर्मसंघान् शरणं गत्वोपवासं गृह्णाति तस्योत्पद्यते उपवाससंवरो नान्यथा । *Akb* iv 30 ab This raises a further question whether one becomes *Upavasaka* merely by the *Tri sarana gamana*? तत किं शरणगमनादेवोपवासको भवति ? भवतीति बहिर्देशिका । न विना संवरेणेति काश्मीरा । उपासकत्वोपगमात्संवृद्धिनस्तु भिक्षुवत् । उपासकत्वाभ्युपगमादस्योपवासकसंवरो जायते । न तु विना संवरेणोपवासकोऽस्ति । *Ibid* 30 cd

Cf त्रिशरणपरिग्रहात् पञ्चशिक्षापदपरिग्रहाच्चोपासकस्तथोपासिकेति द्विधा भेद । त्रिशरणपरिगृहीतमुपासकं म आचार्यो धारयतु । तथा त्रिशरणगतं पञ्च शिक्षापदपरिगृहीत-मुपासकं म आचार्यो धारयत्विति विनये द्विधा पाठात् । *Aaa* p 229

[4] The eight *nikāyas* refer to the eight kinds of the प्रातिमोक्षसंवर — भिक्षुसंवर, भिक्षुणीसंवर, शिक्षमाणसंवर, श्रामणेरसंवर, श्रामणेरिकासंवर, उपासकसंवर,

भगवतोक्तं —"एकदेशकारी, प्रदेशकारी, यद्भूयस्कारी, परिपूर्णकारी" इत्यत्रा व्ययमथा दृश्यते ?[1] कश्चित्खल्वनकार्यैकदेशविरतिक्षमो भवति। कश्चिद्वा घरसमग्र(प्र)द्वौ शी(3)त्यविरतिक्षम । इत्यतो भगवानकार्यैकदेशविरत्याऽप्यु

---

उपासिकासंवर and उपवासस्यसंवर। Of these the *upavasastha samvara* cons s s of e ght *angas* चत्वारि तावच्छीलाङ्गानि याव मृषावादविरति । एकमप्रमादाङ्ग मद्यपाना द्विरति । त्राणि व्रताङ्गानि यावदकालभोजनाद्विरति । But occord ng to the Va bha shikas it primarily means अकालभोजनविरति।—केचित्तु खल्वकालभोजनात प्रति विरतिमेवोपवास मन्यन्त । तस्य त्वङ्गान्यष्टाङ्गानीति । नृत्यगीतवादित्र गन्धमाल्यविलेपन च द्वय कृत्वा । एव तु सति सूत्रपाठो न यज्यते । *Akb* I 29 cd

[1] Cf सर्वे चेत्संवृता एकदेशकार्यादय कथम।

यदि सर्व एवोपासका उपासकसंवरस्था कथ भगवता एकदेशकारी परिपूर्णकारी चोपासक उक्त ?

तत्पालनात किल प्रोक्ता ।

यो हि यच्छिक्षापद पालयति स तत्कारी युक्त । सर्वे तु सम संवरस्था ।

इदमत्र सूत्र वर्तते । किमत्रो सूत्रम । उपासकत्वाभ्युपगमादेव संवरलाभो इति। यदि तर्हि विना संवरेणोपवासक स्यात विकलेन वा भिक्षुश्रामणेरावपि स्याताम । विनापि हि संवरेणोपवासक प्रज्ञप्तिनो न तु भिक्षुश्रामणेराविति ते त्वेतदिच्छन्ति काश्मीरा। *Akb* IV 31

The Kośakara in *Akb* IV 29 31 deals with the definition of an *upa saka* and the *upavasa samvara* For various views on this see *LVPAk* IV pp 70 ff

Also cf कित्तावता नु खो भन्ते उपासको होती ति ?

(१) यतो खो महानाम बुद्ध सरण गतो होति धम्म सरण गतो होति सघ सरण गतो होति एत्तावता खो महानाम उपासको होतीति। *Ang* IV p 220

(२) एसाह भगवन्त गोतम सरण गच्छामि धम्म च भिक्खु सघञ्च। उपासक म भव गोतमो धारेतु अज्जतग्गे पाणुपेत सरण गत ति। *Ang* I p 56

(३) तत्रहि अगहि समन्नागतो भिक्खवे उपोसथो उपवुत्थो महप्फलो होति महा निससो । इध भिक्खवे अरियसावको इति पटिसञ्चिक्खति यावजीव अरहन्तो पाणाति पात पहाय विहरन्ति अहम्पज्ज इमञ्च रत्ति इमञ्च दिवस पाणातिपात पहाय-पाणातिपाता पटिविरतो विहरामि। इमिना पठमेन अगेन समन्नागतो होति। अदिन्नादाना पटिविरतो होमि अब्रह्मचरिय पहाय मेथुना पटिविरतो मुसावादा पटिविरतो सुरामेरयमज्जपमादट्ठाना पटिविरतो एक भत्तिको रत्तूपरतो नच्चगीतवादितविसूकदस्सनमालागन्धविलेपनधारणमण्डनविभूसनट्ठाना पटिविरतो उच्चासयनमहासयनापटिविरतो होति। इध भिक्खवे अरियसावको सेनासह गतेन चेतसा विहरति इमिना नवमेन अगेन समन्नागतो होति। *Ang* IV pp 388 ff

पासकत्वं शास्ति। न हि सर्वशीलविकलः कश्चिच्छरणगमनेच्छामात्रकेणोपासको भवति षडङ्गोपधैरुद्धयङ्गवैकल्योपयोगवदिति ॥

अथ यदुक्तम्—"बुद्धं धर्मं संघं शरणं गच्छति" इति तत्क एते बुद्धादयः ?[१] तदिदमभिधीयते—

[ 161 ] विगतावरणे ज्ञा[(4)]ने बुद्धोक्तेर्मुख्यकल्पना ।
तदाश्रये फले चापि विज्ञेया गुणकल्पना ॥

द्विविध[ः] खलु बुद्धः संवृत्या परमार्थतश्च । तत्र परमार्थतो यथोक्तं शास्त्रे—"यो बुद्धं शरणं गच्छति किमसौ शरणं गच्छति ? तानेवासौ बुद्धक[ा]रकानशैक्षान्धर्माञ्छरणं गच्छति ।[२] ते हि बुद्धशब्दप्रवृत्तिनिमित्तचिह्नम् ।" इति। तेभ्योऽपि निराव[(5)]रणं ज्ञानं प्रधानं सर्वज्ञ[3] इति लोकप्रसिद्ध एष तावत् पारमार्थिको बुद्धः। संवृत्यापि 'तदाश्रये' द्वात्रिंशत्लक्षणैरशीत्या चानुव्यञ्जनैर्विराजिते रूपकायेऽपि बुद्धाख्येति[४]। तत्फले च बलवैशारद्यमहाकरुणादिषु[५] बुद्धोक्तिरिति ॥

---

[१] बुद्धसघकरान्धर्मानशैक्षानुभयाश्च स ।
निर्वाण चेति शरण यो याति शरणत्रयम् ॥ *Ak* IV 32

यो बुद्ध शरण गच्छति, अशैक्षानसौ बुद्धकारकान् धर्मान् शरण गच्छति । यद्यशैक्षा धर्मा एव बुद्ध कथ तथागतस्यान्तिके दुष्टचित्तरुधिरोत्पादनादानन्तर्यं भवति ? आश्रयविपादनात्तेऽपि विपादिता भवन्तीति वैभाषिका । शास्त्र तु नैव वाचकमशैक्षा धर्मा एव बुद्ध इति । किं तर्हि । बुद्धकारका इति । *Akb* IV 32

[२] Cf तथाहि त्राणार्थ शरणार्थो वर्ण्यते यश्च बुद्ध शरण गच्छति । सोऽशैक्षान् बुद्धकारकान्धर्मान शरण गच्छति । *Aaa* p 134

[3] Cf तत्र सर्वज्ञता बुद्धत्वम् । बुद्धकरका धर्मा सर्वाकारज्ञतालक्षणा धर्मा । *Aaa* p 110 Also cf य पन किञ्चि अत्थि ञेय्य नाम, सब्बस्सेव बुद्धत्ता विमोक्खन्तिकञाणवसेन बुद्धो । यस्मा वा चत्तारि सच्चानि अत्तना पि बुज्झि, अञ्ञे पि सत्ते बोधेसि तस्मा···बुद्धो । *Vm* VII 52 For a discussion on the *sarvajñatva* of Buddha, vide *Vm T* p 190, *Pramana vartikavritti*, I 30 35 and *Tattvasangraha*, pp 846 ff For a refutation of *sarvajñavāda*, see *Ślokavartika*, 2 110 143

[४] The Kosakāra does not hold this view —'रूपकायस्य पूर्वं पश्चाच्चाविशेषात् । *Akb* IV 34 'रूपकायस्य पूर्वं पश्चाच्चाविशेषादिति' किं ? न रूपकाय शरण गच्छन्तीति सम्बन्ध । यादृशो बोधिसत्त्वावस्थाया रूपकायस्तादृश पश्चादपीति । *Sakv* p 377

[५] यो बुद्ध शरण गच्छतीति सम्बन्ध । माऽस्यादनावणिकान् बुद्धधर्मानित्यपरे । *Akb* IV 34 See बोधिया बुद्धो ति कथा । *Kv* IV 6

[ 162 ] शाश्वतत्वशुभत्वाभ्यां सर्वाण(न)र्थनिवृत्तितः ।
मुख्यकल्पनया तद्बुद्ध(6)र्मो निर्वाणमुच्यते ॥[1]

नित्याविकृतस्वलक्षण(ण)धारणात्तत्प्राप्तानां चात्यन्तधारणे निर्वाणं पारमार्थिको धर्मः । गुणकल्पनया तु प्रत्येकबुद्धबोधिसत्त्वसन्तानिको मार्गः । त्रीणि च पिटकानि धर्मो निर्वाणप्रापकत्वात् ॥

[ 163 ] आर्याः शिष्यगुणाः संघस्तथैव परमार्थतः ।

नवानामशैक्षाणामष्टादशा(7)नां च शैक्षाणां[2] शिष्याणां सन्ताने यो मार्गः स पारमार्थिकः संघ इत्युच्यते । संवृत्या तु पृथग्जनकल्याणकभिक्षुसंघ इत्यपदिश्यते ।[3]

एतान्यो याति शरणं स याति शरणत्रयम् ॥

एतान्यथोक्तलक्षणान् बुद्धधर्मसंघान् शरणं गच्छति 'यो याति शरणत्रयम्' इति ॥[4]

---

[1] Cf धम्म ति परियत्तिधम्मेन सद्धिं नवविधम्पि लोकुत्तरधम्म । *Vm T* p 180

[2] 'अष्टादश शैक्षाः कतमे ? स्रोतआपत्तिफलसाक्षात्क्रियायै प्रतिपन्नकः । स्रोतआपन्नः । सकृदागामिफलसाक्षात्क्रियायै प्रतिपन्नकः । सकृदागामी । अनागामिफलसाक्षात्क्रियायै प्रतिपन्नकः । अनागामी । अर्हत्वफलसाक्षात्क्रियायै प्रतिपन्नकः । श्रद्धानुसारी । धर्मानुसारी । श्रद्धाधिमुक्तः । दृष्टिप्राप्तः । कुलंकुलः । एकवीचिकः । अन्तरापरिनिर्वायी । उपपद्यपरिनिर्वायी । साभिसंस्कारपरिनिर्वायी । अनभिसंस्कारपरिनिर्वायी । ऊर्ध्वस्रोताः । इतीमे अष्टादश शैक्षाः ।

नवाशैक्षाः कतमे ? परिहाणधर्मा । चेतनाधर्मा । अनुरक्षणाधर्मा । स्थिताकम्प्यः । प्रतिवेधनाभव्यः । अकोप्यधर्मा । चेतोविमुक्तः । प्रज्ञाविमुक्तः । उभयतोभागविमुक्तः । इतीमे नवाशैक्षा इति । *Sakv* pp 566-7

See *Vm* vii 93 *Asm* p 87 and *Puggala paññatti* chapter i

[3] Cf *Kv* xvii 6-9 —न वत्तब्बं सङ्घो दक्खिणं पटिग्गण्हातीति कथा नाम होति । तत्र येसं मग्गफलानेव सङ्घो, मग्गफलेहि अञ्ञो सङ्घो नाम नत्थि इति यसं लद्धि सेय्यथापि एतरहि महापुञ्ञवादीनं वेतुल्लकानं । न च मग्गफलानेव सङ्घो मग्गफलसमङ्गीनं पन एते य उपादाय पञ्ञत्ता अट्ठपुग्गला सङ्घो । *KvA* xvii 6

[4] Cf सङ्घो बुद्धसरणं गच्छन्तो किं सरणं गच्छति ? सरणगमनो गच्छति सबासवनिरोधधम्मं । सरणं सङ्घं गच्छति विरागं निरोधं निब्बानम् इति धम्मसरणगमनम् । सरणगमनो गच्छति सङ्घं सावकानं सेक्खासेक्खपत्तानं । इति सङ्घसरणगमनम् । *JpI* p 37

किं स्वभावानि पुनः शरणगमनानि? [8]वाग्विज्ञप्तितत्समुत्थधर्म-स्वभावानि ॥

कः पुनः शरणार्थः? त्राणार्थः शरणार्थः। तदाश्रयेण सर्वदुःखात्यन्तविमोक्षात्। उक्तं हि भगवता—

[1] "बहवः शरणं यान्ति पर्वतांश्च वनानि च।
आरामांश्चैत्यवृक्षांश्च मनुष्या भयतर्जिताः ॥
न चैतच्छरणं श्रेष्ठं नैतच्छरणमुत्तमम्।
नैतच्छरणमागम्य सर्वदुःखात्प्रमु[9]च्यते ॥
यस्तु बुद्धं च धर्मं च संघं च शरणं गतः।
चत्वारि चार्यसत्यानि पश्यति प्रज्ञया यदा ॥
दुःखं दुःखसमुत्पादं दुःखस्य समतिक्रमम्।
आर्यं चाष्टांगिकं मार्गं क्षेमं निर्वाणगामिनम् ॥
एतद्धि शरणं श्रेष्ठमेतच्छरणमुत्तमम्।
एतच्छरणमागम्य सर्वदुःखात्प्रमुच्यते ॥" इति।[1]

अत एव शरणगमनानि [III. A, 5. Fol. 91 b.] स[1]र्वसंवरसमादानेषु द्वारभूतानि, दृष्टिसंपन्नस्य तेषां प्ररोहात्।

किं पुनः कारणं काममिथ्याचाराद्देवोपासकस्य विरतिः शिक्षापदेषु व्यवस्थापिता न सर्वस्मादब्रह्मचर्यात्? अन्येभ्यश्च प्रकृतिसावद्येभ्यो मृषावाद एव शिक्षापदेषु व्यवस्थाप्यते, न पारुष्यादि? सर्वेभ्यश्च प्रतिपक्षे(क्षेप)ण-सावद्येभ्यः [2]मद्यपानादेव विरतिः शिक्षापदे व्यवस्थापितम्? तदुच्यते—

[164] मिथ्याचारः सतां गर्ह्यात्परत्राकरणाप्तितः।[2]

---

[1] Quoted in *Akb.* iv. 32.

Cf. बहुं वे सरणं यन्ति पब्बतानि वनानि च।
आरामरुक्खचेत्यानि मनुस्सा भयतज्जिता ॥
नेतं खो सरणं खेमं नेतं सरणमुत्तमं।
नेत सरणमागम्म सब्बदुक्खा पमुच्चति ॥
यो च बुद्धञ्च धम्मञ्च सङ्घञ्च सरण गतो।
चत्तारि अरियसच्चानि सम्मप्पञ्ञाय पस्सति ॥
दुक्खं दुक्खसमुप्पादं दुक्खस्स च अतिक्कमं।
अरियञ्चट्ठङ्गिकं मग्गं दुक्खूपसमगामिनं ॥
एतं खो सरणं खेमं एतं सरणमुत्तमं।
एतं सरणमागम्म सब्बदुक्खा पमुच्चति ॥ *Dhammapada*, xv. 10-14.

[2] Cf. मिथ्याचारातिगर्ह्यत्वात्सौकर्यादक्रियाप्तितः। *Ak.* iv. 33 ab.

पापिष्ठत्वान्मृषावादो मद्यपाणं(नं) स्मृतिक्षयात् ॥[1]

काममिथ्याचारो हि लोकेऽत्यर्थं गर्हितः। परेषां दारोपघातादापायिकत्वाच्च। न तथाऽब्रह्मचर्यम्। सुकरा च गृहस्थस्य काममिथ्याचारविरतिः, दुष्करा त्वब्रह्मचर्यात्। आर्यश्चाकरणसंवरं काममिथ्याचारादेव जन्मान्तरितोऽपि लभते न त्वब्रह्मचर्यात्।

मृषावादोऽपि भगवता पापिष्ठत्वाद्राहुलमुद्दिश्य परमेनादरेणोक्तः—"यस्य राहुल मृषावादे नास्ति लज्जा नास्ति कौकृत्यं नाहं तस्य किञ्चिदकरणीयं वदामि" इति।[2]

मद्यपानेऽपि स्मृतिलोपो भवति, सर्वशिक्षापदलोभो भवतीत्यतः प्रतिक्षेपणसावद्यमपि सन्मद्यपाणं(नं) कुशाग्रेणापि भगवता नाभ्यनुज्ञातम् ॥[3]

इदमिदानीमुच्यताम्। य एते त्रयः प्रातिमोक्षध्यानानास्रवसंवरा[4] किमेषां यत एको लभ्यते ततः शेषा अपीति? ब्रूमः—

[165] सर्वेभ्यो वर्तमानेभ्यो द्विविधेभ्योऽपि कामजः[1]।

---

After this, the *Akb* (iv 33 cd) discusses अथ कथं भार्यायुक्तस्य उपासकस्य संवरक्षोभो न भवति? This topic is not discussed in *Adv*

[1] Cf मृषावादप्रसंगाच्च सर्वशिक्षाव्यतिक्रमे। *Ak.* iv 34 ab

[2] Cf एवमेव खो राहुल यस्स कस्सचि सम्पजानमुसावादे नत्थि लज्जा नाहं तस्स किञ्चि पापं अकरणीयं ति वदामि। *M sutta* 62.

[3] Cf प्रतिक्षेपणसावद्यान्मद्यादेवाप्रगुप्तये। *Ak* iv 34 cd

The Kośakāra discusses one more topic—' कथं पुनर्मद्यपानं प्रतिक्षेपणसावद्यं गम्यते? There are two views about it— प्रकृतिसावद्यं मद्यमिति विनयधराः। नत्याभिधार्मिकाः। *Akb* iv. 34 cd See *Aaa* p 407

[4] संवरकर्म कतमत्। प्रातिमोक्षसंवरसंगृहीतं कर्म ध्यानसंवरसंगृहीतं कर्म अनास्रवसंवरसंगृहीतं कर्म च। प्रातिमोक्षसंवरसंगृहीतं कर्म कतमत्। भिक्षुसंवरः भिक्षुणीसंवरः शिक्षमाणसंवरः श्रामणेरसंवरः श्रामणेरीसंवरः उपासकसंवरः उपासिकासंवरः उपवाससंवरश्च।

ध्यानसंवरसंगृहीतं कर्म कतमत्। दौःशील्यसमुत्थापकानां क्लेशानां बीजोपघाते सति कामेभ्यो वीतरागस्य या विरतिः। प्रथम॰ द्वितीय॰ तृतीयध्यानवीतरागस्य या विरतिः।

अनास्रवसंवरसंगृहीतं कर्म कतमत्। सत्यदर्शनेन अनास्रवमनस्कारबलेन प्रतिलब्धा अनास्रवा विरतिः। *Asm* pp 57 B See *Aam* pp 48-9 *Vm* i 18

[1] Cf सर्वोभयेभ्यः कामाप्तो वर्तमानेभ्य आप्यते। *Ak.* iv 35 ab

प्रा(5)तिमोक्षसंवरः खलु सर्वेभ्यो मौलप्रयोगपृष्ठेभ्यो वर्तमानेभ्यः स्कन्धायतनधातुभ्यः सत्त्वाधिष्ठानप्रवृत्तत्वात्, नातीतानागतेभ्यस्तेषामसत्त्वसंख्यातत्वाल्लभ्यते। 'द्विविधेभ्योऽपि' सत्त्वासत्त्वाख्येभ्यः, प्रकृतिप्रतिक्षेपणसावद्येभ्यश्च।

त्रिकालेभ्यस्तु मौलेभ्यो लभ्येते भावनामयौ[1] ॥

[2]एतौ हि मौलेभ्य (6)एव कर्मपथेभ्यो लभ्येते न प्रयोगपृष्ठेभ्यो नापि प्रज्ञप्तिसावद्येभ्यः, सर्वकालेभ्यश्च स्कन्धायतनधातुभ्यो लभ्येतेऽतीतानागतेभ्योऽपि।

चतुष्कोटिका चात्र भवति। "सन्ति ते स्कन्धायतनधातवो येभ्यः प्रातिमोक्षसंवरो लभ्यते न ध्यानानास्रवसंवरौ" इति विस्तरः। प्रथमा कोटि(टिः)—प्रत्युत्पन्नेभ्यः (7)सामन्तकपृष्ठेभ्यः प्रतिक्षेपणसावद्याच्च। द्वितीया—अतीतानागतेभ्यो मौलेभ्यः कर्मपथेभ्यः। तृतीया—प्रत्युत्पन्नेभ्यः मौलेभ्यः कर्मपथेभ्यः। चतुर्थी—अतीतानागतेभ्यः सामन्तकपृष्ठेभ्य इति[2] ॥

किं पुनरिमौ संवरासंवरौ सर्वसत्त्वेभ्य एव लभ्येते? सर्वाङ्गेभ्यः सर्वकारणैश्च? अथास्ति कश्चिद्भेदः? (8)तत्र तावदवश्यं लभ(भ्य)ते—

[ 166 ] सर्वेभ्यः सत्त्वजातिभ्यः संवरो वाङ्गकारणैः।[3]
सर्वेभ्यो संवराङ्गेभ्यः सत्त्वेभ्यश्च न कारणैः ॥

सर्वसत्त्वेभ्यः खलु संवरो लभ्यते न केभ्यश्चित्। अङ्गेभ्यस्तु विभाषा कश्चित्सर्वेभ्यो लभ्यते भिक्षुसंवरः। कश्चिच्चतुर्भ्यः। ततोऽन्यः।[4] कर्मपथा हि संवराभ्याङ्गानि। कारणैरपि (9)केनचित्पर्यायेण सर्वैः, केण(न)चिदेकेन।

---

[1] Cf मौलेभ्य सर्वकालेभ्यो ध्यानानास्रवसंवरौ। *Ak.* IV. 35 cd.

[2–2] This passage (from एतौ हि मौलेभ्य एव to सामन्तकपृष्ठेभ्य इति) is identical with *Akb* IV. 35 After this, the *Akb.* has:—न तु संवरलाभकाले वर्तमाना. कर्मपथा. सन्तीति वर्तमानाधिष्ठितेभ्य इति वक्तव्यम्। अनागतानामेव सवरण युज्यते नातीतवर्तमानानाम्। See *Sakv.* pp. 382-3. Cf. *KvA.* xx. 1.

[3] Cf. संवरः सर्वसत्त्वेभ्यो विभाषा त्वङ्गकारणैः। *Ak.* IV. 36 ab.

[4] 'कश्चित्सर्वेभ्य.' इति विस्तरः। 'भिक्षुसंवर.' सर्वेभ्यः कर्मपथेभ्यो लभ्यते। वर्जनीया इत्यर्थः। सर्वकर्मपथा 'कश्चिच्चतुर्भ्य'। ततोऽन्य।' ततो भिक्षुसवरादन्य. सवरः श्रामणेरादिसवरश्चतुर्भ्य एव 'अङ्गेभ्यो लभ्यते'। कायिकेभ्य. प्राणातिपातादिभ्यस्त्रिभ्यो वाचिकाच्च मृषावादात्। *Sakv.* p. 383.

[१]कथं तावत्सर्वैर्यदलोभाद्वेषामोहाः कारणानीष्यन्ते ? कथमेकेन यदि मृदुमध्याधिमात्राणि चित्तानि कारणानीष्यन्ते ? पश्चिमेन पर्यायेण नियमो च्यते। अस्थि(स्ति) सवरस्थायी सर्वसत्त्वेषु संवृतो न सर्वाङ्गैर्न सर्वकारणैर्यो मृदुना चित्तेन [III B, 6 Fol 92 a][(1)] मध्येनाधिमात्रेण वा उपासकोपवास श्रामने(णे)रसंवरं समादत्ते। अस्ति सर्वसत्त्वेषु संवृतः सर्वाङ्गैश्च, न तु सर्वकारणैर्यो मृदुना चित्तेन मध्येनाधिमात्रेण वा भिक्षुसंवरं समादत्ते। अस्ति सर्वसत्त्वेषु सर्वाङ्गै सर्वकारणैश्च यस्त्रिविधेन चित्तेन त्रीन्सव[(2)]रान् समादत्ते। अस्ति सर्वसत्त्वेषु सर्वकारणैश्च न तु सर्वाङ्गैर्य उपासकोपवास श्रामने(णे)रसंवरान्मृदुमध्याधिमात्रैश्चित्तै. समादत्ते। यस्तु न सर्वसत्त्वेषु स्यादीदृशो नास्ति यस्मात्सर्वसत्त्वानुगतकल्याणाशये स्थित. संवरं प्रतिलभते नान्यथा, पापाशयस्यानुपरतत्वात्।

पञ्चनियमान(न्) कुर्व[(3)]न् प्रातिमोक्षसंवरं लभते। सत्त्वाङ्गदेष(श)कालसमयनियमान्(:)—अमुष्मात्सत्त्वाद्विरमामीति सत्त्वनियमः। अमुष्मादङ्गादित्यङ्गनियम। अमुष्मिन्देश इति देशनियमः। मासाद्यावदिति कालनियम। अन्यत्र युद्धादिति समयनियमः। सुचरितमात्रं तु तत्स्यादेवं गृह्णतो न संवरः।[१]

[(4)]कथमशक्येभ्यः संवरलाभ.? सर्वसत्त्वजीवितानुपघाताभ्याशयेन (ना)भ्युपगमात्।[२] उक्त यथा संवरो लभ्यते॥

असंवरोऽपि सर्वसत्त्वेभ्यः सर्वकर्मपथेभ्यश्च न तु [सर्व]कारणैः, युगपन्मृद्वादिचित्ताभावात्।[३]

[४]के पुनरसांवरिका.? औरभ्रिका कौक्कुटिका. सौकरिका शाकु-

---

[१–१] This whole passage (from कथं तावत्सर्वै to एवं गृह्णतो न संवर।) is almost identical with *Akb* iv 36 ab See *Sakv* p 383

[२] After this, the Kośakara discusses one more point —यदि पुन शक्यस्य एव संवरो लभते यथाशक्यमुक्त स्यात। शक्याशक्यानामितरेतरसंचारात। एवं च सति विनापि लाभत्यागकारणाभ्या संवरस्य लाभत्यागी स्यातामिति वैभाषिका। नैव भविष्यति। *Akb* iv 36 ab See *Sakv* p 384

[३] Cf असंवरस्तु सर्वेभ्य सर्वाङ्गेभ्यो न कारणै। *Ak* iv 36 cd.

[४] This whole passage (upto इत्यसांवरिका) is almost identical with *Akb* iv 36 cd.Cf इध भिक्खवे एकच्चो पुग्गलो ओरब्भिको होति सूकरिको साकुन्तिको लुद्दो मच्छघातको चोरो चोरघातको बन्धनागारिको ये वा पनञ्ञे पि केचि कुरूरकम्मन्ता। एवं खो भिक्खवे पुग्गलो परन्तपो होति परपरितापनानुयोगमनुयुत्तो। *Ang* ii. p 207

Also cf असंवरं कर्म कतमत्। अभिसंमता वा तत्कर्मसमादानतो वा तत्कर्म व्यापारनिश्चय। स पुनरसंवरा कतम। औरभ्रिका कौक्कुटिका… । *Asm* p 58.

न्तिका मात्सिका मृगलुब्धकाश्चौ(5)राः वध्यघातका बन्धनपालका नागबन्धा श्वपाका वागुरिकाश्च। राजानो दण्डनेतारो व्यावहारिकाश्च नीतिच्चलिता असांवरिकाः। असंवरे भा(भ)वाः, असंवरो वा एषां विद्यत इत्यसांवरिकाः ॥[1]

उक्तमिदं येभ्यः [अ]संवरो लभ्यते। कथं तु तल्लाभ इति नोक्तं तदा रभ्यते—

[167] क्रियया[ऽ]संवरप्राप्तिः स(5)ह्याभ्युपगमेन वा।
अविज्ञप्तिरतोऽन्यस्याः क्षेत्राङ्गादिविशेषतः ॥[2]

[3]द्वाभ्यां कारणाभ्यामसंवरो लभ्यते। क्रियया ऽभ्युपगमेन वा। क्रियया तत्कुलीनतत्कर्माभ्युपगमात्। अतत्कुलीनैर्वयमप्यनया जीविकया जीविष्याम इति। शेषाऽविज्ञप्तिलाभस्तु क्षे(4)त्राङ्गविशेषादिति। क्षेत्रं वा तद्रूपं भवति यथारामादिप्रदानमात्रेणाविज्ञप्तिरुत्पद्यते। यथौपधिकेषु पुण्यक्रियावस्तुषु। आदरेण वा समादत्ते। बुद्धमवन्दित्वा न भोक्ष्य इति। मासार्धमासभक्तानि वा नित्यं करिष्यामीत्येवमादि। आदरेण वा तद्रूपेण क्रियामीहते कुशलामकुशलां वा यतोऽस्या(6)विज्ञप्तिरुत्पद्यते।

उक्तमेतद्यथा संवरासंवराणां प्रतिलम्भः[3] ॥

त्याग इदानीं वक्तव्यः। तत्र तावत्—

[168] कामाप्तसंवरत्यागः शिक्षाणि(नि)क्षेपणादिभिः।
पतनीयैरपीत्येके तन्नेत्यन्ये त्वयोगतः ॥[4]

---

[1] After this passage, the Kośakāra discusses the following :—

युक्तस्तावत् सवरस्य सर्वसत्त्वेभ्यो लाभः सर्वसत्त्वहिताध्याशयेन ग्रहणात्। औरभ्रिकादीनां तु मातापितृदारादिष्वविपन्नाशयानां जीवितहेतोरप्यहन्तुकामानां कथमसंवरः सर्वसत्त्वेभ्यो युज्यते ?……सर्वथा नास्ति विकल. प्रादेशिकश्चासंवरिक इति वैभाषिकाः। यथाभ्युपगमं विकलोऽपि स्यात् प्रादेशिकोऽप्यसंवरः संवरश्चान्यत्राष्टविधादिति सौत्रान्तिकाः। तन्मात्रशीलत्वे शीलप्रतिबन्धात्। *Akb*. iv. 36 cd.

[2] Cf. असंवरस्य क्रियया लाभोऽभ्युपगमेन वा।
शेषा विज्ञप्तिलाभस्तु क्षेत्रादानादरेहणात् ॥ *Ak*. iv. 37.

[3–3] This whole passage (from द्वाभ्यां कारणाभ्यां to प्रतिलम्भः) is almost identical with *Akb* iv. 37.

[4] Cf. प्रातिमोक्षदमत्यागः शिक्षानिक्षेपणाच्च्युतेः।
उभयव्यञ्जनोत्पत्तेर्मूलच्छेदान्निशात्ययात् ॥ *Ak*. iv. 38.

कामाप्तस्याष्टप्रकारसंवरस्य[१] पञ्चभि॰ कारणैस्त्याग॰। शिक्षानिक्षेपणनिकायसभागत्यागोभयव्यञ्जनोत्पा[(4)]दकुशलसमुच्छेदेभ्यो निशात्ययेण(ना) ष्टमस्य। तान्येतान्यभिसमस्य पञ्च भवन्ति।

किं पुन॰ कारणमेभिस्त्यागो भवति? समा[दा]नविरुद्धविज्ञप्त्युत्पादादाश्रयत्यागादाश्रयकोपनान्निदानच्छेदात्तावदेवाक्षेपाच्च।

अन्ये पुनराहुः—चतुर्णां पतनीयाणा(ना)म[२]न्यतमेन भिक्षुश्रामणेरसंवरत्यागः।"[३] 'तन्न' इति, 'अयोगतः'।

कः पुनर[III A, 6 Fol 92 b][(1)] योग ?

[ 169 ] अयोगा(गो) नांशुनिर्ध्वंसात्पटद्रव्यं निनश्यति।

न ह्यवयवनाशाद्‌वयविविनाशो भवति। अवयविरूपश्च प्रातिमोक्षसंवरः। तस्यावयवक्षोभाच्छिद्रत्वं भवति मालिन्यं च।[४] यथोक्तं भगवता—"दुःशीलो भवति पापधर्मा।"[५]

[१] This refers to the eight kinds of *Pratimoksha samvara* Vide supra p 128 n. 4

[२] These are the four *Parajikā dhamma* of the Sthaviravāda Vinaya

[३] Cf पतनीयेन चैकेषां। *Ak.* iv 39 a

गमिकस्य यथोक्तैः पञ्चभिः कारणैः पतनीयेन चेति। पतन्त्यनेनेति पतनीयम्। तच्चतुर्विधम्। अब्रह्मचर्यम्। यथोक्तप्रमाणमदत्तादानम्। मनुष्यवधः। उत्तरिमनुष्यधर्ममृषावादश्चेति। *Sakv* p 386

[४] Cf धनर्णवत्तु काश्मीरैरापन्नस्येष्यते द्वयम्। *Ak.* iv 39 cd

काश्मीरास्तु सर्वे वैभाषिका एवमिच्छन्ति। न मौलाप्त्यापत्तिमात्रेणास्ति भिक्षुसंवरत्यागः। किं कारणम्। न ह्येकदेशकोपात्सर्वसंवरत्यागो युक्त इति। नैव चापन्नस्यापत्तिमात्रेणास्ति शास्त्रेण। किं तर्हि? द्वयमस्य भवति शीलं दौःशील्यं च। यथा धनवांश्च स्यादृणवांश्च। आविष्कृतायां तु तस्यामापत्तौ शीलवान् भवति न दुःशीलो यथा ऋणं दापयित्वा धनवान् भवति न ऋणवानिति। *Akb* iv 39 cd

धनर्णवत् काश्मीरैरापन्नस्येष्यते। आगमादुपपत्तेश्च। तत्रागमः। विनय उक्तम्—'दुःशीलस्य भिक्षुर्भिक्षुणीमनुशास्ति, यथापत्तिमापद्यते' इति। आपन्नापत्तिको हि भिक्षुर्दुःशील उच्यते। नाभिक्षुरागमिष्यति। तस्मादिदं [illegible] वक्तव्यम्—[illegible] दुःशीलस्यापि यथा भिक्षुभाव। [illegible] इति। युक्तिरपि 'न ह्येकदेशकोपात्सर्वसंवरत्यागो युक्त' इति। न मौलाप्त्यापत्तिमात्रेणास्ति [illegible]। *Sakv* p 3[illegible]

[५] See *Śiksh* pp. 67 f

सूत्रविरोधादयुक्तमिति चे[दत्रोप]दिशन्ति—

सूत्रे ध्वंसोक्तिरन्यार्था यथेर्ष्याशठनादिषु ॥

भगवतात्र (2)"अभिक्षुर्भवति" इति शासनस्थित्यर्थं दुर्वृत्तविनेयावसादनार्थं चोक्तम् । यथा—"ईर्ष्यिको भवति मत्सरी शठो मायावी मिथ्यादृष्टिरित्येवमादिदोषयुक्तः कशम्बकजातीयः[१] पापभिक्षुर्णि(र्नि)र्वासयितव्यः ।"[२] न च चित्ताविदूषणादभिक्षुत्वं भवति विनेयशासनार्थतत्त्व[विद्]भिरित्युक्तम् ।[३] तद्वदत्रापि द्रष्टव्यमिति ।

तस्मात्पूर्वोक्तलक्षण [४]एव भिक्षुर्ण(र्न) (3)यथाह कोशकारः ।[५]

---

[१] अन्येषामपि स्वदोषोपादानात् कसम्बकजाताः । *Aaa* p 259.

[२] Cf सवासाय विजानाथ पापिच्छो कोधनो इति ।
मक्खी थम्भी पलासी च इस्सुकी मच्छरी सठो ॥
सब्बे समग्गा हुत्वान अभिनिब्बिज्जयाथ नं ।
कारण्डव निद्धमथ कसम्बुं अपकस्सथ ॥ *Ang* IV. p. 172

[३] For an allied controversy, see *Dhs A* III 123-131 —सो [वितण्डवादी] एव पुच्छितब्बो—'सपजानमुसावादे पन किं होती' ति ? जानन्तो सपजानमुसावादे दुक्कट होती' ति वक्खति । ततो वत्तब्बो 'विनयस्स द्वे मूलानि—कायो च वाचा च, सम्मासम्बुद्धेन हि सब्बापत्तियो इमेसु येव द्वीसु द्वारेसु पञ्ञत्ता, मनोद्वारे आपत्तिपञ्ञापन नाम नत्थि । त्व अतिविय पकतञ्ञू, यो सत्थारा अपञ्ञत्ते ठाने आपत्तिं पञ्ञापेसि, सम्मासम्बुद्ध अब्भाचिक्खसि, जिनचक्क पहरसी' ति··· । *Dhs A* III 130.

[४] V supra, *Ad kārikā* 160

[५] Cf. यर्तहि भगवतोक्तम्—"भिक्षुर्भवत्यश्रमणो अशाक्यपुत्रीयो ध्वस्यते भिक्षुभावात्" । कतमस्य भवति श्रामण्य ध्वस्त पतित पराजितमिति । परमार्थभिक्षुत्व सन्धायं तदुक्तम् । इदमतिसाहस वर्तते । किमत्रातिसाहसम् । यत् भगवता नीतार्थं पुनरन्यथा नीयते । दौःशील्याय च बहुक्लेशेभ्य प्रत्यया दीयन्ते । कथमेतन्नीतार्थम् । एष हि विनये निर्देश—"चतुर्विधो भिक्षुः···अस्मिंस्त्वर्थे ज्ञप्तिचतुर्थकर्मोपसंपन्नो भिक्षु." इति । न चासौ पूर्वं परमार्थभिक्षुरासीद्यत पश्चादभिक्षुर्भवेत् ।

यच्चोक्तमेकदेशक्षोभादिति । अत्र शास्त्रैव दत्तोऽनुयोगस्तद्यथा "तालो मस्तकच्छिन्नोऽभव्योऽङ्कुरितत्वाय, अभव्यो विरूढिं वृद्धिं विपुलतामात्तुम्" इत्युपमा कुर्वता । क पुनरुपमार्थं । एवमेकदेशस्यापि मूलभूतस्य च्छेदादभव्य. सवरशेषो विरोढुमिति ।···शास्त्रा य चाधिकृत्योक्तम्—

नाशयत कारण्डवकं कशम्बकमपकर्षत ।
अथोत्प्लाविन वाहयत अभिक्षुं भिक्षुवादिनम् ॥

[ 170 ] सद्धर्मान्तर्द्धितोऽन्ये[१]ऽन्ये नापूर्वाप्रतिलम्भतः ।

अन्ये पुनर्ब्रुवते—सद्धर्मान्तर्धानेऽपि संवरस्यागो भवति । तत्तु नैवम् । यस्मादपूर्वस्तदा नोत्पद्यते । उत्पन्नस्तु यथोक्तैरेव कारणैर्विनश्यति ॥

अथ ध्यानानास्रवसंवरयोस्त्यागः कथम् ? तदिदमपदिश्यते—

भूसंचारेण हान्या च त्यज्यते ध्यानजं शुभम्[२] ॥

स(4)र्वमेव खलु ध्यानाप्तं कुशलं द्वाभ्यां कारणाभ्यां त्यज्यते । उपपत्तितो वा भूमिसंचारादूर्ध्वं वाऽधो वा । परिहाणितो वा । समापत्तेर्निकायसभागत्यागाच्चेति ॥[3]

[ 171 ] तथाऽऽरूप्याप्तमार्यन्तु फलाप्त्यक्षविहानिभिः ।[४]

[५]यथैव रूपाप्तं कुशलं भूमिसंचारहाणि(नि)भ्यां त्यज्यते तथैवारूप्याप्तम् । आर्यं तु कुशलं त्रिभिः कारणैस्त्यज्यते । (4)फलप्राप्तितः पूर्वको मार्गस्त्यज्यते ।[६]

---

इति तस्य कीदृशो भिक्षुभाव ? यादृशस्तादृशोऽस्तु अस्ति तु भिक्षुभावः ।···यदि हि दौःशील्यादि भिक्षुः स्यात्, शिक्षादत्तको न स्यात् । न वयं ब्रूम सहाध्यापत्त्या सर्वः पाराजिक इति । यस्तु पाराजिकः सोऽवश्यमभिक्षुः । कश्चित्तु सन्तानविशेषान्न पाराजिक एकचित्ताप्यप्रतिच्छादनादिति व्यवस्थापित धर्मस्वामिना । यदि तर्हि पाराजिको न भिक्षुः किं पुनर्न प्रव्राज्यते ?···कश्चायमनर्थे निर्बन्धो यदसौ तथाभूतोऽपि भिक्षुर्भमोऽस्तु तस्मै तादृशाय भिक्षुत्वाय । *Akb* IV 39 cd

See *Aaa.* p 456

[१] Cf सद्धर्मान्तर्द्धितोऽपरे ।

सद्धर्मस्यान्तर्द्धानादित्यपरे । यस्मादन्तर्हिते सद्धर्मे सर्वशिक्षासीमाकर्मान्ता प्रतिप्रस्रभ्यन्त इति ।···सद्धर्मान्तर्द्धाने तु विनयकर्माभावादपूर्वसंवरलाभो नास्ति । लब्धस्य तु नास्ति त्याग । *Akb.* IV 39a

[२] Cf. भूमिसंचारहानिभ्यां ध्यानाप्तं त्यज्यते शुभम् । *Ak.* IV 40ab.

[3] निकायसभागत्यागाच्च किञ्चिदिति । निर्वेधभागीय यत् पृथग्जनावस्थायामुत्पादितं यावत्क्षान्तिरिति । तदसत्यपि भूमिसंचारे निकायसभागत्यागेन त्यज्यते । यदा कामधातौ मृत्वा तत्रैवोपपद्यते । *Sakv.* p. 387

[४] Cf. तथाऽऽरूप्याप्तमार्यन्तु फलाप्त्युत्पत्तिहानिभिः । *Ak.* IV. 40 cd.

[५] This passage (from यथैव रूपाप्त to तावत्संवरस्त्यज्यते) is almost identical with *Akb* IV 40 cd.

[६] पूर्वको मार्ग इति । प्रयोगानन्तर्यविमुक्तिमार्गस्वभावः प्रतिपन्नकमार्ग । *Sakv.* p 388.

अक्षोत्तापनेन मृद्विन्द्रियमार्गः । परिहाणित उत्तरो मार्गः । फलं फलविशिष्टो वा ।[१] एवं तावत्संवरस्त्यज्यते ।

असंवरो दमप्राप्तिर्जीवितोत्सर्जण(ना)दिभिः ॥[२]

[३]त्रिभिः कारणैरसंवरच्छेदः । संवरप्राप्तितः । यदि संवरं समापद्यते ध्यानसंवरं वा प्रतिलभते हेतुप्रत्ययबलेन (6)समाधिलाभात्तेनासंवरस्त्याज्यते । प्रतिद्वन्द्वबलीयस्त्वात् । मरणेन चाश्रयत्यागात् । द्विव्यञ्जनोत्पादेन चाश्रयविकोपनात् । शस्त्रजालत्यागेऽप्यकरणाशयतः संवरमन्तरेणासंवरच्छेदो नास्ति । निदानपरिवर्जणे(ने)न प्रवृद्धरोगानिवृत्तिवत् ॥[३]

अथ संवरासंवरविनिर्मुक्ता कथमविज्ञप्तिस्त्यज्यते ? तदुच्यते—

[ 172 ] (7)चित्तवेगादिविच्छेदैरविज्ञप्तिस्तु मध्यमा ।[४]

[५]येण(न) खल्वसौ प्रमादक्लेशवेगेणा(ना)विज्ञप्तिराक्षिप्ता तस्य विच्छेदात्सापि विच्छिद्यन्ते(ते), कुम्भकारचक्रगतिवत् । समादानत्यागादपि विच्छिद्यते । क्रियाविच्छेदादपि विच्छिद्यते । चैत्यविहारक्षेत्रादेरप्यर्थस्य विच्छेदाद्विच्छिद्यते । आयुषोऽपि कुशलमूलानामपि विच्छेदाद्वि(8)च्छिद्यते ।[५]

कामाप्तं कुशलं नाम त्रिभिर्मूलच्छिदादिभिः ॥[६]

कामावचरं पुनः कुशलमरूपस्वभावं द्वाभ्यां कारणाभ्यां त्यज्यते । कुशलमूलसमुच्छेदात्, रूपारूप्यधातूपपत्तितश्च ।

[ 173 ] प्रतिपक्षोदयात्क्लिष्टं त्रिधात्वाप्तं विहीयते ।[७]

---

[१] फलं फलविशिष्टो वेति । उत्तरो मार्गोऽधिकृतः । तद्यथाऽनागामी यदनागामीफलात् परिहीयते, तेनानागामीफलमुत्तरो मार्गस्त्यज्यते । यदि त्वनागामी द्वितीयं ध्यानं लभते, तस्माच्च परिहीयते, स तस्य फलविशिष्टो मार्गो द्वितीयध्यानभूमिकस्त्यज्यते । *Ibid*

[२] Cf असंवरः संवराप्तिमृत्युद्विव्यञ्जनोदयैः । *Ak* IV. 41 ab

[३–३] This whole passage is almost identical with *Akb.* IV 41 b After this, the *Akb* has — य आवारिकं उपवासं गृह्णाति किमसौ तस्मात्संवरात्पुनरसंवरं गच्छत्याहोस्वित्नैव संवरं नासंवरम् ? असंवरमित्येके । त्यागाशयस्यानात्यन्तिकत्वात् । प्रदीप्त इवाय पिण्ड पुन. श्यामतां नाप्रयुज्यमानो गच्छतीत्यपरे ।

[४] Cf. वेगादानक्रियार्थायुर्मूलच्छेदैस्तु मध्यमा । *Ak* IV 41 cd

[५–५] This passage is almost identical with *Akb* IV 41 cd.

[६] Cf. कामाप्तं कुशलाख्यं मूलच्छेदोर्ध्वजन्मतः । *Ak* IV. 42 ab

[७] Cf प्रतिपक्षोदयात् क्लिष्टमरूपन्तु विहीयते । *Ak.* IV 42 cd

क्लिष्टं त्वरूपस्वभावं सर्वमेव प्रतिपक्षोदयाद्धिहीयते। यस्योपक्लेशप्रकारस्य यः प्रहाण(१)मार्गः, तेनासौ सपरिवारः परित्यज्यते। नान्यथा॥

अथ केषां सत्त्वानामसंवरो भवति केषां संवरः? तदपदिश्यते—

मर्त्ये कामेषु रूपे द्वावे(वे)को रूपिषु लाभतः[1] ॥

कामेषु खलु सर्वशण्ढपण्डकादीनि हित्वा [2]कुरूंश्च हित्वा। देवानामपि संवरः।[3] इत्यतो गतिद्वये संवरासंवरौ विद्येते। नान्यत्रेति॥

कर्माधिकारादिदानीं सू[III B 7 Fol 93 a](१)त्रोक्तोद्दिष्टानां कर्मा(र्म)णां निर्देशं करिष्यामः। उक्तं हि सूत्रे—"त्रीणि कर्माणि कुशलमकुशलमव्याकृतं च।" तेषां लक्षणमिदमुच्यते—

[ 174 ] यदिष्टफलदं कर्म कुशलं तदुदाहृतम्।
विपर्ययेणाकुशलमव्याकृतमतोऽन्यथा ॥[4]

यत्खल्विष्टविपाकं नि(नि)र्वाणप्रा[पकं] चे(च) दुःखपरित्राणात्, तत्कालमत्यन्तं वा, तत्कुशलम्। निरुक्तिरपीयम्। नि(२)रवद्यदेवमनुष्यस्त्रीरूपनिर्वर्तणा(ना)च्चित्रक्षिप्तचित्रकररूपनिर्वर्तण(न)वत्। कुशलमिव कुशलमौपमिकोऽयं शब्दनिर्देशः। तद्यथा शिक्षितः पुरुषः कुशानक्षतहस्तो लुनाति स कुशल इति निरुच्यते, तद्वदन्यामपि क्रियामविष्टतां संपादयन् कुशल

---

[1] Cf नृणामसंवरो हित्वा शण्ढपण्डद्विधाकृतीन्।
कुरूंश्च संवरोऽप्येवं देवानां च नृणां त्रयः ॥ *Ak.* iv 43

[2] The Kośakāra discusses this point in detail —शण्ढादीनां संवरो नास्तीति कथं गम्यते? क्लेशस्याधिमात्रतया प्रतिसंख्यानस्यासामर्थ्यात् तीव्रस्य च ह्रीव्यपत्राप्यस्याभावात् प्रतिद्वन्द्वभावात् समाधानसमाध्यभावात्। *Akb* iv 43 b See *Asm* p 57 V supra p 47 n 2

[3] प्रातिमोक्षसंवरो मनुष्याणामेव न देवानाम्। असंवरस्तु। ध्यानानास्रवसंवरौ तु हेतुरूपसमभावनायामसम्भवम्। *Sakv* p 389 For a controversy on this see संवरकथा *Kv* iii 10—इमानि संवरकथा नाम होति। तत्र यस्स तावतिंसे देवे उपादाय तदुत्तरिदेवेसु यस्मा ते पञ्चवेरानि न समाचरन्ति तस्मा संवरो अत्थी ति लद्धि ते सन्धाय पुच्छा सकवादिस्स। यस्मा संवरो नाम संवरितब्बे असंवरे सति होति तस्मा असंवरपुच्छा सकवादिस्स। सब्बेसु पाणातिपातादीन अभावेन पटिक्खेपो इतरस्स *KvA* iii 10 Also cf ब्रह्मचरियकथा *Kv* i 3

[4] Cf अथ यस्मिन्नेव कर्मनिर्देशाधिकारे सूत्रोद्दिष्टानां कर्मणां निर्देश आरभ्यते।
क्षेमाक्षेमेतरत्कर्म कुशलाकुशलेतरत्। *Ak.* iv 45 ab

इत्युच्यते।'[1] 'विपर्ययेणाकुशलम्' उष्ट्रोलूकादिवत्। 'अव्याकृतमतोऽन्यथा' (3)उभयविपाकानिर्वर्तना(ना)त्॥'[2]

अन्यान्यपि त्रीणि कर्माण्युक्तानि। पुण्यमपुण्यमानेञ्ज्यं च। तत्र तावत्

[ 175 ] कामाप्तं प्रथमं पुण्यमपुण्यमशुभात्मकम्।
ऊर्ध्वभूमिकमानेञ्ज्यं विपाकं प्रत्यनेजनात्॥[3]

कामावचरं हि कुशलं कर्म पुण्यमकुशलमपुण्यमित्युच्यते। ऊर्ध्वभूमिकमानेञ्ज्यम्।'[4] तदूर्ध्वं धातुद्वये शुभं कर्मानेञ्ज्यमित्युच्यते। कस्मात्पुनरेतदाने(4)ञ्ज्यमित्युक्तम्? 'विपाकं प्रत्यनेजनात्[5]।' [6]कामावचरं हि कर्म विपाकं

---

[1] Cf कुसलसद्दो ताव आरोग्य अनवज्ज-छेक-सुखविपाकेसु दिस्सति।…वचनत्था पनेत्थ—कुच्छिते पापके अकुसले धम्मे सलयन्ति चलयन्ति…ति कुसला। कुच्छितेन वा आकारेन सयन्ती ति कुसा। अकुसलसङ्खाते कुसे लुनन्ती ति कुसला। कुच्छितान वा सानतो तनुकरणतो ओसानकरणतो ञाणं कुस नाम। तेन कुसेन लातब्बा ति कुसला।… यथा वा कुसा उभयभागगतं हत्थप्पदेसं लुनन्ति, एवमिमे पि उप्पन्नानुप्पन्नभावेन संकिलेसपक्खं लुनन्ति। *DhsA* II 8-10

[2] Cf तेसु पन अनवज्जसुखविपाकलक्खणा कुसला, सावज्जदुक्खविपाकलक्खणा अकुसला, अविपाकलक्खणा अब्याकता। *DhsA* II 10

[3] Cf पुण्यापुण्यमनिञ्जञ्च सुखवेद्यादि च त्रयम्॥
कामधातौ शुभं कर्म पुण्यमानेञ्जमूर्द्धजम्। *Ak* IV 45 cd and 46 ab

[4] आनेञ्ज्यमिति। एजृ कम्पने इत्यस्य धातोरेतद्रूपमानेज्यमिति। यदा त्वानिञ्ज्यमिति पाठस्तदा इगे प्रकृत्यन्तरस्यैतद्रूपं द्रष्टव्यम्। *Sakv* p 344

आनिञ्ज्यकर्म कतमत्। रूपारूप्यप्रतिसंयुक्तं कुशलं कर्म। *Asm* p 54 कामप्रतिसंयुक्तं कुशलं पुण्यम्। रूपारूप्यप्रतिसंयुक्तमानिञ्ज्यम्। *Aaa* p 184

[5] Cf किं पुनः कारणं सेञ्जितमेवान्यत्रानिञ्जमुक्तम्?
तद्भूमिषु यतः कर्म विपाकं प्रति नेञ्जति। *Ak* IV 46 cd

The term *āneñja* primarily refers to the four *Arūpa-dhyanas* The fourth *Rupāvachara-dhyāna* is also called *āneñja* सो "चतुत्थं झानं उपसम्पज्ज विहरति। सो एवं समाहिते चित्ते "आनेञ्जप्पत्ते"'। (*Ang* II p 211) But here even the first three *rupa-dhyanas* are called *āneñja* due to 'विपाकं प्रत्यनेजनात्'।

[6-6] This passage (from कामावचरं to तिर्यक्प्रेतेषु विपच्यते) is identical with *Akb* IV 46 cd After तिर्यक्प्रेतेषु विपच्यते, the *Akb* has रूपारूप्यावचरं तु कर्मान्यभूमिकमन्यस्यां भूमौ विपक्तुं न जातुमुत्सहते। तस्माद्व्यवस्थितविपाकत्वादानेञ्ज्यमित्युच्यते।

प्रति कल्पते लवणोपमसूत्रण्या(न्या)येन ।[१] कथम् ? अव्यवस्थानात् ।[२] अन्यगतिकमपि ह्यन्यस्या गतौ विपच्यते । तदन्यदेव नैकायिकं चान्यत्र देवनिकाये । यदेव हि प्रमान(ण)वलवर्णसुखभोगादिसंवर्तनीय कर्म देवेषु विपच्येत तदेव कदाचिदन्य(5)प्रत्ययवशान्मनुष्यतिर्यक्प्रेतेषु विपच्यते ।[२] कर्मजातिचोदनेयं भगवतो विवक्षिता न द्रव्यचोदनेति ।

अत्राह । [३]ननु च त्रीणि ध्यानानि सेञ्जितान्युक्तानि[४] भगवता— "यदत्र वितर्कित विचारितमिदमत्रार्या इञ्जितमित्याहु"[५] इत्येवमादि ? समाध्यपक्षालास्तेषा सन्धायैवमुक्तम् । आनेज्यान्यपि तु तान्युक्तान्याने ज्यसूत्रे,[६] आ(6)नेज्यसप्रेयगामिनीं प्रतिपदमारभ्य ॥[३]

---

[१] Cf सय्यथा पि भिक्खवे पुरिसो लोणफल परित्त उदकमल्लके पक्खिपय्य । त किं मञ्ञथ भिक्खवे अपि नु त परित्त उदकमल्लके उदक अमुना लोणफलेन लोणमस्स अपेय्य ति ?

एव भन्ते ।

सय्यथा पि भिक्खवे पुरिसो लोणफल गगाय नदिया पक्खिपय्य । अपि नु सा गगा नदी अमुना लोणफलेन लोणा अस्स अपेय्या ति ?

नो हेत भन्ते ।

एवमेव खो भिक्खवे इधेकच्चस्स पुग्गलस्स अप्पमत्तक पि पाप कत तमेन निरय उपनेति । इध पन भिक्खवे एकच्चस्स पुग्गलस्स तादिस यव अप्पमत्तक पाप कम्म कत दिट्ठधम्मवेदनीय होति नाणु पि खायति बहुदेव । *Ang* I. p 250

[२] Cf तत्थ यस्मा कामावचरविपाक अत्तनो कुसलेन सदिस पि होति असदिस पि तस्मा न त कुसलानुगतिक कत्वा भाजित । रूपावचरारूपावचरविपाक पन यथा हत्थिअस्स पब्बतादीन छाया हत्थिआदिसदिसा व होन्ति तथा अत्तनो कुसलसदिसमव होती ति । कामावचर च कम्म यदा कदाचि विपाक देति रूपारूपावचर पन अनन्तरा यव दुतियस्मि अत्तभावे विपाक देति । *DhsA* III. 651 See *Vipakuddhara katha* *DhsA* III 587-651

[३–३] This whole passage (from ननु च to प्रतिपदमारभ्य) is identical with *Akb* IV 46 ab

[४] Cf अष्टापक्षालमुक्तत्वादानिञ्जन्तु चतुर्थकम् । *Ak.* VIII. 11 ab

V infra *Ad karika* 546 See *LVPAk.* IV p 107, n. 1

[५] Cf इध खोऽहं उदायि इञ्जितस्मि वदामि किञ्च तत्थ इञ्जितस्मि—यदेव तत्थ वितक्कविचारा अनिरुद्धा होन्ति इदं तत्थ इञ्जितस्मि । दुतियं झानं यदेव तत्थ पीतिसुखं अनिरुद्धं होति इदं तत्थ इञ्जितस्मि । ततियं झानं यदेव तत्थ उपेक्खासुखं अनिरुद्धं होति इदं तत्थ इञ्जितस्मि । चतुत्थं झानं उपसम्पज्ज विहरति । इध खोऽहं उदायि अनिञ्जितस्मि वदामि । *M* sutta 66.

[६] *Akb* has आनिञ्जसूत्र ।

पुनरण्या(न्या)नि त्रीणि कर्माण्युक्तानि—"सुखवेदनीयं दुःखवेदनीयं, अदुःखासुखवेदनीयं च।" तत्र

[ 176 ] सुखवेद्यं शुभ(भं) कर्म ध्यानादर्वाकुरीयकात् ।
उपेक्षावेद्यमन्यत्र दुःखवेद्यन्तु पापकम् ॥[१]

तत्र शुभं कर्म यावत्तृतीये ध्याने सुखवेद्यमित्युच्यते। एतावती खलु भूमिः (7)सुखाया वेदनायाः। तदेव चतुर्थध्यानात्प्रभृत्युपेक्षावेदनीयमित्युच्यते। अकुशलं तु कर्म दुःखवेदनीयमित्युच्यते।[२]

किं पुण(न)र्वेदनैव विपाकः ?[३] नेत्याह। प्राधानिकोऽयं निर्देशं(शः)। सचतुस्कन्धसम्भारं हि सुखमभिप्रेतम्। दार्ष्टान्तिकानां तु सुखैव वेदना विपाकः चेतनैव च कर्म। आभिधार्मिकाणां तु प(8)ञ्चस्कन्धो विपाकहेतुः पञ्चस्कन्धाश्च विपाक इति।[४]

कथं पुनरवेदनास्वभावं कर्म सुखवेदनीयमित्युच्यते? सुखाया वेदनाया हितं सुखवेदनीयम्। सुखोऽस्या वेदनीयो विपाक इति वा।[५]

किं पुनरदुःखासुखा वेदना चतुर्थध्यानादधो न विद्यते? न खलु न विद्यते। किं तर्हि ?

[ 177 ] अधोऽपि मध्यमं कर्म ध्यानेना(9)न्त्येपि निश्चितेः।
युगपत्त्रिविपाकेष्टेर्ध्यानान्तरविपाकतः ॥[६]

---

[१] Cf सुखवेद्य शुभं ध्यानादातृतीयादतः परम्।
अदुःखासुखवेद्य तु दुःखवेद्यमिहाशुभम् ॥ *Ak.* IV. 47.

[२] अकुशलं कर्म दुःखवेदनीयम्। इहग्रहण कामधातावेव तद्भावज्ञापनार्थम्। *Akb* IV. 47 d.

[३] Cf. न चैषा वेदनैव फलम्। किं तर्हि ? ससम्भारा। *Akb.* IV. 47. ससम्भारैरिति। सम्भ्रियते उत्पाद्यतेऽनेनेति सम्भारः। इन्द्रियविषयलक्षण। तेन ससम्भारा वेदना फलम्। *Sakv* p 390

[४] See *Akb.* III 54 cd and *Sakv.* pp 211—215.

[५] Cf कथ पुनरवेदनास्वभावं कर्म सुखादिवेदनीयमित्युच्यते ? सुखवेदनायै हित सुखवेदनीय सुखोऽस्य वेदनीय इति वा। कश्च वेदनीय.। यो विपाक। स ह्यसौ विद्यते सुखस्य वा वेदनीय येन सुख वेदयते। स्नानीयकषायवत्। *Akb.* IV. 47.

[६] Cf. अधोऽपि मध्यमस्त्येके

अन्ये पुनराहुः। तदेतन्मध्यमदुःखासुखवेदनीय कर्मोक्तमेतच्चतुर्थध्यानादधोऽप्यस्ति। किं कारणम् ? ध्यानान्तरविपाकतः।

अदुःखासुखवेदनीयं खलु कर्म चतुर्थध्यानादधोऽप्यस्ति तृतीये द्वितीये प्रथमे च ध्याने[1]। परिनिर्वृते उपेक्षायां च स्थितः परिनिर्वाति।[2] किञ्च, 'युगपत् त्रिविपाकेष्टेः।' उक्तं हि—"स्यात् त्रयाणां कर्मा(र्म)णामपूर्वाचरमो विपाको विपच्येत। स्यात्सुखवेदनीयस्य रूप, दुःखवेदनीयस्य चित्तचैतसिका धर्माः, अदुःखासुखवेदनीयस्य चित्तविप्रयुक्ता." इति।[3] अतोऽप्यस्त्यधस्ता-ददुःखासुखवेदनीयं कर्म। किञ्च, 'ध्यानान्तरविपाकतः।' नहि ध्यानान्तरे[4] उपे[III A, 7 Fol 93b]क्षामन्तरेण विपाकोऽन्या वेदना विपच्यते। तत्र सुख-दुःखयोरभावात् ॥[5]

[ 178 ] पुनश्चतुर्विधं कर्म दृष्टवेद्यादिभेदतः।[6]

---

ध्यानान्तरकर्मणो ध्यान एव सुखेन्द्रियं विपाक इत्येके। नैव तस्य वेदना विपाक इत्यपरे। तदेतदुच्छास्त्रम्। शास्त्रे हि पठितं—' स्यात्कर्मणश्चैतसिकयैव वेदना विपाको विपच्येत। स्यात्कुशलस्याविर्तकस्य कर्मण इति
अपूर्वाचरमं पाकस्त्रयाणां चेष्यते यतः ॥ *Akb* iv 48
See *Sakv* pp 390 1

[1] Cf उपेक्खा पन दसविधा होति—छळङ्गुपेक्खा ब्रह्मविहारुपेक्खा बोज्झङ्गुपेक्खा विरियुपेक्खा सङ्खारुपेक्खा वेदनुपेक्खा विपस्सनुपेक्खा तत्रमज्झत्तुपेक्खा झानुपेक्खा पारिसुद्धि उपेक्खा ति। इति इमासु उपेक्खासु 'झानुपेक्खा' इध [ततियज्झाने] अधिप्पेता। एत्थाह—ननु चायं अत्थतो तत्रमज्झत्तुपेक्खा व होति? सा च पठमदुतियज्झानसु पि अत्थि ' । सा कस्मा न वुत्ता ति? अपरिब्यत्तकिच्चतो वितक्कादीहि अभिभूतत्ता। *Dhs A* III 349 354

[2] For a controversy related to this, see, *Kv* xxII 3—इदानि आनेञ्जकथा नाम होति। तत्थ भगवा चतुत्थज्झाने ठितो परिनिब्बायीति सल्लक्खत्वा अरहा आनेञ्ज ठितो परिनिब्बायतीति यस लद्धि, सेय्यथा पि एकच्चानं उत्तरापथकानं। *KvA* xxII 3

[3] Quoted in *Akb* iv 48 cd अपूर्वाचरम इति। युगपदित्यर्थः। सुखवेदनीयस्य रूपमिति चक्षुरादिकम्। दुःखवेदनीयस्य पञ्चविज्ञानकायिका। दौर्मनस्याविपाकत्वात्। चित्तविप्रयुक्ता इति जीवितेन्द्रियादयः। *Sakv* p 391

[4] For a controversy on *Dhyanantara*, see *Kv* xvIII 7—इदानि झानन्तरिककथा नाम होति। तत्थ येसं समयं पञ्चकनयं पञ्च झानानि विभत्तानि, केवल तयो समाधी उद्दिट्ठानि, अवितक्कविचारमत्तस्स समाधिनो ओकासं अजानन्तानं पठमस्स च दुतियस्स च झानस्स अन्तरं झानन्तरिका नाम एका ति लद्धि, सेय्यथा पि सम्मितीयानञ्चेव अन्धकानं। *KvA* xvIII 7 See *Points of Controversy*, p 329

[5] After this, the Kośakāra discusses one more topic—*Pañchadhā vedanīyatā* (*Akb* iv 49), which is not discussed in *Adi*

[6] Cf नियतानियतं तच्च नियतं त्रिविधं पुनः।
दृष्टधर्मादिवेद्यत्वात् पञ्चधा कर्म चेतना॥ *Ak* iv 50

तदेतत्कर्म समासतो द्विविधं, नियतवेदनीयमनियतवेदनीयं च। तत्र नियतवेदनीयं[1] त्रिविधम्। दृष्टधर्मवेदनीयमुपपद्यवेदनीयमपरपर्यायवेदनीयं च—इत्येतत् त्रिविध कर्म नियतवेदनी(2)यम। चतुर्थमनियतवेदनीयम्।[2]

तत्र दृष्टधर्मवेदनीय यत्रैव जन्मनि कृतं तत्रैव विपच्यते। उपपद्य वेदनीयं यद् द्वितीये जन्मनि। अपरपर्यायवेदनीयं तस्मात्परेण।

अतः पुनश्चतुर्विधात्कर्मणः कतमेन जन्माक्षिप्यते ?

जन्मनस्त्रिभिराक्षेपो दृष्टधर्माद्दृयाद्दते ॥[3]

न खलु दृष्टधर्मवेदनीयेन कर्मणा निकायसभाग (3)आक्षिप्यते॥

अथ कस्मिन्धातौ कस्यां वा गतौ कतिविधं कर्माक्षिप्यते ?

[ 179 ] चतुर्णामपि चाक्षेपः सर्वत्र नरकादृते।
न तत्रेष्टफलाभावाच्छुभं यस्माद्विपच्यते ॥[4]

सर्वेषु खलु त्रिषु धातुषु सर्वासु च पञ्चसु गतिषु चतुर्णामपि कर्मणामाक्षेपः कुशलानामकुशलानां च। नरकान्वर्जयित्वा। नरकेषु हि दृष्ट[धर्म]-वेदनीयं कुशलं नाक्षि(4)प्यते। तत्रेष्टविपाकाभावादन्यत् त्रिविधमाक्षिप्यते। किञ्च,

---

अपरे पुन पञ्चविध कर्मेच्छन्ति। अनियतवदनीय द्विधा कृत्वा। विपाकेन नियतमनियत चेति। *Akb* IV 50

[1] For a controversy on the term *niyata*, see *Kv* XXI 8—इदानि कम्मकथा नाम होति। तत्थ यस्मा दिट्ठधम्मवेदनीयादीनि दिट्ठधम्मवेदनादीहि नियतानि, तस्मा सब्बे कम्मा नियता ति यस लद्धि, सेय्यथापि वेसज्जो व [अन्धकानञ्च एकच्चान उत्तरापथकान]। एत्थ दिट्ठधम्मवेदनीय दिट्ठधम्मवेदनीयमेव। सचे दिट्ठेव धम्मे विपाक देतु सक्कोति, देति, नो चे अहोसिकम्म नाम होति। *KvA* XXI 8

[2] After this, the Kośakāra gives various views about the *vipaka* of *drs ṭadharma vedanīya* जन्मान्तरेऽपि अस्ति दृष्टधर्मवेदनीयस्य कर्मणो विपाक आरम्भवशात्तु नामव्यवस्थानमित्यपरे। मा भूदेवमिष्ट कर्म तस्यान्निष्टो विपाक इति। तदेव नेच्छन्ति वैभाषिका। दार्ष्टान्तिकास्तु चतुष्कोटिक कुर्वन्ति तेषा तत्कर्माष्टविध दृष्टधर्मवेदनीय नियतमनियत च। एव यावदनियतवेदनीयम्। नियतमेव तु दृष्टधर्मादिवेदनीयमनियत चतुर्थमिति वर्णयन्ति। *Akb* IV 50 a

[3] See *Asm* p 58

[4] Cf निकायाक्षेपण त्रिभि।
सर्वत्र चतुराक्षेप शुभस्य नरके त्रिधा॥ *Ak.* IV 51 bcd

[ 180 ] नोत्पद्यवेद्यकृत्तत्र यद्विरक्तः पृथग्जनः ।
स्थिरो नापरकृच्चार्यश्चलोऽपि भवमूलयोः ॥[1]

[2] यत खलु भूमेर्विरक्त. पृथग्जन.[3] स च स्थिरो भवत्यपरिहाणधर्मा स च(त)त्रोपपद्यवेद्यं कर्म नाक्षिपति ।[4] त्रिविधमन्यत्करोति ।[5] आर्यपुद्गलस्तु वीतरागो न च परिहा(5)णधर्मा तत्रोपपद्यवेद्यमपरपर्यायवेदनीय च कर्म न करोति। न ह्यसो भव्य पुनरधरिमं भूमिमायातुन्। अनियत तु कुर्याद् दृष्ट धर्मवेदनीय यत्रोपपन्न[6] कामधातौ भवाग्रे । परिहाणधर्मापि त्वार्यः कामधातौ वीतराग, भवाग्राद्वा, तयोरुपपद्यापरपर्यायवेदनीय कर्मकर्मा (-नीयं कर्मा)भव्य. कर्तुम् । किं (6)कारणम् ? फलाद्ध्यसौ परिहीणो भवति। न चास्ति फलपरिहीणस्य कालक्रियेति[7] ।[2]

अथ किमन्तराभविक[8] कर्माक्षिपति नाक्षिपति ?[9] आक्षिपतीत्याह ।

---

[1] Cf यद्विरक्त स्थिरो बालस्तत्र नोत्पद्यवेद्यकृत ।
नाप्यवेद्यकृदार्य कामेऽग्रे वाऽस्थिरोऽपि न ॥ *Ak* iv 52

[2—2] This whole [pa]ssage (from यत खलु भूमेर्विरक्त to कालक्रियेति) is almost identical with *Ak[b]* iv 52

[3] वीतरागपृथग्जन in *Akb*

[4] न करोति in *Akb*

[5] स्थिर इति वर्तते in *Akb*

[6] Only यत्र in *Akb*

[7] कालक्रियेति पश्चात्प्रदर्शयिष्याम in *Akb*

[8] अन्तराभव कामधातौ रूपधातौ चोपप[द्यमा]नस्यारूप्यधातोश्च्यवमानस्य । स च मनोमयो गन्धर्व इत्यपि । पर सप्ताह निष्ठ[ते प]रण च्यवते । एकदा च व्यावर्तते । तत्रस्थश्च कर्मोपचिनोति सभागाश्च सत्त्वान पश्यति । यत्र चोपपद्यते तदाकृतिरप्रतिहतगतिश्च । ऋद्धिमानिव चानुगामी उपपत्त्यायतन प्रतिहन्यते । उपपत्त्यायतने तुलावनामो न्नामयोगेन च्यवते प्रतिसंधि च बध्नाति । अन्तराभवस्थश्चोपपत्त्यायतन रागमुत्पादयति । यद्यस्य रागः प्रत्ययो भवति । सहरागेणान्तराभवो निरुध्यते कलल च सविज्ञानकमुत्पद्यते । *Asm* pp 42—43

Cf एवमेव खो महाराज यो कोचि गन्धब्बो यतो कुतो चि आगन्त्वा अण्डज योनि उपगन्त्वा ओपपातिक सभाववण्ण विजहित्वा ओपपातिको होति । *Milinda* p 132 V supra, p 46 n 2 For a controversy on *Antara bhava* see *Kv* viii 2—इदानि अन्तराभवकथा नाम होति । तत्थ येस 'अन्तरा परिनिब्बायी ति सुत्तपद अयोनिसो गहेत्वा अन्तराभवो नाम अत्थि यत्थ सत्तो दिब्बचक्खुको विय अदिब्बचक्खुको इद्धिमा विय अनिद्धिमा मातापितिसमागमञ्चेव उतुसमयञ्च आलोकयमानो सत्ताह वा अतिरेकसत्ताह वा तिट्ठतीति लद्धि, सेय्यथा पि पुब्बसेलियानञ्चेव सम्मितीयानञ्च । *KvA* viii 2
For a full discussion on this topic see *Akb* iii 4-19

[9] Cf द्वाविंशतिविधं कामेष्वाक्षिपत्यन्तराभव ।
दृष्टधर्मफलं तच्च नियतो द्वार एव स ॥ *Ak* iv 53

तत्र कामावचरोऽन्तराभवः द्वाविंशतिविधं कर्माक्षिपति । पञ्च गर्भावस्थाः कललार्बुदघनपेशीप्रशाखावस्थाः ।[१] पञ्च जातावस्थाः । बाल्यकौमारयुवमध्यमस्थ(7)विरावस्थाः । ता एता नियतानियतभेदेन विंशतिराक्षिप्यन्ते, एकनिकायत्वात्[२] । अत एवान्तराभववेदनीयं कर्म नोक्तम् । उपपद्यवेदनी येनैव तस्याक्षेपात् ॥

कीदृशं पुनः कर्म नियतं भवत्यनियतं वा ?

[ 181 ] यदार्त्तरौद्रचित्तेन कर्मभीक्ष्णं निषेव्यते ।
सत्क्षेत्रे क्रियते यच्च फलं तस्य नियम्यते ॥[३]

यदि कर्म रौद्रेण तीव्र(8)क्लेशानुगतेन चित्तेन कृतं भवति, यच्च घनश्रद्धा सलिलाभ्युक्षितेन क्रियते, यच्च भृद्वभ्यभीक्ष्णं निषेव्यते, यच्च किञ्चिद्गुणवति क्षेत्रे क्रियते शुभमशुभं वा फलं तस्य कर्मणो नियम्यते ॥

अथ दृष्टधर्मवेदनीयं कर्म कीदृशमित्युच्यते—

[ 182 ] क्षेत्राशयविशेषाच्च फलं सद्यो विपच्यते ।
निरोधव्युत्थितादौ च सद्यः(9) कालफलक्रिया ॥[४]

तत्र क्षेत्रविशेषाद्यथा[५] व(?)[६]क्षजातकादिषु । आशयविशेषाद्यथा वकलात(?)[६]स्यो(स्या)श्रणि(नि)र्मोचनादिषु ।

---

१ See *Sakv* p 319 and *S* I p 206

२ Cf तच्चैतदन्तराभविकं कर्म यनियतमेकादशविधमुक्तं दृष्टधर्मवेदनीय तद्वेदितव्यम् । किं कारणम् ।
निकायो ह्येक एव स ।
एक एव ह्यसौ निकायसभाग एककर्माक्षिप्तो यश्चान्तराभवो यादच तदन्वया दशावस्था । अत एवान्यदन्तराभववेदनीय कर्म नोक्तम् । *Akb* IV 53 d

३ Cf. तीव्रक्लेशप्रसादेन सातत्येन च यत्कृतम् ।
गुणक्षेत्रे च नियत तत्पित्रोर्घातक च यत् ॥ *Ak.* IV 54

Also cf यदुक्तं सूत्रे नियतवेदनीय कर्म इति । कतमे नियमा ? कर्मक्रियानियम विपाकप्रतिसंवेदनानियम अवस्थानियमश्च । *Asm* p 54

४ Cf. दृष्टधर्मफल कर्म क्षेत्राशयविशेषत ।
ये निरोधारणामैत्रीदर्शनार्हत्फलोत्थिता ।
तेषु कारापकारस्य फल सद्योऽनुभूयते ॥ *Ak.* IV. 55 ab and 56

५ Cf दृष्टधर्मवेदनीय कर्म क्षेत्रविशेषाद्वा भवति । यथा सघस्त्रीवादसमुदाचाराद्व्यञ्जनपरिवृत्ति श्रूयते । आशयविशेषाद्वा । यथा षण्ढस्य गवामपुस्त्वप्रतिमोक्षणात् पुम्भाव । *Akb.* IV. 55 ab.

६ The reading is doubtful

कीदृशे पुनस्तत् क्षेत्रे विशिष्टं भवति यत्र दृष्टे धर्मे विपाको विपच्यते ? बुद्धप्रमुखस्तावद्भिक्षुसङ्घो । 'निरोधव्युत्थितादौ च सद्य कालफलक्रिया । पञ्चसु च पुद्गलेषु कृत निरोधसमापत्त्य[III B 8 Fol 94 a]रणामैत्रीदर्शन मार्गादर्हत्फलाद्व्युत्थितेषु कारापकारा[1] दृष्टधर्मवेदनीयफला भवन्ति। निरोध समापत्त खलु व्युत्थित परा शान्ति लभते । निर्वाणसदृशधर्मानुभवनात् । अरणाव्युत्थितस्याप्यप्रमाणसत्त्वहिताध्याशयप्रवृत्ता सन्ततिर्वर्तते । एव [मैत्री]व्युत्थितस्य । स्रोतआपन्नस्यापि निर्मलज्ञानलाभात् । अर्हतोऽपि (2)सर्वक्लेशप्रहाणान्निर्मला वर्तन्ते[2] ॥

नियतविपाकस्य च कर्मण शुभाशुभस्य या भूमिस्तदत्यन्तवैराग्यात्तत्कर्म दृष्टे धर्मे विपच्यत इत्यत

[ 183 ] तद्भूम्यपुनरुत्पत्तेः

दृष्टधर्मवेदनीय संगृहीत भवति । कीदृश पुनरेतत्कर्म ?

विपाकनियतं च यत् ।[3]

तच्चैतत्कर्म विपाकनियत[4] द्रष्टव्यम् ।

तत्र दृष्टफलं विद्यात्

(3)दृष्टे धर्मे खलु तस्य विपाको विपच्यते । कतरत्पुनरेतत् ?

चर्मादः परिपूरकम् ॥

नाक्षेपकमिति ॥[5]

विपाक खलु वेदनाप्रधान इत्यत इद विचार्यते । स्यात्कर्मणश्चैत सिक्येव वेदना विपाको न कायिकी ? स्यात्कायिक्येव न चैतसिकी स्यादित्याह—

---

[1] For this word see *Siksha* p 87

[2] Th s passage (from कीदृश पुनस्तत्) is almost ident cal w th *Akb* iv 56 After th s the *Akb* has नान्यस्य तु भावनामार्गस्यापरिपूर्णस्वभावफलत्वान्न तद्व्युत्थितानां न तथा प्रत्यश्रयपरिवृत्तिशुद्धाशयमतनिवर्तने इति न ते तथा पुण्यक्षेत्र भवन्ति । *Akb* iv 56 See *Asm* p 58

[3] Cf तद्भूम्यत्यन्तवैराग्याद्विपाके नियतं हि तत । *Ak.* iv 55 cd

[4] V supra p 143 n 3

[5] आक्षेपकं कर्म कतमत् । येन कर्मणा विपाको निर्वर्त्यते । परिपूरकं कर्म कतमत् । येनोत्पन्न इष्टानिष्टफलं अनुभवति । *Asm* p 54

[ 184 ] कुशलस्याविचारस्य चैतसिक्येव वेदना ।
विपाकः कायिकी त्विष्टा [(4)]दुःखवेद्यस्य कर्मणः ॥[1]

[2]कुशलं खलु विचारं कर्म ध्यानान्तरात्प्रभृति यावद्भवाग्रम् । तस्याविचारस्य कुशलस्य कर्म[ण]श्चैतसिक्येव वेदना विपाकः । कस्मान्न कायिकी ? तस्याः अवश्यं सवितर्कविचारत्वात् । कायिक्येव त्वशुभस्य दुःखवेदनीयस्य कायिक्येव वेदना विपाकः । कस्मान्न चैतसिकी ? चैतसिकं हि दौर्मण(न)[(5)]स्यं न विपाकः ।[2]

यस्त(स्त्व)र्हि कर्मवशात्सत्त्वानां चित्तक्षेपः तत्संप्रयुक्ता वेदना कथं न विपाकः ? न हि तत्र चित्तं कर्मणो विपाकः । किं तर्हि ? यो महाभूतानां प्रकोपः स विपाकः । ततस्तज्जातं चित्तं विपाकशब्देनोपचर्यते ॥[3]

पुनश्चतुर्विधं कर्मोक्तम्—"अस्ति कर्म कृष्णं कृष्णविपाकम् । अस्ति शुक्लं शुक्लविपाकम् । अस्ति कर्म कृष्ण[(6)]शुक्लं कृष्णशुक्लविपाकम् । अस्त्यकृष्णमशुक्लमविपाकं कर्म कर्मक्षयाय संवर्तते" इति ।[4] तत्र

---

[1] Cf कुशलस्यावितर्कस्य कर्मणो वेदना मता ।
विपाकश्चैतसिक्येव कायिक्येवाशुभस्य तु ॥ *Ak.* iv 57

[2-2] This whole passage (upto न विपाक ) is almost identical with *Akb* iv 57 The latter has *avitarka* instead of *avichāra* After 'कस्मान्न चैतसिकी ?', the *Akb* has तस्य हि दुःखा वेदना विपाकश्चैतसिकी च दुःखा वेदना दौर्मनस्यम् । न च दौर्मनस्यं विपाक इति व्याख्यानमेतत् । This topic *(daurmanasya)* was perhaps discussed in the lost portions of *Adi* V supra, p 52, n 4.

[3] Cf चित्तक्षेपो मनश्चित्ते स च कर्मविपाकजः ।
भयोपघातवैषम्यशोकैश्चाकुरुकामिनाम् ॥ *Ak.* iv 58

...यदि मनो विक्षिप्यते कर्मविपाकजश्च चित्तक्षेपः । कथं न चैतसिकी वेदना विपाकः प्राप्नोति ? नहि ब्रूमस्तदेव चित्तं विपाक इत्यपि तु यो महाभूतानां प्रकोपः स विपाकः । तस्माज्जातमनो विपाकजम् ।...एवं चेदं चतुष्कोटिकं युज्यते...। *Akb* iv 58 See *Sakv* p 396 and *Mtlnds*, p 137

[4] Cf चेतनाय सम्पयुत्तधम्मानं पन कम्मभावो कम्मचतुक्केन दीपितो । वुत्तं हेतं—चत्तारिमानि भिक्खवे कम्मानि मया सयं अभिञ्ञा सच्छिकत्वा पवेदितानि, कतमानि चत्तारि ? अत्थि भिक्खवे कम्मं कण्हं कण्हविपाकं, अत्थि...सुक्कं सुक्कविपाकं, अत्थि भिक्खवे कम्मं कण्हसुक्कं कण्हसुक्कविपाकं, अत्थि भिक्खवे कम्मं अकण्हमसुक्कं अकण्ह-असुक्क-विपाकं कम्मं कम्मक्खयाय संवत्तति । [*Ang* ii pp 230 1] *Dhs A* iii. 117

[ 185 ] सपाकमशुभं कृष्णं सपाकं रूपजं सितम् ।
शुभाशुभं द्विधा काये(मे) निर्मलं तत्प्रहाणकृत् ॥[1]

[2]अशुभं खलु कर्म एकान्तेन कृष्णं क्लिष्टत्वात् । कृष्णविपाकं चामनोज्ञविपाकत्वात् । रूपाप्तन्तु शुभमेकान्तेन शुक्लम्, अकुशलेनाव्यव(?)कीर्णत्वात् । शुक्लविपाकं च मनोज्ञविपाकत्वात् ।

आरूप्याप्तं कस्मान्नोच्यते ? यत्र हि द्विविधोऽस्ति विपाकः—अन्तराभविकश्चोपपत्तिभविकश्च; त्रिविधस्य च कायवाङ्मनस्कर्मणस्तत्रैवोक्तमिति ।

[3]"कामाप्तं शुक्लं कृष्णशुक्लमकुशलव्यवकीर्णत्वात्, कृष्णशुक्लविपाकं व्यवकीर्णविपाकत्वात् ।" सन्तानत एतद्व्यवस्थापितं(8) न स्वभावतो न ह्येवंजातीयकमेवं कर्मास्ति विपाको वा यत्कृष्णं च स्याच्छुक्लं च, अन्योन्यविरोधात् ।[4] ननु चैवमकुशलस्यापि कर्मणः कुशलव्यवकीर्णत्वात्कृष्णशुक्लत्वं प्राप्नोति ? नावश्यमकुशलं कुशलेन व्यवकीर्यते । कामधातौ ह्यस्य बलवत्त्वात्कुशलन्तु व्यवकीर्यते दुर्बलत्वादिति ।

अनास्रवं कर्मैषां त्रयाणां कर्मणां(9) क्षयाय प्रहाणाय संवर्तते । तद्ध्यकृष्णमक्लिष्टत्वादशुक्लं विपाकशुक्लताऽभावात्[5] । आभिप्रायिकोऽप्येष(ष) शुक्लशब्दः । उक्तं तु भगवता महत्यां शून्यताया[6]मशैक्षधर्मा(णा)(ना)रम्य—

---

[1] Cf. कृष्णशुक्लादिभेदेन पुनः कर्म चतुर्विधम् ॥
अशुभं कामरूपाप्त शुभं चैव यथाक्रमम् ।
कृष्णशुक्लोभयं कर्म तत्क्षयाय निरास्रवम् ॥ *Ak.* IV 59 cd, 60.

[2] This whole *Adv. kārikā* 185 is almost identical with *Akb.* IV. 60

[3] *Akb.* has तदपि तूक्तं सूत्रान्तरे—"कामाप्तं शुक्ल · व्यवकीर्णविपाकत्वात् ।"

[4] Cf. कण्हसुक्कविपाकं ति सुखदुक्खविपाकं, मिस्सककम्मं हि कत्वा अकुसलेन तिरच्छानयोनियं मङ्गलहत्थिट्ठानादिसु उप्पन्नो कुसलेन पवत्ते सुखं वेदियति, कुसलेन राजकुलेपि निब्बत्तो अकुसलेन पवत्ते दुक्खं वेदियति । *AngA.* III p. 212.

Also cf. कृष्णशुक्लं कृष्णशुक्लविपाकं कर्म कतमत् । कामप्रतिसंयुक्तं कर्म यत् कर्म वा आशयतः प्रयोगतो वा शुक्लं यत् कर्म वा प्रयोगतः कृष्णमाशयतः शुक्लम् । *Asm.* p. 59.

[5] Cf. अकृष्णशुक्लाविपाकं व्यामिश्रं कर्म कतमत् । प्रयोगानन्तर्यमार्गेऽनास्रवं कर्म । *Ibid.* Also cf. कतमं च भिक्खवे कम्मं अकण्हं—असुक्कं अकण्हं—असुक्कविपाकं कम्मं कम्मक्खयाय संवत्तति ? यदिदं सत्त सम्बोज्झङ्गा—सतिसम्बोज्झङ्गो-पे-उपेक्खासम्बोज्झङ्गो । *Ang.* II. p 237.—अकण्हं असुक्कं ति कम्मक्खयकरं चतुमग्गञाणं । *Ang A.* III. p. 212. See *Yoga-bhāshya*, IV. 7 and *Asa.* p. 47

[6] महाशून्यतार्थसूत्रे । *Sakv.* p. 398

"इमे ते आनन्द, धर्मा एकान्तशुक्ला एकान्तानवद्याः" इति । शास्त्रे[१] च—"शुक्लधर्माः कतमे ? कुशला धर्मा अनिवृताव्याकृताश्च ।" इति । अविपाकं धा[III. A,8. Fol. 94 b.] (1)त्वपतितत्वात्, प्रवृत्तिविरोधाच्च ॥

किं पुनः सर्वमनास्रवं कर्म सर्वस्यास्य त्रिविधस्य कर्मणः क्षयाय संवर्तते ? नेच्यु(त्युच्य)ते । किं तर्हि ?

[ 186 ] चतस्रो कृष्णधा इष्टौ चेतनाभावनापथात् ।
आनन्तर्यपथाः कामे कर्मैतत्कृष्णनाशकृत् ॥

[ 187 ] नवमे चेतना या तु सा कृष्णाकृष्णया(घा)तिनी ।
अन्तानन्तर्यमार्गस्था ध्याने ध्याने सितस्य तु ॥[१]

तत्र दर्शण(न)मार्गे (2)तावच्चतसृषु धर्मज्ञानक्षान्तिषु कामवैराग्ये चाष्टास्वानन्तर्यमार्गेषु या चेतना द्वादशप्रकारा सा कृष्णस्य कर्मणः प्रहाणकारी । कामवैराग्यानन्तर्यमार्गेण(णा)वसेया चेतना सा कृष्णशुक्लकर्मक्षयकारी ।[३] ध्याने ध्याने त्वानन्तर्यमार्गे पश्चिमे या चेतना चतुर्विधा सा शुक्लकर्मापहन्त्री ।[४]

[५]किं पुणः(नः) कारणमन्त्येनै(3)वानन्तर्यमार्गेण कुशलस्य कर्मणः प्रहाणं नान्येन ? न हि तस्य स्वभावप्रहाणं प्रहीणस्यापि संमुखीभावात् । किं तर्हि ? तदालम्बनक्लेशप्रहाणात् । अतो यावदेकोऽपि तदालम्बनः क्लेश-

---

१ *Prakarana*, 6, 9, *Vibhāṣā* 114, 1 (See *LVPAk* IV. p. 130, n 5)

२ Cf धर्मक्षान्तिषु वैराग्ये चानन्तर्यपथाष्टके ।
या चेतना द्वादशधा कर्म कृष्णक्षयाय तत् ॥
नवमे चेतना या सा कृष्णशुक्लक्षयाय च ।
शुक्लस्य ध्यानवैराग्येष्वानन्तर्यमार्गजा ॥ *Ak* IV 61-62

३ Cf नवमे कामवैराग्यानन्तर्यमार्गे या चेतना सा कृष्णशुक्लस्य कुशलस्य कर्मण कृष्णस्य चाकुशलस्य नवमस्य प्रकारस्य प्रहाणाय । *Akb* IV. 62 ab.

४ ध्यानाद्ध्यानाद्वैराग्य कुर्वतो योऽन्त्या नवम आनन्तर्यमार्गस्तत्र या चेतना इय चतुर्विधा चेतना शुक्लस्य कर्मस्य प्रहाणाय । *Ibid* 62 cd.

५ This whole passage (from किं पुन कारणम् to तावदस्य प्रहाण नोपलभ्यते), is identical with *Akb* IV 62 cd The latter has '—प्रहाण नोपपद्यते ।—'नहि तस्य स्वभावप्रहाणम्' इति प्राप्तिच्छेदप्रहाणम् । प्रहीणस्यापि कुशलस्य समुखीभावात् । तदालम्बनक्लेशप्रहाणात्' इति । तदालम्बनस्य क्लेशस्य प्रहाणात् तस्य कुशलस्य प्रहाण भवति । तदालम्बनक्लेशप्रहाण च नवमस्य तदालम्बनक्लेशप्रकारस्य प्रहीणे सति भवतीति । नवमानन्तर्यमार्गचेतनैव कृष्णशुक्लस्य कर्मण क्षयाय भवति । तदा हि नवमस्य क्लेशप्रकारस्य

प्रकारोऽस्ति तावदस्य प्रहाणं नोपलभ्यते । [1]तच्चैतदसत् । प्रहीणं हि तत्, न तु विहीनम् । अतः समुदाचरतीति ।[1] गतमेतत् ॥[2]

सूत्र उक्तम्—"त्रीणि दु(4)श्चरितानि । कायदुश्चरितं वाङ्मनोदुश्चरितम् । एवं सुचरितानि"[3] इति । तेषां कः स्वभावः ? तत्र तावत्—

[ 188 ] कायाद्यकुशलं कर्म सर्वं दुश्चरितं मतम् ।

सर्वमिति ससामन्तकमौलपृष्ठमित्यर्थः ।

अभिध्यादीन्यपि त्रीणि मनोदुश्चरितत्रयम् ॥[4]

सर्वमेवाकुशलं कायकर्म कायदुश्चरितम् । एवं वाङ्मनोदुश्चरितम् । अकर्मस्वभावा(5)न्यपि त्वभिध्यादीनि मनोदुश्चरितस्वभावानि ।

"अभिध्यादय एव कर्मस्वभावानि" इति स्थितिभागीयाः[1] । तच्च न, कर्मक्लेशैकत्वदोषात् । स्थितिभागीया ना(ना)म शाक्याः स्व(श्व?)लांगूलिकद्वितीयनामानः । ते खल्वभिध्यादीनि मनस्कर्मस्वभावानीच्छन्ति । तेषां

---

प्राप्तिच्छेदे विसंयोगप्राप्तिरुत्पद्यते । तस्य च कृष्णशुक्लस्य कर्मणोऽन्यस्यापि चानिवृताव्याकृतस्य सास्रवस्य धर्मस्य विसंयोगप्राप्तिरुत्पद्यत इति वर्णयन्ति । एवं चतुर्ध्यानवैराग्येष्वपि वक्तव्यम् । *Sakv* p 398.

१-१ This comment is not found in *Akb.*

[2] After this, the Kośakāra in *Akb* iv. 63, gives various views about the *krishna-karma* and its *vipāka*

[3] Cf. तीणि दुच्चरितानि । कायदुच्चरितं वचीदुच्चरितं मनोदुच्चरितं । तीणि सुचरितानि । कायसुचरितं वचीसुचरितं मनोसुचरितं । *Digha.* xxxiii. 1.10.

[4] Cf सर्वं सुचरितत्रयम् ।

अशुभं कायकर्मादि मतं दुश्चरितत्रयम् ।

अकर्मापि त्वभिध्यादिमनोदुश्चरितं त्रिधा ॥ *Ak.* iv 64 d, 65

[5] Cf. अकर्मस्वभावमप्यस्ति त्रिविधं मनोदुश्चरितं चेतनाव्यतिरिक्तमभिध्या व्यापादो मिथ्यादृष्टिश्च । अभिध्यादय एव मनस्कर्मेति दार्ष्टान्तिकाः । सञ्चेतनीयसूत्रे वचनात् । *Akb* iv. 65 cd.

'सञ्चेतनीयसूत्रे वचनात्' इति । "सञ्चेतनीयं कर्म कृत्वोपचित्वा नरकेषूपपद्यते । कथं च भिक्षवः सञ्चेतनीयं कर्म कृतं भवत्युपचितम् । इह भिक्षव एकत्यः सचिन्त्य त्रिविधं कर्म कायेन करोत्युपचिनोति, चतुर्विधं वाचा, त्रिविधं मनसा" इति विस्तरेणोक्त्वाह—"कथं भिक्षवस्त्रिविधं मनसा सञ्चेतनीयं कर्म कृतं भवत्युपचितम् । यथापीहैकत्योऽभिध्यालुर्भवति व्यापन्नचित्तः यावन्मिथ्यादृष्टिः खलु भिक्षव इहैकत्यो भवति विपरीतदर्शीति" विस्तरः । न चान्यद् अभिध्यादिव्यतिरिक्तं तत्र मनस्कर्मोक्तमिति 'अभिध्यादय एव मनस्कर्म' इति दार्ष्टान्तिकाः सौत्रान्तिकविशेषा इत्यर्थः । *Sakv.* p 400 V. supra, p 47, n 4.

कर्मक्लेशैकत्वसङ्करः प्राप्नोति [१]। कोशकारः—"कोऽत्र दोषः" ?[२] यदि कश्चित्क्लेशः क(७)र्मापि स्याद्भ्रायसः सारसः स्यात्। कर्मक्लेशानां चात्यन्तस्वभावप्रभावक्रियाफलभेदभिन्नानामेकत्वपरिकल्पैः सांख्यीयादिदर्शण(न)मभ्युपगतं स्यात्।

'अपि' शब्दात्पुनरत्र सूत्रोक्तास्त्रयो वङ्कास्त्रयो दोषास्त्रयः कषाया आकृष्यन्ते।[३] तेषां पुनरिदं लक्षणं यथाक्रमेण।[४] शाठ्यजं कायकर्म कायवङ्क

---

The term *Sthitibhāgiya* is not used either by the Kośakara or by Yaśomitra to indicate the Darshtāntika For the *Samchetaniya sutra*, cf 'कय च भिक्खवे तिविधा मनोकम्मन्तसन्दोसब्यापत्ति अकुसलसचेतनिका दुक्खुद्रया दुक्खविपाका होति ? इय भिक्खवे एकच्चो अभिज्झालु होति…ब्यापन्नचित्तो…मिच्छादिट्ठिको… होति। *Ang* v p 293

For *abhidhya*, etc, cf तत्थ 'धम्मनो' ति एतेसु [दस अकुसलकम्मपथेसु] हि पटिपाटिया सत्त चेतना धम्मा होन्ति, अभिज्झादयो तयो चेतनासम्पयुत्ता। *Dhs A* III 158

[१] This view of *Darshtāntika* about *kleśa* and *karma* amounts to a theory that the *samvara* and *asamvara* are also *karma* For a controversy on this, see *Kv* XII 1—इदानि सवरो कम्म ति कथा होति। तत्थ 'चक्खुना रूप दिस्वा निमित्तग्गाही होति, न निमित्तग्गाही होती' ति सुत्त निस्साय 'सवरोपि असवरोपि कम्म'ति येस लद्धि, सेय्यथा पि महासङ्घिकान। ते सन्धाय पुच्छा सकवादिस्स। *KvA* XII 1

[२] Cf एव तु सति कर्मक्लेशयोरैक्य स्यात्। किं स्याद्यदि कश्चित् क्लेशोऽपि कर्म स्यात ? सूत्र विरुद्ध स्यात्। सूत्रे तु चेतनायास्तन्मुखेन प्रवृत्तेस्ता दर्शयतीति वैभाषिका। *Akb* IV 65

'एव तु सति कर्मक्लेशयोरैक्य स्याल' इति। अभिध्या व्यापादमिथ्यादृष्टय क्लेशा, त एव कर्मेति। तदैक्यं स्यात्। नैतदस्ति। कश्चित्क्लेशोऽपि कर्म स्यादिति। चेतना कर्म चेतयित्वा कर्म चेति वचनात्। यद्येव सञ्चेतनीयसूत्र कथ नीयत इत्याह —'सूत्रे तु' इति विस्तर। सूत्रे तु चेतनायास्तन्मुखेनाभिध्यादिमुखेन प्रवृत्तेस्तैरभिध्यादिभिस्ता चेतना दर्शयति। "अभिध्यालु खलु भिक्षवो भवति' इति विस्तरेण। अन्यथा चेतनाग्रह भिक्षवः कर्म वदामि चेतयित्वा चेत्येतद्विरुध्यते। कर्मक्लेशयोश्चैक्ये अभिधर्मविरोध स्यात्। 'परानुग्रहोपघाताभिसन्ध्यभाव' इति विस्तर। 'परेषामनुग्रहोपघातयोरभिसन्ध्यभावे कथ सम्यग्दृष्टिमिथ्यादृष्ट्योर्यथाक्रम कुशलाकुशलत्वम्' इति। अतो ब्रवीति तन्मूलत्वादिति। "अतस्तयो कुशलाकुशलत्वम्। *Sakv* p 400

For the terms *karma* and *kleśa*, see *Yogasutra bhashya*, I 24, II 12 and IV 30

[३] Cf एतरहि खो पनाह भिक्खव "कुसलो कायवङ्कान कायदोसान कायकसावान, कुसलो वचीवङ्कान वचीदोसान वचीकसावान, कुसलो मनोवङ्कान मनोदोसान मनोकसावान। *Ang* I p 112

[४] Cf वङ्कदोषकषायोक्ति शाठ्यद्वेषजरागजे। *Ak* IV. 59 ab

इत्युच्यते। कुटिलान्व(7)यत्वात्। एवं शाठ्यजं वाङ्मनस्कर्म वाङ्मनोवङ्क इत्युच्यते। क्लेशजाः पुनस्त एव त्रयो दोषा इत्याख्यायन्ते, चित्तप्रदोषान्वयत्वात्। रागजं पुनः कायकर्म कायकषाय[1] इत्युक्तं रञ्जनात्मकत्वात्[2]। एवं वाङ्मनःकषायौ द्रष्टव्यौ। तानि पुनः कुशलानि कायवाङ्मण(न)स्कर्माणि त्रीणि सुचरितानि बोद्धव्यानि। एतान्येव(8) त्रीणि शौचेयाण्यु(न्यु)क्तानि।

अशैक्षसन्ताने त्रीणि मौनेयान्युच्यन्ते[3]। तत्र कायसुचरितं कायमौनेयं वाक्सुचरितं वाङ्मौनेयं मन एव तु मिथ्यासंकल्पोपरमान्मुनिरित्याख्यायते।[4] तदुपरमाद्धि कायवाग्जल्पोपरमो भवति। मुनेरिदं मौनेयमिति निरुक्तिः।[5]

---

[1] Cf. रागकसावो दोसक्सावो मोहक्सावो। इमे तयो कसावा। अपरेपि...। कायकसावो वचीकसावो मनोकसावो। इमे तयो कसावा। *Vbh.* p. 368. कसावा ति, कसटा निरोजा, रागादीसु च कायदुच्चरितादीसु च एकम्पि पणीत ओजवन्त नत्थि। तस्मा रागो कसावो ति आदि वुत्त। *VbhA* p. 499.

Also cf. सकषायाकषाययोः साम्परायिकेर्यापथयोः। *Tattvārtha-sūtra*, VI 4.

कषणादात्मनो घातात्कषाय कुगतिप्रद।
क्रोधादि' सह तेनात्मा सकषाय प्रवर्तनात्॥
कषायरहितस्तु स्यादकषाय प्रशान्तित।
कषायस्य क्षयाद्वेति प्रतिपत्तव्यमागमात्॥

*Tattvārtha-śloka-vārtika*, VI. 2-3

[2] Compare with this the Jaina theory of *leśyā* See *Tattvārthādhigama-sūtra*, II. 6.

[3] Cf. अशैक्षं कायवाक्कर्म मनश्चैव यथाक्रमम्।
मौनत्रयं त्रिधा शौचं सर्वं सुचरितत्रयम्॥ *Ak* IV. 64.

[4] Cf अशैक्षे कायवाक्कर्मणी कायवाङ्मौनेये। अशैक्ष तु मन एव मनोमौनेयं न मनस्कर्मेति। किं कारणम्। चित्तं हि परमार्थमुनि। तत् किल कायवाक्कर्मभ्यामनुमीयत इति। अपि खलु कायवाक्कर्मणी विरतिस्वभावेन न मनस्कर्म। चित्ताविज्ञप्त्यभावात्। विरमार्थेन च मौनम्। अतो मन एव विरतमौनमित्युच्यते। *Akb* IV. 64 'तत् किल काय-वाक्कर्मभ्यां' अशैक्षाभ्यां 'अनुमीयते' अशैक्षमिति। कथं तथागतोऽनुमानम्य। प्रशान्तेन कायकर्मणा प्रशान्तेन वाक्कर्मणेति सूत्रे वचनात्। 'किल' शब्देन संभावितमतं द्योतयित्वाऽऽचार्यं स्वमतमाह—'अपि खलु' इति विस्तर। 'चित्तविज्ञप्त्यभावात्' इति। यस्मात् 'चित्तस्याविज्ञप्ति' नास्त्यतो 'न मनस्कर्म विरतिस्वभावम्'। विरमार्थेन च मौनम्' इति। 'विरमो' विरति। सर्वाकुशलविरमार्थेन मौनमित्यभिप्राय। 'अतो मन एव' सर्वाकुशलेभ्यो 'विरत मौनमित्युच्यते'। *Saku* p. 399

[5] Cf. तीणिमानि भिक्खवे मोनेय्यानि। कतमानि तीणि? कायमोनेय्यं वचीमोनेय्यं मनोमोनेय्यं। ...कतम च भिक्खवे मनोमोनेय्यं? इध भिक्खवे भिक्खु आसवानं

कस्मात्पुनरर्हत एव मौनेयाणि(नि) ? तस्य पर[9]मार्थमुनित्वात्[1]। स खलु सर्वक्लेशजल्पोपरमान्मुनिरित्युच्यते ।

एषा पुनर्मौणे(ने)यशौचेयदेशना मिथ्यामौनशौचाभियुक्तानधिकृत्य-देशितेति तदेतत्सह मौनेयशौचेयैर्निर्दिष्यते ॥

[ 189 ] शुभं तत्साऽनभिध्यादि प्रोक्तं सुचरितत्रयम् ।
द्वयंमौलमदः कर्म मार्गा दश शुभाशुभाः ॥[2]

द्वयं पुनरेतत्सुचरितदुश्चरिताख्यं यन्मौ[Iv. B, 1. Fol. 95 a.][(1)]लं ते दश शुभाश्चाशुभाश्च कर्मपथा भवन्ति[3] प्रयोगपृष्ठवर्ज्याः ।

तत्र कायसुचरितस्य प्रदेशः पृयोगपृष्ठाख्यो मद्यादिविरतिदानेज्या-दिकः। वाक्सुचरितस्य पृ(प्रि)यवचनादिकः। मनःसुचरितस्य शुभा चेतना ।

कायदुश्चरितस्यापि परेषां जीवितभोगदाराऽ[पहार]प्रयोगपृष्ठाख्यः । वाग्दुश्चरितस्याप्यपृ(प्रि)यवचनाद्याख्यः । [(2)]मनोदुश्चरितस्याप्यकुशलं मन-स्कर्म·········[4]स्तेषां नात्यौदारिकत्वात् ।

यस्तु प्राणातिपातादत्तादानकाममिथ्याचारविरत्याख्यौ(ख्यो) मौलः स कुशलः कर्मपथः, तस्यौदारिकत्वेन महानुशंसतमफलत्वात् । यस्तु परेषां जीवितभोगपरदारापहारकायपरिस्पन्दः स मौलः स चाकुशलः कर्मपथः । एवं यथा[(3)]संभवमन्येषां द्रष्टव्यमिति ॥

अभिधर्मदीपे विभाषाप्रभाया [वृत्तौ] चतुर्थस्याध्यायस्य द्वितीयः पादः ॥

---

खया अनासव चेतोविमुत्ति पञ्ञाविमुत्ति दिट्ठेव धम्मे सय अभिञ्ञा सच्छिकत्वा पवेदेति ; इद वुच्चति भिक्खवे मनोमोनेय्य । *Ang* I p 273.

····चित्तसखारनिरोधो सञ्ञावेदयितनिरोधसमापत्ति मनोमोनेय्यन्ति वेदितब्बा । *Ang. A.* II. p. 372.

[1] Cf. कायवाङ्मनोमौनेययोगाच्च शाक्यमुनि । *Aaa.* p. 160. सर्वजल्पनाविरहा-त्समारोपापवादान्तद्वयमौनात्, अशैक्षकायवाङ्मन कर्मलक्षणमौनत्रययोगाद्वा मुनिर्बुद्धो भगवान् । *B. Pañjikā*, IX. 1.

[2] Cf. विपर्ययात्सुचरित तदौदारिकसंग्रहात् ।
दश कर्मपथा उक्ता यथायोग शुभाशुभाः ॥ *Ak.* IV. 66.

[3] दस अकुसलकम्मपथा । पाणातिपातो, अदिन्नादान, कामेसु मिच्छाचारो, मुसा-वादो, पिसुणा वाचा, फरुसा वाचा, सम्फप्पलापो, अभिज्झा, व्यापादो, मिच्छादिट्ठि । दस कुसलकम्मपथा । पाणातिपाता वेरमणी—पे॰—सम्फप्पलापा वेरमणी, अनभिज्झा, अब्यापादो, सम्मादिट्ठि । *Digha.* XXXIII. 3 3. See *DhsA.* III 142–172.

[4] A blank space of about five letters in the Ms.

# चतुर्थाध्याये

## तृतीयपादः ।

इदमिदानीं वक्तव्यम् । य एते दशकर्मपथा एषां कति विज्ञप्तिस्वभावाः कत्यविज्ञप्तिस्वभावाः कत्युभयस्वभावाः ?

तत्राकुशलानां तावत्—

[ 190 ] कारिताः षडविज्ञप्तिर्द्व्यात्मैकस्तेऽपि षट् कृताः ।[1]

तत्र प्राणा(4)तिपातादत्तादानमृषावादपैशून्यपारुष्यसंभिन्नप्रलापाः । एते नावश्यं विज्ञप्तिस्वभावाः ।[2] परेण कारयतो मौलीविज्ञप्त्यभावात् ।[3] काममिथ्याचारस्तु नित्यं द्व्यात्मकः, तस्य परेणाशक्यत्वात् । तेऽपि 'षट् कृताः' यदा स्वयमेव प्राणातिपातादीन् षट् कर्मपथान् करोति तदा द्व्यात्मानो भवन्ति । विज्ञप्त्यविज्ञप्तिस्वभावत्वात् ।

कुशलानां पुनः

शुभाः सप्त द्विधा ज्ञेया एकवं(धै)ते समाहिताः ॥[4]

सप्त खलु रूपिणः कुशलाः कर्मपथाः द्विधा भवन्ति । विज्ञप्त्यधीनत्वात् समाहित[5]शीलस्य । ध्यानानास्रवसंवरसंगृहीतास्त्वविज्ञप्तिस्वभावा एव । समाहित(5)स्य विज्ञप्त्यभावात् ।

[ 191 ] या सामन्तेष्वविज्ञप्तिः पृष्ठेषु तु विपर्ययः ।[6]

[1] Cf अशुभा षडविज्ञप्ति द्विधैकस्तेऽपि कुर्वतः । Ak. iv 67ab

[2] Cf अकुशलाः षट् कर्मपथा अवश्यमविज्ञप्तिस्वभावाः । Akb iv. 67ab

[3] 'मौलविज्ञप्त्यभावात्' इति । यस्मात् मौली कर्मपथसंगृहीता विज्ञप्तिर्नास्ति । सामन्तकविज्ञप्तिस्तर्हि प्रयोगमार्गसंगृहीतेति वैभाषिकसिद्धान्तः । Sakv. p 401.

[4] Cf द्विविधा सप्त कुशला अविज्ञप्तिः समाधिजा ॥ Ak. iv 67cd

[5] Similarly in Akb 'विज्ञप्त्यधीनत्वात् समादानशीलस्य' इति । शीलं हि द्विविधम् । समादानशीलं प्रातिमोक्षसंवरः धर्मताशीलं च ध्यानानास्रवसंवरौ । समादानशीलं विज्ञप्त्यधीनम् । धर्मताशीलं तु न विज्ञप्त्यधीनम् । Sakv. p 401

[6] Cf सामन्तकास्तु विज्ञप्तिरविज्ञप्तिर्भवेन्न वा ।
विपर्ययेण पृष्ठानि । Ak. iv 68abc.
Adv. kārikā 191 ab substantially agrees with Akb iv. 68 abc.

सामन्तकः खलु यदा तीव्रेण पर्यवस्थानेन[1] प्रयोगमारभते, प्रसादेन वा घनरसेन तदा द्विस्वभावा। यदा मृदुना तदा विज्ञप्तिरेव। विपर्ययेण तु पृष्ठेष्ववश्यमविज्ञप्तिः। यदि पुनः कर्मपथं कृत्वा पुनस्तत्रैवानुचेष्टते स्याद्विज्ञप्तिरपी(6)ति। तीव्रेण तु प्रहारेण जीविताद्व्यपरोपयति। तत्र या विज्ञप्तिस्तत्क्षणिका चाविज्ञप्तिः स मौलः कर्मपथः। द्वाभ्यां हि कारणाभ्यां प्राणातिपातावद्येन स्पृश्यते। प्रयोगतः फलपरिपूरितश्च।[2] तत ऊर्ध्वमविज्ञप्तिक्षणः(णाः) पृष्ठीभवन्ति। यावद्धतं पशुं कृष्णाति शोधयति विक्रीणाति पचति खादति कीर्तयति। यदि तावद(7)स्य विज्ञप्तिक्षणा अपि पृष्ठं भवन्ति। एवमन्येष्वपि[3] यथासंभवं योज्यम्।

अभिध्यादीनां नास्ति प्रयोगो न पृष्ठं संमुखीभावमात्रादेव कर्मपथाः[4]।[5]

सूत्रे भगवतोक्तम्—"प्राणातिपातो भिक्षवस्त्रिविधः। लोभजो द्वेषजो मोहजः, यावन्मिथ्यादृष्टिः" इति[6]। तत्रैषां कर्मपथानां केषाञ्चिल्लोभेन निष्ठा, केषाञ्चिद् द्वेषेण, केषाञ्चि(8)न्मोहेन[7]। सर्वेषामपि

प्रयोगस्तु त्रिमूलोत्थः[8]

---

[1] पर्यवस्थानेनेति आह्रीक्यादिना। *Sakv.* p. 401.

[2] प्रयोगस्य मौल कर्मपथ फलपरिपूरि। यो हि प्रयुज्यते मौल कर्मपथं न जनयति तस्य प्रयोगफलमस्ति न तु फलपरिपूरि। *Ibid.*

[3] 'एवमन्येष्वपि' इति। यथा तावदिह कश्चित् परस्व हर्तुकामो मञ्चादुत्तिष्ठति शस्त्र गृह्णाति, परगृह गच्छति। सुप्तो न वेत्याकर्णयति। परस्व स्पृशति। यावन्न स्थानात्प्रच्यावयति। तावत्प्रयोगः। यस्मिंस्तु क्षणे स्थानात्प्रच्यावयति तत्र या विज्ञप्तिस्तत्क्षणिका चाविज्ञप्तिरय मौलः कर्मपथः। द्वाभ्या हि कारणाभ्या अदत्तादानावद्येन स्पृश्यते प्रयोगत. फलपरिपूरितश्च। तत परमविज्ञप्तिक्षणाः पृष्ठं भवन्ति। यावत्तत्परस्व विभजते···गोपयति। अनुकीर्तयति वा तावदस्य विज्ञप्तिक्षणा अपि पृष्ठ भवन्तीति। *Ibid.* p. 402.

[4] For a full discussion on *karma*, *karmadvāra* and *karmapatha*, see *Dhs A.* III. 92-172.

[5] After this, the Kośakāra discusses one more point in detail : किं तावत् मरणभवस्थे तस्मिन् प्राणिनि ये विज्ञप्त्यविज्ञप्ती ते कर्मपथ आहोस्विन्मृते ? This is not discussed in *Adv* See *Sakv.* p. 402 and *LVPAk.* IV. pp. 142-4.

[6] Quoted in *Akb* IV. 68c.

[7] Cf. 'मूलतो' ति पाणातिपातो दोसमोहवसेन द्विमूलको होति। अदिन्नादान दोसमोहवसेन वा लोभमोहवसेन वा। मिच्छाचारो लोभमोहवसेनेव। मुसावादो दोसमोहवसेन वा लोभमोहवसेन। अभिज्झा मोहवसेन एकमूला; तथा व्यापादो। मिच्छादिट्ठि लोभमोहवसेन द्विमूला ति। *Dhs A.* III. 162. See *Asm.* p. 55.

[8] Cf. प्रयोगस्तु त्रिमूलजः। *Ak.* IV. 68 d.

[1]प्रयोगस्तेषामकुशलमूलत्रयाज्जातः। तत्र लोभजः प्राणातिपातस्तच्छरीरावयवार्थं मृगलुब्धानामौरभ्रिकमात्सिकशाकुन्तकादीनां च। द्वेषजो यथा वैरणि(नि)र्यातनार्थम्। मोहजो याज्ञिकाणा(नां) धर्मबुद्ध्या राज्ञां च धर्मपाठकप्रामान्या(ण्या)द्धिंसताम्। पारसीकादीनां च ध(?)र्मबुद्ध्या मातरं पितरमभिघ्नताम्।[2]

लोभजमदत्तादानं यस्तेनार्थी[3] तद्धरति। द्वेषजं वैरनिर्यातनार्थम्। मोहजं यथा राज्ञां धर्मपाठकप्रामाण्याद् दुष्टणि(नि)ग्रहार्थम्। यथा च दुष्टब्राह्मणा आहुः—"सर्वमिदं प्रजापतिना ब्राह्मणेभ्यो दत्तं ब्राह्मणानां दौर्बल्याद् वृषलाः परिभुञ्जन्ते। तस्मादपहरन् ब्राह्मणः स्वमादत्ते स्वमेव तु भो[IV A, 1 Fol. 95 b1]ङ्क्ते वस्ते स्वं ददाति" इति।[4]

लोभजः काममिथ्याचारः परदारादिषु तत्संरागादब्रह्मचर्यम्। द्वेषजो वैरणि(नि)र्यातनार्थम्। मोहजो यथा पारसीकानां मात्रादिगमनम्। गोसवे च यज्ञे "उपहा उदकं चूषयति, तृणानि छिनत्ति, उपैति मातरमुपस्वसारमुपस[गोत्रा]दि(मि)ति।"[5]

मृषावादादयो लोभजा द्वेषजाश्च यथा पूर्वमुक्तम्। मोहजो मृ(?)षावादो यथाह—

"न नर्मयुक्तमनृतं हिनस्ति
न स्त्रीषु राजन्न विवाहकाले।

---

[1] This whole *Adv* (*kārika* 191 c) substantially agrees with *Akb* iv 68 d

[2] Cf पारसीकाना च। ते ह्येवमाहु — मातापितरौ जीर्णौ वा ग्लानौ वा हन्तव्यौ इति। *Akb* iv 68 d See *LVPAk* iv p 145, n 2.

[3] यो येनार्थी स तद्धरति in *Akb Ibid*

[4] Cf दुष्टनिग्रहार्थं यथा ब्राह्मणा आहु —"सर्वमिद ब्रह्मणा ''तस्मादपहरन् ब्राह्मण स्वमादत्ते स्वमेव ब्राह्मणो भुङ्क्ते स्व वस्ते स्वं ददाति च" इति। न चैषामपरस्वसंज्ञा भवति। *Akb Ibid* See *Syādvādamañjarī*, *karikā* 7.

Also cf स्वमेव ब्राह्मणो भुङ्क्ते स्व वस्ते स्व ददाति च।
आनृशंस्याद्ब्राह्मणस्य भुञ्जन्ते हीतरे जनाः॥ *Manusmriti*, I 101

[5] For a discussion on the authenticity of this quotation, which is also quoted in *Akb.* iv 68d, see *LVPAk* iv. p. 147, n 2.

Cf अथैष गोसवः। स्वर्गकामो हैतेन यजेत।... तस्य व्रतम्। उप मातरम् इयात् उप स्वसारम् उप सगोत्राम्। उपावहायोदकम् आचामेद्, उपावहाय तृणान्य् आच्छिन्द्यात्। यत्र यत्रैनं विन्दा विन्देत्, तत् तद् विनिष्ठेत। अनड्वान् ह लोकं जयति। तेन हैतेन जनको वैदेह ईजाञ्चक्रे। *Jaiminiya Brāhmaṇa*, II. 113 (pp. 207-8. Nagpur edition, 1954)

प्राणात्यये त्स(स)र्वधनापहारे
पञ्चानृतान्याहुरपातकानि ॥"[१] इति ।

पैशून्यादयस्तु मिथ्यादृष्टिप्रवर्तिता मोहजा यश्च वेदाद्यसच्छास्त्रप्रलापः ।

[ अभिध्याद्यास्त्रिमूलजाः ][२] ॥

अभिध्यादयस्तु लोभादनन्तरसंभूतत्वात् त्रिमूलजाः ।

उक्ताः [अ]कुशलाः कर्मपथाः ।

[ 192 ] [ कुशलाः प्रयोगपृष्ठाश्च कुशलत्रयमूलजाः ] ।[३]

कुशलानां तु प्रयोगः पृष्ठं[४] च त्रि(3)मूलोत्थम् । तेषां कुशलचित्तसमुत्थितत्वात्, तत्र च तद्भावात् ।

केन पुनरेषां कर्मपथानां समाप्तिर्भवति ? तदिदमपदिश्यते—

द्वेषेण वधपारुष्यव्यापत्तीनां समापनम् ॥[५]

प्राणातिपातपारुष्यव्यापादानां खलु द्वेषेण निष्ठा भवति । परित्यागपरुषचित्तसंमुखीभावात् ॥

[ 193 ] स्तेयस्यान्याङ्गनायातेरभिध्यायाश्च लोभतः ।[६]

---

१ Also quoted in *Akb.* IV. 68d.

Mallishena in his *Syādvāda-mañjarī*, *(kārikā 7)* quotes this verse in a similar context.

Cf उद्वाहकाले रतिसम्प्रयोगे प्राणात्यये सर्वधनापहारे ।
विप्रस्य चार्थे ह्यनृतं वदेयुः पञ्चानृतान्याहुरपातकानि ॥
*Vasishṭasmṛti*, XVI. 31.

२ This line (191 d) is missing in the Ms.

Cf. तदनन्तरसभूतेरभिध्याद्यास्त्रिमूलजाः । *Ak.* IV. 69 ab.

३ This line (192 ab) is missing in the Ms.

Cf. कुशलाः सप्रयोगान्ता अलोभद्वेषमूलजा. । *Ak.* IV. 69 cd.

तद्यथा श्रामणेर उपसपाद्यमानो'''उपाध्याय याचते यावदेक कर्मवाचन क्रियते द्वितीय च । अय प्रयोगः । तृतीयकर्मवाचने या विज्ञप्तिस्तत् क्षणिका चाविज्ञप्तिरय मौलः कर्मपथः । तत ऊर्ध्वं यावन्निश्रया आरोच्यन्ते तदधिष्ठान च विज्ञापयति अविज्ञप्तिश्च यावदनुवर्तते इद पृष्ठम् । *Akb.* IV. 69 cd.

५ Cf. वधव्यापादपारुष्यनिष्ठा द्वेषेण लोभतः । *Ak.* IV. 70 ab.

६ Cf. परस्त्रीगमनाभिध्याऽदत्तादानसमापनम् । *Ak.* IV. 70 cd.

अदत्तादान[4]परस्त्रीगमनाभिध्याना लोभेन निष्ठा ।

मिथ्यादृशस्तु मोहेन

मिथ्यादृष्टेः खलु मोहेन समाप्तिर्भवति । अधमात्रमूढाभिहिता निष्ठां पयन्ति ।

तदन्येषां त्रिभिर्मतम् ॥[1]

के पुनरन्ये ? मृषावादपैशुन्यसम्भिन्नप्रलापाः । तेषां त्रिभिरपि निष्ठा लोभेन द्वेषेण मोहेण(न) चा ॥

अथैषां चतुर्णां कारणानां किमधिष्ठानं(नम्) ? तदुच्यते—

[ 194 ] चतुर्णामप्य[5]धिष्ठानं ज्ञेयमेषां यथाक्रमम् ।
प्राणिनश्चाथ भोगाश्च नामरूपं च नाम च ॥[2]

तत्र सत्त्वाधिष्ठाना वधादयः । भोगाधिष्ठाना(ना) परस्त्रीगमनादयः । नामरूपाधिष्ठाना मिथ्यादृष्टिः । नामकायाधिष्ठाना(ना) मृषावादादयः ॥

कथं पुनः प्राणातिपातं स्वयं कुर्वत कर्मपथो भवति कथं यावन्मिथ्यादृष्टिरिति ? लक्षणं कर्मपथानां व[6]क्तव्यम् । तदारभ्यते—

[ 195 ] प्राणातिपातो धीपूर्वमभ्रान्त्या परमारणम् ।[4]

यदि खलु हनिष्यामि हन्म्यनमिति सचित्त्याभ्रान्तचित्त परं जीवि

---

[1] Cf मिथ्यादृष्टस्तु मोहेन नायाणां त्रिभिरिष्यते । *Ak* IV 71 ab

[2] Cf सत्त्वभोगावधिष्ठानं नामरूपं च नाम च । *Ak* IV 71 cd

See *DhtA* III 160

[3] After this the Kośakāra discusses one more point य पर मरणात् नियमस्य मम तत पूर्व वा म्रियते विमस्य मौल कर्मपथो भवत्युताहो न । *Akb* IV 72 This is not discussed in *Adv*

[4] Cf प्राणातिपातः संचिन्त्य परस्याभ्रान्तिमारणम् । *Ak* IV 73 ab

Also cf प्रमत्तयोगात्प्राणव्यपरोपणं हिंसा । *Tattvartha sutra* VII 8

[5] For a controversy on Intentional and unintentional crimes see *Kv* XX I—इत्थानि अमभिसन्धिवकया नाम ह नि । नन्व आनन्तर्यन्ति नाम गह ति अग्गियानि तम्मा अनभिसन्धि नगु वध्यम विरातिनगु आनन्तरिया हानानि यम लद्धि गम्मया रि एकच्चान उत्तरापथकानं । *KvA* XX I

प्रहाणमार्गे[1] समले[2] पञ्चभिः फलैः कर्म सफलं भवति । तुल्या अधिका अपि तस्य पश्चादुत्प(?)न्नाः सदृशा[3] धर्मा णि(नि)ष्यन्दफलम् । विपाकफलं स्वभूमिनियतो विपाकः । विसंयोगफलं यत्क्लेशप्रहाणम् । [4]पुरुषकारफलं ये तद्बलसमुत्पन्ना धर्माः । न तथा सहभुवः । यच्चानन्तरोत्पन्नो विमुक्तिमार्गः, यच्चानागतं भाव्यते, यच्च तत्प्रहाणं तद्बलेन हि तत्प्राप्त्युत्पत्तिः ।[4] अधिपतिफलं स्वभावादन्ये सर्वसंस्काराः पूर्वोत्पन्न व[IV B, 4 Fol 98 a]र्ज्या इति द्रष्टव्यम् । प्रहाणमपि तन्मार्गस्याधिपतिफलं युज्यते । तदाधिपत्येन तत्साक्षात्करणादित्यन्ये । यत्तु निर्मलप्रहाणमार्गे कर्म तच्चतुर्भिः फलैः सफलं विपाकफलं मुक्त्वा । 'तद्वदन्यच्छुभाशुभम् ।' अन्यदपि सास्रवं यच्छुभाशुभम्, यच्च प्रहाणमार्गादन्यत्कुशलसास्रव [कर्म] यच्चाकुशलं तदपि चतुर्भिरेव फलैः सफलं विसंयोगफलं त्य(?)क्त्वा ॥

[ 207 ] ततोऽन्यन्निर्मलं ज्ञेयं त्रिभिरव्याकृतं तथा ।[1]

शेषं पुनरणा(ना)स्रवं यत्प्रहाणमार्गादन्यत्, यच्चाव्याकृतं तत्त्रिभिर्विपाक[वि]संयोगफलं मुक्त्वा ।

फलं शुभस्य चत्वारि द्वे त्रीणि च शुभादयः ॥[1]

कुशलस्य कर्मण. कुशला धर्माश्चत्वारि फलानि विपाकफलं हित्वा । अकुशला द्वे पुरुषकाराधिपतिफले । अव्याकृतास्त्रीणि निष्यन्दविसंयोगफले हि(?)त्वा ॥

[ 208 ] शुभाद्यास्त्वशुभस्य द्वे त्रीणि चत्वारि च क्रमात् ।[2]

---

[1] प्रहाणार्थं मार्गं प्रहीयते वाऽनन क्लेशा इति प्रहाणमार्ग आनन्तर्यमार्गं । *Akb* IV 87 V infra, *Ad karika* 439

[2] ससमले in the Ms

[3] समाधिजा उत्तरे सदृशा धर्मा । *Akb* IV 87—समाधिजग्रहण असमाधिजनिरासार्थम् । सदृशग्रहणमनास्रवाव्याकृतनिरासार्थम् । *Sakv* p 421

[4-4] Cf पुरुषकारफल तदाकृष्टा धर्मास्तद्यथा अधिमुक्तिमार्गं तत्सहभुवश्च । यच्चानागत भाव्यते तच्च प्रहाणम । *Akb* IV 87—सहभुव इति । सप्रयुक्ताश्च तत्र वेदनादय । विप्रयुक्ताश्च जात्यादय । यच्चानागत भाव्यत इति । अनागतो धर्मस्तद्बलेन प्राप्यत इति । तस्य तत्पुरुषकारफलम् अत एव तच्च प्रहाण पुरुषकारफल व्यवस्थाप्यते । न केवल विसयोगफलमिति । *Sakv* p 421

[1] Cf अनास्रव पुन शेष त्रिभिरव्याकृत च यत ।
चत्वारि द्वे तथा त्रीणि कुशलस्य शुभादय ॥ *Ak* IV 88

[2] Cf अशुभस्य शुभाद्या द्वे त्रीणि चत्वार्यनुक्रमम् । *Ak* IV 89 ab

अकुशलस्य कर्मणः कुशला धर्मा द्वे पुरुषकाराधिपतिफले। अकुशलास्त्रीणि विपाकविसंयोगफले हित्वा। अव्याकृताश्चत्वारि विसंयोगफलं हित्वा। अव्याकृतमपि ह्यकुशलानां निष्यन्दफलमस्ति। यथा कामावचरे सत्कायान्तर्ग्राहदृष्टी। सर्वेषां दुःखदर्शण(न)प्रहातव्याणां(नां) समुद(4)यदर्शण(न)प्रहातव्याणां(नां) च सर्वत्रगाणा(ना)म्।

अव्याकृतस्य ते तु द्वे त्रीणि त्रीणि शुभादयः ॥[1]

अव्याकृतस्य कर्मणः कुशला धर्माः द्वे पुरुषकाराधिपतिफले। अकुशलास्त्रीणि विसंयोगफले हित्वा। अव्याकृतस्य तान्येव त्रीणि॥

[ 209 ] सर्वे चत्वार्यतीतस्य मध्यमस्य च भाविनः।[2]
मध्यमा द्वे स्वकस्यैव त्रीण्यनागामिजन्मनः ॥

[2]तत्र 'सर्वे' इति त्रैकालिकाः। (5)अतीतस्य कर्मणोऽतीतानागतप्रत्युत्पन्ना धर्माश्चत्वारि फलानि विसंयोगमपास्य। प्रत्युत्पन्नस्यापि कर्मणोऽनागता धर्माश्चत्वारि फलान्येतान्येव। वर्तमानास्तु धर्मा वर्तमानस्य कर्मणः द्वे पुरुषकाराधिपतिफले। अजातस्य त्वजाता धर्मास्त्रीणि फलानि निष्यन्दविसंयोगफले हित्वा ॥[3]

[ 210 ] चत्वार्येकभुवो द्वे वा त्रीणि चापरभूमिकाः।[4]

(6)स्वभूमिका धर्माः कर्मणो यथासंभवं चत्वारि फलानि विसंयोगफलं हित्वा। अन्यभूमिका धर्माः ते(त्रि)वेदनास्रवास्त्रीणि, विपाकविसंयोगफले हित्वा। निष्यन्दफलं ह्यधातुपतितानामन्यभूमिकं न धार्यते। सास्रवाश्चेद् द्वे, पुरुषकाराधिपतिफले।

शैक्षाद्यास्त्रीणि शैक्षस्य त एवाशैक्षकर्मणः ॥[5]

शैक्षस्य कर्मणः शैक्षा धर्मा(7)स्त्रीणि फलानि, विपाकविसंयोगफले

---

[1] Cf. अव्याकृतस्य द्वे त्रीणि त्रीणि चैते शुभादयः। *Ak.* iv. 89 cd.

[2] Cf. सर्वेऽतीतस्य चत्वारि मध्यमस्याप्यनागताः।
मध्यमा द्वे अजातस्य फलानि त्रीण्यनागताः॥ *Ak.* iv. 90.

[2-3] This *Adv* is almost identical with *Akb* iv. 90. See *Sakv.* pp. 422-423.

[4] Cf. स्वभूमिधर्मास्चत्वारि त्रीणि द्वे वान्यभूमिकाः। *Ak.* iv. 91 ab.

[5] Cf. शैक्षस्य त्रीणि शैक्षाद्या, अशैक्षस्य तु कर्मणः॥ *Ak.* iv. 91. cd.

हित्वा। अशैक्षा अप्येवम्। नैवशैक्षाणा(ना)शैक्षास्त्रीण्येव निष्यन्दविपाकफले हित्वा ॥

अशैक्षस्य[१] तु कर्मणः

[ 211 ] एकं त्रीणि द्वयं चैव शैक्षाद्याः पश्चिमस्य तु ।
द्वे द्वे पञ्च यथासंख्यं[२]

अशैक्षस्य खलु कर्मणः शैक्षा धर्मा एकमधिपतिफलम्, अशैक्षास्त्रीणि विपाकविसंयोग(फ)ले हित्वा। नैवशैक्षाणा(ना)शैक्षा द्वे पुरुषकाराधिपतिफले। नैवशैक्षानाशैक्षाणां पुनः शैक्षा धर्मा द्वे पुरुषकाराधिपतिफले। एवमशैक्षाः। नैवशैक्षानाशैक्षाः पञ्चफलानि।

दृग्घेयस्य तु कर्मणः ॥

[ 212 ] त्रीणि चत्वारि चैकं च दृष्टिहेयादयः स्मृताः ।[३]

दर्शण(न)हेयस्य खलु कर्मणः दर्शण(न)हेया धर्मास्त्रीणि फलानि, वि(पा)पाकविसंयोगफले हित्वा। भावनाहेयाश्चत्वारि, विसंयोगफलं हित्वा। अप्रहेया एकमधिपतिफलम्।

ते त्वभ्यासप्रहेयस्य द्वे चत्वारि त्रिधा मताः ॥[४]

[ 213 ] क्रमादेकद्विचत्वारि ते त्वहेयस्य कर्मणः ।[३]

भावनाहेयस्य खलु कर्मणो दर्शण(न)हेया धर्माः द्वे, पुरुषकाराधिपतिफले। भावनाहेयाश्चत्वारि विसंयोगफलं हित्वा। अप्र[IV. A, 4. Fol. 98b.]हेयास्त्रीणि, विपाकनिष्यन्दफले हित्वा। अप्रहेयस्य तु कर्मणो दर्शण(न)प्रहातव्या धर्मा एकमधिपतिफलम्। भावनाहेया द्वे, पुरुषकाराधिपतिफले। अप्रहेयाश्चत्वारि विपाकफलं हित्वा ॥

अथ किमेकं कर्मैकं जन्माक्षिपति, अथानेकम् ?[५] तदादर्श्यते—

---

[१] अशैक्षस्याशैक्षस्य in the Ms.

[२] *Cf.* धर्माः शैक्षादिका एकं फलं त्रीण्यपि च द्वयम् ।
ताभ्यामन्यस्य शैक्षाद्या द्वे द्वे पञ्च फलानि च ॥ *Ak.* iv. 92

[३] Cf त्रीणि चत्वारि चैकं च दृग्घेयस्य तदादयः ।
ते द्वे चत्वार्यथ त्रीणि भावना हेयकर्मणः ॥ *Ak.* iv. 93.

[४] Cf. अप्रहेयस्य ते त्वेकं द्वे चत्वारि यथाक्रमम् । *Ak.* iv. 94 ab.

[५] Cf. इमस्मिं ठाने साकेतपञ्हं नाम गण्हिसु । साकेते किर उपासका सालायं निसीदित्वा 'किं नु खो एकाय चेतनाय कम्मे आयूहिते एका पटिसन्धि होति उदाहु नाना ?'

एकेनाक्षिप्यते [जन्म] भूरिभिः परिपूर्यते ॥[1]

एकेन खलु कर्मणा सकलमेकं जन्माक्षिप्यते(2)। बहुभिस्तु परिपूर्यते। तद्यथा चित्रकर एकया वर्त्या कृत्स्नं रूपमाक्षिपति, बह्वीभिः परिपूरयति तद्वदिति[2] ॥

---

ति पञ्हं समुट्ठापेत्वा निच्छेतुं असक्कोन्ता आभिधम्मिकत्थेरे उपसङ्कमित्वा पुच्छिंसु। थेरा यथा एकस्मा अम्बबीजा एको व अङ्कुरो निक्खमति एवं एका व पटिसन्धि होती ति सञ्ञापेसुं। अथ एकदिवसं किं नु खो नानाचेतनाहि कम्मे आयूहिते पटिसन्धियो नाना होन्ति उदाहु एका ?" ति पञ्हं समुट्ठापेत्वा निच्छेतुं असक्कोन्ता थेरे पुच्छिंसु। थेरा यथा बहूसु अम्बबीजेसु रोपितेसु बहू अङ्कुरा निक्खमन्ति एवं बहुका व पटिसन्धियो' ति सञ्ञापेसुं। *DhsA* III 588 For details see *Vipakuddhara katha* *DhsA* III 587-650 V supra p 144 n 5

[1] Cf एकं जन्माक्षिपत्येकमनेकं परिपूरकम्।
नाक्षिपिके समापत्ती अचित्तं प्राप्तयो न च ॥ *Ak.* IV 95

[2] Cf एष हि सिद्धान्तः। एकमेव जन्माक्षिपत्येकमेव च कर्म नानेकं जन्मेति निकायसभागस्याख्या। तत्र हि जन्म जातं इत्युच्यते। यत्तर्हि स्थविरानिरुद्धेनोक्तं सोऽहं तस्यैकपिण्डपातस्य विपाकेन सप्तकृत्वस्त्रयस्त्रिंशेषु देवेषूपपन्नो यावत्तद्याद्य शाक्यकुले जात इति ? यथा मनुष्यो दीनारात्ययोऽनन सहस्रं निर्विश्याह एकेन दीनारेणाहमेतावद्धनं प्राप्त इति। *Akb* IV 75 a.

Also cf विपाकस्त्रिविधो जात्यायुर्भोग इति। तत्रेदं विचार्यते—किमेकं कर्मैकस्य जन्मनः कारणम् ? अथैकं कर्मानेकं जन्माक्षिपतीति ? द्वितीया विचारणा—किमनेकं कर्मानेकं जन्म निर्वर्तयति ? अथानेकं कर्मैकं जन्म निर्वर्तयति ? इति। न तावदेकं कर्मैकस्य जन्मनः कारणम् कस्मात् ? अनादिकालप्रचितस्यासंख्येयस्यावशिष्टस्य कर्मणः साम्प्रतिकस्य च फलक्रमानियमात् अनाश्वासो लोकस्य प्रसक्तः स चानिष्ट इति। न चैकं कर्मानेकस्य जन्मनः कारणम् कस्मात् ? अनेकेषु जन्मस्वेकैकमेव कर्मानेकस्य जन्मनः कारणमित्यवशिष्टस्य विपाककालाभावः प्रसक्तः स चाप्यनिष्ट इति। न चानेकं कर्मानेकजन्मकारणम् कस्मात् ? तदनेकं जन्म युगपन्न भवतीति क्रमेण वाच्यम् तथा च पूर्वदोषानुषङ्गः। तस्माज्जन्मप्रायणान्तरे कृतः पुण्यापुण्यकर्माशयप्रचयो विचित्रः प्रधानोपसर्जनभावेनावस्थितः प्रायणाभिव्यक्त एकप्रघट्टकेन मरणं प्रसाध्य सम्मूर्छित एकमेव जन्म करोति तच्च जन्म तेनैव कर्मणा लब्धायुष्कं भवति। तस्मिन्नायुषि तेनैव कर्मणा भोगः सम्पद्यत इति। असौ कर्माशयो जन्मायुर्भोगहेतुत्वात्त्रिविपाकोऽभिधीयत इति। अत एकभविकः कर्माशय उक्त इति। *Yoga-sūtra-bhāṣya* II 12.

For the Jaina view on this topic see P Sukhalalji Sanghavi Yasovi-jaya's *Vṛtti* on *Yoga-darshana* II 12.

अथ यदुक्तं भगवता—"कर्मस्वकोऽयं भिक्षवो लोकः" इति।[१] तत्केयं कर्मस्वकता नाम ?[२] तदारभ्यते—

[ 214 ] कुशलं वाऽथवा पापं यदतीतं ददत्फलम् ।
स्वं कायवाङ्मनस्कर्म सा कर्मस्वकता मता ॥

यत्खलु कायवाङ्मनस्कर्म स्वयं कृतं कुशला(3)कुशलमभ्यतीतं ददत्फलं सा कर्मस्वकता द्रष्टव्या ॥

कथं पुनः प्रतिक्षणभिदुरेषु संस्कारेषु परस्पराकृतसङ्केतेषु सत्सु, असति च नित्ये कर्त्तरि भोक्तरि च कर्मस्वकताऽभिधीयते ? तदत्र प्रतिसमाधीयते—

[ 215 ] संवृत्या स्कन्धसन्ताने तत्क्रियाफलदर्शणा(ना)त् ।
कर्तृता भोक्तृता चोक्ता निषिद्धा शाश्वतस्य तु ॥

स्यात्माभ्युदयविशेषार्थः खलु क(4)र्मारभ्यते। कश्चिदहं विशिष्टज्ञान-विज्ञानसौख्यरूपकान्तिलावन्य(ण्य)सौष्ठवयुक्तं जन्म प्रतिलभेयेति। शाश्वते त्वात्मनि निष्क्रिये पूर्वपश्चाद्विशेषाभावात् कर्त्तृत्वं भोक्तृत्वं चात्यन्तापध्वस्त युक्तिविधानम्। स्कन्धसन्ताने तु विशिष्टस्कन्धान्तरोत्पत्तौ सत्यां बीजजला-भिषेकाद्यनुग्रहा[द्] विशिष्टफलोत्पत्तिवदिति[३]। पूर्वमेवाविष्कृतमेतदिति ॥[४]

इ(5)दमिदानीं वक्तव्यम्।

[ 216 ] स्यात्कर्मस्वकता नास्ति तस्य चेति चतुष्किका ।

स्यात्खलु कर्मस्वकता नापि च तस्य कर्मणो विपाकेऽवस्थित इति चतुष्कोटिका।

प्रथमा तत्फलस्थस्य विहाणा(ना)त्तस्य कर्मणः ॥

यदि तस्य कर्मणः फलेऽवस्थितस्तच्च कर्म विहीनं भवति ॥

---

१ Cf. भासित पे' त···भगवता—कम्मस्सका माणव सत्ता, कम्मदायादा, कम्मयोनी, कम्मबन्धू, कम्मपटिसरणा, कम्म सत्ते विभजति, यदिद हीनपणीततया'ति। *Milinda.* p. 69,

For *kamma-nānatta*, see *DhsA.* I. 37-38.

Also cf. यदुक्त भगवता यथा सत्त्वा कर्मस्वका कर्मदायादा. कर्मयोनीया. कर्मप्रतिसरणा कर्म सर्वान् विभजति उच्चनीचतया हीनप्रणीततया इति। *Atm.* p. 60.

For *kamma-niyāma*, see *Dhs A.* III. 601-603.

२ This topic is not discussed in *Akb.* The Kośakāra, however, discusses *trīṇyāvaraṇāni* and *pañchānantarya-karmāṇi*, (*Akb.* IV. 96-105) which are not discussed in *Adv.*

३ See, *B Pañjikā*, VI. 26-30; IX. 58-60.

४ V. supra, p. 22, n. 1. V. infra, *Adv. kārikās* 304-305.

[ 217 ] द्वितीया तत्फलस्थस्य कर्मणा तेन चान्वयात् ।
तृतीयोभययुक्तस्य चतुर्थ्यनुभय(6)स्य तु ॥
[ 218 ] स्यात्कर्मस्वकता नापि तत्फलं वेदयिष्यति ।

द्वितीया चतुष्कोटिका । तत्र प्रथमा कोटिः—

तत्फलानस्थितस्याद्या ज्ञेया तत्चरमे फले ॥
[ 219 ] द्वितीया ध्रुवपाकस्य तद्विपाकानवस्थिते ।
तृतीया द्वयसद्भावा चतुर्थी तूभयं विना ॥

तृतीया चतुष्कोटिका—

[ 220 ] स्यात्कर्मणान्वितश्चैव नो च तत्फलवेदनम् ।

स्यात्खलु कर्मणा समन्वागतो न(7) च तस्य कर्मणः फलं वेदयते। चतुष्कोटिका।

आद्या दत्तविपाकेन निरुद्धानागतादिना ॥
[ 221 ] द्वितीया तु विहीणे(ने)न ध्रुवपाकेन कर्मणा ।
तृतीया द्वयमुक्तस्य चतुर्थी तु द्वयादृते ॥

अथ यदिदं शास्त्रि(स्त्रे) योगविहितमयोगविहितं च कर्मोक्त तस्य किं लक्षणम्? तदभिधीयते—

[ 222 ] अयुक्तविहितं कर्म क्लेशोपक्लेशदूषितम् ।
शिक्षालिङ्गा(8)द्यपेतं च केचिदाहुर्विपश्चितः ॥[1]

यत्किञ्चित्खलु क्लिष्ट कायवाङ्मनस्कर्म क्लेशोपक्लेदूषितं सर्वं तदयोगविहितम्, [2]अयोनिशोमनस्कारसमुत्थापितत्वात् । अन्ये पुनर्ब्रुवते—यत्खलु शिक्षाव्यपेतं यथा गन्तव्य स्यातव्यमित्येवमादि, यत्तु लिङ्गवचनहीनमसंबद्धं निरर्थक च वाक्कर्म तदयोगविहितम् । विधिभ्रष्टत्वादिति । विपर्य(9)याद्योगविहितं द्रष्टव्यमिति ॥

अभिधर्मदीपे विभाषाप्रभाया वृत्तौ चतुर्थस्याध्यायस्य तृतीय पाद ॥

---

[1] Cf अयोगविहित क्लिष्टं विधिभ्रष्ट च केचन । *Ak.* IV 94 cd.

[2] Cf धी प्रज्ञा । साप्युपपरीक्ष्य एव वस्तुनि प्रविचयो योगायोगविहितोऽयथा वेति । युक्तिर्योग । स पुनराप्तोपदेशोऽनुमान प्रत्यक्ष च । तेन त्रिप्रकारेण योगन यो जनित स योगविहित । अयोगोऽनाप्तोपदेशोऽनुमानाभासो मिथ्याप्रणिहितश्च समाधिस्तेनायोगेन जनितोऽयोगविहित । *Tib* 10 c.

# चतुर्थाध्याये

## चतुर्थपादः ।

अथैतां परमगम्भीरां दुरवबोधां प्रकृतिपुरुषेश्वरादिकुदर्शण(न)तिमिरोत्सादनकरीं कर्मस्वकतां कः स्वयमभिसंबुद्धय लोकानुग्रहाय प्रदर्शयतीति ? ब्रूमः । पुरुषो(षः) तु सो बोधिसत्त्वः ।[1]

[IV B, 5 Fol 99 a ](1)स पुनः किं चित्तोत्पादात्प्रभृति बोधिसत्त्वो[2] भवति ? अथ लाक्षणिककर्माक्षेपेण, आहोस्विच्चरमभाविक इति ? अत इदं प्रस्तूयते—

[ 223 ] बोधिसत्त्वः कुतो यावदविवर्त्यमना यतः ।[3]
बध्नाति बोधिसन्नाहमङ्गीकृत्वा जगद्धितम् ॥[4]

यतः प्रभृति[5] कल्याणमित्रं भगवन्तं सम्यक्संबुद्ध[माप]द्य तदुपदर्शितदक्षिणमार्गः योनिशो मनसिकाराधिष्ठितबुद्धिः कृ(2)त्स्नं लोकमत्राणमशरणमपरायणं पञ्चगतिमहावर्ते जातिजराव्याधिमरणादिदुःखक्षाराम्भसि, कर्मराक्षसाधिष्ठिततीरे, पापमित्रकुम्भीरानुबद्धवेले, रूपादिविषयविकल्पपवनोद्धततृष्णातरङ्गे, मोहकर्णधारपरिभ्रामितबुद्धिनौके संसारमहासमुद्रे निमग्नमवलोक्य कृपाविष्टचेतास्तदभ्युद्धरणाय वी(3)र्यबाहुमभिप्रसार्य, अविवर्त्य चित्त-

---

[1] This topic *(Bodhisattva)* is discussed in *Akb* only incidentally, and not in such details as in *Adv.* The Kośakāra, while discussing *trīṇyāvaraṇāni*, deals with an *ānantarya-sabhāga karma*, viz , *bodhisattvasya-māraṇa. (Akb* iv. 96 *)* The *Akb* (iv. 108 118) is brief in dealing with the nature of *Bodhisattva* and four *Pāramitās.* For the doctrines of *Bodhisattva* and *Paramitās* and their place in the Hīnayāna Buddhism, see *AMBRH* Chapters i and ii. (pp. 1—90.)

[2] बोधिसत्ता ति बुज्झनकसत्ता, बोधिया वा नियतभावेन सत्ता लग्गा अधिमुत्ता, तनिन्ना तप्पोणा ति अत्थो । *Vm* T. p. 114 For various interpretations of this term, see *The Bodhisattva Doctrine*, pp 4-9.

[3] Cf बोधिसत्त्व कुतो यावद्यतो लक्षणकर्मकृत् । *Ak.* iv. 108 ab

[4] On *sannaha-pratipatti*, see *Aaa.* pp. 81-83.

[5] The *Akb* is brief. Cf यत प्रभृति लक्षणविपाकानि कर्माण्यारभते कर्तुं स हि तदानी नियतिपतितो भवति । क्य कृत्वा । स हि तस्मात् कालात् प्रभृति नित्यो भवति । *Akb* iv 108 ab

मेवमुत्पादयति—अविद्यान्ध[ः]कारोपहतबुद्धिनयनोऽयं लोकः स मया सम्यग्दृष्टिप्रभावभासितेन शीलसंक्रमेणोत्तारयितव्यः। प्रतिघभुजङ्गदंष्ट्रा विषदूषितोऽयं लोकः स मया मैत्र्यागदेन प्रशमितव्यः। तृष्णापिशाचीललिताभिभूतमतिरयं लोकः स मया शमथबलेन तृष्णा(4)निरोधसुखं लम्भयितव्यः। परामर्शभूतग्रहाविष्टोऽयं लोकः स मया विमोक्षसुखस्वस्त्ययनेन निर्भयममृतपदं प्रवेशयितव्यः। मानगिरिशिखराधिरूढबुद्धिरयं लोकः स मया कर्मस्वकताज्ञानवज्रेण मानगिरीन्विचूर्ण्य प्रशान्तमानमदामर्शशान्तिपदे स्थापयितव्यः। विचिकित्साकथंकथीभावशल्यविद्धहृदयोऽ(5)यं लोकः स मया प्रतीत्यसमुत्पादप्रविचयशलाकया काङ्क्षाशल्यमुत्पाट्यामृतरसं पाययितव्यः। जराव्याधिमरणमकरदंष्ट्रान्तर्गतोऽयं लोकः स मया सर्वानर्थवियुक्तं निर्वृतिसुखं प्रापयितव्यः। श्रद्धादिगुणधनदरिद्रोऽयं लोकः स मया बोध्यङ्गरत्नखचिते महति गुणैश्वर्यपदे संनिवेशयितव्यः।[१] इत्येतस्माद्(6)विवर्ताद् बोधिचित्तोत्पादात्प्रभृति[२] बोधिसत्त्वो वक्तव्य इत्याचार्यकम् ॥

यत्तर्हि शास्त्र उक्तम्—"बोधिसत्त्व कुतः प्रभृति? यतो लक्षणवैपाक्यं[३] कर्म करोति" इति।[४] नैष दोषः। यस्मादसौ—

[ 224 ] यदा लाक्षणिकं कर्म प्रकरोत्यनपायगः।
महाकुलः समग्राक्षः स्वपर्यत्संग्रहे रतः॥[५]

[ 225 ] पुमाञ्जातिस्मरो वाग्मी प्रज्ञावीर्यक्रियान्वितः।[६]

यदा खल्व(7)यं पुरुषत्वजातिस्मरत्वादिषु पदस्थानेषु नियतीभूतो भवति—

तदा देवमनुष्याणामभिव्यक्तिं निगच्छति ॥

अतो ज्ञानप्रस्थानेऽस्मादवधेः प्रभृति बोधिसत्त्वः अनेनाभिप्रायेण पठितः।

---

[१] Compare this style with *S* iv p 94 *S Pundarika* pp 118 278, *Siksha* p 29 and *B Panjika* iii 7 9

[२] See *S Pundarika* pp 67 207 For the *avaivartikalingas* of the *Bodhisattva* see *Aaa* pp 418 420

[३] See *LVPAk* iv p 221 notes

[४] Cf यच्चैनल्लक्षणविपाकं कर्मेत्युक्तम्

जम्बुद्वीपे पुमानेव सम्मुखं बुद्धचेतनः।
चिन्तामयं कल्पशते शेष आक्षिप्यते हि तत्॥ *Ak.* iv 109

[५] Cf सुगतिः कुलजोऽव्यक्षः पुमान् जातिस्मरोऽनिवर्त्यः। *Ak* iv 108 cd

[ 226 ] स हि त्रिभिरसंख्येयैर्धर्मकायगुणार्णवम् ।[1]
प्रचिनोति तदाधारं कायं कल्पशतेन तु ॥

[ 227 ] द्वात्रिंशल्लक्षणोपेतमशीतिव्यञ्ज(8)नोज्ज्वलम् ।
द्विषतामपि यं दृष्ट्वा मनः सद्यः प्रसीदति ॥

एषा खलु धर्मता यत्त्रिभिः कल्पासंख्येयैर[2]णि(नि)रस्तप्रज्ञाशीलश्रुत-त्यागप्रज्ञादिगुणधनैश्वर्यप्रयोगाणां(नां) भगवतां सम्यक्सम्बुद्धानां पुरुषोत्तमानां धर्मकाय[3]चरणपरिसमाप्तिर्भवति । कल्पशतेन खड्गविषाणकल्पानां प्रत्येक-बुद्धानाम् । षष्ट्या कल्पैः प्र(9)ज्ञानतामग्र्याणाम् । चत्वारिंशद्भिः ऋद्धिमच्छ्रे-ष्ठानाम् । विंशतिभिः कल्पैः श्रुतधरप्रवराणां धर्मकायचरणपरिपूरिर्भवति ।

यत्पुनर्जन्मशरीरं[4] भगवतां सम्यक्सम्बुद्धानां योधेराश्रयभूतं द्वात्रिंशता महापुरुषलक्षणैः खचितमशीत्यानुव्यञ्जनैर्विराजितम्, यत्खलु दृष्ट्वा स्वविकल्प-

---

[1] Cf बुद्धत्वम्

असंख्येयानां कल्पानां त्रयेण । "किन्तु खलु कालप्रकर्षेणैव कृतप्रणिधाना बोधिसत्त्वा बोधिमभिसम्बुध्यन्ते । किमन्तरेव भविष्यति । यद्यप्यन्यथाप्यस्ति माभावकाश किमर्थं त इयन्त यत्नमारभन्त ? परार्थम् "। *Ak* III 94 a. See *The Bodhisattva Doctrine*, pp 76—9

[2] V infra, *Adv karika* 236

[3] Cf तथागतस्स हेत वासेट्ठ अधिवचन—'धम्मकायो इति पि ब्रह्मकायो इति पि, धम्मभूतो इति पि ब्रह्मभूतो इति पाति । *Digha*, XXVII. 9 The *dhammakaya* in Pali means "having a body that is, or is characterized by, the Doctrine" (*BHSD* p 277)

The term *dharma kaya* is not used here in the Mahayanist sense

On the doctrine of *kaya*, see *AMBRH* pp 96—128, *The Bodhisattva Doctrine*, pp 27, 192 and *BHSD* p 277

[4] Cf · तस्माल्लक्षणव्यञ्जनोज्ज्वलो यात्र रूपकायस्तथागतो भव्यसत्वं समीक्ष्यत नासौ तात्त्विको धर्मकाय नाम्ना किन्तु परमविमलानन्तगुणराशिधर्मकायाधिपत्यादेव तेषा स्वज्ञान तथाभूतरूपकायाकारेण प्रतिभासत । *Aaa* p 207 Also cf तदनु दशभूमि-प्रविष्टमहाबोधिसत्त्वं सह परमानवद्यमहायानधर्मसम्भोगप्रीतिसुखोपभोगात्साम्भोगिकोऽयं कायो द्वात्रिंशल्लक्षणाशीत्यनुव्यञ्जनविराजितगात्रो रूपकायस्वभावस्तृतीयो बुद्धस्य भगवतो ग्राह्य । तथा चोक्तम्

द्वात्रिंशल्लक्षणाशीतिव्यञ्जनात्मा मुनेरयम् ।
साम्भोगिको मत कायो महायानोपभोगत ॥ *Ibid* pp 525—6

समुत्थितप्रतिघदूषितबुद्धी[IV A, 5 Fol 99 b]नामपि मारपक्ष्याणां तीर्थ्याणां च मनः प्रसीदति ।[1]

कानि पुनस्तानि द्वात्रिंशन्महापुरुषलक्षणानि ? कानि चाशीत्यनुव्यञ्जनानि ? तदिदं प्रदर्श्यते—

तत्र तावदमूनि द्वात्रिंशन्महापुरुषलक्षणानि—[2]

बुद्धा हि भगवन्तः सममहीतलाक्रमणात् सुप्रतिष्ठित[पा]दाः ॥१॥

सहस्रारसनाभिकसनेमिकसर्वाकारपरिपूर्णचक्रा(2)ङ्कितपाणिपादत्वाच्चक्राङ्कहस्तपादाः ॥२॥

आयतहस्तपादाङ्गुलित्वाद्दीर्घाङ्गुलयः ॥३॥

दीर्घायतत्वादायतपार्ष्णिपादाः ॥४॥

तूलपिचुतरुणसुकुमारोपमकोमलकरचरणत्वान्मृदुतरुणपाणिपादाः ॥५॥

अभिताम्राष्टापदविचित्रतनुजालावनद्धत्वादभिजातहंसराजवज्जालावनद्धपादाः ॥६॥

उच्चैः सु(3)जातगुल्फत्वादुच्छङ्खचरणाः ॥७॥

अनुपूर्वोपचितवृत्ततरगर्भैणेयमृगजङ्घत्वादैणेयजङ्घाः ॥८॥

प्रांशुबाहुत्वादनवनतकायजानुमण्डलस्पर्शिनः ॥९॥

परमाभिरूपनिगूढपुंरूपनिमित्तत्वादभिजातहस्त्यश्वाजानेयवत्कोशगतवस्तिगुह्याः ॥१०॥

कायव्यामसमायामत्वान्न्यग्रोधपरिमण्डलाः ॥११॥

अनुपूर्वो(र्ध्वं)मुखजातत्वादूर्ध्वाङ्गरोमाणः ॥१२॥

सुविभक्ताद्वितीयनीलजातरोमत्वादेकैकाभिनीलप्रदक्षिणावर्तरोमाणः (णः) ॥१३॥

---

[1] Cf. द्वात्रिंशता च महापुरुषलक्षणैः समन्वागतस्य ... भवन्ति । Śikṣā p. 313. See B. Pañj. kā. i. 36.

[2] The Kośakāra does not enumerate the thirtytwo marks of the Mahāpuruṣa. For the origin of this theory see *Dialogues of the Buddha* Vol. i. p. 110, Vol. ii. p. 14.

Prof. F. Edgerton has recorded almost all lists of the *mahāpuruṣa-lakṣaṇas*, available both in the Pāli and *BHS* Texts. See *BHSD* pp. 458-460.

उच्चतहाटकसन्निभदग्ध्यामममात्रप्रभावभासनात् सुवर्णवर्णाः ॥१४॥

सुपरिकर्मीकृतरजतजातरूपश्लक्ष्णच्छवित्वाद्रजोमलानुपक्लेशनाच्च सूक्ष्म-च्छवयः ॥१५॥

[7]समुपचितहस्तपादांसग्रीवत्वात्सप्तोत्सदकायाः ॥१६॥

काञ्चनशिलातलश्लक्ष्णोपचितोरस्कन्धाचितान्तरांसाः ॥१७॥

सिंहवद्विस्तीर्णसंहतोर्ध्वाङ्गत्वात्सिंहपूर्वार्धकायाः ॥१८॥

अवक्रोपचितदश्चवालसमुच्छ्रितत्वाद् बृहदृजुगात्राः ॥१९॥

समन्तोपचितमांसनिगूढजत्रुदेशत्वात्सुसंवृत्तस्कन्धाः ॥२०॥

[6]अधस्तादुपरिष्टाच्च समदन्तविंशतित्वाच्चत्वारिंशद्दन्ताः ॥२१॥

अनुच्चतावनतसमप्रमाण(ण)त्वात्समदन्ताः ॥२२॥

निरन्तरावस्थितत्वादविरलदन्ताः ॥२३॥

कुन्देन्दुशङ्खावभेदसितत्वाच्छुक्लदन्ताः ॥२४॥

श्लक्ष्णवृत्तोपचितदर्शनी(नी)यमहाहनुत्वात्सिंहहनवः ॥२५॥

वातपित्तश्लेष्माऽण(न)भिभूतरसहर[7]णिरसारसप्रविभावनासदृशाभिज्ञा-नत्वाद्रसनरसाग्रप्राप्ताः ॥२६॥

विस्तीर्णपेशलत्वाज्जिह्वायाः सर्वमुखमण्डलप्रतिच्छादनात्प्रभूततनु-जिह्वाः ॥२७॥

गम्भीरवल्गुहृद्यपङ्गमविस्पष्टश्रवणीयपञ्चाङ्गोपेतस्वरत्वाद्ब्रह्मस्वराः ॥२८॥

कलविङ्कमनोज्ञभाषिणो दुन्दुभिस्वरणि(नि)र्घोषाः ॥२९॥

[8]शुक्लकृष्णप्रदेशानुपक्लिष्टलोहितराज्यभिनद्धनीलोत्पलसमानवर्णत्वाद-भिनीलनेत्राः ॥३०॥

अधरोर्ध्वावस्थितानां सम्यगघनतासंलुडितदीर्घत्वादक्षिपक्ष्माणां गोप-क्ष्माणः ॥३१॥

वृत्तपरिमण्डलसमानुपूर्वोपचितदर्शनी(नी)यास्थिघनजातमूर्धत्वादुष्णी-षालङ्कृतशिरसः शङ्खाभदातप्रदक्षिण[9]वर्तोर्णाविद्योतितभ्रूविनतत्वादूर्णाङ्कि-तमुखाः ॥३२॥

एतानि द्वात्रिंशन्महापुरुषलक्षणानि बुद्धानां भगवतामिति ॥[१]

---

[१] For an allied controversy, see *Kv.* iv. 7.—इदानि लक्खणकथा नाम होति । तत्थ 'देहि समन्नागतस्स महापुरिसस्स द्वेव गतियो भवन्ती'ति इम सुत्त अयोनिसो गहेत्वा लक्खणसमन्नागतो बोधिसत्तोव होती ति येस लद्धि, सेय्यथा पि उत्तरापथकानं । *Kv A.* iv. 7. See *Milinda*, p. 78.

अशीत्यनुव्यञ्जनान्यप्युच्यन्ते।[1] बुद्धा हि भगवन्तः

अपृथुप्रमाणमृदुताम्रतुङ्गस्निग्धनखाः ॥१॥

वृत्तनिरन्तरानुपूर्वोपचिताङ्गुलयः ॥२॥

निग्रन्थिनिगूढाल्पतनुशिराप्रतानाः ॥३॥

[IV. B, 6 Fol 100 a][1]निगूढसमातीक्ष्णगुल्फाः ॥४॥

अविश(प)मावक्ररक्तस्निग्धपादाः ॥५॥

[मृग]पतिद्विरदवृषभहंसराजप्रदक्षिणावर्तचारुगतयः ॥६॥

अलोमसाश्लेषसमप्रमाणोभयजङ्घाः ॥७॥

सुवृत्तसमसंहतनिगूढजानवः ॥८॥

कदलीस्कन्धोपमपी[ननिवि]डाविषमानुपूर्वोपचितचारूरवः ॥९॥

अर्धचन्द्राकृतिविस्ती[2]र्णसमुन्नतापगतरोमवक्षाणाः(णः) ॥१०॥

श्लक्ष्णसुसंहतचतुरस्रणा(ना)भ्यायतकुकुन्दरसुन्दरकटीदेशाः ॥११॥

गम्भीराच्छिद्ररक्तप्रदक्षिणावर्तणा(ना)भयः ॥१२॥

श्लक्ष्णालोमशाश्लथानुक्रमक्षामोदराः ॥१३॥

अनामुग्नानिमुग्नसुवृत्तपृष्ठकुक्षयः ॥१४॥

समवतीर्णोपचितनातिदीर्घश्लक्ष्णपार्श्वाः ॥१५॥

अनिम्नो[3]पचितह्रस्वव्यग्रसंस्थानोपपन्नसूक्ष्मदीर्घलेखाङ्किताद्दश्यास्थिसन्धिचारुपृष्ठाः ॥१६॥

विस्तीर्णोपचितदृढसन्धिहृदयाः ॥१७॥

अविषमोन्नतविस्तीर्णोरसः ॥१८॥

अनतिस्थूलाग्रतगृह्यावर्तनिमग्नसूक्ष्मलेखापरिक्षिप्तसमरक्तस्तनाः ॥१९॥

हृदयविप्रकृष्टदेशजातत्वाद्विस्तीर्णस्तनान्तराः ॥२०॥

मांसोपचितानति[4]विस्तीर्णत्वादुन्नतकक्षाः ॥२१॥

स्थूलदृढसुबद्धनिमग्नसमाक्षकाः ॥२२॥

अश्लक्ष्णपृथुमांसनिमग्नाविषमप्रमाणस्फिजः ॥२३॥

करिकरणि(नि)भनिगूढसन्धिपीनकठिनश्लक्ष्णसमबाहवः ॥२४॥

पतितश्लक्ष्णरोमशसिंहोपमदृढप्रकोष्ठाः ॥२५॥

समनाग्रदीर्घपाणयः ॥२६॥

---

[1] The *Akb* does not enumerate the eighty *anu-vyañjanas*. For other lists and details, see *BHSD* p. 34

गम्भीराच्छिद्रासंकीर्णघनायतस्नि[5]ग्धतनुताम्रपाणिलेखाः ॥२७॥

सूक्ष्मयमलीकृताव्याकुलारक्ताङ्गुलिपर्वाणः ॥२८॥

अनामिकापर्वाधिकप्रमान(ण)कनीनिकाङ्गुलयः ॥२९॥

अनतिबहुतनुमृदुस्निग्धसुबद्धमूलसमरोमाणः ॥३०॥

स्निग्धासंकुचितानुपहतसारच्छवयः ॥३१॥

शीतोष्णस्पर्शान्यकृष्णश्यीव वर्णाः ॥३२॥

स्थिरनिविडानतिस्थूलान[6]तिकृशमांसाः ॥३३॥

जवापुष्पाभिताम्रस्वच्छस्निग्धमधुरचन्दनगन्धिरुधिराः ॥३४॥

मांसोपगूढस्थूलदृढसुशिरास्थिकाः ॥३५॥

नागग्रन्थ्यवस्थितनिगूढास्थिसन्धयः ॥३६॥

वज्रवद्भेद्यशरीरत्वात्सुसंहननाः ३७॥

चारुसुविभक्ताङ्गप्रत्यङ्गाः ॥३८॥

अनुपूर्वोपचितसुपरिमृष्टसुकुमाराद्रीच(स)स्वच्छश[7]रीराः ॥३९॥

निर्मशक्तिलकालपिल्याः ॥४०॥

जरादौर्बल्यकृतापगतवलयः ॥४१॥

सिंहशम्यानुग्राण(न)व्यपगतकायविक्षेपाः ॥४२॥

स्वेदमलानुपक्लिष्टशुचिसौम्यच्छायाः ॥४३॥

ज्वलनमनि(णि)महौषधिशशाङ्कसवितृसमतेजसः॥४४॥

महीधरवरगुरुत्वोपेताः ॥४५॥

ऋतुसुखकालिन्दिकसु[8]खसंस्पर्शाः ॥४६॥

मधुरमृदुसुरभिकुसुमचन्दनसमानरोमकूपगन्धाः ॥४७॥

अभिनवनीलोत्पलतुल्यसार्वकालिकमुखगन्धाः ॥४८॥

अद्भुतमृदुदीर्घस्निग्धपिण्डितव्यपगतशब्दनिश्वासाः ॥४९॥

अनशनकदन्नाशन(ना)तङ्कात्तु विपरिणामानुपरतधर्मदेशनाभिरप्यसञ्जि-
तस्वरभेदाः ॥५०॥

नातिसं[9]कुचितविदारितरक्तास्याः ॥५१॥

शुचिसमाचाराः ॥५२॥

देशस्योत्तप्तविस्पष्टपरिपूर्णव्यञ्जनाः ॥५३॥

समन्तप्रासादिकत्वाद्सेचनकदर्शणाः(नाः) ॥५४॥

अनतिह्रस्वानतिदीर्घवृत्तोपचितनिर्वलिविभूषितकम्बुग्रीवाः ॥५५॥

समप्रमान(ण)दृढावक्रह्रस्वविपुलचिबुकाः ॥५६॥

बिम्बफलताम्रनात्यायतसमस्नि[IV A, 6 Fol 100 b ]ग्ध(1)रुचिरौष्ठा ॥५७॥

बन्धूकपुष्पोपमश्लक्ष्णदशनमासा ॥५८॥

शुचिस्निग्धस्पष्टरचनाक्षीणदन्ता ॥५९॥

अनुपूर्ववृत्तस्निग्धतीक्ष्णसमसितदंष्ट्रा ॥६०॥

सप्रयोजनदक्षिणदन्तरश्मिप्रदर्शितमुहूर्तस्मिता ॥६१॥

अपमलमृदुताम्रस्निग्धजिह्वा ॥६२॥

नित्योष्णश्लक्ष्णमांसजालगजतालुसमवर्णतालव ॥६३॥

धुरोच्चा(2)यतसगततुङ्गनासा ॥६४॥

अघनमृदुदृढमूलस्निग्धतनुनीलकुण्डलितश्मश्रुव ॥६५॥

अनुन्नतातीक्ष्णमांसलमार्ष्टिपिण्डितगण्डा ॥६६॥

आदर्शसमोपचिताश्लथरुचिरकपोला ६७॥

पीनायतसमानु(नो)पहतचारुकर्णा ॥६८॥

ललाटकर्णगण्डसन्धिश्लेषाणि(नि)म्नपूर्णचन्द्राकृतिशङ्खा ॥६९॥

विशालायतस्नि(3)ग्धमधुरप्रसन्नसमनेत्रा ॥७०॥

प्रहसिताञ्चिताग्रपक्ष्माण ॥७१॥

सौम्यभ्राजिष्णुस्थिरविसन्धिदृष्टय ॥७२॥

अपरिमितबलत्वादपगतोन्मेषनिमेषा ॥७३॥

दीर्घासितश्लक्ष्णानुपूर्ववर्तितस्निग्धतनुभ्रुव ॥७४॥

काञ्चनपट्टश्लक्ष्णार्धचन्द्राकृतिविपुलललाटा ॥७५॥

परिपूर्णचन्द्रमण्डलसमवदना ॥७६॥

पक्वघनवज्र(4)संहतशिरस्कपाला ॥७७॥

सुपरिपूर्णच्छत्राकृतिशिरस ॥७८॥

श्लक्ष्णाचितासंलुडितपलितदोषापनतभ्रमराभस्निग्धमृदुसुबद्धमूलसुरभिस्वस्तिकनन्द्यावर्ताकृतिकेशरत्ना (ना) ॥७९॥

सासुरासुरमनुजादिलोकानवलोकितमूर्धान ॥८०॥

अथ तदाद्य बोधिचित्त[1] बोधिसत्त्वानां दार्ढ्येन कथमिव द्रष्टव्यम्? नैतल्लौकिकेन (5)वस्तुनोपपादयितु शक्यम्। कस्मात्? यत

---

[1] तत्रादौ गोत्रनामधर्मात् कृपावीजप्रबोधन ।
प्रयोगान्यनन्यतया बोधिचित्तपरिग्रह ॥ *Aaa* p 29
बोधिचित्तमिति बोध्यर्थं चित्तं प्रणिधिप्रस्थानात्मक चित्तम् । अथवानन्यान्यबोधि

[ 228 ] युगान्तवायुणा(ना) मेरुः वह्निणा(ना) वरुणालयः ।
वज्रेण ध्वस्यते वज्रमविकारि तु तन्मनः ॥

किं पर्यापन्नम्, कतरत्, कति प्रकारम्, किं पुरस्सरम्, कस्मिन्वा काले को वा तदुत्पादयति ? इत्येतदपदिश्यते—

[ 229 ] कामाप्तं षष्ठजं त्रेधा कृपाश्रद्धापरम्परम् ।
बुद्धोत्पादे नरः स्त्री वा तदाद्यं चित्तमश्नुते ॥[१]

तत्खलु बो(ग)धिचित्तमाद्यं कामधातुपर्यापन्नमेव । षष्ठजं मनोधातुजमित्यर्थः । त्रिप्रकारमुपपत्तिलाभिकं श्रुतमयं चिन्तामय[२] चेति । कृपापुरस्सरेण श्रद्धाबहुलेन च मनस्कारेण संप्रयुक्तम् । बुद्धोत्पाद एव नासति बुद्धशासने । मनुष्यो वा स्त्री वोत्पादयति नान्य इति ।

तस्यास्य बोधिबीजस्थानीयस्य चित्तरत्नस्य सर्वधातुग(ग)तिव्यापिबुद्धत्वमहावृक्षाङ्कुराभिवृद्धये भूमिजलसेकादिहेतुप्रत्ययस्थानीयान् प्रज्ञादिचतुरधिष्ठान[३]परिवारान्पारमिताद्यान्गुणान्वक्ष्यमाण(ण)स्वरूपान्बोधिसत्त्वः क्रमेणाभ्यस्यति ।

कथं पुनः क्रमेण(ण) दानादिपारमितानां परिपूरिर्भवति ? तत्र तावत्—

[ 230 ] सर्वेभ्यः सर्वदा सर्वं ददतो दानपूरणम् ।[४]

प्रथमे खल्वसंख्येये (ऽ)वर्तमानो बोधिसत्त्वः न सर्वस्मै नापि सर्वं न सर्वदा ददाति । द्वितीये सर्वस्मै सर्वदा नतु सर्वम् । तृतीये सर्वं[५] सर्वस्मै सर्वदा च प्रयच्छति । इयता दानपारमिता परिपूर्णा भवति ।

स्वभाव चित्त वोधिचित्तम् । तदेव च योगिसवृत्या आदर्शादिज्ञानसव घन कयञ्चिद् व्यावृत्या सर्वज्ञनाचित्तमित्यादि चतुर्धा व्यपदिश्यते । सर्वमप्येतदसाधारणमगम्य सर्वश्रावकप्रत्यकबुद्धानाम् । *Aaa* p 79

१ Cf जम्बुद्वीपे पुमानव सम्मुख बुद्धचेतन ।
चिन्तामय कल्पशते शेष आक्षिपते हि तत् ॥ *Ak* IV 109

Also cf मनुस्सत्त लिङ्गसम्पत्ति हेतु सत्थार-दस्सन ।
पब्बज्जा गुणसम्पत्ति अधिकारो च छन्दता ॥
अट्ठधम्मसमोधाना अभिनीहारो समिज्झति । *Buddhavamsa* II. 59—60

२ See *LVPAk.* IV p 223, n 2        ३ V infra, *Ad karika* 232.

४ Cf सवत्र सर्वं ददत कारुण्याद्दानपूरणम । *Ak.* IV 111 ab.

५ Cf बोधिसत्व सर्वदातत्युच्यते । सर्वदान न बहुधन किन्तु दानचित्तम ।" गवेषयननुत्तरा बोधि यद्ददाति तदुच्यन सर्वदान । *Bodhichittotpada sutra sastra*, p 12.

मरणेऽपि दमात्यागः शीलस्योत्कृष्टिरुच्यते ॥[1]

यदा पुन प्राणपरित्यागेनापि प्राणातिपातादिशिक्षापद न क्षोभयति, इयता शीलपा(9)रमिता परिपूर्णा वेदितव्या । क्षौन्त्यादिराजदुहितामित्रु[2] दृष्टान्ताश्चात्रोदाहार्याः ।

[ 231 ] वीर्यस्य तिष्यसस्तुत्या धियो वज्रोपमात्परम् ।[3]

भगवन्तं खलु तिष्य सम्यक्संबुद्ध एकया गाथया[4] एकपादेन स्थित्वा सप्ताहमभिष्टुवत शाक्यमुनेर्वीर्यपारमिता परिपूर्णा नव च कल्पा प्रत्युदावर्तिता ।

प्रज्ञापारमितायास्तु वज्रोपमात्समाधेरूर्ध्वं[5] [IV B,7 Fol 101 a](1) क्षयज्ञाने परिपूरिर्भवति ।

'सर्वासां तु क्षयज्ञाने[6] परिपूरिर्विधीयते ॥'[7]

---

[1] Cf अङ्गच्छेदेऽप्यकोपात्तु रागिण क्षान्तिशीलयो । *Ak* iv 111 cd

Buddhaghosha speaks of a *param ta sila* —तण्हावसेन पवत्तित हीन अत्तनो विमोक्खत्थाय पवत्तित मज्झिम सब्बसत्तविमोक्खत्थाय पवत्तित पारमितासील पणीतं । *Vm* i 33 —पारमितासीलं महाबोधिसत्तसील—या करुणोपायकोसल्लपरिग्गहीता महाबोधि आरम्भ पवत्ता परमुक्कसगनमोचेय्यसत्ता दमवान्सत्तादि विकप्परहिता सीलपारमिता । *VmT* p 29

[2] This seems to be a reference to the *Kshānt jātaka* as it relates to the *kshānti pāram ta* (included in the *sila pāram ta*—V infra p 195) See *Jātakamālā* 28 *Jātaka (Khant ād jataka)* 313 *Avadānakalpalatā* 38

[3] Cf तिष्यस्तोत्रेण वीर्यस्य धीसमाधरनन्तरम । *Ak* iv 112 ad

[4] Cf तिष्यं तथागतरत्नगुहायां भगवान् बोधिसत्त्वभूत एकेन पादेन स्थित्वा सप्ताहं स्तुतवानेकगाथया

न दिवि भुवि वा नास्मिन लोके न वैश्रवणालये ।
न मरुभवन दिव्य स्थाने न दिक्षुविदिक्षु वा ॥
चरतु वसुधा शैला कृत्स्ना सार्वकाननाम् ।
पुरुषवृषभस्तुल्यो महाश्रमण कुतः ॥ इति ।

*Akb* iv 112 ab See *LVPAk* iv p 230 n. 2

[5] V infra *Adv* kā 433-434

[6] For ksh yajñāna v inf a *Adv* kā 441

[7] Cf प्रज्ञापारमिता सर्वासां परिपूरिर्वज्रोपमसमाधेरनन्तरम । *Adv* p 3 6

इत्यागमः।

अत्र पुनः "क्षान्तिध्यानपारमिते शीलप्रज्ञापरिवारत्वान्नार्थान्तरम्" इति वैभाषिकाः। विनयधरवैभाषिकास्तु विनये चतस्रः[1] पारमिताः पठन्ति।[2]

अत्र पुनः केचिद् बुद्धवचने (व)हिष्कृतबुद्धयः प्राहुः—"न हि पिटकत्रये[3] भगवता बोधिसत्त्वमार्ग उपदिष्टः।"[4] (2)त एवं व्याहर्तव्याः।[5] भ्रान्ता ह्यत्र भवन्तः। यस्मात्

---

[1] For the ten *pāramitās*, see *The Bodhisattva Doctrine*, pp. 167-170 and *AMBRH*, pp. 11-13. *Dāna*, *śīla*, *kshānti* and *prajñā* occupy important place : तत्राय ध्यासनिर्देशो यथाह—'मत्सरिण सत्त्वान् दाने, दु शीलान् शीले, व्यापादबहुलान् क्षान्तौ प्रापयितुकामेन प्रज्ञापारमितायां शिक्षितव्यम्' इति। *Aaa* p 227.

द्रष्यत षट् पारमिता.। नामतस्तु दश भवन्ति। प्रज्ञापारमिताप्रभेदत्वाच्चतसृणा पारमितानाम्। *Aaa*. p. 227.

For the *krama* of the six *pāramitās*, see *Aaa* p. 461.

[2] These two views are not mentioned in *Akb*.

[3] The *Abhidharma-samuchchaya* gives the following details about the three *pitakas* in Hinayāna and Mahāyāna :—एव सूत्रादीनि द्वादशाङ्गान्यार्यशासनादि त्रिषु पिटकेषु सगृहीतानि भवन्ति। कतमानि त्रीणि ? सूत्रपिटकं विनयपिटकमभिधर्मपिटकं च। पुनर्द्विविधानि। श्रावकपिटकं बोधिसत्त्वपिटक च। सूत्र गेय व्याकरण गाथा उदान चैतानि पञ्च श्रावकाणा पिटकस्य सूत्रपिटके सगृहितानि भवन्ति। निदानमवदानमितिवृत्तक जातक चैतानि चत्वारि द्वयो पिटकयो सपरिवारे विनयपिटके सगृहीतानि भवन्ति। निदानमवदानमितिवृत्तक जातक चैतानि चत्वारि द्वयो पिटकयो सपरिवारे विनयपिटके सगृहीतानि भवन्ति। वैपुल्यमद्भुतधर्मश्च एते द्वे बोधिसत्त्वपिटकस्य सूत्रपिटके सगृहीते भवत। उपदेश एक श्रावकबोधिसत्त्वपिटकयो अभिधर्मपिटके सगृहीतो भवति। *Asm* p. 79. Cf. *Dhs A* 1. 45 69 *Vaipulya* is also called *pāramitā pitaka* : केन कारणेन वैपुल्य बोधिसत्त्वाना पारमितापिटकमित्युच्यते ? पारमिताना सत्त्वानिर्देशता-मुपादाय लक्षण ··क्रमनिरुक्ति-भावना-प्रभेद-सग्रह-विपक्ष-गुणवर्णननिर्देशतामुपादाय अन्योन्य-विनिश्चयता चोपादाय। *Asm*. p 83.

[4] This criticism is from the Mahāyānists as is evident from the following :—ननु श्रावकयानेऽपि बोधिसत्त्वधर्मा दानादयो निर्दिष्टा एव इत्याशङ्क्याह—तत्कस्य हेतोरिति। इहैव हीत्याद्युत्तरम्।···यत्रेति येषु बोधिसत्त्वधर्मेषु। एव मन्यते। श्रावकादिधर्मास्तत् पिटके विस्तरेणाभिहिता बोधिसत्त्वधर्मास्तु प्रसङ्गात्। इह पुनर्बोधि-सत्त्वधर्मा एव विस्तरेण निर्दिष्टा श्रावकधर्मा प्रसङ्गादिति। *Aaa* p 49

Also cf ननु श्रावकयानेऽपि तथागतत्वप्रापककरणादिधर्मनिर्देशात् कथ तेन सर्वाकार-ज्ञता पर्येषणीयेति ?·· सर्वाकारानिर्देशान्निर्दिष्टोऽप्यविशिष्ट इत्यर्थ.। *Ibid* p. 319.

[5] This controversy is not found in *Akb*.

[232] त्रिपुण्यक्रियावस्त्वाद्यास्तल्लाभोपायदेशनाः[1]।
तथा चतुरधिष्ठान[2] सप्तसद्धर्मशासनम् ॥[3]

[233] सप्तयोगा[4]स्त्रय:स्कन्धा[5]स्त्रिशिक्षाद्याश्च[6] देशिताः ।
तथा पारमिताश्चापि चतस्रो[7] जिनोदिताः ॥

[234] बोधिपक्ष्याश्च कण्ठोक्ताः सप्तत्रिंशत्स्वयंभुवा ।[8]

---

[1] Cf तीणि पुञ्ञकिरियवत्थूनि। दानमयं सीलमयं भावनामयं पुञ्ञकिरियवत्थु। Digha xxxiii, 1 10 V infra, Adv karika 253 255 256 See S Pundarika, p 228

[2] Cf चत्तारि अधिट्ठानानि। पञ्ञा अधिट्ठानं सच्चाधिट्ठानं चागाधिट्ठानं उपसमाधिट्ठानं। Digha xxxiii, 1 10 See S Pundarika p 180

[3] Cf सत्तिमे भिक्खवे सद्धम्मा। कतमे सत्त? सद्धो होति हिरिमा होति ओत्तप्पी होति बहुस्सुतो होति आरद्धविरियो होति सतिमा होति पञ्ञवा होति। इमे खो भिक्खवे सत्त सद्धम्मा ति Ang iv p 145 See Vm vii. 31 Vm T p 192.

[4] The seven yogas are not mentioned in any Abhidharma work. The four yogas viz kama bhava-drishti avidya (V infra Adv karika 361) are not meant here The seven yogas probably refer to the seven samjnas which are repeatedly recommended for practice —

इमे सत्त धम्मा भावेतब्बा। कतमे सत्त? असुभसञ्ञा मरणसञ्ञा आहारे पटिक्कूलसञ्ञा सब्बलोके अनभिरतिसञ्ञा अनिच्चसञ्ञा अनिच्चे दुक्खसञ्ञा दुक्खे अनत्तसञ्ञा। रागस्स भिक्खवे परिञ्ञाय परिक्खयाय पहानाय खयाय वयाय विरागाय निरोधाय चागाय पटिनिस्सग्गाय इमे सत्त धम्मा भावेतब्बा। Ang iv p 148 Also see सत्त निद्दसवत्थूनि। Ang iv p 15

[5] Sila samadhi and prajna skandhas

[6] Cf तिस्सो सिक्खा। अधिसीलसिक्खा अधिचित्तसिक्खा अधिपञ्ञासिक्खा। Digha xxxiii. 1 10 V infra Ad. karika 434

[7] Dana sila-virya and prajna. V supra, p 195 n. 1

[8] V infra Ad karikas 440-458

The Bodhipakshika-dharmas constitute the basic teachings of all Buddhas एवमेतञ्च मया तथागतेन सब्बे पि तथागता सत्ततिंस बोधिपक्खियधम्मे देसेन्ति Milinda p 232.

These are essential in the career of a Bodhisattva तौ च द्वौ दारकौ बोधिसत्त्वचर्यायां चाभियुक्तावभूताम्। तद्यथा दान शील क्षान्ति वीर्य ध्यान प्रज्ञा उपायकौशल्यपारमितायां मैत्र्यां करुणायां मुदितायामुपेक्षायां यावत् सप्तत्रिंशत्सु बोधिपक्षिकेषु धर्मेषु। S Pundarika p 299 Also cf भावेन्तं अनुयुत्तस्स भिक्खुनो न चिरं विमुच्चति।

हेतवः सर्वबोधिनां त्रिविधा मृदुतादिभिः ॥[1]

[235] तस्मान्न [(3)]बोधिमार्गोऽन्यः सूत्रादिपिटकत्रयात् ।
अतोऽन्यमिह यो ब्रूयात्स भवेन्मारभाषितः ॥[2]

उक्तं हि भगवता—"यद्भिक्षवः सूत्रे ना(ना)वतरति, विनये ना(न) दृश्यते, धर्मतां च विलोमयति नेदं शास्तुः शासनम्"[3] इति कृष्णापदेशः । शुक्लापदेशो विपर्ययेण । यत्खलु सूत्रं भगवता बुद्धेन भाषितं तच्चतुर्ष्वागमेषु[4] स्थविरमहाकाश्यपस्थवि[(4)]रान(न)न्दादिभिः संगीतिकर्तृभि[5]रुद्दानगाथाभिर्निबद्धं[6] तदेव ग्राह्यम् ।[7] गतमेतत् ।

---

त किस्स हेतु ? अभावितत्ता ति'स्स वचनीय । किस्स अभावितत्ता ? चतुन्नं सतिपट्ठानानं चतुन्नं सम्मप्पधानानं चतुन्नं इद्धिपादानं पञ्चन्नं इन्द्रियानं पञ्चन्नं बलानं सत्तन्नं बोज्झङ्गानं अरियस्स अट्ठङ्गिकस्स मग्गस्स । *Ang* iv. p. 125.

For details, see infra, *Adv. kārikā* 440, notes.

[1] *Mṛdu madhya-adhimātra.* V. infra, *Adv. kārikā* 441.

[2] For *māra-bhāshitā*, see *Aaa.* p 410, *S. Puṇḍarīka*, p. 49; *Māra-saṃyutta*, *S.* i pp. 103 ff

[3] V. supra, p. 100, n. 1

[4] *Dīrghāgama*, *Madhyamāgama*, *Saṃyuktāgama* and *Ekottarāgama*.

[5] It is interesting to note that only the First Council is referred to here, instead of the traditional three or four Councils.

[6] *Uddāna* means summary, brief statement, especially of the contents of a longer literary work or passage In Pali *nikāyas*, at the end of a chapter are given verses summarizing the contents of the chapter. (e. g., सेखबलवग्गो पठमो । तस्स उद्दान···*Ang.* iii. p. 9.) *Uddāna-gāthā* would therefore mean a collection of such *gāthās*. See *BHSD*. p. 130.

[7] The controversies regarding the authenticity of Buddhist scriptures date back as early as the First Buddhist Council. The four *Mahāpadesas* or Authorities mentioned in the *Mahāparinibbāna sutta* (V supra, p. 100, n. 1.) point to the existence of various versions of the *Buddhavachana*. The *nidāna-kathā* of *Atthasālinī* contains a long debate on the authenticity of the *Abhidharma-sūtra* :···'अभिधम्मसुत्तं न वट्टती' ति ? 'अभिधम्मो केन भासितो ति ? 'न एसो बुद्धभासितो' ति । *DhsA.* i. 70. Buddhaghosha refers to the *Vedalla-piṭaka* i e., the Mahāyāna-scriptures, (V. supra, p. 100, n. 3.) and declares them to be unauthentic. For the claims of authenticity made by the Mahāyānists for their scriptures, see the following :—

मोहपुरुषा इति । स्वकेऽवतारात् स्वस्यैव विनयदर्शनादपि । औदार्यादपि । गाम्भीर्यादविरुद्धैव धर्मतेति वचनात् । यत्सूत्रेऽवतरति विनये च संदृश्यते । धर्मताञ्चानुलोम-

इदमिदानीं वक्तव्यम्। कतमेषां कल्पाना(ना)मसंख्येयत्रयेण बुद्धत्वं प्राप्यते ?

---

यतीति बुद्धभाषितलक्षणावगमेन सूत्रादिसङ्गृहीताया मातु स्वभावानवधारणान्मूढ । स्यादे तन्निकायग्रन्थे परिमितपरिमाणसूत्रेष्वनवतारात्तथापरिच्छिन्नप्रमाणविनयपिटकेऽसदर्शनात्तथा व्यवस्थापितपुद्गलनैरात्म्यादिधर्मताविलोमनेनाबुद्धवचनमहायानप्रतिक्षेपादमोह इति । एव च सति मुक्तकसूत्राण्यपि सूत्रान्तपिटकेष्वपठितत्वादबुद्धवचनान्यभ्युपेयानि स्युस्तथैकस्मिन् सूत्रान्तपिटकेऽन्यानि सूत्रान्तपिटकानि न सर्वप्रकारमवतरन्ति । तथैकस्मिन् विनयेऽन्ये विनया न सर्वप्रकार सदृश्यन्ते । तथैकस्मिन् निकाय या धर्मता व्यवस्थापिता न साऽन्येषु निकायेषु धर्मता सर्वप्रकारमनुलोमयतीत्यवमष्टादशभेदभिन्नानि सूत्रविनयाभिधर्मपिटकानि परस्पर ग्रन्थार्थव्यतिभिन्नानि कथ बुद्धवचनानि सिद्धयन्तीत्यव्यापकमेतत् बुद्धवचनलक्षणमभ्युपगच्छन्तीति मूढा एव । *Aaa* pp 260—1.

Also cf यद्यप्युभयसिद्धत्वमसिद्धम् । इद तर्हि साधनमस्तु यद्गुरुशिष्यपरपरयाम्नायायात बुद्धवचनत्वेन । यच्च सूत्रेऽवतरति । विनये सदृश्यते । धर्मता च न विलोमयति । तद्बुद्धवचन नान्यदित्यत्राह—

यत्प्रत्यया च तत्रास्था महायानेऽपि ता कुरु ।
महायानऽप्युक्तस्यास्याकारणस्य विद्यमानत्वात् ।

इद पुन सर्वप्रवचनसाधारणमव्यभिचारि लक्षण यदुक्तमध्याशयसचोदनसूत्रे । अपि तु मैत्रेय चतुर्भि कारणै प्रतिभान सर्वबुद्धभाषित वेदितव्यम् । कतमैश्चतुर्भि । इह मैत्रेय प्रतिभानमर्थोपसहित भवति नानर्थोपसहितम् । धर्मोपसहित भवति नाधर्मोपसहितम् । क्लेशप्रहायकं भवति न क्लेशविवर्धकम् । निर्वाणगुणानुशसमदर्शक भवति न ससारगुणानुशसमदर्शकम् । यत्किचिन्मैत्रेय सुभाषित सर्वं तद्बुद्धभाषितम् । तत्र य इमानि प्रतिभानानि प्रतिक्षिपेत् । नैतानि बुद्धभाषितानीति तेषु चागौरवमुत्पादयत् । पुद्गलविद्वेषण तेन सर्वं बुद्धभाषित प्रतिभान प्रतिक्षिप्त भवति ।" (see *Siksha*, p 15 ) एतन्महायाने सर्वमस्तीति कथमप्रमाण न स्यात् ।

"अथापि स्यात् । मदागम बुद्धवचनत्वेऽविवादो न तु महायाने ।
सविवाद महायानमिति चेदागमं त्यज ।
तीर्थिकं सविवादत्वात्स्वं परंश्चागमान्तरम् ॥

* चतुर्निकायमष्टादशभेदभिन्न भगवत शासनम । तत्रैकस्यैव निकायस्यानेकभेदसंभवात् । एकभेदव्यवस्थितं सौत्रान्तिकाभिधार्मिकवैनयिकं परस्पर सविवादत्वात्सूत्राभिधर्मविनया परित्यागमर्हन्ति । अस्ति ह्येकभेदव्यवस्थितानां सौत्रान्तिकादीनामन्योन्य विवाद । एतेन यदुक्तं गुरुपारम्पर्येणाम्नायायात बुद्धवचनमित्यादि । तदनेनैव प्रत्याख्यातं द्रष्टव्यम् । न ह्यविसंवादमप्रवादानामन्योन्यस्य विवादो युक्त । न च सर्वज्ञवचनेषु परस्पराहतिरस्ति । न च सूत्राभिधर्मविनयानां परस्परमेकवाक्यता भवत सभवति । तत्कथं सूत्रादिनिर्णयवर्त बुद्धवचनादे हेतुरुक्तम् ? तस्मादनिश्चितैतत् । *B Pañjikā*, ix. 43-44 See *Sikshā*, pp 95 96

[ 236 ] कल्पानां महतामेतदसंख्येयत्रयं मतम् ।

कल्पाणां(नां) यदि संख्या न विद्यते कथं तर्हि त्रयमिति निर्धार्यते ?[1] न खलु संख्या न विद्यते । किं तर्हि ?

स्थानान्तरमसंख्याख्यमदःसंख्योपरि स्थितम् ॥

(5)स्थानान्तरविशेषस्य[2] खल्वेतन्नाम(मा)संख्येयमिति । न तु न संख्या विद्यत इत्येतद्विवक्षितम् ।

अथायं शाक्यमुनिर्भगवान्सम्यक्संबुद्धो बोधिसत्त्वचर्यायामेषु त्रिष्वसंख्येयेषु[3] कियतो बुद्धानां पर्युपासां चक्रे ? तदत्र वर्णयन्ति । प्रथमेऽसंख्येये पञ्चसप्ततिसहस्राणि । द्वितीये षट्सप्ततिम् । तृतीये सप्तसप्ततिम् ।

---

The *Nettipakarana* points out that the *Sutta* means four *Ārya-satyas* :—
कतमस्मि सुत्ते-ओतारेतब्बानि ? चतूसु अरियसच्चेसु । कतमस्मि विनये सन्दस्सयितब्बानि ? रागविनये दोसविनये मोहविनये । कतमियं धम्मतायं उपनिक्खिपितब्बानि ? पटिच्चसमुप्पादे । यदि चतुसु अरियसच्चेसु अवतरति किलेसविनये सन्दिस्सति धम्मतञ्च न विलोमेति, एवमासवे न जनेति । *Netti*, p 22.—तस्य यस्मा भगवतो वचनं एकगाथामत्तम्पि सच्चविमुत्त नत्थि, तस्मा सुत्तेति पदस्स अत्थ दस्सेतुं चतूसु अरियसच्चेसू ति वुत्त । अट्ठकथायं पन तीणि पिटकानि सुत्तं ति वुत्तं । तं इमिना नेत्तिवचनेन अञ्ञदत्थु संसन्दति चेव समेति च । *Netti A.* p. 219.

[1] This topic is discussed by the Kośakāra in the III *Kośasthāna* : बुद्धत्वम् । असंख्येयाना कल्पाना त्रयेण । कथमसंख्येयस्यामति सख्येयावसाने पुनस्त्रित्वमुच्यते ? नैतदेवं वेदितव्यम् । किं तर्हि ? षष्ठिः स्थानान्तराण्यसंख्येयमिति मुक्तकसूत्रे पठ्यते । कतमानि षष्ठि ?...*Akb.* III. 94 a.

[2] The Kośakāra enumerates the sixty *sthānāntaras.* For *asankhyeyas*, see *Vm.* XIII 55, 57, 63 and *A Manual of Buddhist Philosophy*, Vol I. pp. 39-41. For *kalpas*, see *Ibid.* pp. 46—48. V. supra, p. 100, n. 1. LVP. deals with the *kalpa*, *asankhyeyas* and *sthānāntaras* in great detail. See *LVPAk.* III. pp. 187—194

[3] The Pāli tradition is different :—

कप्पे च सतसहस्से चतुरो च असङ्खेय्ये ।
एत्थन्तरे यं चरितं सब्बं तं बोधिपाचनं ॥ *Chariyā-piṭaka*, I. 1. 1.

Cf. तथागतेन चतूहि च असंखेय्येहि कप्पेहि कप्पानं सतसहस्सेन च एत्थन्तरे सब्बञ्ञुतञ्ञाणं परिपाचितं । *Milinda*, p 227.

The *Aaa* gives a different view :—

कस्य पुन कल्पासख्येय(6)स्यावसाने कतमो बुद्धो बभूव ?[१] अत्रापि वर्णयन्ति । रत्नशिखिनि[२] सम्यक्सबुद्धे प्रथमोऽसख्येय समाप्त । भगवति दीपङ्करे[३] द्वितीय । भगवति विपश्यिनि[४] तृतीय समाप्त ।

कस्मिन्पुन सम्यक्सबुद्धे बुद्धत्वे प्रथम चित्तमुत्पादितम् ? शाक्यमुनौ[५] । शाक्यमुनिर्नाम प्रथमस्यासख्येयस्यादौ बभूव यत्र भगवता भार्गवभूतेन (6)सुखोदकेनाङ्गपरिचर्याभिरुपस्थान[६] कृत्वा प्रथम बोधिचित्तमुत्पादितमह मप्येव प्रकारो भूयासमिति[७] ।

---

तथा हि प्रथमेन कल्पासख्येयन सम्भारभूमिमारभ्य याव प्रथमा भूमिर्निष्पाद्यते द्वितीयेन तु विमलाभूमिमुपादाय यावत्सप्तमी भूमि ततीयेन पुन कल्पासख्येयनाचलाभूमिमारभ्य यावद्बुद्धभूमिरियत्र त्रिभि कल्पासख्येयर्बुद्धत्वमधिगम्यत इति । त्रिकमाभायान त्रिभि कल्पासख्येयरियुक्त न पुन परमार्थत इत्येव नयाथसूत्रव्याख्यान नितरामेव विरोध । तथा हि सम्भारभूमिमापूरयन्नेक कल्पासख्येयमतिक्रामति तदनन्तरमधिमुक्तिचर्याभूमि निष्पादयन् कल्पासख्येयद्वयमतिनामयति । तत्र प्रमुदिताभूमिमुपादाय यावद्धर्ममेघा बोधिसत्त्वभूमि प्रत्यक त्रिभिस्त्रिभि कल्पासख्येयर्बोधिसत्त्वो निष्पाद्य समन्तप्रभा बुद्धभूमिमासादयतीत्येव त्रयस्त्रिंशता कल्पासख्येयर्बुद्धत्व प्राप्यत इत्याचार्यवसुबन्धुपादा । *Aaa* pp 558-9

[१] Cf असख्येयत्रयान्त्यजा ।
विपश्यी दीपकृद्रत्नशिखी शाक्यमुनि पुरा । *Ak.* IV 110 bcd

[२] See *BHSD* p 452

[३] See *BHSD* p 265

[४] See *BHSD* p 491

[५] See *Mahavastu* I 47 and *BHSD* p 525 According to the Pali tradition, however it was under Dipankara Buddha that Gautama (the Bodhisattva) made the *Pranidhana* See *Buddhavamso* chapter II

[६] Cf यत्र भगवता प्रभास नाम्ना कुम्भकारकुमारभूतनासुखोदकाभ्यङ्गपरिचर्याभिरुपस्थान कृत्वाद्य प्रणिधान कृतम । *Sakv* p 432 *Bhargava* means a potter See *BHSD* p 408 See Pal *Bhaggava DPPN* II p 344

The *Siksha* quotes similar instances —यथोक्त भद्रकल्पिकसूत्र । घोषदत्तो नाम तथागतो यत्र नगरराजेन प्रथम बोधिचित्तमुत्पादित ताम्बूलपत्र दत्वा गोपालकभूतेन । *Siksha* pp 8-9

[७] बोधिचित्तमिति बोधाय चित्त प्रणिधिप्रस्थानात्मक चित्तमिति । *Aaa* p 78 See *Bodhicittotpada sutra sastram* pp 5-7 and *The Bodhisattva Doctrine* pp 58-64

उत्पादितचित्ता बोधिसत्त्व दृढमात्मव्रत्यानि सम्यक्प्रणिधान सग्रहीतु सर्वान् प्रमपालयन्त्वान् । गवेषयाम्यहमनुत्तरा बोधि तस्माच्चित्तोत्पादमारभ्य महाकरुणाया करुणाचित्तान्यानि दशोत्तमानि सम्यक्प्रणिधानानि । *Bodhicittotpada sutrasastra* p 8 For ten *mahapranidhanas* see *Siksha* p 29

प्रभासेवुराजनि[1] तदेव पुनर्द्वैढिमानमापादितमिति ॥

कस्मिन्पुनः काले बुद्धा भगवन्तो बुद्धादित्याः प्रादुर्भवन्ति ? तदारभ्यते—

[ 237 ] अपकर्षे जिनोत्पत्तिर्यावच्छतसमायुषः ।
द्वयोः प्रत्येकबुद्धानामुत्कर्षे चक्रवर्ति(8)णा(ना)म् ॥[2]

कल्पापकर्षे खलु बुद्धानामुत्पत्तिर्भवति । उत्कर्षे चापकर्षे च प्रत्येकजिनानाम् । उत्कर्ष एव चक्रवर्तिणा(ना)म् ॥

चक्रवर्तिणा(ना) पुनरयं णि(नि)यमः—

[ 238 ] नाधोऽशीतिसहस्रासौ(यो)स्तत्समुत्पत्तिरिष्यते ।

अशीतिवर्षसहस्रायुभ्यश्चक्रवर्तिणा(ना)मूर्ध्वमुत्पत्तिर्भवति नाध इति ।

ते हेमरूप्यताम्रायश्चक्राः पुण्यप्रभावतः ॥

---

[1] See *BHSD* p 382

For an allied controversy on 'Bodhisat's entering the Path of Assurance', see *Kv* —

न वत्तब्ब "बोधिसत्तो कस्सपस्स भगवतो पावचन चरित ब्रह्मचरियो' ति ?

आमन्ता ।

ननु वुत्त भगवता —'कस्सपे अह आनन्द भगवति ब्रह्मचरिय अचरि आयति सबोधाया ति ? *Kv* IV 8—इदानि नियामोक्कन्तिकथा नाम होति । तत्थ यस्स घटीकारसुत्ते [Cf *M* *sutta* 81 ] जोतिपालस्स पब्बज्ज सन्धाय बोधिसत्तो कस्सपभगवतो पावचन ओक्कन्तनियामो चरितब्रह्मचरियो ति लद्धि सेय्यथा पि एतरहि अन्धकान । ततो यस्मा नियामो ति वा ब्रह्मचरिय ति वा अरियमग्गस्स नाम बोधिसत्तानञ्च ठपेत्वा पारमीञाण अञ्ञा नियामोक्कन्ति नत्थि, यदि भवेय्य बोधिसत्तो सोतापन्नो सावको भवेय्य, न चेवमेत, केवल हि बद्धा अत्तनो ञाणबले ठत्वा अय बुद्धो भविस्सती ति ब्याकरोन्ति *Kv A* IV 8, See *Points of Controversy* pp 167 170

[2] Cf बुद्धत्वमपकर्षे हि शताद्यावत्तदुद्भव ।
द्वयो प्रत्येकबुद्धाना खड्ग कल्पशतान्वय ॥ *Ak* III 94

[3] Cf चक्रवर्तिसमुत्पत्तिर्नाधोऽशीतिसहस्रकात ।
सुवर्णरूप्यताम्रायश्चक्रिणस्तेऽधरक्रमात ॥ *Ak* III 95

After this the Kośakara discusses two more points किमत्र त्रिसाहस्रमहासाहस्रो लोकधातुर्लोक इष्ट उताहो सर्वलोकधातव इति ? and चक्रवर्तिन पृथिवी कथ जयन्ति ? *Akb* III 96 98 These points are not discussed in *Adv* It is possible that these topics were discussed in the Third *Adhyaya* of *Adv*, which is lost V supra, p 115, n 1

(७)चतुर्विधा खलु चक्रवर्तिन(न)—सौवर्णचक्रा, रूप्यचक्रा, ताम्रचक्रा, लोहितचक्राश्च स्वपुण्यप्रकर्षादिति। यथाक्रम चैते चतुस्त्रिद्व्येकद्वीपेश्वरा॥

अथ यदुक्तम्—'तस्माच्च बोधिमार्गोऽन्य सूत्रादिपिटकत्रयात्।'[१] इति। यदि तर्हि मार्गभेदो नास्ति[२] बुद्धप्रत्येकबुद्धश्रावकाणा(ना) फलभेदेनापि तर्हि न भवितव्यम्।[३] नैष दोष। [IV A 7 Fol 101 b] (1)यस्मात्—

---

१ V supra *Ad karika* 235 ab

२ On *marga bheda* see *Aas* p 138

३ The Pali as well as Buddhist Sanskrit works contain many passages which explain the concepts of *Buddha Pratyekabuddha* and *Śravaka* —

(a) कतमो च पुग्गलो सम्मासम्बुद्धो ? इधकच्चो पुग्गलो पुब्बे अननुस्सुतेसु धम्मेसु साम सच्चानि अभिसम्बुज्झति तत्थ च सब्बञ्ञुत पापुणाति फलेसु च वसीभाव, अय वुच्चति पुग्गलो सम्मासम्बुद्धो। *P Pannatti* I 28

—पुब्बे अननुस्सुतेसू'ति पच्छिमभवे सच्चपटिवेधतो पुब्बे अञ्ञस्स कस्सचि सन्तिके अस्सुतपुब्बेसु। तत्थ परिमपरिमेसु पन भवेसु सब्बञ्ञुबोधिसत्ता बुद्धसासने पब्बजित्वा तीणि पिटकानि उग्गहेत्वा गतपच्चागतवत्त आरुय्ह कम्मट्ठान अनुलोम गोत्रभु आहच्च ठपेन्ति तस्मा पच्छिमभवस्मि यत्र अनाचरियभाव सन्धायेत वुत्त। तत्र हि तथागतो पुरिसकारनिरत्ता साम अननुस्सुतेसु सम्मनसिगतधम्मेसु चत्तारि सच्चानि अभिसम्बुज्झति। तत्थ चाति तस्मिञ्च चतुसच्चसम्बोधिसङ्खाते अरहत्तमग्गे सब्बञ्ञुत पापुणाति। *P Pannatti A* I 28

(b) कतमो च पुग्गलो पच्चेकसम्बुद्धो ? इधकच्चो पुग्गलो पुब्बे अननुस्सुतेसु धम्मेसु साम सच्चानि अभिसम्बुज्झति न च तत्थ सब्बञ्ञुत पापुणाति न च फलेसु वसीभाव अय पच्चेकसम्बुद्धो। *P Pannatti* I 29

Cf विनापि शास्त्रा मानसम प्रतिबुद्धा इति प्रत्येकबुद्धा। ते ह्यल्पमात्मान दमयन्ति नान्यान्। किं पुनरत्र कारणम् ? नहि तावच्छक्ता धर्म देशयितु प्रतिसंवित्प्राप्तत्वात्। पूर्वाभ्यासवशात्तथामुक्त्वाविमुक्तमात्मानमहेतु। *Akb* III 74 d

Cf also श्रावकपिटकमतानपेक्ष स्वमार्गसमुत्थानकरणाद्बुद्धोऽन्ये प्रत्येकबुद्ध। *Aas* p 43

The *pratyeka buddha* is also known as *khadga* The *Khaggavisana sutta* of the *Sutta nipata* and the *Khadgavisana gatha* of the *Mahavastu* (I 357) point to the solitary habits of the *Pratyeka buddhas* Yaśomitra says that according to some Ābhidhārmikas the *khadga* and *pratyeka buddha* are not identical —प्रत्यासन्नाभिसमयानां मतेन स्वमार्गयोगे प्रत्येकबुद्धोऽस्ति। उत्पन्नि निर्वेधभागीयमात्राणि वर्गचारी प्रत्येकबुद्ध इत्यभिप्राय। *Sakv* p 540

The *Śravaka* is only an *Arhat* The Kośikāra speaks of six kinds of

[ 239 ] तुल्येऽपि साधनोपाये तद्भेदोऽन्वादिभेदतः ।
भवमोक्षार्थिनोर्मात्रोः प्रदानफलभेदवत् ॥

यावत्खलु कश्चिद्गुणः सम्यक्संबोधिमभिसंबुध्य भगवता देशितो विनिर्मुक्त(क्ति)द्वयमार्गसिद्धहेतुभूतः सर्वोऽसौ पिटकत्रयानुवर्तीः(र्ती)[1] । तत्पुन-

---

*Arhats*: सूत्र उक्तं षडर्हन्तः—परिहाणधर्मा चेतनाधर्मा अनुरक्षणाधर्मा स्थिताकम्प्यः प्रतिवेधनाभव्योऽकोप्यधर्मा चेति । *Akb.* VI 56 ab. See *P. Paññatti, (mātikā-ekakam)*.

These three concepts, (the *śrāvaka*, *pratyeka-buddha* and *buddha*) lead to the concept of three *yānas*. The *S. Puṇḍarīka* gives in brief the essential differences of these three as below :—

तत्र केचित् परघोषश्रवानुगमनमाकाङ्क्षमाणा आत्मपरिनिर्वाणहेतोश्चतुरार्यसत्यानुबोधाय तथागतशासनेऽभियुज्यन्ते । त उच्यन्ते श्रावकयानमाकाङ्क्षमाणाः ।

अन्ये सत्त्वा अनाचार्यकं ज्ञानं दमशमथमाकाङ्क्षमाणा आत्मपरिनिर्वाणहेतोर्हेतुप्रत्ययानुबोधाय तथागतशासनेऽभियुज्यन्ते । त उच्यन्ते प्रत्येकबुद्धयानमाकाङ्क्षमाणाः ।...

अपरे पुनः सत्त्वाः सर्वज्ञज्ञानं बुद्धज्ञानं स्वयम्भुज्ञानमनाचार्यकं ज्ञानमाकाङ्क्षमाणा बहुजनहिताय...सर्वसत्त्वपरिनिर्वाणहेतोस्तथागतज्ञानबलवैशारद्यानुबोधाय तथागतशासनेऽभियुज्यन्ते । त उच्यन्ते महायानमाकाङ्क्षमाणाः ।...*S. Puṇḍarīka*, p. 60.

Also cf. श्रावकयानिकः पुद्गलः कतमः ? यः समापन्नो वा असमापन्नो वा श्रावकधर्मताविहारी प्रकृत्या मृद्विन्द्रियः स्वविमुक्तये प्रणिहितः वैराग्यभावनया विमुक्ताशयः श्रावकपिटकमेवावलम्ब्य वीर्यभावनया धर्मानुधर्मचारी दुःखस्यान्तमनुप्राप्नोति ।

प्रत्येकबुद्धयानिकः पुद्गलः कतमः ? यः समापन्नो वा असमापन्नो वा प्रत्येकबुद्धधर्मताविहारी प्रकृत्या मध्येन्द्रियः स्वविमुक्तये प्रणिहितः वैराग्यभावनया विमुक्ताशयः केवलभावनया चाधिगतबोध्याशयः श्रावकपिटकमवलम्ब्य...खड्गविषाणकल्प एकविहारी प्रत्येकजिनः वर्गचारी दुःखस्यान्तमनुप्राप्नोति ।

महायानिकः पुद्गलः कतमः ? यः समापन्नो वा असमापन्नो वा बोधिसत्त्वधर्मताविहारी प्रकृत्या तीक्ष्णेन्द्रियः सर्वसत्त्वविमोक्षाय प्रणिहितः अप्रतिष्ठितनिर्वाणाशयः बोधिसत्त्वपिटकमवलम्ब्य वीर्यभावनया धर्मानुधर्मचारी सत्त्वान् परिपाचयति शुद्धां बुद्धभूमिं भावयति व्याकरणं च प्रतिलभते सम्यक्संबोधिं च साक्षात्करोति । *Asm.* p. 87.

On the origin and development of the three *yānas*, see *AMBRH.* pp. 80-84.

[1] A similar claim is made by the Mahāyānists :—...अत्र प्रज्ञापारमितायां सर्वाणि त्रीणि यानानि विस्तरेणोपदिष्टानि । तानि पुनरनिमित्तयोगेनानुपलम्भयोगेनासंक्लेशयोगेनाव्यवदानयोगेन । यावत्तत् पुनर्लोकव्यवहारेणापरमार्थयोगेनेति विस्तरः । उक्तं च

बुद्धः प्रत्येकबुद्धैश्च श्रावकैश्च निषेविता ।
मार्गस्त्वमेका मोक्षस्य नास्त्यन्य इति निश्चयः ॥ *B. Pañjikā*, IX. 41 cd.

विमुक्तिद्वयं[1] त्रिभि· पुद्गलैः प्राप्यते । भगवता सम्यक्संबुद्धेन प्रत्येकजिने नार्य(2)श्रावकेण च । तेषा पुण(न)स्तुल्ये बोधिजर्मनि[2] पतितानामिन्द्रिय प्रणिधानावरणभेदाद्भेद· ।[3] तद्यथा द्वयोर्मानोस्तुल्यं वस्तु तुल्ये क्षेत्रे प्रतिपाद

---

[1] This refers to two *vimuktis* viz, *chetovimukti* and *prajnavimukti* — साङ्ग संव विमुक्ति द्वे

द्व विमुक्ती सूत्र उक्ते । चेतोविमुक्ति प्रज्ञाविमुक्तिश्च । *Akb* vi. 77 c.

These two *vimuktis* are often mentioned together इध भिक्खवे भिक्खु आसवान खया अनासव चेतोविमुत्ति पञ्ञाविमुत्ति च दिट्ठव धम्मे सय अभिञ्ञा सच्छिकत्वा उपसम्पज्ज विहरति । *Digha*, xxvi 28

They have been variously explained as below

चतोविमुत्ति ति फलसमाधि, पञ्ञाविमुत्ति ति फलञाण । *Vbh A* p 464

रागविरागा चतोविमुत्ति सखफल, अविज्जाविरागा पञ्ञाविमुत्ति असेखफल । *Netti* p 82

रागविरागाच्चेतोविमुक्ति । अविद्याविरागात् प्रज्ञाविमुक्ति । *Sakv* p 607

तृष्णाऽविद्यापक्षमवं[illegible]प्रहाणात् समाधिसमापत्तयश्चेतोविमुक्ति, अर्हन्मार्गज्ञान प्रज्ञाविमुक्ति । *Aaa* p 11

See *Jpt* p 25, and *AMBRH* pp 34 (n. 1) and 199 V infra *Ad karika* 466

[2] V infra, *Adv karika*, 241 and 441

[3] Cf श्रावकस्य सखड्गेभ्यो बोधिसत्त्वस्य तायिन ।

मृदुमध्याधिमात्राणामुत्पादाना विशिष्टता ॥ *Aa karika* 26

The Hinayanists as well as the Mahayanists acknowledge the *indriyabheda* and the consequent *phalabheda* —एसो च भन्त मग्गो एसा पटिपदा पञ्चन्न ओरम्भागियान सयोजनान पहनाय अथ किञ्चरहि इध एकच्चे भिक्खू चेतोविमुत्तिनो, एकच्चे पञ्ञाविमुत्तिना ति ? 'एत्थ खो तेसा'ह आनन्द इन्द्रियवेमत्त वदामी ति । *M sutta* 64

Cf ननु भन्त भगवा सब्बपाणभूतहितानुकम्पी विहरतीति ? अथ किञ्चरहि भन्त भगवा एकच्चान सक्कच्च धम्म देसति । एकच्चान नो तथा

सय्यथा पि गामणि य अदु खत्त अग्ग एवमव मय्ह भिक्खुभिक्खुनियो । तेसाह धम्म देसमि आदिकल्याण परिसुद्ध ब्रह्मचरिय पकासमि । त किस्स हेतु ? एते हि गामणि म दीपा म लेणा म ताणा म सरणा विहरन्ति ।

सय्यथा पि गामणि य अदु खत्त मज्झिम एवमव मय्ह उपासका उपासिकायो । म सरणा विहरन्ति ।

सय्यथा पि गामणि य अदु खेत्त हीन जङ्गल ऊसर पापभूमि एवमव मय्ह अञ्ञतित्थिया समणब्राह्मणपरिब्बाजका । तम पाहं पकासमि । तं किस्स हेतु ? अप्पेव नाम एकपद पि आजानेय्यु त अस्सस्स दीघरत्त हिताय सुखाय चाति । *S* iv p 316.

यतोऽश्चेतनाविशेषादतुल्यं फलं भवति, तद्वदुच्चमार्थं प्रार्थयमानानां त्रयाणामपि पुद्गलानां प्रणिधानेन्द्रियसततयत्ननिरन्तरभावनाप्रयोगपटुत्वाभ्या[3]सादिविशेषात्तुल्येऽपि मार्गे पतितानां कश्चित्फलविशेषो भवति ।

इतश्च

[ 240 ] करुणाभावनोद्रेकात्स्वसंविच्चित्तयोस्तथा ।
परसंविद्गुरोस्तद्वत्तद्विशेषो निधीयते ॥

तत्र भगवतो बुद्धस्य करुणाभावना[1] चोद्रेकेन वर्तते भगवान्बुद्धः । स्वसंविचिन्ता च प्रत्येकबुद्धस्याधिक्येन वर्तते । परसवित्परतो घोषश्च श्राव-[4]कस्य । किञ्च, परतो घोषमन्तरेणापि चरमे जन्मनि सुयोनिशो(शो)मनस्कारबलेन[2] हेतुप्रत्ययफलावबोधोपलम्भात्, हेतुप्रत्ययबलैरशेषप्रनष्टं निश्रेयसं मार्गं प्रथममधिगम्य परत्रोपदेशादित्येवमादि ॥[3]

---

The Mahāyanists hold that the Buddha preaches the law according to the *adhimukti* and *aśaya* of the disciples

नानाधिमुक्तानां सत्त्वानां नानाधात्वाशयानामाशयं विदित्वा धर्मं देशितवन्तः ।
*S Pundarika*, p 31

स खलु भगवान् धर्मं देशयति स्म । यदिदं श्रावकाणां चतुरार्यसत्यप्रयुक्तं धर्मं देशयति स्म जातिजराव्याधिमरणशोकपरिदेवदुःखदौर्मनस्योपायाससमतिक्रमाय निर्वाणपर्यवसानं प्रतीत्यसमुत्पादप्रवृत्तम् । बोधिसत्त्वानां महासत्त्वानां षट्पारमिताप्रतिसंयुक्तानामनुत्तरां सम्यक्संबोधिमारभ्य तथागतज्ञानदर्शनपर्यवसानं धर्मं देशयति स्म । *Ibid* pp. 251 2.

For *aśaya*, *adhimukti* and *indriya bheda*, see *Vbh* pp. 340 341. *V* infra, *Ad karikas* 492 495

१ For the difference between the *karuna* of *Śravaka* and *Buddha*, v infra, *Adv karika* 506

२ Cf द्वौ हेतू द्वौ प्रत्ययौ सम्यग्दृष्टेरुत्पादाय । तथा ह्युक्तं भगवता । कतमौ द्वौ ? परतश्च घोषोऽध्यात्मं च योनिशो मनसिकार इति । *Sakv* p 188

Cf द्व मे भिक्खवे पच्चया सम्मादिट्ठिया उप्पादाय । कतमे द्वे ? परतो च घोसो योनिसो च मनसिकारो । *Ang* I p 87

Also cf यस्मा च खो महाराज सवणन करणीय होति । थेरो महाराज, सारिपुत्तो अपरिमितमसङ्ख्येयकप्प उपादाय उपचितकुसलमूलो पञ्ञाय कोटिं गतो, सो पि विना सवणेन नासक्खि आसवक्खय पापुणितु । *Milinda*, p 259

३ The Pali *Pitakas* contain many old passages indicating the difference between a *Śravaka* and a *Buddha* The following passage perhaps gives a fairly old theory —

तथागतो भिक्खवे अरहं सम्मासम्बुद्धो रूपस्स पे विञ्ञाणस्स निब्बिदा विमुत्तो सम्मासम्बुद्धो ति वुच्चति । भिक्खुपि भिक्खवे पञ्ञाविमुत्तो रूपस्स प विञ्ञाणस्स

अथ तुल्यायां विमुक्तौ स्थितानां[1] त्रयाणामभिसमेतॄणां को विशेष ?[2] तदुच्यते—

---

निब्बिदा॰ विमुत्तो पञ्ञाविमुत्तो ति वुच्चति । तत्र भिक्खवे को विसेसो को अधिप्पायो किं नानाकरणं तथागतस्स अरहतो सम्मासम्बुद्धस्स पञ्ञाविमुत्तेन भिक्खुना ति ?

भगवम्मूलका नो भन्ते धम्मा ?

तथागतो भिक्खवे अरहं सम्मासम्बुद्धो अनुप्पन्नस्स मग्गस्स उप्पादेता असञ्जातस्स मग्गस्स सञ्जनेता अनक्खातस्स मग्गस्स अक्खाता मग्गञ्ञू मग्गविदू मग्गकोविदो । मग्गानुगा च भिक्खवे एतरहि सावका विहरन्ति पच्छा समन्नागता । अयं खो भिक्खवे विसेसो ।
*S* III p 65

For details on this topic see *Dialogues of the Buddha*, II p 87, n 3, and *The Bodhisattva Doctrine*, pp 1-49

[1] The Mahayanists accept this claim with certain reservations —

तुल्ये नाम धर्मधातुप्रवेशे वयं भगवता हीनेन यानेन निर्यातिता । *S Pundarika*, p 46 Also see—यद्यपि भगवन् सत्त्वा नानाधिमुक्तयो ये त्रैधातुकान्निःसृता किं तेषामेकं निर्वाणमुत द्वे त्रीणि वा ? भगवानाह—सर्वधर्मसमतावबोधाद्धि काश्यप निर्वाणम् । तच्चैकं न द्वे न त्रीणि । *Ibid* p 95 येन सर्वधर्मा न प्राप्ता कुतस्तस्य निर्वाणम् ? *Ibid* p 98.

यानभेदं वर्णयन्ति बुद्धयानं तु निश्चितम् ।

यस्तु शून्यान् विजानाति धर्मानात्मविवर्जितान् ।

संबुद्धाना भगवतां बोधिं जानाति तत्त्वतः ॥ *Ibid* p 98

Also cf यानत्रयं समारेन्द्रियस्वभावाधिमुक्तिविभिन्नमपि अभिसमयं आर्यमार्गश्चाभिन्न इति तु सर्वं वयं श्रद्दधामहे । क्लेशावरणप्रहाणस्येष्टत्वात् । संवृतिनयेन स मार्गो विभिन्न । यदि धर्मनैरात्म्यावतारमार्गकरोपि ज्ञेयावरणस्याप्रहाणात् शास्ता प्रादेशिकविमुक्तः स्यात् । ननु मुक्तिर्मुक्तेरभिन्नेति किं नोपदिष्टम् । सत्यमुपदिष्टम् । क्लेशावरणविमुक्तिसाम्यादेवमुक्तम् । न तु सर्वप्रकारेण । यथा रोमकूपो महाकाशेन तुल्योऽपि नाभिन्नः । *Karatalaratna*, p 77

See *B Panjika*, IX 55 and *Aaa* p 140

[2] The *Abhidharma samuchchaya* gives the following details —

श्रावकाभिसमयः कतमः ? पूर्वोक्तः सप्तविधोऽभिसमयः । [धर्म-अर्थ तत्त्व-पृष्ठ-रत्न-असमुदाचारनिष्ठाभिसमया ।] श्रावकाणां परतो घोषमागम्य प्रतिलम्भतः श्रावकाभिसमय इत्युच्यते ।

प्रत्येकबुद्धाभिसमयः कतमः ? पूर्वोक्ता सप्ताभिसमया । परतो घोषमनागम्य प्रतिलम्भतः ।

बोधिसत्त्वाभिसमयः कतमः । पूर्वोक्तेषु सप्ताभिसमयेषु या समुदागमक्षान्ति नो तु साक्षात्क्रिया । सर्वत्र बोधिसत्त्वप्रमुदिताभूमौ बोधिसत्त्वस्य सम्यक्त्वनियामावक्रान्ति ।

श्रावकाभिसमयात् बोधिसत्त्वाभिसमयस्य को विशेष ? समासत एकादश । आलम्बनविशेष उपस्तम्भविशेष प्रतिवेधविशेष अभ्युपगमविशेष निर्याणविशेष परिग्रहविशेष

[ 241 ] हेतुतत्त्वफलोद्भूतं [5]महत्त्वं शासितुस्त्रिधा ।
विमुक्तावपि तुल्यायां त्रयाणां बोधि[6]लम्भनात् ॥

तत्र हेतुकृतं तावद्भगवतो बुद्धस्य महत्त्वं(त्वं) त्रिषु कल्पासंख्येयेषु सूत्रविनयाभिधर्मालोकेन विनेयजनमनोग्रहेभ्यज्ञानतिमिरोत्सादनात्। स्वभावकृतमपि बलवैशारद्यस्मृत्युपस्थानमहाकरुणादिस्वरूपत्वात्।[7] फलकृतमपि

---

व्यवस्थानविशेष प्रतिष्ठापरिवारविशेष अभिजन्मविशेष जन्मविशेष फलविशेषश्च । फलविशेषः पुनर्दशविध. । आश्रयपरिवृत्तिविशेषत गुणसमृद्धि···त्रिकाय···निर्वाण···मिश्रोपमिश्रज्ञानशक्तिलाभ···आवरणविशुद्धि···मिश्रोपमिश्रकर्मक्रिया अभिसबोधिनिर्वाणसदर्शनोपायविशेषत. पञ्चाकारपरित्राणविशेषतश्च वेदितव्य । *Asm* pp 93-4

The *Kathāvatthu* contains many controversies about the relative imperfection of the *Arhat*, on account of his not being a *sarvajña* :—

न वत्तब्ब 'अत्थि किञ्चि सयोजन अप्पहाय अरहत्तप्पत्ती' ति ?

आमन्ता ।

अरहा सब्ब बुद्धविसय जानाती ति ?

न हेव वत्तब्बे ।

तेन हि अत्थि किञ्चि सयोजनमप्पहाय अरहत्तप्पत्ती ति । *Kv* xxi 3—

—इदानि सयोजनकथा नाम होति । तत्थ यस्मा अरहा सब्ब बुद्धविसय न जानाति तस्मा तस्स तत्थ अविज्जाविचिकिच्छाहि अप्पहीनाहि भवितब्ब ति सञ्ञाय अत्थि किञ्चि सयोजन अप्पहाय अरहत्तप्पत्ती ति येस लद्धि, सेय्यथापि महासघिकान । ·· सब्ब बुद्धविसयं ति···अरहतो सब्बञ्ञुतञ्ञाणभावेन पटिसेधो कतो, न अविज्जाविचिकिच्छान अप्पहानेन । इतरो पन तेस अप्पहीनत सन्धाय तेन हीति लद्धि पतिट्ठापेति । सा अयोनिसो पतिट्ठापितत्ता अप्पतिट्ठिताव होति । *Kv A.* xxi 3.

Also cf इदानि अञ्ञाण, कङ्खा, परवितरणाति तिस्सो कथा नाम होन्ति । तत्थ येस अरहतो इत्थिपुरिसादीन नामगोत्तादीसु ञाणप्पवत्तिया अभावेन अत्थि अञ्ञाण, तत्थेव सन्निट्ठानाभावेन अत्थि कङ्खा यस्मा च नेस तानि वत्थूनि परे वितरन्ति, पकासेन्ति आचिक्खन्ति, तस्मा नेस अत्थि परवितरणा ति इमा लद्धियो, सेय्यथापि एतरहि पुब्बसेलियादीन । तेस ता लद्धियो भिन्दितु···पुच्छा सकवादिस्स ।·· *Kv A* ii 2—4 See *Kv* iv 10, xxii 1, viii 10, xvii. 1, *Milinda*, pp 107—109, 261 and *Aaa* p. 62.

६ Cf य नून ह पि इम बुद्धबोधि त्रिधा विभज्येह प्रकाशयेयम् *S Pundarika*, p 43

Cf तत्थ बोधी ति चतुमग्गञ्ञाणस्सापि सब्बञ्ञुतञ्ञाणस्सापि अधिवचन । *Kv A* iv. 6 V. infra, *Adi kārikā*, 441

७ These are some of the special powers of Buddha. Cf तथागता···असङ्गाप्रतिहतज्ञानदर्शनबलवैशारद्यावेणिकेन्द्रियबलबोध्यङ्गध्यानविमोक्षसमाधिसमापत्त्यद्भुतधर्मसमन्वागता विविधधर्मसप्रकाशका । तेषु धर्मेषु तथागत एव प्रत्यक्षोऽपरोक्ष । *S. Pundarika*, p 23

सदे(9)चकेषु लोकेष्वप्रतिहतशासनप्रतिष्ठाणा(ना)न्मारचतुष्टय[1]निर्जयनाच्चेति ॥

अथ यदेतत्सर्वसत्त्वप्रतिविशिष्टं पुरुषोत्तमस्य जन्मशरीरं तत्किमनियतकालाक्षेपम्, आहोस्विन्नियतकालाक्षेपमिति ? तदभिधीयते—

[ 242 ] बुद्धस्य संमुखीनस्य बौद्धमाक्षिप्यते वपुः ।

नान्यस्मिन्काले । चिन्तामयेन ज्ञानेन विशि(7)ष्टतमत्वात् । तत्र पुन —

सैकपुण्यशतोद्भूतमेकैकं लक्षणं मुनेः ॥[2]

तत्र पञ्चाशच्चेतनाः प्रयोगभूताः पञ्चाशत्पृष्ठभूताः, एकया तल्लक्षणमाक्षिपति ॥

ता पुनः पञ्चाशच्चेतनाः कतमाः ? तदुच्यते—

[ 243 ] यथाकर्मपथास्तद्वत्पुण्यादित्रयमिष्यते ।

प्रतिकर्मपथं पञ्च, मौलकर्मपथपरिशुद्धिः सामन्तकस्य (8)वितर्कानुपघातः स्मृत्यनुपरिग्रहः, निर्वाणपरिणामनं च । ताः सर्वास्तदालम्बनाः पञ्चाशत्प्रयोगभूताः । पृष्ठेऽप्येतावत्य एव ।[3]

---

[1] The four *Maras* are—*Skandha mara*, *Kleśa mara*, *Devaputra mara* and *Marana mara* See *Śiksha* p 198

Cf चतुमारजयाज्जिनो भगवान । *B Panjika*, ix 36 Also cf सखेपतो वा पञ्च त्रिंस खन्ध अभिसङ्खार-देवपुत्त मच्चुमारे अभञ्जि तस्मा भगवा ति वुच्चति । *Vm* vii 59 V supra, p 101, n 2

[2] चिन्तामय कल्पशते शेष आक्षिप्यते हि तत ।
एकैक पुण्यशतज । *Ak* iv 109 cd, 110 a

[3] Yośomitra gives the following details —

उक्त पुण्यस्य परिमाणम । तयामव कृतपरिमाणाना शतेनैक महापुरुषलक्षण निर्वर्तते । एव यावद् द्वात्रिंशतममपीति । कचित्त व्याचक्षत । बुद्धाम्बनमनस्कारसम्मुखीभावात्पञ्चाशच्चेतना भवन्ति । अहमपीदृशं स्यामित्यपरा पञ्चाशच्चेतना भवन्ति ।

अपरे वर्णयन्ति । कायवाङ्मनस्त्रिनिरयानानि । स्मृत्यानु पाङ्ग । आरूप्याश्चत्वार । अष्टौ च ध्यानरता इत्यष्ट्व वागिन्द्रिय ऐधानुर भवति । तदालम्बनमस्य वाधिगरस्य वरणाचित्तमुत्पद्यत । ततस्तत्प्रयुक्ता चेतना अष्टत्वारिंशद्भवन्ति । अनाऽन्तर बुद्धालम्बना चेतनाऽत्पद्यत । यथाऽननाम्मान् शैधानुयान् गत्वा माचिन्ता इत्यका चेतना । अनोऽनन्तर द्वितीया चेतनाऽत्पद्यत । अहमप्येव मारामियाश्माऽस्मरन्ति । पञ्चाशच्चेतना भवन्ति तासां पुनः सम्मुखीभावाच्चेतनाशत भवन्ति ।

अन्य आहु । प्राणातिपातविरतिविशुद्धस्य भगवत पञ्चाशत्कारणानि भवन्ति ।

अन्ये तु ब्रुवते—बुद्धा द्विशरीराधिष्ठानाः। जन्मशरीराधिष्ठानाः, द्वात्रिंशन्महापुरुषलक्षणालम्बनाः। धर्मशरीराधिष्ठानाश्चाष्टादशावेनि(णि)क-बुद्धगुणालम्बनाः सामन्तकपृष्ठ(?)संगृहीताः।

अन्ये पुनराहुः—प्राणिवधविरतिचेतना मृदुमध्याधिमात्राधिमात्रतरतम-भेदाद्देवमनुष्येषु योज्यं(ज्या)।

केचिन्मन्त्रयन्ते—द्विधा[१] समुद्राश्चत्वारो द्वीपाः[२] षोडशनरकाः,[३] तिर्यक्प्रेतौ षट्कामावचरा[४] विंशतीरूपारूप्यान्(:) देवान्(वाः)[५]। एतान्सर्वान् भगवान् करुणायते।

एवन्तु वर्णयन्ति—सन्निकृष्टं बोधिसत्त्वं स्थापयि[IV. B, 8. Fol 102 a]त्वा यत्सर्वसत्त्वानां भोगैश्वर्याधिपत्यफलमियदेकस्य पुण्यस्य प्रमाणम् ॥[६]

---

पञ्च कारणानि। मौलकर्मपथपारिशुद्धि। सामन्तकपारिशुद्धि। वितर्कानुपघातः। स्मृत्यनुपरिगृहीतत्वम्। निर्वाणपरिणामितत्व चेति। तदालम्बना अपि चेतनाः पञ्च भवन्ति।

एवं दशकर्मपथालम्बना दश पञ्चकाश्चेतनाना पञ्चाशच्चेतना भवन्ति। तेषा द्वि-सम्मुखीभावाच्चेतनाशत भवतीत्येतत् पुण्यशतम्।...*Sakv.* pp. 431-2.

[१] *Abhyantara* and *bāhya* See *Akb.* III. 52

[२] The four great Continents are · जम्बुद्वीप, पूर्वविदेह, अपरगोदानीय and उत्तर-कुरु. See *Akb* III 54 55 and *A Manual of Buddhist Philosophy*, vol I. p 55.

[३] अर्बुद, निरर्बुद, अटट, हहव, हुहुव, उत्पल, पद्म and महापद्म are cold hells. संजीव, कालसूत्र, सघात, रौरव, महारौरव, तापन, प्रतापन and अवीचि are hot hells. *Ibid.* pp. 61-63 See *Akb* III. 58-59

[४] चातुर्महाराजिक-त्रायस्त्रिंश-याम-तुषित-निर्माणरति-परनिर्मितवशवर्ति।

See *Vbh.* p 566.

[५] Sixteen *Rūpāvachara-bhūmis* and four *Ārūpya-bhūmis.* The sixteen *Rūpāvachara-bhūmis* are ·—ब्रह्मपारिसज्जा, ब्रह्मपुरोहिता, महाब्रह्मा चेति पठमज्झानभूमि। परित्ताभा, अप्पमाणाभा, आभस्सरा चेति दुतियज्झानभूमि। परित्तसुभा, अप्पमाणसुभा सुभकिण्हा चेति ततियज्झानभूमि। वेहप्फला असञ्ञसत्ता सुद्धावासा चेति चतुत्थज्झान-भूमी ति रूपावचरभूमि सोळसविधा होति। अविहा, अतप्पा, सुदस्सा, सुदस्सी, अकनिट्ठा-चेति सुद्धावासभूमि पञ्चविधा होति। *A. Sangaho* v. 6 See *Vbh.* pp. 570-572.

These are variously enumerated as sixteen, seventeen and eighteen. See *Akb.* VIII 2. For details, see *A Manual of Buddhist Philosophy*, vol. I pp. 67-69.

For the four *Ārūpya-bhūmis*, v infra, *Ad kārikā* 549-551.

[६] The Kośakāra gives only a few views in brief: किं पुण्यस्य परिमाणम्? सन्निकृष्टबोधिसत्त्व स्थापयित्वा यावत्सर्वसत्त्वाना भोगफलमित्येके। यावत् सर्वसत्त्वाना कर्माधिपत्येन त्रिसाहस्रमहासाहस्रो लोकोऽभिनिवर्तत इत्यपरे। बुद्धा एव च तत्परिमाणा-भिज्ञा इत्यपरे। *Akb.* IV. 110 a.

अथ यदुक्तम्—'दानपारमिता' इति। तत्र कः समासः किं साधनो वा दानशब्दः, को वा स्वभावो दानस्य इति? तदपदिश्यते। दानस्य पारमितायां निश्चयबुद्धिः सा दानपारमिता। एवं शेषास्वपि वाच्यम्।

यत्पुनरुच्यते—'किं साधनो वायं दानशब्दः, को वा दानस्य स्वभावः' इति तत्रापदिश्यते—

दानं हि दीयते येन स्वपरार्थाद्यपेक्षया ॥

[244] कायादिकर्म तत्त्वमविज्ञप्तिः कचित्पुनः ।[1]

करणसाधनोऽयं दानशब्दः। दीयते तेनेति दानं मानवत्। हस्तादिषु तर्हि दानप्रसंगः। अस्तु तर्हि कर्मसाधनो दीयते तदिति दानम्। सुवर्णादिषु दानप्रसंगः। भवतु को [3]दोषः। विपाकफलाभावः, सुवर्णादीनामव्याकृतत्वात्। भवतु तर्हि करणसाधन एव। ननूक्तं हस्तादिषु प्रसंगः? नैष दोषः। कुशलकर्मनयपरिग्रहात्।[2] स्पर्धायशोगुप्तिसेवादिव्युदासार्थमिदमारभ्यते।

---

Cf सर्वविकल्पवीजविगमादप्रमेयामस्येय पुण्य प्रसवति । अप्रमेयमित्यननाप्रमाणमप्याक्षिप्तम् ।" *Aaa* p 427

Also cf जगदानन्दवीजस्य जगददु खौषधस्य च ।
चित्तरत्नस्य यत्पुण्य तत्कथ हि प्रमीयताम् ॥

"'एतदुक्तमार्यवीरदत्तपरिपृच्छाया—
दाधिचित्ताद्धि यत्पुण्य तच्च रूपि भवेद्यदि ।
आकाशधातु सपूर्य भूयश्चोत्तरि तद्भवेत ॥ *B Panjika*, I. 26

See *Bodhichittotpada sutra-sastra*, p 2

[1] Cf दीयते येन तद्दान पूजानुग्रहकाम्यया ।
कायवाक्कर्मसोत्थान महाभोगफल हि तत् ॥ *Ak* IV 113

Also cf अनुग्रहार्थं स्वस्यातिसर्गो दानम । *Tattvartha sutra*, VII 33

[2] Cf इदानि दानकथा नाम होति । तत्थ दान नाम तिविध चागचेतनापि विरतिपि देय्यधम्मपि । 'सद्धा हिरिय कुसलञ्च दान ति आगतट्ठाने चागचेतना दान । 'अभय देती' ति आगतट्ठाने विरति । 'दान देति अन्न पान ति आगतट्ठाने देय्यधम्मा । तत्थ चागचेतना देति वा देय्यधम्म देति वा एताय देय्यधम्म ति दान । सा हि उप्पज्जमाना भयभेरवादिगन्तात दुग्गन्धचेतनं दाति लुनाति चाति दान । देय्यधम्मा दीयती ति दान । एवमेत तिविधम्पि अपनो चेतसिका चेव धम्मा देय्यधम्मो चाति दुविध होति । तत्थ यंसे चेतसिकोव धम्मो दानं, न देय्यधम्मो ति लद्धि, तेस्यापि राजगिरिकसिद्धत्थिकानं । ते सन्धाय पुच्छा सकवादिस्स । *K A* VII 4

Cf फलेन सह सर्वस्वत्यागचित्ताज्जनेऽखिले ।
दानपारमिता प्रोक्ता तस्मात्सा चित्तमेव तु ॥ *Bodhicharyavatara*, V 10

'स्वपरार्थाद्यपेक्षया'—स्वात्मपरार्थानुग्रहाद्यपेक्षया। स्वात्मानुग्रहाय परानुग्रहाय उभयानु(4)ग्रहा[य। आ]दिशब्दात् पूजाकाम्यया चेति। स्वभावोऽपि 'कायादिकर्माविज्ञप्तिः'। कचित्पुनः कायवाङ्मनः कर्म। ससंप्रयोगं सपरिवारं चात्र मनस्कर्म द्रष्टव्यम्। तत्पुनरेतद्दानम्—

प्राधान्यान्मुनिना प्रोक्तं महाभोगफलं हि तद् ॥

स्वर्गापवर्गहेतुत्वेऽपि प्राधान्यान्महाभोगतायां तद्विनियोगः। तत्पुनरेतद्दानम्—

[245] स्वा(5)न्योभयार्थसिद्ध्यर्थं दानं ददति केचन।
साधुवृत्त्यनुवृत्त्यर्थं नोभयार्थाय चापरे ॥[1]

द्वाभ्यां खलु कारणाभ्यां स्वान्यात्महितचिकीर्षुश्च, उभयहितप्रतिपन्नश्च स एवंगुणयुक्तं दानं दीयते[2] (ददाति)। आत्मनश्च कुशलमूलोपचयाय परस्य चेन्द्रियमहाभूतोपचयार्थम्। तत्र स्वहितायैव यथा पृथग्जनः(6)परिनिर्वृते भगवति चैत्याय ददाति परार्थमेव यथा अर्हन् संघाय ददाति, न चेष्टधर्मवेदनीयं भवति। उभयार्थं यद्वीतरागः संघाय ददाति। नोभयार्थं यदर्हंश्चैत्याय ददाति तच्चेन्न (तच्च न) दृष्टधर्मवेदनीयं भवति केवलं तु सत्पुरुषप्रशस्तमार्गानुस्थान प्रदर्शना(ना)र्थम् ॥

तत्पुनरेतद्दानं कथं फ(7)लतो विशिष्यते[3]? तदुच्यते—

[246] दातृवस्त्वादिवैशिष्ट्यात्तत्फलातिशयः स्मृतः।

तत्र कथं दातृविशेषः कथं वस्तुविशेषः कथं क्षेत्रविशेषः?

श्रद्धादिभिर्गुणैर्दाता दत्तेऽतः सत्क्रियादिभिः[4] ॥

---

१ Cf स्वपरार्थोभयार्थाय नोभयार्थाय दीयते। *Ak.* IV. 114. ab.

२ कतमत् दानम्। स्वस्वामिकाना धनवस्तूना वितरण दानम्। तत् त्रिविधहेतोर्भवति। आत्महेतोः परहेतोः परात्महेतोश्च। चैत्यमदिराणा बुद्धप्रत्येकबुद्धार्हता चोपस्थानमात्महेतोः। सत्त्वेभ्यो दान परहेतोः। जनेभ्या दान परात्महेतोः। *Ada.* pp. 1-2.

३ See *M. Dakkhinā vibhanga-sutta,* 142.

४ Cf. दाता विशिष्टः श्रद्धाद्यैः सत्कृत्यादि ददात्यतः।
सत्कारोदारुरुचिता कालानाच्छेद्यलाभिता ॥ *Ak.* IV. 115.

Also cf. विधिद्रव्यदातृपात्रविशेषात्तद्विशेषः। *Tattvārtha sūtra,* VII. 34.

यदा दाता हेतुफलसंबद्ध(न्ध)निश्चय(ये) श्रद्धानो ददाति शीलवान् कल्याणधर्मा बुद्धवचनबहुश्रुतश्च भ(8)वति निर्मत्सरी मुक्तहस्तश्च भवति निर्वाणानुशंस सत्कृत्य स्वहस्तं कालेन परानुपहत्य ददाति, स खलु

[ 247 ] सत्कारादिगुणोपेतं फलं तस्मादवाप्नुते ।

यतः सत्कृत्य दानात्सत्कारलाभी भवति । स्वहस्तदानादुदारेषु भोगपरिभोगेषु रुचिं लभते । कालदानात्कालभोगा[न्] लभते । परानु(9)पघातादनाच्छेद्यांल्लभते निरुपक्षालमग्न्या(न्या)दिभिरसाधारणान् । एतावद्दाता विशिष्यते ।

कथं वस्तु ?

वस्तु वर्णादिसंपन्नं सौरूप्यादि फलप्रदम् ॥[1]

यदि वस्तु वर्णगन्धरसस्पर्शसम्पन्नं भवति तदा विशिष्यते । ततः सुरूपित्वं यशस्विता प्रि(प्रि)यता सुकुमारत्वं सुखस्पर्शाङ्गता भवति यथाक्रमम् । ए[IV A, 8. Fol. 102 b] (1)वं वस्तु विशिष्टं भवति ॥

[ 248 ] गुणदुःखोपकाराख्यैर्धर्मैः क्षेत्रं विशिष्यते ।[2]

गुणाधिकं क्षेत्र[3] भवति । [ति]र्यञ्चमुपादाय यावन्मनुष्याणां गुणान्तरतमक्रमेण यावद्बुद्धस्य । यथोक्तम्—""तिर्यग्योणि(नि)गताय दानं दत्वा शतगुणा विपाकः प्रतिकाङ्क्ष[तव्यः स्याद्] । दुःशीलाय मनुष्यभूताय दत्वा सहस्रगुणः ।"[4] दुःखविशेषा(2)त्क्षेत्रं विशिष्यते । यथो(थौ)पधिकेषु पुण्यक्रियावस्तुषु[6] । "ग्लानाय दानं ग्लानोपस्थाय कायदानं शीतलिकावर्दलिका-

---

[1] Cf. वर्णादिसम्पदा वस्तु सुरूपत्व यशस्विता ।
प्रियता सुकुमारत्वं सुखस्पर्शाङ्गता तनः ॥ *Ak.* iv 116

[2] Cf. गतिदुःखोपकारित्वगुणैः क्षेत्र विशिष्यते । *Ak.* iv 117 ab

[3] अस्मिन् लोके त्रिविधं पुण्यक्षेत्रं भवति । माता पिता वृद्धा रोगी मनुष्यो वीतरागपुद्गलाः मार्गस्था मूलपुद्गलाश्च दाराः मार्गप्रतिपन्नाश्च वा. फलप्रतिपन्ना प्रत्येकबुद्धा बुद्धा बोधिसत्त्वा निर्गुणपाक्षा श्रुतुरश्मानुराश्च । *Aaa* p 32.

[4] Quoted in *Akb* iv 117 ab

[5] Cf तिर्यग्योनिगताय दानं दत्वा शतगुणा दक्षिणा प्रातिकाङ्क्षितव्या । पृथग्जनदुःशीले दानं दत्वा सहस्रगुणा दक्षिणा प्रातिकाङ्क्षितव्या । पृथग्जनशीलवते दानं दत्वा शतसहस्रगुणा दक्षिणा प्रातिकाङ्क्षितव्या । *M sutta* 142.

[6] For the seven *aupadhika-puṇya kriyā-vastus*, see *LVPAk.* iv p 237, n. 1.

दिपु च दानम्।" इति विस्तरः। उपकारित्वविशेषात्। यथा मातापित्रो-रण्ये(न्ये)षां चोपकारिणां ये अटवीदुर्गकान्तारे भूतव्यसनेभ्यो निस्तारयन्ति।

यदुक्तम्—'चेतनाविशेषात्फलविशेषः' इति। अथ कथं चेतनायाः विशेषो भवति? ब्रूमः—

आशयादि मृदुत्वादेर्मृदुत्वादीनि कर्मणः ॥[1]

पन्नां(एषां) खलु कारणानां मृदुत्वादिविशेषात्कर्म विशिष्यते। आशय-चेतनाप्रयोगाधिष्ठानक्षेत्रपृष्ठानां मृदुत्वादेः कर्मविशेषः।

तत्राशयाभिप्रायः यथा—एवं चैवं च कुर्यां करिष्यामीति वा चेतना-या(याः) [4]कर्मपथं समाक्षिपति। प्रयोगस्तदधिष्ठानं कायवाक्कर्म। अधि-ष्ठानं कर्मपथः। क्षेत्रं यस्मै वस्तु प्रतिपाद्यते। पृष्ठं नाम यत्कृत्वा पुनः सकृदसकृद्वानुकरोति॥

यदुक्तम्—'आर्येभ्यो दानमप्रमेयफलम्' इति। अथ किमनार्येभ्यः सर्वेभ्यः प्रमेयम्? नेत्याह—

[249] धर्मदात्रेऽपि बालाय पित्रे मात्रेऽथ रोगिणे।
अ[5]मेयं बोधिसत्त्वाय दानमन्त्यभवाय च ॥[2]

एभ्यः पञ्चेभ्यः पृथग्जनेभ्योऽपि दानमप्रमेयं भवति॥[3]

अथ कस्य कस्मै दत्वा दानमग्र्यफलं भवति? तदभिधीयते—

[250] बोधिसत्त्वस्य यद्दान्न(न)मन्यस्यापि यदष्टमम्।
विपश्चिद्भिस्तदाख्यातं श्रेष्ठं यच्चार्हतोऽर्हते ॥[4]

---

[1] Cf. पृष्ठ क्षेत्रमधिष्ठान प्रयोगश्चेतनाशय।
एषा मृद्वधिमात्रत्वात् कर्ममृद्वधिमात्रता॥ *Ak.* IV 118.
See *Milinda*, p. 112, *DhsA* III 143, and *Vinaya A.* II. p 439

[2] Cf मातृपितृग्लानधर्मकथिकेभ्योऽन्त्यजन्मने।
बोधिसत्त्वाय चामेया अनार्येभ्योऽपि दक्षिणा॥ *Ak.* IV. 118.

[3] Cf बाहिरके कामेसु वीतरागे दान दत्वा कोटिसतसहस्सगुणा दक्खिणा पाटिकङ्खि-तब्बा। सोतापत्तिफलसच्छिकिरियाय पटिपन्ने दान दत्वा असङ्खेय्या अप्पमेय्या दक्खिणा पाटिकङ्खितब्बा। को पन वादो सोतापन्ने?...को पन वादो तथागते अरहन्ते सम्मासम्बुद्धे ति? *M sutta* 142.

[4] Cf. यद मुक्तस्य मुक्ताय बोधिसत्त्वस्य चाष्टमम्। *Ak.* IV. 117 cd.

यत्खलु बोधिसत्त्व सर्वसत्त्वहिताध्याशयेण ⁽⁶⁾दान ददाति तदग्र्यमुत्त मार्थफलत्वात्। भगवताऽप्यष्टौ खलु दानान्युक्तानि सूत्रे[1] "आसाद्य दानम्। भयदानम्। अदात् मे दानम्। दास्यति मे दानम्। दत्तपूर्वं मे पितृभिर्दानम्। ददाति स्वर्गार्थम्। कीर्त्यर्थम्। यावदुत्तमार्थस्य प्राप्तये ददात्येतदग्र्यम्। यच्च त्रैधातुकवीतरागोऽर्हन्नर्हते ददाति[2] दानमि⁽⁷⁾दमग्र्यम्" इति ॥

सूत्र उक्तम्—"साचेतनिकस्याहं कर्मण कृतोपचितस्य नाप्रतिसंवेद्यफल वदामि" इति।[3] अथ किमिदं कृतमुपचित वा ? तदुच्यते—

[ 251 ] सप्रधार्य यदाचित्त पूरणादिदृढीकृतम्।
विगतप्रतिपक्षं च तत्कर्मोपचित मतम् ॥[4]

तत्र सप्रधार्याचित्त नाबुद्धिपूर्व⁽⁸⁾ यदृच्छाय(च्छया) यच्च कृत्वा परिपूरि काभिश्चेतनाभि परिपूरित भवति। पृष्ठतश्च दृढीकृत भवति। निष्कौकृत्या द्विप्रतिपक्ष च भवति। तत्कर्मोपचितमुच्यते ॥

कथ चत्यादिष्वसति प्रतिगृहीतरि पुण्यापजातिर्भवति ? ब्रूम।

---

[1] Quoted n *Akb* ɪv 117 cd

Cf अट्ठ दानवत्थूनि। आसज्ज दान देति। भया दान देति। अदासि मेति दान देति। दस्सति मेति दान देति। साधु दान ति दान देति अह पचामि इमे न पचन्ति नारहामि पचन्तो अपच तान न दातु ति दान देति। इम मे दान ददतो कल्याणो कित्तिसद्दो अब्भुगच्छतीति दान देति। चित्तालङ्कारचित्तपरिक्खारत्थ दान देति। D *gha* xxxɪɪɪ 3 1 See *Ang* ɪv p 236

[2] Cf यो वीतरागो वीतरागसु ददाति दानं धम्मेन लद्धा सुपसन्नचित्तो।
अभिसद्दह कम्मफल उळार त वे दान विपुल ति ब्रूमि। *M sutta* 142.

[3] Cf नाह भिक्खवे सञ्चेतनिकान कम्मान कतान उपचितान अप्पटिसंविदित्वा ब्यन्तिभाव वदामि। *Ang* v p 292

[4] Cf सञ्चेतनसमाप्तिभ्या निष्कौकृत्यविपक्षत।
परिवाराद्विपाकाच्च कर्मोपचितमुच्यते ॥ *Ak* ɪv 120

—सञ्चेतनतन सञ्चिन्त्य कृत भवति। नाबुद्धिपूर्वकृत भवति। तद्यथा। अव्या कृतेन चित्तेन पापार्ण दत्तवानि सुवर्णपिण्ड दद्यात्। कृतं तत्र पुनरुपचितम्। अव्याकृत हि तत्कर्म। न सहसा कृतम्। यथा माप्याभाषणे सत्यवचन कृत तत्कुशल न पुनरुपचितम्। कश्चिदेकेन सुचरितेन सुगतिं याति। कश्चिद्यावत् त्रिभि। कश्चिदेकेन कर्मपथेन। कश्चि द्यावद्दशभि। तत्र यो यावता गच्छति तस्मिन्नसमाप्ते कृत कर्म नोपचितम्। समाप्ते तूपचितम्। एवं यावद्विपाकेनान नियतमिति। *Sakv* p 435 See *LVPAk* ɪ p 114 n. 1

[ 252 ] स्वस्मात्त्यागगुणापेक्षाश्चैत्तार्श्चैत्यार्चनादिषु ।
विना प्रतिगृहीत्रापि फलं मैत्रीविहारवत् ॥[१]

तद्य(1)था मैत्रीविहारिणो महर्षयो न च लोकं सुखेन योजयन्त्यथ चापरिमितं पुण्यं प्रतिगृह्णन्त्येवं चैत्यादिषु तद्गुणाधिमुक्तिवशेन(न) स्वचित्तप्रसादादेव पुण्यप्रसूतिमिच्छति(न्ति) ॥[२]

सूत्र उक्तम्—"द्वे दाने । धर्मदानमामिषदानं च ।"[३] तत्रामिषदानमुक्तम् । धर्मदानमुच्यते—

[ 253 ] धर्मदानस्वभावो वाक्तन्नामादिगोचरः ।[४]
[V B, 1 Fol 103 a]
(1)अव्याकृतस्वभावत्वान्न नामाद्यन्नदानवत् ॥

यथैव कुशलत्वात् त्रिकर्मस्वभावमामिषदानं नान्नपानम् । सुवर्णादिस्वभावं तत्, अव्याकृतत्वात् । तद्वद्वाच· कुशलत्वाद्धर्मदानं वाक्स्वभावम् । न नामकायादिस्वभावम् ॥

उक्तं दानमयं पुण्यक्रियादिवस्तु[५] । शीलमयमारभ्यते ।

[ 254 ] शीलं शुभमयं रूपं व्याख्यातं तत्प्रभेदतः ।

(2)कुशलमेव रूपं शीलमयं पुण्यक्रियावस्तु । तत्पुनर्विज्ञप्त्यविज्ञप्तिरूपम्[६] । अविज्ञप्तिरूपमपि त्रिप्रभेद प्रातिमोक्षध्यानानास्रवसंगृहीतम् । तदपि

---

१ Cf चैत्ये त्यागान्वय पुण्य मैत्र्यादिवदगृह्णति ।
कुक्षेत्रेऽपीष्टफलदा फलबीजाविपर्ययात ॥ *Ak* IV 121

२ Cf अप्रतिगृह्णति कस्मिश्चित्कथ परित्यागान्वयमपि पुण्यम । किं पुन कारण सति प्रतिग्रहीतरि भवितव्य पुण्येन नासति । यदि हि पुण्य परानुग्रहादेव स्यात, मैत्र्याद्यप्रमाण्यसम्यग्दृष्टिभावनाया न स्यात । *B Panjika* IX 38
See *Milinda*, p 98

३ Cf द्व मानि भिक्खवे दानानि । आमिसदान च धम्मदान च । *Ang* I p 91
See *Bodhichittotpada sutra śastra* p 11

४ Cf धर्मदान यथाभूतसूत्राद्यक्लिष्टदेशना । *Ak* IV 125 ab
On *dharma dana*, see *Siksha* p 351

५ See *Dhs A* III 73 79

६ Cf द्वौ शील्यमशुभ रूप शील तद्विरतिद्विधा ।
प्रतिक्षिप्ताच्च बुद्धेन विशुद्ध तु चतुर्गुणम ॥ *Ak* IV 122
See *Dhs A* III 95-102

व्याख्यात विस्तरश [1]। एतदपि शीलमय पुण्यक्रियावस्तु महाभोगताफल मोक्षफल च, प्रणिधिपरिणामनविशेषात्।

शास्त्रे तु तत्प्रधा(3)नत्वात्प्रोक्तं स्वर्गोपपत्तये ॥[2]

तत्पुनरेतच्छीलं विशुद्ध चाविशुद्ध च भवति। तत्र विशुद्धम्

[ 255 ] दौःशील्याशुभमूलाद्यैर्दोषैर्यन्न विदूषितम्।
तद्विपक्षशमाङ्ग' च यत्तच्छुद्धमिहोच्यते ॥

[3]यत्खलु शील दौःशील्येन न विदूषित प्राणातिपातादिनाऽष्टप्रकारेण, तत्समुत्थापकैश्च क्लेशोपक्लेशैर्भि(4)थ्याहष्ट्यादिभिरनुपहतम्, क्लेशोपक्लेशविप क्षैश्च स्मृत्युपस्थानादिभि परिगृहीतम्, निर्वाणपरिणामितं च न संसारबीज भूत भवति।

पञ्चभि कारणैरित्यन्ये। मौलै कर्मपथैर्विशुद्धम्, सामन्तकैर्विशुद्धम्, वितर्कैरनुपहतम्[4], स्मृत्यानुपरिगृहीतम्[5], निर्वाणाभिमुख चेति तद्विशुद्ध शीलमिष्यते। तद्वि(5)पर्ययादविशुद्ध वेदितव्यम्।[3]

व्याख्यात शीलमयं पुण्यक्रियावस्तु ॥[6]

भावनामयमुच्यते—

[ 256 ] पुण्यं समाहितं त्वत्र भावना चित्तभावनात्।[7]

यत्समाधिस्वभाव समाहित पुण्य[8] तद्भावनेत्युच्यते। कस्मात्?

---

[1] V supra p 128 n 4

[2] Cf दौःशील्यतद्धेतुवहृत तद्विपक्षसमाश्रितम। *Ak* iv 123 ab

[3]—[3] This passage is identical with *Akb* iv 123 ab After this the *Akb* has —

चतुर्विधं शीलमित्यपरे। भयशील आशास्तिशील बोध्यङ्गानुलोम परिशुद्ध। For various kinds of *Śīla* see *Vm* i 25 Buddhaghosha mentions a *pāramitā śīla* सत्तमत्तविमोक्खाय पवत्तिन पारमितासीलं पणीत। *Vm* i 31

[4] वितर्कैरिति कामवितर्कादिभि। *Sakv* p 437

[5] स्मृत्या कायादिस्मृत्युपस्थान। *Ibid*

[6] See *DhsA* iii. 80

[7] Cf समाहितं तु कुशलं भावना चित्तवासनात्। *Ak* iv 123 cd

[8] समाहितग्रहणमसमाहितनिवृत्त्यर्थम। कुशलग्रहण समाहितास्वादनासम्प्रयुक्तक्लिष्ट ध्याननिवृत्त्यर्थम। तत्समाहितं कुशलमुच्यते। *Sakv* p 437

चित्तभावनात् । यथा तैलं पुष्पैश्चम्पकादिभिर्वासितं तन्मयी भवति तत्स-माधिसंप्रयुक्तैस्तत्सहभूकैश्च धर्मैश्चित्तं (6)भावितं वासितमित्युच्यते, तन्मयी-करणात् । न चैवमसमाहितमिति । समाहितमेव चित्त(त्तं) भावनामयं पुण्यक्रियावस्तु मैत्र्यादिगुणसंप्रयुक्तं द्रष्टव्यम् ।

कथं पुनरेतत्पुन्य(ण्य)क्रियावस्तु मन्तव्यम् ?[१] किं पुण्यं क्रिया च वस्तु च पुण्यक्रियावस्तु, समाहारलक्षणोऽयं द्वन्द्वः समासोऽथ पुण्यक्रिययोर्वस्तु पुण्यक्रियावस्तु ? (7)अथ पुण्यक्रियाया वस्तु पुण्यक्रियावस्त्विति ?[२] यथा न दोषस्तथास्तु । कथं च न दोषः ? तत्र तावत् । कायवाक्कर्मस्वभावत्वात् त्रिधा कुशलत्वात्पुण्यम् । कर्मात्मकत्वात्क्रिया । तत्समुत्थापिकायाः(या)श्चे-तनाया अधिष्ठानात्वाद्वस्तु । या तत्समुत्थापिका चेतना सा पुण्यं च क्रिया च, तत्सहभुवो धर्माः पुण्यमेव । शीलमयं तु काय(8)वाक्कर्मैवेति त्रिधा भवति । भावनामयं मैत्री पुण्यं च पुण्यक्रियायाश्च वस्तु । तत्संप्रयुक्तायाश्चेतनाया मैत्र्यधिष्ठानेनाभिसंस्काराणां मैत्रीसहभूचेतना शीलं च पुण्यक्रिया च । अन्ये तत्सहभुवः पुण्यमेवेति ।[३]

तत्पुनरेतद्भावनामयं पुण्यक्रियावस्तु सर्वं तत्सर्वं हेतुत्वेऽपि सति

प्रधान्यादपवर्गाय तदुक्तं सर्वदर्शि(9)ना ॥[४]

उत्तमार्थप्राप्तये खल्वासन्नतमो हेतुर्भावनेति कृत्वा भगवता भावना-मयमेव कुशलमूलं विसंयोगाय विधियुक्तमुक्तम् । पुण्यक्रियावस्तुभेदेन त्रिप्रकारं शुभम् ॥[५]

पुनरण्ये(न्ये)न प्रकारत्रयेण शुभभेदो व्याख्यायते—

---

१ Cf. पुण्य क्रियाऽथ तद्वस्तु त्रय कर्मपथा यथा । *Ak* IV 112 cd

२ Cf पुण्यमप्येतत् त्रय क्रियाऽपि वस्त्वपि यथायोगमिति पुण्यक्रियावस्तु । तद्यथा कर्म च ते पन्थानश्च पन्थान एव च कर्मण इति कर्मपथा उक्ता । *Akb* IV 112 cd.

पुण्य तावदिष्टविपाकत्वात् । क्रिया कर्मस्वभावत्वात् । वस्तु तत्समुत्थानचेतनायास्तदधिष्ठाय प्रवृत्ते । *Sakv.* p 433

३ Cf अन्ये तत्सहभुव पुण्यमेव पुण्यस्य वा कारण पुण्यक्रिया पुण्यप्रयोगस्तस्या एतानि त्रीणि वस्तूनि । एषा सम्पादनार्थं पुण्यप्रयोगारम्भादिति । कुशलचेतना परमार्थेन पुण्यक्रिया, तस्या एतानि वस्तूनीत्यपरे । *Akb* IV 112 cd

४ Cf स्वर्गाय शील प्राधान्याद्विसयोगाय भावना । *Ak.* IV 124 ab

५ After this, the Kośakāra deals with one more point —

सूत्र उक्तम—"चत्वार पुद्गला ब्राह्म पुण्य प्रसवन्तीति'। कतमत्तद्ब्राह्मपुण्यम् ? यत्तल्लक्षणविपाकस्य कर्मण परिमाणज्ञापनायोक्तमिति वैभाषिका । पूर्वाचार्यास्तु व्याचक्षत—

चतुर्णा ब्राह्मपुण्यत्व कल्प स्वर्गेषु मोदनात् । *Akb* IV 124 cd See *Ang* V p 76

[257] पुण्यनिर्वाणभागीयं निर्वेधानुगुणं तथा।
शासनेऽस्मिन्समासेन शुभमूलं त्रिधेष्यते ॥[1]

[V A, 1 Fol 103b](1) पुण्यभागीयं येन देवमनुष्योपपत्तिबीजं प्रतिगृह्णाति महेशाख्यैश्च कुलमहाभोगरूप्यचक्रवर्तिशक्रपुष्पकेतुब्रह्मत्वादीनां प्राप्तये फलमाक्षिपति। मोक्षभागीयं[2] येनाविकम्प्य मोक्षाशयावस्थानादवश्यं परिणि(नि)र्वाणधर्मा भवति। निर्वेधभागीयमूष्मगतमू[र्ध्वं] चतुर्विधम् ॥[3]

अथ यदिदं लोक उच्यते लिपिमुद्रागणना(2)संख्येति एषां कः स्वभावः? उच्यते—

[258] लिपिमुद्राऽथ गणना कायवाक्कर्मलक्षणा।
संख्या त्वपि विज्ञेया मनस्कर्मस्वभाविका ॥[4]

तत्र तावल्लिपिमुद्रे योगप्रवर्तितं कायकर्मसमुत्थानमिति[5] पञ्चस्कन्धात्मिका लिपिः। येण(न) तु कर्मणाऽक्षराणि निर्वर्त्यन्ते तत्कर्म लिपिरित्युच्यते। नाम यत्खन्यते दन्तविषाणसुवर्णादिषु सा मुद्रा। न (3)तु येण(न) कर्मणा खन्यते तत्कर्मोच्यते। काव्यमपि योगप्रवर्तितं वाक्कर्मसमुत्थानं पञ्चस्कन्धाः। संख्यापि योगप्रवर्तितं मनस्कर्म। यन्मनसा संकलितं धर्माणां सा तु सपरिवारा चतुस्कन्धस्वभावेति[6] ॥[7]

अभिधर्मदीपे विभाषाप्रभाया वृत्तौ चतुर्थाध्यायस्समाप्त ॥

---

[1] पुण्यनिर्वाणनिर्वेधभागीय कुशल त्रिधा। *Ak.* iv 125 cd
Also cf अतुट्ठो सीलमत्तेन निब्बिद योनुयुञ्जति।
होति निब्बधभागीय सीलमेतस्स भिक्खुनो ॥ *Vm* i 39

[2] See *LVPAk* iv p 252, n 5

[3] V infra, *Ad kārikā* 421 and 422

[4] Cf योगप्रवर्तित कर्म ससमुत्थापक त्रिधा।
लिपिमुद्रे सगणन काव्य सख्या यथाक्रमम् ॥ *Ak* iv 126

[5] —ससमुत्थानमिति। सचित्तर्चैतसिकं कलापम्। यत तत्कायकर्मेत्याप्यते। लिपिर्मुद्रा च। कारणे कार्योपचारात। यत हि कायकर्मणा लिपिर्लिख्यते मुद्रा वा खन्यते। सा लिपिर्मुद्रा च शास्त्रभिप्रते। न यथा लोके। लोके ह्यक्षरचिह्न पुस्तकादौ लिपिरिष्यते। अक्षरानक्षरचिह्न च मुद्रेति। *Sakv* p 439

[6] यन्मनसा सकलन धर्माणामिति। एक द्वे त्रीणीत्येवमादि सा सख्या। यत्तु वाचा न मनसा सा गणनेत्यभिधानिश। *Ibid* See *Milinda*, p 81
See *LVPAk* v p 254

[7] After this, the *Ak.* has one more (last) *kārika* dealing with धर्माणा वे चिन् पर्याया। (*Ak.* iv 127)

# पञ्चमोऽध्यायः।

## प्रथमः पादः।

उक्तानि कर्माणि(णि)। अथ यदयं लोकः पञ्चग(4)ति[1] चक्रावर्तपरिवर्तनिमित्तानि कर्माण्याचिनोति, कार्याणि चोत्सृज्याकार्यकर्मकारी भवति, दक्षिणं च मार्गं हित्वा वामं वर्त्माश्रयति, परमप्रशान्तं च परं ब्रह्मापास्यानेकदुःखोपद्रवनीडभूते संसारे जन्म प्रतिपद्यते तत्र को हेतुरित्यभिधीयते—

[259] अकार्यप्रवणो लोको दुःखभागी च यद्वशात्।
रागादीं(5)न् भवसंबन्धान्क्लेशान्वक्ष्यामि तानहम्॥

ते पुनः क्लेशाः

[260] स्वशक्तिजक्रियोद्भूतैर्विशेषैस्ते तु नामभिः।
आत्तसामान्यसंज्ञाकाश्चोच्यन्तेऽनुशयादिभि[ः]॥[2]

तत्र तावत्सामान्यसंज्ञा स्वक्रियानिर्जाताः क्लिश्नन्तीति क्लेशाः[3] अनुशेरत

---

१ नरकप्रेततिर्यग्मनुष्यदेवगतयः।

२ Cf आसयन्त्यास्रवन्त्येते हरन्ति श्लयन्त्यतः।
उपगृह्णन्ति चेत्येषामास्रवादिनिरुक्तयः॥ *Ak.* v 40

३ क्लेशो हि प्रवर्तमानो दशकृत्यानि करोति। मूलं च दृढीकरोति, सन्ततिमवस्थापयति, क्षेत्रमापादयति, निःस्यन्दं प्रवर्तयति, कर्मभवमभिनिर्हरति, स्वसंभारं परिगृह्णाति, आलम्बने संमोहयति, विज्ञानस्रोतो नमयति, कुशलपक्षाद्व्युत्क्रामयति, बन्धनार्थं च स्फुरति धात्वनतिक्रमयोगेनेति। *Akb* v 1a

—यो धर्मो उत्पद्यमानोऽप्रशान्तलक्षण उत्पद्यमानेन येन कायचित्तप्रबन्धोऽप्रशमप्रवृत्तिः। इदं क्लेशलक्षणम्। *Asm* p 43

Cf अविद्यास्मितारागद्वेषाभिनिवेशाः क्लेशाः।

.. क्लेशा इति पञ्चविपर्यया इत्यर्थः। ते स्पन्दमाना गुणाधिकारं द्रढयन्ति परिणाममवस्थापयन्ति कार्यकारणस्रोत उन्नमयन्ति परस्परानुग्रहतन्त्रीभूत्वा कर्मविपाकं चाभिनिर्हरन्ति। *Yoga bhāshya*, ii 3

Also cf संसारस्य हि कर्म क्लेशाश्च कारणम्। तयोश्च क्लेशः प्रधानम्। तथा हि क्लेशाधिपत्यात् कर्म पुनर्भवाक्षेपसमर्थं भवति नान्यथा। तथा आक्षिप्तपुनर्भवमपि कर्म क्लेशाधिपत्यादेव पुनर्भवो भवति नान्यथा। एवं च क्लेशा एव संसारप्रवृत्तेः प्रधानमूलम्। *Tsb* 19

इत्यनुशयाः। आभवाग्रमुपादाय यावदवीचिं स्रवन्ति स्रावयन्ति च चित्तसन्ततिमित्यास्रवा.[१]। आस्रवानिति (6)पञ्चलक्षणो(णान)त्र सयोजन्तीति सयोजनानि। ग्रन्थयन्तीति ग्रन्था.। योजयन्तीति योगाः। अपहरन्तीत्योघा.। उपाददत इत्युपादानान्येषा सामान्य नाम क्लेश इति ॥

तत्र के कियन्तो वाऽनुशयाः ? तदवद्योत्यते—

[ 261 ] रागप्रतिघसंमोहमानकाङ्क्षाकुदृष्टयः ।
षडेतेऽनुशयाः प्रोक्ताः श्रेयोद्वारविबन्धिनः ॥[२]

एते खलु षडनुश(7)याः संसारप्रवृत्तिहेतवः श्रेयोमार्गविबन्धिनश्च शास्त्र उक्ता.। तेषा निरुक्तिः सन्तानानुगता इत्यनुशयाः[३] धात्रीचैलमलवत्। अनुबध्नन्तीति वाऽनुशयाः, खचरजलचरवत्। त एते वृत्तितश्च द्रष्टव्या, हिङ्ग्वादिभक्षणवत्। फलतश्च पारावतभुजङ्गसूकरजन्मापातनवत्। पुद्गलतश्च नन्दाङ्गुलिमालसुनक्ष(8)त्रादिवत्।[४]

[५]अथ रागादयोऽनुशयाः कथ द्रष्टव्या.? किं रागादय एवानुशया[६], आहोस्विद्रागादीनामनुशया.? किञ्चात.। रागादय एवानुशयाश्चेत्सूत्र-

---

[१] V supra p 18, n.5

[२] Cf मूल भवस्यानुशया षड्राग प्रतिघस्तथा ।
मानोऽविद्या च दृष्टिश्च विचिकित्सा च ते पुन ॥ *Ak* v 1

The Vijnana vadin enumerates these six as *kleśas* —
क्लेशा रागप्रतिघमूढय । मानदृग्विचिकित्साश्च । *Trimśikā*, 11 d, 12 a

[३] V, supra, pp 18—19 See infra, *Ad kārikā* 287—8

[४] Nanda = Sundarananda see *DPPN* II p 10 Angulimāla is the name of a famous brigand See *DPPN* I p 22. Sunakshatra (Pali Sunakkhatta) was a Buddhist monk who later on defamed the Buddha See *DPPN* II. p. 252 These three are mentioned to illustrate *rāga, pratigha* and *drishti*, respectively Cf दुर्दमानामपि केषाञ्चित पुरुषदम्याना तीव्ररागद्वेषमोहमानानामार्यसुन्दरानन्दाङ्गुलीमालोरुविल्वाकाश्यपमहाराजकप्फिणप्रभृतीना विनायक इति प्रदर्शनार्थम्। *Aa* p 162.

[५] This *Adv* (from अथ रागादयोऽनुशया to तस्मात्सप्रयुक्ता एवानुशया) is almost identical with *Akb* v 1 a The *Akb*, however, begins कथमिदं ज्ञातव्यम्। कामराग एवानुशय कामरागानुशय आहोस्वित् कामरागस्यानुशय कामरागानुशय ?

[६] 'आहोस्वित् कामराग एवानुशय' इति। वैभाषिकनयेन पर्यवस्थानमेवानुशय। वात्सीपुत्रीयनयेन प्राप्तिरनुशय। सौत्रान्तिकनयन बीजम्। *Sakv* p 442.

विरोधः—"इहैकत्यो न कामरागपर्यवस्थितेन चेतसा बहुलं विहरत्युत्पन्नस्य कामरागपर्यवस्थाने(न)स्योत्तरे(र)णि(नि)स्सरणं[1] यथाभूतं प्रजानाति। तस्य तत्कामरागप(१)र्यवस्थानं स्थामशः सम्यक्सुसंवहृतं[2] सानुशयं प्रहीयते" इति।[3] रागादीनामनुशया इति चेद्विप्रयुक्तानुशयप्रसङ्गादभिधर्मविरोधः—"कामरागानुशयस्त्रिभिरिन्द्रियैस्संप्रयुक्तः"[4] इति। कर्मधारय एव परिगृह्यते न षष्ठीसमास इति वैभाषिकाः। ननु चोक्तं सूत्रविरोध इति। सानुशयं सानुबन्धमित्यर्थः[5]।[6] औप[V B, 2. Fol. 104a ](1)चारिको वा सूत्रेऽनुशयशब्दः

---

[1] उत्तरनिःसरण इति पश्चान्निसरणमित्यर्थं। *Ibid*

[2] सम्यक्त्वसमवहनम् in *Akb*

[3] Cf पुनवा च स्रो आनन्द अरियसावको…सुविनीतो न कामरागपरियुट्ठितेन चेतसा विहरति न कामरागपरेतेन उप्पन्नस्स च कामरागस्स निस्सरण यथाभूत पजानाति, तस्स सो कामरागो सानुसयो पहीयति। *M. sutta* 64 See *Ang* III p 233

—परियुट्ठितेना ति…गहितेन अभिभूतेन, 'परेतेना ति…अनुगतेन, निस्सरण ति दिट्ठिनिस्सरण नाम निब्बान…, सानुसयो पहीयती ति वचनतो पनेत्थ एकच्चे अञ्ञो सयोजन अञ्ञो अनुसयो ति वदन्ति। यथा हि सव्यञ्जन भत्त ति वुत्ते भत्ततो अञ्ञ व्यञ्जन होति। एव सानुसया ति वचनतो परियुट्ठानसक्कायदिट्ठितो अञ्ञेन अनुसयेन भवितब्ब ति नेस लद्धि। त समीस पाकपित्वा ति आदीहि पटिक्खिपितब्बा। …तस्मा सो येव किलेसो बन्धनट्ठेन सयोजन अप्पहीनट्ठेन अनुसयो ति इदमत्थ सन्धाय भगवता सानुसयो पहीयतीति एव वुत्त ति वेदितब्ब। *MA* III p 144

[4] अभिधर्मविरोध इति। "कामरागानुशयस्त्रिभिरिन्द्रियैः सम्प्रयुक्त" षत्नमंस्त्रिभि। सुखसौमनस्योपेक्षेन्द्रियैः सम्प्रयुक्त" इति। न हि विप्रयुक्तस्य प्राप्तिलक्षणस्य एभिरिन्द्रियैः सम्प्रयोगो युज्यत इति शास्त्रविरोध। *Sakv* p 443

Cf कत्थ कामरागानुसयो अनुसेति? कामधातुया द्वीसु वेदनासु। एत्थ कामरागानुसयो अनुसेति। *Yamaka*, I p 268

—कामावचरभूमियं सुखाय च अदुक्खमसुखाय च वेदनासु। एत्थ अनुसेती ति इमासु द्वीसु वेदनासु उप्पज्जति।…कामधातुया द्वीसु वेदनासु अनुसयमानो येम ताहि वेदनाहि सम्पयुत्तेसु सञ्ञासङ्खारविञ्ञाणेसु पि अनुसति एव।…यस्मा इमे द्वे वेदनाय मानसनगुसता अस्सादनट्ठेन कामरागानुसयस्स उप्पत्तिया सेससम्पयुत्तधम्मेसु पधानं तस्मा 'द्वीसु वेदनासु…' ति वुत्त। *Yamaka A* p 239 (SHBS Vol. xl)

[5] नास्ति विरोध। सानुशय सानुबन्धमित्यर्थात्। in *Akb.*

[6] 'सानुशय सानुबन्धमित्यर्थाद्' इति। कामरागस्यानुबन्धोऽनुशयशब्देनोक्त। अनुबन्धः पुन क्लेशान्तरस्योत्पादानुकूल्येनावस्थानम्। अनुवृत्तिर्वा अनुशय। अनुशयं प्रहीयते। न पुनरनुवर्तते संतत्येत्यर्थः। *Sakv* p 443

प्राप्तो(प्तौ)[१] यथा दुःखोऽग्निरिति । लाक्षणिकस्त्वभिधर्मे क्लेश एवानुशयः[१]। तस्मात्संप्रयुक्ता एवानुशयाः।[२]

"एवं तु साधु यथा दार्ष्टान्तिकानाम्' इति कोशकारः।[४] कथं च दार्ष्टान्तिकानाम् ?[५] "कामरागस्यानुशयः कामरागानुशयः।[६] न चानुशयः संप्रयुक्तो न विप्रयुक्तः, तस्याद्रव्यान्तरत्वात्।[७] सुप्तो हि क्लेशोऽनुशय(2)इत्युच्यते। प्रवुद्धः पर्यवस्थानम्। का च तस्य प्रसुप्तिः ? असमुखीभूतस्य वीजभावानुवन्धः। कः प्रबोधः ? संमुखीभावः। कोऽयं वीजभावो नाम ? आत्मभावस्य क्लेशजं(जा) क्लेशोत्पादनशक्तिः, यथा चाङ्कुरादीनां [७]शालि-

---

[१] 'औपचारिको वा···' इति उपचारे भव औपचारिक। कुत्रौपचारिक इत्याह—'प्राप्तौ'। मुख्यवृत्त्या पर्यवस्थानेऽनुशयशब्दो वर्तते, उपचारेण तु प्राप्तौ। तस्यानुशयहेतुभावात्। *Ibid*

[२] 'क्लेश एव' इति। आलम्बनसम्प्रयोगतश्चानुशेरत इत्यनुशया इति। *Ibid*

[३] After this, the Kośakāra gives the following details :—

···तस्मात् संप्रयुक्ता एवानुशयाः। कथमिद गम्यते ? अनुशयाना

"चित्तक्लेशकरत्वादावरणत्वाच्छुभैर्विरुद्धत्वात् ।"

यस्मादनुशयै क्लिष्ट चित्त भवत्यपूर्व कुशल नोत्पद्यते उत्पन्नाच्च परिहीयते तस्मान्न विप्रयुक्ता। अथ विप्रयुक्तैरप्येव स्यात्। कुशल न कदाचिदुपलभ्येत। तेषा नित्यसन्निहितत्वात्। उपलभ्यते च। अत.

"कुशलस्य चोपलम्भादविप्रयुक्ता ह्यनुशया ॥" इति।

तदिदमज्ञापकम्। यस्माद्यो विप्रयुक्तमनुशयमिच्छति स एतत्सर्वमनुशयकृत नेच्छति। क्लेशकृतमेवेच्छति। *Akb.* v 2 a.

—आचार्य आह तदिदमज्ञापकम्। यदिद वैभाषिकैरुक्तम्। चित्तक्लेशकरत्वादित्यादि। यो हि विप्रयुक्तमनुशयमिच्छतीति वात्सीपुत्रीयः। *Sakv.* p 444.

[४] Cf. एवं तु साधु यथा सौत्रान्तिकानाम्। कथ च सौत्रान्तिकानाम् ?··· *Akb.* v 2 a. V supra, p 47 n 4

[५] This *Adv* from कामरागस्यानुशय to शालिफलोत्पादनशक्तिरिति, is identical with *Akb* v 2 a.

[६] Cf. कामरागानुसयो ति आदीसु कामरागो च सो अप्पहीनट्ठेन अनुसयो ति कामरागानुसयो। सेसपदेसु पि एसेव नयो। *Yamaka A.* p. 239 (SHBS. vol. xl)

[७—७] Yaśomitra gives the following comment :—कामरागस्यानुशय इति नास्ति गुणविरोध। किन्तु विप्रयुक्तोऽनुशय इति प्राप्नोति। अत आह—'न चानुशयः संप्रयुक्तो न विप्रयुक्त' इति। कथमित्याह। तस्याद्रव्यान्तरत्वात् इति। शक्तिरूपस्य बीजस्य रागादिभ्योऽनर्थान्तरत्वात्। आत्मभावस्य आश्रयस्य क्लेशजा पूर्वोत्पन्नक्लेशजनिता क्लेशोत्पादनशक्तिः क्लेशोत्पादनाय शक्ति यथाऽनुभवज्ञानजा स्मृत्युत्पादनशक्तिः स

फलजा शालिफलोत्पादनशक्तिः" इति ।[१]

[२]"यत्तर्हि सूत्र एव क्लेशोऽनुशय उक्तः षट्षट्के[३]—"सोऽस्य भवति सुखायां वेदनायां रागानुशयः"[४] इति? भवतीति वचनाददोषः। नासौ तदे(दै)वानुशयः। कदा तर्हि? यदा प्रसुप्तो भवति। हेतौ वा फलोपचार[५] एषः"[६] इति ।[७]

---

द्रव्यान्तरभूता तद्वत् । स्मृत्युत्पादनहेतुर्द्रव्यान्तरभूत कश्चिद्विप्रयुक्त इत्याशक्य दृष्टान्तान्तरमुपन्यस्यति । यथा चाङ्कुरादीनामिति विस्तर । *Sakv* p 444

१ After this, the *Akb* has the following —शालिफलोत्पादनशक्तिरिति । यस्तु क्लेशाना बीजार्थमर्थान्तर कल्पयति, तेन स्मृतिबीजमप्यर्थान्तर कल्पयितव्य जायते । —इत्यस्ति वात्सीपुत्रीय । *Sakv* p 444

२ From यत्तर्हि to फलोपचार एष, is identical with *Akb* v 2 a

३ Cf छछक्कसुत्त । *M sutta* 148

४ Cf सो सुखाय वेदनाय फुट्ठो समानो अभिनन्दति, अभिवदति, अज्झोसाय तिट्ठति । तस्स रागानुसयो अनुसेति । *M sutta* 148

५ तदुपचार in *Akb*

६ यत्तर्हि सूत्र 'एव क्लेशोऽनुशय उक्त षट्षट्के सूत्रे'' रागानुशय' इति । राग एवानुशय । सुखवेदनावस्थाया हि राग समुदाचरन्नेवमुक्त । न तु तस्य बीजमित्यभिप्राय । 'भवतीति वचनान्नासौ तदैवानुशय' इति । अनुशय एव रागस्यायमुक्त । न राग । भवतीति वचनात् । तस्यामवस्थाया उत्पद्यमानस्य रागस्यानुशयो भवतीति बीजमुत्पद्यन । न तूत्पन्नमिति । बीजप्रकृतावस्थाऽन कथ्यत इत्यभिप्राय । 'कदा तर्हि भवती'ति ? कदाऽनुशयोऽस्तीत्यर्थ । 'यदा प्रसुप्तो भवति' यदोपरतो भवतीत्यर्थ । 'हेतौ वा तदुपचार' इति । हेतौ रागे अनुशयोपचार । रागो हि रागानुशयस्य हेतु । तथा हि रागजा रागोत्पादनशक्ती रागानुशय इत्युक्तमिति । तदिदमुक्त भवति । क्वचिदनुशयशब्देन बीजमुच्यते । क्वचित्पर्यवस्थानमिति । *Sakv* p 444

७ The *Kathavatthu* contains various controversies on this topic —

(i) तिस्सो पि अनुसयकथा (—अनुसया अब्याकता ति ?—अनुसया अहेतुका ति ?—अनुसया चित्तविप्पयुत्ता ति ?) *Kv.* ix 4 (ii) अञ्ञो अनुसयो ति कथा, and (iii) परियुट्ठान चित्तविप्पयुत्त ति कथा । *Kv* xiv 5-6 —

इदानि अनुसया अब्याकता अहेतुका चित्तविप्पयुत्ता ति तिस्सो अनुसयकथा नाम होन्ति । तत्थ यस्मा पुथुज्जनो कुसलाब्याकते चित्ते वत्तमाने सानुसयो ति वत्तब्बो । यो धम्म तस्मि खणे हेतु, न तेन हेतुना अनुसयो सहेतुको, न तेन चित्तेन सम्पयुत्ता, तस्मा त अब्याकता

तदेतत्सौत्रान्तिकैरन्तर्गतं बुद्धवचननीतिश्रवणकौसीद्यमाविर्भाव्यते।

---

अहेतुका चित्तविप्पयुत्ता ति यस लद्धि सेय्यथा पि महासंघिकानञ्चेव सम्मितीयानञ्च। ते सन्धाय तीसु पि कथासु पुच्छा सकवादिस्स। *KvA* IX 4.

इदानि परियुट्ठानं चित्तविप्पयुत्त ति कथा नाम होति। तत्थ यस्मा अनिच्चादितो मनसिकरोतो पि रागादयो उप्पज्जन्ति तस्मा परियुट्ठानं चित्तविप्पयुत्तं ति येसं लद्धि, सेय्यथा पि अन्धकानं येव। *KvA* XIV 6

Buddhaghosha in the *YamakaA* sums up this whole controversy and gives the Sthavira-vadin's view —

अनुसया ति केनट्ठेन अनुसया? अनुसयनट्ठेन। 'अप्पहीनट्ठो, एते हि अप्पहीनट्ठेन तस्स तस्स सन्ताने अनुसेन्ति नाम। तस्मा अनुसया ति वुच्चन्ति। अनुसेन्ती ति अनुरूपं कारणं लभित्वा उप्पज्जन्तीति अत्थो। यथापि सिया अनुसयनट्ठे नाम अप्पहीनाकारो। अप्पहीनाकारो च उप्पज्जती ति वत्तुं न युज्जति तस्मा न अनुसया उप्पज्जती ति? तत्रिदं पटिवचनं। अप्पहीनाकारो अनुसयो ति पन अप्पहीनट्ठेन थामगतकिलेसो वुच्चति। सो चित्तसम्पयुत्तो सारम्मणो सप्पच्चयट्ठेन सहेतुको एकन्ताकुसलो अतीतोपि होति अनागतो पि तस्मा उप्पज्जतीति वत्तुं युज्जति। तत्रिदं पमाणं। अभिधम्मे ताव कथावत्थुस्मिं "अनुसया अब्याकता अनुसया अहेतुका अनुसया चित्तविप्पयुत्ता" ति सब्बे वादा पटिसेधिता। पटिसम्भिदामग्गे 'पच्चुप्पन्ने किलेसे पजहती' ति पुच्छं कत्वा अनुसयानं पच्चुप्पन्नभावस्स अत्थिताय 'थामगतानुसयं पजहती' ति वुत्तं। धम्मसंगहे पन मोहस्स पदभाजने 'अविज्जानुसयो अविज्जा-परियुट्ठानं अविज्जालङ्गी मोहो अकुसलमूलं, अयं तस्मिं समये मोहो होती' ति अकुसलचित्तेन सद्धिं अविज्जानुसयस्स उप्पन्नभावो वुत्तो।" तस्मा अनुसेन्तीति अनुरूपं कारणं लभित्वा उप्पज्जन्तीति अदिं यं वुत्तं यम्पि 'चित्तसम्पयुत्तो सारम्मणो' ति आदि वुत्तं तम्पि सुवुत्तमेव। अनुसयो ति नामेस परिनिप्फन्नो चित्तसम्पयुत्तो अकुसलधम्मो ति निट्ठमेत्थ गन्तब्बं। *Yamaka A* p 239 (SHBS yol xl)

For an explanation of the terms *anuśaya* and *paryutthana*, see *A Dissertation on the Yamaka*, by Ledi Sadaw :—

तिस्सो हि कामरागस्स भुम्मियो अनुसयभुम्मि, परियुट्ठानभुम्मि, वितिक्कमभुम्मीति, तथा पटिघस्स ··· पे अविज्जाय। तत्थ कामरागो, यदा कायङ्गवाचङ्गानि चालेन्तो पवत्तति, तदा तथा पवत्ति तस्स वितिक्कमभुम्मि नाम। यदा कायङ्ग वाचङ्गचलनं अपत्वा मनोद्वारे व एव उट्ठानं पापुणन्ति, तदा तथा पवत्ति तस्स परियुट्ठानभुम्मि नाम। मनोद्वारे पि उट्ठानं अपत्वा निच्चकालं चित्तसन्तानानुगतो अवत्थाकारविसेसो, तस्स कामरागस्स अनुसयभुम्मि नाम। सो हि उप्पादं पि अपत्वा चित्तसन्ताने सयनाकारेन पवत्तमानो हुत्वा यदा छसु द्वारेसु अञ्ञतरस्मिं द्वारे रज्जनियवत्थुभूतं आरम्मणं आपाथं आगच्छति, तदा अयोनिसो भवङ्गं आवट्टेत्वा परतो परियुट्ठानभुम्मिं पत्वा कामरागसहगतं जवनचित्तं उप्पादेति, तदा सचे तं आरम्मणं दुब्बलं होति, तस्मिं आरम्मणे निरुद्धे पुन सो कामरागो निरज्झित्वा पुन अनुसयभुम्मिं पतिट्ठाति। यदि तं आरम्मणं बलवं होति, परियुट्ठानभुम्मियं पि अट्ठत्वा वितिक्कमभुम्मिं पत्वा कायङ्ग वा चालेन्तो पवत्तति। *Yamaka*, II pp 258-9 (Appendix)

कथम्? उक्तोत्तरत्वात्। उक्तमत्र कर्मचिन्ता[1]यामुत्तरं तत्त्वसप्ततौ[2] च। तत्स्म(4)र्यताम्। मा प्रमोषीः।

पुनश्चापदिश्यते। सौत्रान्तिकपरिकल्पिते प्रतिबीजकल्पे चित्तशक्तिबीजभावनापक्षे नित्यत्वमुत्तरमन्यानन्यत्वादिदोषात्। नान्यानन्य इति बीजवासनावस्थाने चित्तविनाशाभ्युपगमे च मध्यमाप्रतिपत्तिसिद्धिरिति चेत्। न। चित्तस्वभावशक्तिक्रियाभावे तदन्तद्वयासिद्धौ मध्यमाप्रतिपदनुपपत्तेः ख(5)पुष्पमयदण्डवत्॥

ते पुनः

[ 262 ] रागद्वेषात् मताः सप्त[3] दृष्टिभेदाद्दश स्मृताः[4]।
भूयोऽष्टानवतिर्ज्ञेया धात्वाकारादिभेदतः॥

तत्र कामरागभवरागभेदं पुरस्ताद्वक्ष्यते। दृष्टिभेदोऽपि सत्कायदृष्ट्यादिभेदेन पञ्चधा। रागभेदं च द्विधा वक्ष्यामः। ते पुनरेते सर्वे एवानुशया यथासंभवं धात्वाकारप्रकारभेदेनाष्टान(6)वतिर्भवन्ति।

तत्र केचित्पण्डिता दर्शयन्ति। धातुभेदेन कामावचराः षड्त्रिंशद्दर्शन(न)भावनाहेयाः। द्वात्रिंशद्दर्शनहेयाः। रूपावचरा एकत्रिंशदुभयहेयाः, अष्टाविंशतिर्दर्शनहेयाः पञ्च प्रतिघवर्ज्याः। एवमारूप्यावचराः।

तत्र कथं कामावचराः षड्त्रिंशद्भवन्ति? दर्शनभावनाहेयप्रकारद्वै(द्वै)-विध्य[भेदात्]। दृष्टीनामपि (7)धात्वाकारप्रकारभेदात् षड्त्रिंशत्त्वम्। प्रतिघस्य धातुनैयत्यात् पञ्चत्वम्। वयं पुनरेषां भेदं श्लोकानुगतमेव दर्शयिष्यामः।

तत्र कत्येषामष्टानवतेरनुशयानां दुःखदर्शनहेयाः कति यावद्भावनाहेयाः? तत्र कामधातौ तावत्। प्रतिदुःखादिसत्यं यथाक्रमं दश सप्त सप्ताष्टौ दुःखादिदर्शन(न)हेया द्वात्रिंशत्का(8)मधातौ भवन्ति। तेषु तेषां विप्रतिपत्तेः। एवं रूपारूप्यधात्वोरभ्युह्य वक्तव्यम्॥

---

[1] This refers to the Fourth *Adyāya* of *Adv.*

[2] *Tattva-saptati* appears to be a title of some work by the author of *Adv.*, written on the model of the *Paramārtha-saptati* of Vasubandhu.

[3] Cf. षड्रागभेदात्सप्तोक्ताः। *Ak.* v. 2 a.

[4] पुनरेते षडनुशया अभिधर्मे दश भिद्यन्ते। *Akb.* v. 2 d.

—अभिधर्म इति न सूत्र इत्यभिप्रायः। *Sakv.* p. 445.

[ 263 ] कामरागो भवाख्यश्च द्विधा रागः प्रभिद्यते ।
प्रायो बहिष्प्रवृत्तत्वादन्तर्वृत्त्यादिभेदतः ॥[1]

यथाक्रमम् । उक्तो रागभेदः ॥

दृष्टिभेदो निर्दिश्यते—

[ 264 ] सत्कायान्तद्वयग्राहौ मिथ्यादर्शन(न)मेव च ।
दृष्टिशीलव्रतामर्शावित्येताः पञ्च दृष्टयः ॥[2]

(७)ते पुनरेते प्रभिद्यमाना धातुप्रकाराकारभेदेनाष्टानवतिर्भवन्ति ।[3] षट्त्रिंशत्कामावचराः । एकत्रिंशद्रूपावचराः । एकत्रिंशदारूप्यावचराः । दर्श(न)भावनाहेयप्रकारणै(नै)यम्यात् ॥

---

[1] Cf. षड्रागभेदात्सप्तोक्ता भवरागो द्विधान्तुजः ।
अन्तर्मुखत्वात्तन्मोक्षसंज्ञाव्यावृत्तये कृतः ॥ *Ak.* v. 2.

समापत्तिरागो हि तेषां प्रायेण । स चान्तर्मुखप्रवृत्तस्तस्मात् भवराग । ते च सत्वा समापत्तिमाश्रयमास्वादयन्त आत्मभावमेवास्वादयन्ति कामवीतरागत्वात् । अतः स रागो भवराग इत्युक्त । *Akb* v. 2. आस्वादनासंप्रयुक्ते ध्याने प्रायेण तेषा राग. । स चान्तर्मुखप्रवृत्त समाहितरूपत्वात् । तथा च सति मोक्षसंज्ञोपनिष्ठते । तद्विच्छेदनार्थं भगवान् देशयामास कामरागो भवराग इत्येवमादि । भवे राग एष, नैष मोक्षे । *Sakv.* p. 444.

Cf. भवरागानुसयो पन किञ्चापि दिट्ठिविप्पयुत्तेसु चतुसु चित्तेसु उप्पज्जनतो सहजातानुसयवसेन कामधातुया द्वीसु वेदनासु अनुसेती ति वत्तब्बो भवेय्य । कामधातुयं पनेस द्वीहि वेदनाहि सद्धिं उप्पज्जमानो पि रूपारूपावचरधम्ममेव पटिलभति । कामधातुपरियापन्नं एकधम्मं पि आरम्मणं न करोति, तस्मा आरम्मणानुसयवसेन नियमं कत्वा "रूपधातुया अरूपधातुया एत्थ भवरागानुसयो अनुसेती" ति वुत्तं । अपि च रागो नामेस कामरागभवरागवसेन दुविधो । तत्थ कामरागो कामधातुया द्वीसु वेदनासु अनुसेतीति वुत्तो । सचे पन भवरागो पि कामरागो विय एवं वुच्चेय्य, कामरागेन सद्धिं देसना सकिण्णा विय भवेय्याति रागकिच्चेन द्विधा भिन्दित्वा कामरागतो भवरागस्स विसेसदस्सनत्थं पि एवं देसना कता । *YamakaA.* p. 242. ( SHBS. vol. xl. )

[2] Cf. दृष्टयः पञ्च सत्कायमिथ्यान्तग्राहदृष्टयः ।
दृष्टिशीलव्रतपरामर्शाविति पुनर्दश ॥ *Ak.* v. 3.

[3] पुनरेते दशानुशया अभिधर्मेऽष्टानवतिः क्रियन्ते । *Akb.* v. 3.

कति पुनरेभ्यः कामधातौ दर्शनहेयाः[१] कति यावद्भावनाहेयाः[२] ? तदवद्योत्यते—

[ 265 ] दशेह दुःखदृग्घेयाः

सर्वेऽपि दशेह कामधातौ [V. A, 2. Fol. 104 b.] (1)दुःखे विप्रतिपन्नत्वाद्दुःखदर्शनहेयाः ।

सप्त हेत्वीक्षणक्षयाः ।

एभ्यो दशभ्यः सत्कायान्तर्ग्राहदृष्टिशीलव्रतपरामर्शत्रयं हित्वा ।

सप्तापवर्गदृग्घेयाः

एत एव

अष्टौ मार्गेक्षणक्षयाः ॥[३]

सत्कायान्तर्ग्राहदृष्टी हित्वा । तेऽपि फलभूतेषु स्कन्धेषु विप्रतिपन्न[त्वा]द्दुःखदर्शनहेयैव ।

[ 266 ] दृष्टिहेयावलम्बित्वात्सदाकारपरिग्र(2)हात् ।
रागादयस्तु चत्वारो ज्ञेया मार्गद्वयक्षयाः ॥[४]

ते दर्शनप्रहातव्यास्तेषां चतुर्णां रागादीनां यस्मादालम्बनमतस्तत्प्र-

---

[१] दस्सनत्तिके दस्सनेना ति सोतापत्तिमग्गेन । सो हि पठम निब्बाणं दस्सनतो दस्सन ति वुत्तो । भावनाया ति सेसमग्गत्तयेन । सेसमग्गत्तयं हि पठममग्गेन दिट्ठस्मि येव धम्मे भावनावसेन उप्पज्जनि, अदिट्ठपुब्ब किञ्चि न पस्सति, तस्मा भावना ति वुच्चति । *Dhs A.* II- 24.

कतमे धम्मा दस्सनेन पहातब्बा ? तीणि संयोजनानि—सक्कायदिट्ठि विचिकिच्छा सीलब्बतपरामासो । *Dhs.* 1002.—इमिस्सा च पालिया दिट्ठिसंकिलेसो विचिकिच्छासंकिलेसो ति द्वे येव आगता । लोभो दोसो मोहो मानो थीन उद्धच्च अहिरिक अनोत्तप्प ति इमे अट्ठ अनागता । आहरित्वा दीपेतब्बा । एत्थ हि···अपायगमनीयो लोभो···अनोत्तप्प सब्बे पि' मे पहानेकट्ठा हुत्वा पहीयन्ति । *Dhs A.* v. 30.

[२] कतमे धम्मा भावनाय पहातब्बा ? अवसेसो लोभो दोसो मोहो तदेकट्ठा च किलेसा···इमे धम्मा भावनाय पहातब्बा । *Dhs.* 1007—अवसेसो ति दस्सनेन पहीनावसेसो । ··दस्सनेन हि अपायगमनीया व पहीना । *Dhs A.* v. 33

3 *Cf.* दर्शते सप्त सप्ताष्टौ त्रिद्विदृष्टिविवर्जिता. ।
यथाक्रमं प्रहीयन्ते कामे दुःखादिदर्शने. ॥ *Ak.* v. 4

[४] *Cf.* चत्वारो भावनाहेयाः । *Ak.* v. 5a.

हाणात्तेषामपि प्रहाणं स्तम्भनिपातादुपस्तम्भनिपातनवत् । ये तु रागादयश्चत्वारः स्वलक्षणक्लेशास्ते भावनाप्रहातव्या द्रष्टव्या रागप्रतिघमानाविद्याः ॥

अत्र पुनः

[ 267 ] प्रतिकल्पयशोत्पत्तेर्दृष्टिका(3)ङ्क्षे तु दृक्क्षये ।

अविद्यमाने खलु वस्तुन्येते स्कन्धेषु विपरीतसंदेहाकारग्रहणं कृत्वा प्रवर्तेते । तस्मादेते दर्शण(न)हेये चेतोद्घाटनमात्रेण सारद्रव्यास्तिसत्त्व(त्व)संदेषा(हा)पगमवत् ।

रूपेऽप्येवं तथाऽरूप्ये प्रतिघानुशयादृते ॥[१]

यथा कामधातौ प्रोक्ताः, रूपारूप्यधात्वोरप्येवं द्रष्टव्याः । प्रतिघानुशयं वर्जयित्वा । तत्र हि शमथस्नि(4)ग्धसन्तानत्वात्प्रतिघनिमित्ताभावाच्च प्रतिघानुशयो नास्ति ।[२]

तत्र सत्कायान्तर्ग्राहदृष्टी एकप्रकारे दुःखदर्शण(न)मात्रहेयत्वात् । मिथ्यादृष्टिदृष्टिपरामर्शविचिकित्साः प्रत्येकं चतुष्प्रकाराः, चतुस्सत्यदर्शण(न)हेयत्वात् । शीलव्रतपरामर्शो द्विप्रकारो दुःखमार्गदर्शनहेयत्वात् । रागादयः पञ्चप्रकाराः, चतुस्सत्यदर्शनभा(5)वनाहेयत्वात् । त एते कामधातौ षट्त्रिंशद्भवन्ति । रूपधातावेकत्रिंशदारूप्यधातावेकत्रिंशदिति समस्ता दर्शनभावनाहेया अष्टानवतिर्भवन्ति ।[३] तेभ्यः पुनरष्टाशीति दर्शनप्रहातव्याः । दश भावनाप्रहातव्याः ॥

अथ य एतेऽष्टाशीतिरनुशया दर्शनप्रहातव्याः किमेते दर्शनमार्गेणैव प्रहीयन्ते ? नेत्याह । किं तर्हि ?

[ 268 ] भवाग्रे(6) क्षान्तिहेया ये दृग्घेया एव ते मताः ।[४]

---

[१] Cf त एवाप्रतिघा पुन ।
रूपधातौ तथारूप्ये इत्यष्टानवतिर्मता ॥ *Ak* v 5 bcd

[२] Cf. 'रूपधातुया अरूपधातुया अपरियापन्ने एत्थ पटिघानुसया च नानुसेन्ति कामरागानुसयो च नानुसेति । *Yamaka A* p 241 (SHBS vol xl)

[३] त एवमेत षडनुशया आकारप्रकारधातुभेदैरष्टानवतिर्मता आभिधार्मिकाणाम् । *Akb* v 5 d

[४] Cf भवाग्रजा क्षान्तिवध्या दृग्घेया एव शेषजा ।
दृग्भावनाभ्यामक्षान्तिवध्या भावनयैव तु ॥ *Ak* v. 6
भवाग्रग्रहणं तदन्यभूमिकविनिवारणार्थम् । न हि लौकिकोऽस्ति भवाग्रनिवृत्तो भावनामार्ग इति । *Sakv* p 447.

ते ह्येकान्तेनान्वयक्षान्ति[१]वध्याः ।

ज्ञानवध्यास्तु ये तस्मिन्नभ्यासेनैव तत्क्षयः ॥

एवमन्यास्वपि भूमिषु येऽनुशया ज्ञानवध्यास्त आर्याणां पृथग्जनानां च भावनामार्गेणैव[२] प्रहीयन्ते । शेषास्तूभयथा । यथायोगं शेषासु खलु भूमिषु यथासंभवं धर्मान्वयक्षान्तिवध्या अनुशया आर्याणां दर्शनहेयाः, (7)पृथग्जनानां च भावनाहेया इति बोद्धव्यम् ॥[3]

अथ या इमाः पञ्च दृष्टयो धात्वाकारप्रकारभेदेन[४] षट्त्रिंशद्धा भिन्नास्तासां प्रत्येकं कः स्वभावः[५] ? तदारभ्यते—

[ 269 ] अहं ममेति या दृष्टिरसौ सत्कायदृक् स्मृता ।
तदुच्छेदध्रुवग्राहौ यौ सान्तग्राहदृङ्मता ॥

हेतुबलसामर्थ्यादसच्छास्त्रश्रवणाच्च पृथग्जनस्याहं ममेति पञ्चसूपादा-(8)नस्कन्धेषु य आत्मग्राहः सा सत्कायदृष्टिरित्युच्यते[६] । सति सीदति वा काये दृष्टिर्विपरीताकारा सत्कायदृष्टिरिति [नि]र्वचनम्(8) । सैषात्मात्मीयाकारभेदा[द्] द्विप्रकारा । पुनः पञ्चस्कन्धालम्बनाः पञ्चात्मदृष्टयो भवन्ति ।

---

१ V infra, *Ad. kārikās* 423-424

२ द्विविधो हि भावनामार्गः लौकिको लोकोत्तरश्च । *Saks* p 447.

३ After this, the *Akb* has नैव हि बाह्यकानां दर्शनप्रहातव्या प्रहीयन्त इत्यपरे । ···दृष्टयुत्पादसमकाल ते परिहीणा देवदत्त इवेति वैभाषिका । *Akb* v. 6 d See *Saks.* pp 447-450

४ आकारप्रकारधातुभेदैरिति । आकारभेदो दशानामनुशयाना 'आत्मात्मीयध्रुवोच्छेदनास्तिहीनाग्रदृष्टय' इत्येवमादिक । प्रकारभेदो दु:खदर्शनप्रहातव्यो निरोधो यावद्भावनाप्रहातव्य इति । धातुभेद कामावचर, रूपावचर, आरूप्यावचर इति । *Saks* p 436.

५ Cf आत्मात्मीयध्रुवोच्छेदनास्तिहीनाग्रदृष्टय ।
अहेत्वमार्गे तद्दृष्टिरेतास्ता पञ्चदृष्टय ॥ *Ak* v. 7.

६ Compare this definition of *satkaya drishti* with Āchārya Samghabhadra's definition, as given by LVP —Samghabhadra (xxiii 5, 9 b) explique : Par la force de la cause (*hetu*, sans doute *sabhāgahetu*,·· ) et de l'enseignement, des sots reconnaissent moi-et-mien-dans les cinq *upādāna-skandhas* Cette vue est nommée *satkāya-drishti* LVP*Ak.* v. p 15 note 3

The Kośakāra gives the following definition : आत्मदृष्टिरात्मीयदृष्टिर्वा सत्कायदृष्टि । सीदतीति सत् । चय काय संघात इत्यर्थ । सच्चायं कायश्चेति सत्काय । पञ्चोपादानस्कन्धा. *Akb* v 7.

पञ्चदशात्मीयदृष्टयः। ताः समस्ता विंशतिकोटिका[1] सत्कायदृष्टिरिति व्याख्यायते।

तयोर्गृहीत(?)स्य विपर्यासेनात्माख्यस्यासद्वस्तुनोऽसत्पुरुषसंसर्गाश्रित्य-त्वग्राहो वा नित्यत्वग्राहेण वा साऽन्तग्राहदृष्टिरिति ॥[2]

[270] फलहेत्वपवादो यः सा मिथ्यादृष्टिरुच्यते।[3]

फलहेतुग्रहणे वस्तुक्रियाग्रहणं प्रत्येतव्यम्। अनेन शास्त्रप्रोक्तया मिथ्यादृष्टेः साकल्येन ग्रहणं प्रत्येतव्यम्।

ज्ञेयो दृष्टिपरामर्शः हीनवस्तूत्त [V B, 3 Fol 105 a] मग्रहः ॥[4]

---

For various derivations of the term *satkāya drishti*, see *LVPAk* v p 15 n 1 2

Also cf ये केचि भिक्खवे समणा वा ब्राह्मणा वा अनकविध अत्तान समनुपस्सन्ति सब्बे ते पञ्चूपादानक्खन्धे समनुपस्सन्ति एतेस वा अञ्ञतर। *S* III p 46 सक्कायदिट्ठी ति विज्जमानट्ठेन सति खन्धपञ्चकसखाते काये, सय वा सती तस्मिं काये दिट्ठी ति 'सक्कायदिट्ठि'। *Dhs A* v 13 तत्र सत्कायदृष्टिर्यत् पञ्चसूपादानस्कन्धेषु आत्मात्मीय-दर्शनम्। *Tvb* 12 a पञ्चस्कन्धेषु विकल्पयत्यात्मानमित्येव दृष्टिरुच्यते सत्कायदृष्टि। *Aam* p 77 आत्मात्मीयाकारेण पञ्चस्कन्धदर्शन स्वकाय। *Aaa* p 78

[1] Cf तत्थ कतमा सक्कायदिट्ठि? इध अस्सुतवा पुथुज्जनो रूप अत्ततो समनुपस्सति, रूपवन्त वा अत्तान, अत्तनि वा रूप रूपस्मिं वा अत्तान वेदन सञ्ञ "सङ्खारे" विञ्ञाण' विञ्ञाणस्मिं वा अत्तान या एवरूपा दिट्ठि—पे—विपरियेसग्गाहो, अय वुच्चति सक्कायदिट्ठि। *Dhs* 1003—एत्थ पण्णरस भवदिट्ठियो पञ्च विभवदिट्ठियो होन्ति। ता सब्बा पि पठममग्गवज्झा। *DhsA* v 26 See *Asm* p 8

Cf केन कारणेन पञ्चदशात्मीयदृष्टय। सम्बन्धात्मीयतामुपादाय वशवर्तनात्मीयता-मुपादाय अविनिर्भोगवृत्त्यात्मीयता चोपदाय। *Asm* p 8

[2] Cf अन्तग्राहदृष्टिस्तेष्वेव पञ्चसूपादानस्कन्धेष्वात्मात्मीयत्वेन गृहीतेषु यदुच्छेदत शाश्वततो वा दर्शनम्। *Tvb* 12 a लोकस्यास्ति अन्त नास्ति अन्त—इत्येव दृष्टिरुच्यते अन्तग्राहदृष्टि। *Aam* p 77 शाश्वतोच्छेदमाश्रित्य हेतुप्रत्ययफलविपाकानामज्ञानमन्त-ग्राहदृष्टि। *Ibid*

[3] Cf मिथ्यादृष्टि। यया मिथ्यादृष्ट्या हेतु वापवदति फल क्रिया वा सद्वा वस्तु नाशयति। या सर्वदर्शनपापत्वान्मिथ्यादृष्टिरित्युच्यते। *Tvb* 12 a v supra, p 164, n. 6 *Akb* says एषा ह्यपवादिका अन्यास्तु समारोपिका। v 7 See *Sakv* p 450

[4] Cf दृष्टिपरामर्श। पञ्चसूपादानस्कन्धेष्वग्रतो विशिष्टत श्रेष्ठत परमतश्च यद्दर्शनम्। *Tvb*. 12 a सास्रवधर्मेषु विकल्पयति मननमग्रनाम् इत्येव दृष्टिरुच्यते दृष्टिपरा-मर्श। *Aam* p 77 आरम्भार्थभूतमगुणमशुचि पश्यति गुण शुचि…इति दृष्टिपरामर्श। *Ibid*

[ 271 ] अहेतावपथे चैव तद्धि शीलव्रताह्वयः ।

सर्वं खलु सास्रवं वस्तु हीनार्हत्वाद्धीनम् । आदिग्रहणशब्दस्य चात्र लोपो द्रष्टव्यः ।[१] दृष्ट्यादिपरामर्शो दृष्टिपरामर्शः । चतस्रो दृष्टीः प्रत्ययरं च वस्त्वग्रतो गृह्णाति । कथमस्येयं दृष्टिः ? येयमात्मदृष्टिः—आत्मानमहं पूजयिष्यामि वासुदेवोऽत्र पूजितो भविष्यतीति हीनपुरुषं (2)पञ्चोपादानस्कन्धात्मकमग्रतः प्रतिपद्यते । नास्ति दत्तं यथासुखं प्रवर्तिष्यत इत्येवमादिः ।

अकारणे कुमार्गे च कारणमार्गग्रहणं शीलव्रतपरामर्शः । तद्यथा प्रकृतीश्वरपुरुषादिहेतुकं पञ्चोपादानस्कन्धात्मकं न तृष्णाहेतुकमित्यकारणे कारणदर्शन(नम्) । कुमार्गं चाग्निजलप्रवेशादौ प्रकृतिपुरुषान्तरज्ञा(3)नादौ च स्वर्गापवर्गहेतुत्वम् ।[२]

शीलं त्वनाग्निहोत्रानुष्ठानं प्रतिजुहोत्याद्यास्तिस्रोऽन्तरङ्गक्रियाः, पश्वालम्भनाद्याः बहिरङ्गाः, तदुभयस्य यावज्जीवमनुष्ठानं शीलम् । यथोक्तम्—"जरामर्यं वैतत्सत्रं यदग्निहोत्रं जुहोति"[३] इति ।

व्रतम्—आग्नेयमग्निपरिचरणं शौक्रमापो हि ष्ठाद्यनुष्ठानम्[४] अपां शुक्रदैवत्यत्वात् । बार्हस्पत्यौपनिषद(4)गोदानीयं जटावतारणम् । अथवा गोव्रतादीनि[५] व्रतान्येभिः शुध्यते मुच्यत इत्याहुः ।

---

[१] Cf दृष्ट्यादिपरामर्श इति वक्तव्य आदिशब्दलोप कृत । *Akb* v 7—'आदि शब्दलोप कृत' इति । दृष्ट्यादीनामुपादानस्कन्धाना परत्वेन प्रधानत्वेनामर्शो दृष्टिपरामर्श इति । परशब्दप्रयोगेण चायमतिशयार्थो लभ्यत इति आचार्यसंघभद्र । *Sakv* p 450

See *LVPAk* v p 18, n 3

[२] Cf अहेतौ हेतुदृष्टिरमार्गे मार्गदृष्टि शीलव्रतपरामर्श । तद्यथा महेश्वरो न हेतुर्लोकानाम् । त च हेतु पश्यति । अग्निजलप्रवेशादयश्च न हेतु स्वर्गस्य ता च हेतु पश्यन्ति । *Akb* v 7

शीलव्रतपरामर्श । पञ्चसूपादानस्कन्धेषु शुद्धितो मुक्तितो नैर्याणिकतश्च यद्दर्शनम् । *Tvb* 12 a

अशुचिहेतुप्रत्ययेषु गवेषयति परिशुद्धमार्गमित्येव दृष्टिरुच्यते शीलव्रतपरामर्श । *Aam* p 78

तत्थ कतमो सीलब्बतपरामासो ? इतो बहिद्धा समणब्राह्मणान 'सीलेन सुद्धि, वतेन सुद्धि, सीलब्बतेन सुद्धीति' या एवरूपा दिट्ठि· *Dhs* 1005

[३] Cf एतद्वै जरामर्यं सत्त्र यदग्निहोत्र जरया वा ह्येवास्मान्मुच्यन्ते मृत्युना वा । *Śatapatha brāhmaṇa*, 12, 4, 1, 1

[४] Cf आपो हि ष्ठा मयोभुवस्ता नऊर्जे दधातन । महे रणाय चक्षसे । *Śukla-yajurveda*, xı 50

[५] Cf वतेना ति गोवतादिना *Dhs A* v 30 See *M. sutta* 57

प्रयोधर्म(र्मा)णस्त एव ते हरिहरहिरण्यगर्भादयो न कारणमुपादानस्कन्धात्मकत्वात्। न च नित्याः, न चान्यथा इत्येतद्विस्तरेणाविष्कृतम्।[1] पश्चा-(श्चा)लम्भनाग्निजलप्रवेशादयश्च न स्वर्गापवर्गहे(हे)तुर्दानशीलभावनानां तद्धेतुत्वात्। इत्यतो विप(5)रीतदर्शन(न)मेतच्छीलव्रतपरामर्शाख्यमिति॥

यदि तर्हि पुरुषेश्वरादिकारणद्वारेण शीलव्रतपरामर्शः प्रवर्तते, प्राप्तस्तर्हि समुदयदर्शनप्रहातव्यः? नैतदस्ति। यस्मादसौ

दुःखभ्रान्त्यपथादानासदृष्ट्युत्सार्य एव सः ॥[2]

---

[1] V. supra, p. 119.

[2] Cf ईश्वरादिषु नित्यात्मविपर्यासात् प्रवर्तते।
कारणाभिनिवेशोऽन्यो दुःखदृग्घेय एव सः॥ *Ak.* v. 8

सत्यकारणे कारणदृष्टिः शीलव्रतपरामर्शः। कस्मादयं न समुदयदर्शनप्रहातव्यः?··· दुःखदर्शनादेव हि तेषु तौ नित्यात्मग्राही प्रहीयेते। तस्मात् तत्कृतोऽपि कारणाभिनिवेशस्तत एव प्रहीयते।

यस्तर्हि जलाग्निप्रवेशादिभिः स्वर्गोपपत्तिं पश्यति शीलव्रतेन वा शुद्धिं सोऽपि दुःखदर्शनप्रहातव्य एव। एष हि सूत्रपाठः "···अकारणं कारणतः प्रत्येति शीलव्रतपरामर्शो दुःखदर्शनप्रहातव्यः" इति विस्तरः। किं पुनः कारणमसौ दुःखदर्शनप्रहातव्यः? दुःखे विप्रतिपन्नत्वात्।

अति प्रसंगः···सर्वेषां सास्रवालम्बनानां दुःखे विप्रतिपन्नत्वात्। कीदृशो वाऽन्यः शीलव्रतपरामर्शो मार्गदर्शनप्रहातव्यः? यो मार्गदर्शनालम्बनः। सोऽपि हि नाम दुःखे विप्रतिपन्नः।···तस्मात् परीक्ष्य एषोऽयं। *Akb.* v. 8.

Yaśomitra gives the following comment:—कस्मादयं न समुदयदर्शनप्रहातव्य' इति। हेतुविप्रतिपन्नत्वादित्यभिप्रायः। 'तत्कृतोऽपिकारणाभिनिवेश' इति। नित्यैकात्मकर्तृग्राहकृतोऽपीत्यर्थः। 'तत एव प्रहीयते' इति दुःखदर्शनादेव प्रहीयते। 'यस्तर्हि जलाग्निप्रवेशादिभिः स्वर्गोपपत्तिं पश्यति, शीलव्रतेन वा शुद्धिं' इति। नायं तत्कृतः कारणाभिनिवेशः। कथं दुःखदर्शनात्प्रहीयते? तस्मात्समुदयदर्शनप्रहातव्य एवायं भविष्यतीत्यभिप्रायः।

वैभाषिक आह—'सोऽपि दुःखदर्शनप्रहातव्य.' इति विस्तरः। दुःखे विप्रतिपन्नत्वादिति वैभाषिकाः। कथं च पुनर्दुःखे विप्रतिपन्नः? तेन स्वर्गगमनाच्छुद्धिदर्शनाद्वा।

'अतिप्रसंग.' इति विस्तरेणाचार्यः। 'सर्वेषां सास्रवालम्बनानां' अदृष्टिस्वभावानां च दुःखादिदर्शनप्रहातव्यानां दुःखे विप्रतिपन्नत्वात्। सर्वं हि सास्रववस्तु दुःखमिति दुःखदर्शनप्रहातव्यप्रसंग.। तथा सति न कश्चित्समुदयादिदर्शनप्रहातव्यः स्यात्।

'कीदृशो वाऽन्यः शीलव्रतपरामर्शो मार्गदर्शनप्रहातव्यः स वक्तव्य.।' योऽपि हि गोशीलादिना शुध्यति···इति पश्यति तस्याप्ययमकारणं कारणतः प्रत्येतीति दुःखदर्शनप्रहातव्यः शीलव्रतपरामर्श. इति पठ्येत।

वैभाषिक आह—'यो मार्गदर्शनप्रहातव्यालम्बन' इति। यो मार्गदर्शनहेयानन्दो

दुःखभूतेषूपादानस्कन्धेषु हरिहरहिरण्यगर्भादिष्वकारणेषु बुद्ध्या भ्रान्तः । तस्माद्यत्रैव भ्रान्त[6]स्तत्रैवाविपरीतदर्शना(न)त्प्रहीयते । कापथे च

---

मिथ्यादृष्टयादीनालम्बने, स मार्गदर्शनप्रहातव्य शीलव्रतपरामर्श इति । 'सोऽपि हि नाम दुःखे विप्रतिपन्न' इत्याचार्यः । मिथ्यादृष्टयादयो हि मार्गदर्शनप्रहातव्या अष्टावनुशयाः शीलव्रतपरामर्शस्यालम्बनम् । ते च सास्रवत्वाद् दुःखसत्यसंगृहीताः । तत्र च विप्रतिपन्न इति । दुःखदर्शनप्रहातव्य एव स्यादित्यभिप्रायः । ···'तस्मात् परीक्ष्य एषोऽर्थ' इति । यस्मादयं दुःखदर्शनप्रहातव्यः शीलव्रतपरामर्शो न संभवति मार्गदर्शनप्रहातव्यश्च । अतिप्रसंगादिदोषात्तस्मात् परीक्ष्य एषोऽर्थः । शीलव्रतपरामर्शो दुःखदर्शनप्रहातव्यः मार्गदर्शनप्रहातव्यश्चेति । तदिदमाचार्येण संशयावद्य कृतम्, न स्वमतं दर्शितम् ।

अन्य आहु—योगाचारमतिमपेक्ष्यैव कृतम् । योगाचारा ह्यष्टाविंशत्युत्तरं क्लेशशतं वर्णयन्ति । यथैव हि दुःखदर्शनप्रहातव्या इमे दशानुशया भवन्ति ।···तथैवेमे दश समुदयदर्शनप्रहातव्याः । तथैव च दश निरोधदर्शनप्रहातव्या । दश मार्गदर्शनप्रहातव्या इति चत्वारिंशत् कामवचरा दर्शनहेया भवन्ति । भावनाहेयास्तु षट् । अक्लिष्टा सत्कायदृष्टिः उच्छेददृष्टि सहजो राग प्रतिघ मान अविद्या चेति । षट्चत्वारिंशत् कामावचरा अनुशया भवन्ति । रूपावचरास्त्वेकचत्वारिंशदेन एव प्रतिघवर्ज्या । यथा रूपावचरा, एवमारूप्यावचरा इति । (Cf *Asm* p 52.)

अत्र कश्चित्समाधिमाह—यदुक्त 'अतिप्रसंग सर्वेषा सास्रवालम्बनाना दुःखे विप्रतिपन्नत्वात्' इति । अत्र ब्रूमः । नातिप्रसंगः । दुःखादिमुखेन विप्रतिपत्तेः । यद्यपि सास्रवालम्बना दुःखसत्यविप्रतिपन्ना, तथापि तु केचिद् दुःखमुखेन विप्रतिपन्ना, केचित् समुदयमुखेन । केचिन्निरोधविप्रतिपन्नविप्रतिपन्ना । केचिन्मार्गविप्रतिपन्नविप्रतिपन्नाः । तत्र ये दुःखमुखेन··· ते दुःखदर्शनप्रहातव्या । शीलव्रतपरामर्शश्च दुःखमुखेन दुःखे विप्रतिपन्नो नित्यात्मग्रहणात् । तस्माद् दुःखदर्शनप्रहातव्य. । यस्तु मार्गविप्रतिपन्नविप्रतिपन्न, तद्यथा साख्यनिर्ग्रन्थादय··· मिथ्यादृष्टिमुत्पादयन्ति । ता च मिथ्यादृष्टि शीलव्रतपरामर्शोऽग्रत. पश्यति । अयमेषा शीलव्रतपरामर्शो मार्गदर्शनप्रहातव्य. । नास्ति तु स शीलव्रतपरामर्श· य. समुदयमुखेन··· नापि निरोधमुखेन···विप्रतिपन्न स्यात् । तस्माद् दुःखमार्गदर्शनप्रहातव्य एव शीलव्रतपरामर्श इति ।

कथ पुन समुदय-निरोधमुखेन न विप्रतिपद्यते ? अत्राचार्यसंघभद्र आह···अतो मार्गदर्शनप्रहातव्य एव शीलव्रतपरामर्श. सभवति । न निरोधदर्शनप्रहातव्य इति ।

इह शीलव्रतोपरामर्शो द्विप्रकार इष्यते आभिधर्मिकै. ।···योऽपि हि गोशीलादिना शुद्धि प्रत्येति सोऽप्यमार्गे मार्गं पश्यतीति । यः शीलव्रतादिदुःखालम्बनः शीलव्रतपरामर्श, स दुःखदर्शनप्रहातव्यः । यो मार्गविप्रतिपत्त्यालम्बन', स मार्गदर्शनप्रहातव्य । य शीलव्रताद्यालम्बन स न मार्गविप्रतिपत्ति । तथा न बाधते यथा मार्गविप्रतिपत्त्यालम्बन' । यस्माच्छीलव्रताद्यालम्बन औदारिक, न दूरगत न दृढाशय अल्पयत्नघात्य । तद्विपर्ययान्मार्गविप्रतिपत्त्यालम्बन इति । *Sakv.* pp. 450-453.

See *LVPAk.* v. pp. 19-21.

सत्पथबुद्ध्या भ्रान्त इति सम्यक्स्वमार्गदर्शणा(ना)त्प्रहीयते । इति सिद्धं द्विदर्शण(न)हेयः शीलव्रतपरामर्शः ॥

[ 272 ] सत्कायदृष्ट्यवच्छेदो धर्ममात्रेक्षणाद्यतः ।
दुःखाभिसमये तच्च तद्द्वयेयैव सोऽप्यतः ॥

यदा खल्वस्य धर्मेषु धर्ममात्रबुद्धिरुत्पन्ना भवत्यनित्याः, दुःखाः, (7)शून्याः, अनात्मानश्च धर्मा इति तदैव सत्कायदृष्ट्यवच्छेदो भवति, तत्प्रवर्तिता चान्तर्ग्राहदृष्टिः, तत्रोपात्तस्या अपि समुद्घात इति । तच्च धर्मदर्श[न]मनित्याद्यन्यतमाकारं यस्माद्दुःखाभिसमयमात्राद्भवत्यत एतद् दृष्टिद्वयं दुःखदर्शनहेयमेवेति सिद्धम् ॥[1]

अथ य एते चत्वारो विपर्यासाः—"अनित्ये नित्यम्"[2] एव(8)मादयस्ते किं स्वभावाः ? तदारभ्यते—

[ 273 ] द्वयं दृष्टिपरामर्शादिकः सत्कायदृष्टितः ।
अन्तर्ग्राहार्थमन्यस्तु विपर्यासः प्रकल्प्यते ॥[3]

तत्र तावत् । दृष्टिपरामर्शात्सुखशुचिविपर्यासौ प्रकल्प्य(ल्प्ये)ते । सत्कायदृष्टेरात्मदृष्टिविपर्यासः, अन्तर्ग्राहदृष्ट्यर्था[त्] नित्यविपर्यासः प्रकल्प्यत

---

[1] Cf सत्कायदृष्टिर्दुःखसत्यहेया पञ्चस्कन्धेष्वात्मविकल्पनात् । शाश्वतोच्छेदसत्ता दुःखसत्यहेया प्रत्युत्पन्नपञ्चस्कन्धालम्बनत्वात् । मिथ्यादृष्टिर्दुःखसत्यदुःखदर्शनहेया । एव समुदयनिरोधमार्गसत्यसमुदयनिरोधमार्गदर्शनहेयो दृष्टिपरामर्श. । दुःखसत्ये चेत् सुखशुच्यादिविकल्पना दुःखदर्शनहेया । एव समुदयनिरोधमार्गसत्येषु सुखशुच्यादिविकल्पना चेत् समुदयनिरोधमार्गदर्शनहेया । शीलव्रतपरामर्शः अमार्गे निर्वाणपर्येषण अहेतौ हेतुदर्शनम् । शीलव्रतपरामर्शो दुःखदर्शनमार्गदर्शनहेय । *Aam* p 128

Also cf. शीलव्रतपरामर्शसयोजन द्विविध । दुःखदर्शनहेय वा मार्गदर्शनहेय वा । *Jpl* p 75

[2] Cf. चत्तारो'मे भिक्खवे सञ्ञाविपल्लासा चित्तविपल्लासा दिट्ठिविपल्लासा । कतमे चत्तारो ? अनिच्चे भिक्खवे निच्च ति···दुक्खे भिक्खवे सुख ति ··अनत्तनि भिक्खवे अत्तानि···असुभे भिक्खवे सुभ ति ·। *Ang* II p 52

See *Yogasūtra*, II. 5, *Śikshā* p 198 and *Aam* p 128

The *Jpl* enumerates the following *drishtis*—अनित्ये नित्यदृष्टि नित्येऽनित्यदृष्टि, दुःखे सुखदृष्टि, सुखे दुःखदृष्टि, अशुचौ शुचिदृष्टि, शुचावशुचिदृष्टि, अनात्मन्यात्मदृष्टिः, अहेतौ हेतुदृष्टि, हेतावहेतुदृष्टि भावेऽभावदृष्टि, अभावे भावदृष्टिः । *Jpl* pp 7-9

[3] Cf. दृष्टित्रयाद्विपर्यासचतुष्कं विपरीतत । *Ak.* v 9 ab.

See *Śikshā*, p 198

ननु च सूत्र उक्तम्—"अनित्ये नित्यमिति संज्ञाविपर्यासः, चित्तविपर्यासो दृष्टिविपर्यास एवं यावदनात्मनि" इति द्वादश भवन्ति।[1] नैष दोषः। नहि संज्ञाचित्ते निरीरके। तस्माच्चतुर्ष्वेव दृष्टि[illegible]ष्वनात्मसु विपर्यासोक्तिः। 'दृष्टिवशात् चित्तसंज्ञयोः' तदुक्तिरिति। संज्ञा हि लोककार्यव्यवहारपतिता दर्शे(न)वशाद्विपर्यस्तमालम्बननिमित्तमुद्गृह्णाति। चित्तं च तद्वशानुवर्ति तथैव ग्रहणम्। लोकेऽपि विपर्यस्तसंज्ञो विपर्यस्तचित्तश्चोच्यते न विपर्यस्तवेदनो विपर्यस्तचेतन इति॥[2]

अथ किं दृष्ट्यनुशयवद् माना[3]नुशयस्यापि कश्चिद्भेदोऽस्ति? विद्यत इत्याह। कथमित्यादर्शते—

[275] सप्त मानविधास्त्रिभ्यो नव मानविधास्त्रिधा।
मिथ्यास्त्वूननादिभ्यः स्वोत्कर्षयन्ति नान्विता॥[4]

तदस्य श्लोकस्य संक्षेपविस्तारव्याख्याभेदोऽयमादर्श्यते। तत्र तावत्स्वलक्षणसामर्थ्यसंमुखस्य येन केनचिद्वस्तुना चित्तस्योन्नतिर्मानः। प्रविभज्यमानः सप्तधा भव[illegible] मानः, अतिमानः, मानातिमानः, अस्मिमानः, अभिमानः, ऊनमानः, मिथ्यामानश्च। एतेषां प्रपञ्चो यथा प्रकरणेषु।[5]

---

[1] द्वादश विपर्यासा इति। [illegible] See p. 454. Cf. [illegible] Vbh. p. 376.

[illegible] Vm. xxii. 53.

[2] After this, the Kośakāra gives some more details — [illegible] Ak. v. 9d. See Sac. pp. 4–6. See Asm. p. 12.

[3] Cf. [illegible] Ak. v. 10ab.

[4] Cf. [illegible] Vbh. p. 353. See Vbh.A. p. 4[illegible], Dh. 1116, Dhs.A. v. 645, Asl. p. 4[illegible]6 and Asm. p. 45.

[5] Prakaraṇa[illegible], xxx. 19, f. 1. 13 b (see LVPAk. v. p. 26). The Kośakāra gives the definitions of the seven mānas, but does not mention the Prakaraṇa.

न[नु] पुनर्ज्ञानप्रस्थाने[१] नवमानविधा उक्तास्तद्यथा[२]—"श्रेयानहमस्मीति मानविधा। सदृशोऽहमस्मीति तद्दृष्टिसन्निश्रितैव मानविधा। सदृशाद्धीनोऽहमस्मीति मानविधा। अस्ति मे श्रेयानस्ति मे(6) सदृशोऽस्ति मे हीन, नास्ति मे श्रेयो नास्ति मे सदृशो नास्ति मे हीन" इति।

तत्र श्रेयानहमस्मीति सत्कायदृष्टिसनि(न्नि)श्रिता अतिमानविधा। सदृशोऽहमस्मीति तद्दृष्टिसन्निश्रिते(त)व मानविधा। हीनोऽहमस्मीति तद्दृष्टिसन्निश्रितैवोनमानविधा। अस्ति मे श्रेयानित्यूनमानविधा। अस्ति मे सदृश इति मानवि(7)धा। अस्ति मे मान इति मानातिमानविधा। नास्ति मे श्रेयानिति मानविधा। नास्ति मे सदृश इत्यतिमानविधा। नास्ति मे हीन[३] इत्यूनमानविधा। इति एवमेता नवमानविधास्त्रिभ्यो मानेभ्यो व्यवस्थाप्यन्ते मानाभिमानोनमानेभ्य.।[४]

त एते सप्तमाना सर्वेऽपि[५] दर्शण(न)भावनाहेया. स्थविरक्षेमकसूत्रोक्ते[६]—(7)"अस्ति मे एषु पञ्चसूपादानस्कन्धेष्वस्मीति मानोऽप्रहीन (ण)"[७] इति ॥

---

१ *Jnanaprasthana* 20, 6 See *Jpl* pp 55 7

२ Cf यर्त्तहि शास्त्र नव मानविधा उक्ता । *Akb* v 10 a

३ युक्तस्तावद बहुतरविशिष्टादल्पान्तरहीनोऽस्मीत्यूनमान उन्नतिस्थानत्वात। नास्ति मे हीन इत्यत्र किमुन्नतिस्थानम। अस्ति सत्त्वो योऽभिप्रेते वरे सत्त्वरातौ निहीनमप्यात्मान बहु मन्यते। अपि चास्त्येव ज्ञानप्रस्थानविहितो विधि। प्राकरण तु निर्देश परिगृह्य श्रेयानहमस्मीत्यकेषु मानोऽपि स्यादिति मानोपि मानातिमानोऽपि हीनसमविशिष्टापेक्षया। *Akb* v 10 a

४ Cf कतम नवविधा माना ? सेय्यस्स सेय्योहमस्मीति मानो। सेय्यस्स सदिसोहमस्मीति मानो। सेय्यस्स हीनोहमस्मीति मानो। सदिसस्स सेय्योहमस्मीति मानो। सदिसस्स सदिसोहमस्मीति मानो। सदिसस्स हीनोहमस्मीति मानो। हीनस्स सेय्योहमस्मीति मानो। हीनस्स सदिसोहमस्मीति मानो। हीनस्स हीनोहमस्मीति मानो। इमे नवविधा माना। *Vbh* p 389

५ एतदुक्त भवति सर्वे दर्शनभावनाप्रहातव्या इति। *Akb* v 10ab—सर्व इति ग्रहणमस्मिमानोऽपि भावनाप्रहातव्य। न केवल सप्त। सप्त अपि दर्शनप्रहातव्या। न केवलमस्मिमान इति प्रदर्शनार्थम्। *Sakv* p 457

६ This *sutra* is not referred to in *Akb*

७ Cf तेन खो पन समयेन आयस्मा खेमको बदरिकारामे विहरति आबाधिको दुक्खितो। आयस्मा खेमको एवं समयो तनुसमकसम इमेसु आयस्मा खेमको पञ्चसु उपादानक्खन्धेसु किञ्चि अत्तान वा अत्तनिय वा समनुपस्सती ति? 'इमेसु ख्वाहमावुसो पञ्चसु उपादानक्खन्धेसु न किञ्चि अत्तान वा अत्तनिय वा समनुपस्सामी' ति।

ननु च सूत्र उक्तम्—"अनित्ये नित्यमिति सञ्ज्ञाविपर्यास', चित्तविपर्यासो दृष्टिविपर्यास एव यावदात्मनि" इति द्वादश भवन्ति।[1] नैष दोष । नहि सञ्ज्ञाचित्ते नितीरके। तस्माच्चतुर्ष्वेव दृष्टि(3)स्वभावेषु विपर्यासोक्ति'। 'दृग्वशात् चित्तसञ्ज्ञयो' तदुक्तिरिति। सञ्ज्ञा हि लोककार्यव्यवहारपतिता दर्शन(म)वशाद्विपर्यस्तमालम्बननिमित्तमुद्गृह्णाति। चित्तं च तद्वशानुवर्तीति तयोरेव ग्रहणम्। लोकेऽपि विपर्यस्तसञ्ज्ञो विपर्यस्तचित्तश्चोच्यते न विपर्यस्तवेदनो विपर्यस्तचेतन इति॥[2]

अथ किं दृष्ट्यनुशयवत् माना(4)नुशयस्यापि कश्चिद्भेदोऽस्ति? विद्यत इत्याह। कथमित्यादर्श्यते—

[ 275 ] सप्त मानविधास्त्रिभ्यो नव मानविधास्त्रिधा।
त्रिधाऽप्युन्नमनादिभ्यः स्योत्कर्षोऽयस्ति नास्तिता॥[3]

तदस्य श्लोकस्य सक्षेपविस्तारव्याख्याप्रभेदोऽयमादर्श्यते। तत्र ताव त्स्वमंस्वकृतासामर्थ्यसमुग्धस्य येन केनचिद्वस्तुना चित्तस्योन्नतिर्मान'। प्रभिद्यमान सप्तधा भव(5)ति[4] मान, अतिमान, मानातिमान, अस्मिमान, अभिमान, ऊनमान, मिथ्यामानश्च। एतेषा प्रपञ्चो यथा प्रकरणेषु।[5]

---

[1] द्वादश विपर्यासा इति। चतुषु विपययषु प्रत्यक सञ्ज्ञा चित्त-दृष्टिविपर्यास इति। *Sakv* p 454 Cf अनिच्चे निच्च ति दुक्ख सुख ति अनत्तनि अत्ता ति असुभ सुभ ति सञ्ञाविपरियासो चित्तविपरियसो दिट्ठिविपरियासो। *Vbh* p 376

विपल्लासा ति अनिच्च-दुक्ख अनत्त असुभसु यव वत्थुसु निच्च सुख अत्ता सुभ ति एव पवत्ता सञ्ञाविपल्लासो चित्तविपल्लासो दिट्ठिविपल्लासो ति इमे तयो। *Vm* xxii 53

[2] After this the Kośakara gives some more details —ते एते विपर्यासा सर्वेऽपि स्रोतआपन्नस्य प्रहीणा भवन्ति। दर्शनप्रहेयत्वात् दृष्टीना ससप्रयोगाणाम। द्वादश विपर्यासा। तत्राष्टौ दर्शनप्रहातव्याश्चत्वारो भावनाप्रहातव्या। दुःख च सनाचित्तविपर्यासावशुचौ चति विकायान्तरीया। इतरथा हि वयमन्तरेण सुखशुचिसनामवीतरागस्यायस्य कामराग समवेर्न्ति। तन्नप्रच्छन्नि यथाविधा। *Akb* v 9d See *Sakv* pp 455-6 See *Aam* p 128

[3] Cf सप्त माना नव विधास्त्रिभ्य दृग्भावनाक्षया। *Ak* v 10ab

[4] Cf तत्थ कतमे सत्त माना? मानो अतिमानो मानातिमानो ओमानो अधिमानो अस्मिमानो मिच्छामानो। इमे सत्त माना। *Vbh* p 383 See *VbhA* p 488 *Dhs* 1116, *DhsA* v 64 5 *Aaa* p 456 and *Asm* p 45

[5] *Prakaranapāda* xxiii 10 fol 13 b (see *LVPAk* v p 26) The Kośakāra gives the definitions of the seven *mānas* but does not mention the *Prakarana*

किं पुनरत्र कारणं यदेते[ऽ]प्रहीणाः खल्वपि सन्तो नार्यस्य समुदा(2)चरन्ति ? शून्यतायाः सुभावितत्वात्कर्मफलसंबन्धयुक्तेश्च विदितत्वात्, दृष्टिपुष्टत्वाच्च ॥

तत्र मानविधा अस्मिमानश्च सत्कायदृष्टिपुष्टाः। वधादिपर्यवस्थानं मिथ्यादृष्टिपुष्टम्। विभवतृष्णोच्छेददृष्टिपुष्टा। भवतृष्णाप्रदेशः शाश्वतदृष्टिपुष्टः। इति विधादयस्तत्पोषा(प)कक्लेशाभावादार्यस्य नोत्सहन्ते सन्तानमध्यारोढुम्। (3)कौकृत्यमपि चाकुशलमवीतरागस्यार्यस्याप्रहीणं न चास्य तत्संभवति विचिकित्सासमुत्थितत्वादिति ॥

अथानुशयाः सर्वत्रगाः[1] कस्मात्क्लेशनिकाया व्यवस्थाप्यन्ते ? तदारभ्यते—

[ 277 ] दुःखात्समुदयाच्चैव सर्वगानां व्यवस्थितिः।

दुःखसमुदयदर्शन(न)प्रहातव्याः खल्वनुशयाः सर्वत्रगाः। यस्मात्

तद्दृष्टिहेयजातीनां स(4)र्वासां द्विपदस्थितेः ॥

द्वयोः खलु निकाययोः दुःखसमुदयाख्ययोस्तद्दर्शन(न)हेयाना(णां) पच्यमाना(णा)नां क्लेशानामुभयत्र लब्धप्रतिष्ठत्वात् ॥

किं पुनः सर्वे दुःखसमुदयहेयाः न हेयाः सर्वत्रगाः ? नेत्याह। किं तर्हि ?

[ 278 ] काङ्क्षा पञ्च दृशोऽविद्या तद्युग्मिश्राऽथ केवलाः।
सप्त सर्वत्रगा दुःखाद्धेतोरेभ्यश्चतुष्टयम् ॥[2]

सप्तदृष्टयो[3](5)द्वे विचिकित्से[4] ताभिश्च संप्रयुक्ताऽविद्या आवेणिकी[5] च

---

[1] 'सर्वत्रगा.' इति। सर्वत्र गच्छन्तीति सर्वत्रगा। पञ्चापि निकायानलम्बत इत्यर्थः। पञ्चानामपि निकायाना हेतुभावेनावतिष्ठन्त इत्यपरे। *Sakv.* p. 458.

Also cf. सर्वत्रगार्थः कतमः। तथा हि तृष्णा वस्तुसर्वत्रगा अवस्थासर्वत्रगा अध्वसर्वत्रगा धातुसर्वत्रगा एषणासर्वत्रगा प्रकारसर्वत्रगा च। *Asm.* p 43

[2] Cf. सर्वत्रगा दुःखहेतुदृग्घेया दृष्टयस्तथा।
विमतिः सह ताभिश्च याऽविद्याऽऽवेणिकी च या ॥ *Ak* v. 12.

[3] सप्तदृष्टयो दुःखदर्शनप्रहातव्या. सत्कायदृष्ट्यादय पञ्च। समुदयदर्शनप्रहातव्ये द्वे दृष्टी मिथ्यादृष्टिपरामर्शदृष्टीति सप्त। *Sakv* p 458

[4] द्वे विचिकित्से दुःख-समुदयदर्शनप्रहातव्ये। *Ibid.*

[5] आवेणिकीति कोऽर्थः ? एवमाह। सम्पर्को वेणिरित्युच्यते। न वेणिरवेणिः। पृथग्भाव इत्यर्थः। ...अवेण्या चरीत्यावेणिकी। नान्यानुशयसहचारिणीत्यर्थः। *Ibid.*

See *Aam.* pp. 78-9 and *Asm.* p. 51.

किं पुनर्यद्भावनाहेयमप्रहीणं सर्वं तदार्यस्य समुदाचरति ? नेत्याह ।[1] प्रहीणमपि हि किञ्चित्समुदाचरति । तद्यथा श्रद्धादीनि पञ्चेन्द्रियाणि मिद्धं दुःखेन्द्रियं चक्षुराद्यष्टकं चेति । अप्रहीन(ण)मपि खलु किञ्चिन्न समुदाचरति । तद्यथा

[276] व[(9)]धादिपर्यवस्थानं कौकृत्यमशुभं विधाः ।
विभवेच्छा च नार्यस्य जायन्ते हेत्वभावतः ॥[2]

येन खलु क्लेशपर्यवस्थानेन सञ्चिन्त्य प्राणिवधादत्तादानकाममिथ्याचारमृषावादादानध्यापद्येतैतद्वधाद्यप्रहीन(ण)मपि न समुदाचरति भावनाहेयत्वात् । कौकृत्यं चाकुशलं न समुदाचरति । मानविधाश्च नव न समुदा[V B 4 Fol 106 a][(1)]चरन्ति । विभवतृष्णापि[3] भावनाप्रहातव्यापि सती न समुदाचरति । 'च'शब्दाद्भवतृष्णायाश्च कश्चित्प्रदेशः । अहो बताहमैरावणः स्यां नागराज(जः) । अहो बताहमसुरेन्द्रः स्यां वैमचित्र्यादि ।[4] अहो बताहमुत्तरेषु कुरुषु जन्म लभेयेत्येवमादि ।

---

थेरा आहंसु तेनायस्मा खेमको अरहं खीणासवो ति ।

खेमको इमेसु ख्वाहं आवुसो पञ्चसु उपादानक्खन्धेसु न किञ्चि अत्तानं वा अत्तनियं वा समनुपस्सामि । न चम्हि अरहं खीणासवो । अपि च मे आवुसो पञ्चसु उपादानक्खन्धेसु अस्मीति अधिगतं अयमहमस्मीति च न समनुपस्सामी ति । *S* III pp 1261—30

[1] Cf यत् भावनाहेयमप्रहीणं किमवश्यं तदार्येणा समुदाचरति ? नावश्यम् । *Akb* v 10 ab — नावश्यमं इति । प्रहीणं न समुदाचरतीति नियमः । तथा हि श्रद्धादिमिद्धदुःखेन्द्रियचक्षुरादयः प्रहीणा अपि समुदाचरन्ति । दर्शनहेयानामन्तमुखत्वात् । भावनाहेयाऽम्बनेव रागद्वेषमोहविनप्तिरुत्थाप्यत इति भावनाहेयमेव वधादिपर्यवस्थानम् । *Sakv* p 457

[2] Cf वधादिपर्यवस्थानं हेयं भावनया तथा ॥
विभवेच्छा न चार्यस्य सम्भवन्ति विधादयः ।
नास्मिता दृष्टिपुष्टत्वात् कौकृत्यं नापि चाशुभम् ॥ *Ak* v 10 cd 11

[3] विभावो नाम क एष धर्मः ? त्रधातुकी अनित्यता । तत्र प्रार्थना विभवतृष्णा । *Akb* v 11 a — त्रैधातुक्यामनित्यतायां प्रार्थना । किं तत्रापि प्रार्थना भवति ? भवतीत्याह । यथोक्तं सूत्रे — यावदयमात्मा जीवति तिष्ठति ध्रियते यापयति तावत्सरोगः सगण्डः सशल्यः सज्वरः सपरिदाहः । यच्चायमात्मा उच्छिद्यते विनश्यति न भवति । इयतायमात्मा सम्यक्समुच्छिन्नो भवति इति । *Saks* p 457

Also cf विभवो नाम कतमो धर्मः । अनित्यता । त्रिधात्वनित्यता । *Jpl* p 25 For details see LI *PAk* v p 2° n 1

[4] Cf *Vepacitti* (an *asura* chieftain) See *DPPN* II p 259

*अत्र पुनः*

[ 281 ] नवोर्ध्वधातुकास्तेषामाद्या दृष्टिद्वयादृते ।[१]

सत्कायान्तग्राहदृष्टी हित्वाऽन्ये नव विसभागधातुसर्वत्रगाः ।[२]

किं पुनरनु(नु)शया एव सर्वत्रगाः ? नेत्याह । किं तर्हि ?

तेषां सहभुवो धर्माः प्राप्तिवर्ज्याश्च सर्वगाः[३] ॥

ये सर्वत्रगानुशयसहभुवो वेदनादयो धर्माः, जात्यादयश्च ते[(8)]ह्वि(ऽपि) सर्वत्रगास्तदेकफलत्वात् ॥

तेषां पुनरष्टानवतीनामनुशयानां कति सास्रवालम्बनाः कत्यनास्रवालम्बनाः ? तदारभ्यते—

[ 282 ] काङ्क्षामिथ्यादृगाभ्यां च मिश्राऽविद्याथ केवला ।
निरोधमार्गदृग्धेयाः षडेते निर्मलेविषयाः ॥[४]

निरोधमार्गदर्शनहेया मिथ्यादृष्टिविचिकित्सा तत्संप्रयुक्ता चाविद्या सहावेणि[(9)]क्याऽविद्या । इत्येते धातौ धातौ षडनुशया[५] अनास्रवालम्बनाः । शेषाः सास्रवालम्बनाः ॥

अथैते निर्मलालम्बना कति कत्युपरममालम्ब्यन्ते, कति भूमिप्रतिपक्षं च ? तदुच्यते—

[ 283 ] स्वभूमेरेव निर्वाणं मार्गस्त्वनवभूमिकः ।
तद्दृश्यनिश(प)योऽन्योऽन्यो हेतुत्वाद्धेतुभावतः ॥[६]

---

[१] Cf नवोर्ध्वालम्बना एषा दृष्टिद्वयविवर्जिता । *Ak* v 13ab

[२] The *Akb* here discusses one more point यश्च कामधातौ स्थितो ब्रह्माणि सत्त्वदृष्टिं नित्यदृष्टिं चोत्पादयति । तदा कथं सत्कायान्तग्राहदृष्टी विसभागधात्वालम्बने न भवतः ? *Akb* v 13ab

3 Cf प्राप्तिवर्ज्याः सहभुवो येऽप्येभिस्तेऽपि सर्वगाः । *Ak*. v 13cd
प्राप्तयस्तु नैवम् । अनेकफलत्वात् । *Akb* v 13cd

[४] Cf मिथ्यादृग्विमती ताभ्यां युक्ताऽविद्याऽथ केवला ।
निरोधमार्गदृग्घेया षडनास्रवगोचरा ॥ *Ak*. v 14

[५] त्रयो निरोधदर्शनप्रहातव्या अनास्रवालम्बना । एवं मार्गदर्शनप्रहातव्या अप्यत एव त्रय इति षट् । *Sakv* p 460

[६] Cf स्वभूम्युपरमो मार्गः षड्भूमिनवभूमिकः ।
तद्गोचराणां विषयो मार्गो ह्यन्योऽन्यहेतुकः ॥ *Ak*. v 15

द्विप्रकारा इत्येकादशानुशया धातौ धातौ स्वधातुभूमिसर्वत्रगा[1] ज्ञेयाः। सकलस्वधातुभूम्यालम्बनत्वात्[2]। एते च परिपिण्ड्य त्रयस्त्रिंशत्सर्वत्रगा भवन्ति ॥

एते पुनः सर्वत्रगाः

[ 279 ] द्रव्यतो दश चैकश्च नाम्ना सप्त तु ते मताः।

त्रिदृष्टामप्यविद्यानां द्वयोश्च वि(6)चिकित्सयोरेकत्वा(ना)मत्वात्।

अथ कस्माद्रागप्रतिघमाना न सर्वत्रगाः ?[3] तदुच्यते—

रागप्रतिघमानास्तु परिच्छेदप्रवर्तिणः(नः) ॥

एते खलु स्वलक्षणक्लेशाः[4] प्रतिक्लेशमनवयवं चालम्ब्योत्पद्यन्ते। तस्मान्न सर्वगाः ॥

विचिकित्सायास्तु

[ 280 ] प्रकारान्तरवर्तित्वात्सकृत्सर्वैस्वभूगतिः।
धात्वन्तरानालम्बित्वात्पूर्वोक्ता एव (7)सर्वगाः ॥

---

[1] सभागधातुसर्वत्रगा in *Akb* v 12.

[2] सकलस्वधात्वालम्बनत्वात् in *Akb* v 12.

यस्मादेते सकलं स्वधातुमालम्बन्ते तस्मात्सर्वत्रगा इत्युच्यन्ते। *Sakv* p 458

After this, the *Akb* deals with one more topic किमभियुगपदालम्बन्ते, आहोस्वित् क्रमश ? V infra, *Ad karikā* 278—9

[3] Cf सत्कायदर्शनेषु रागद्वेषमानवर्जानि सर्वत्रगाणि। तत्कस्य हेतो। तथा पञ्चा लम्बन[हेतु]त्वात्। *Aam* p 79

[4] Cf इत्येत एकादशानुशया सभागधातुसर्वत्रगा। 'सकलस्वधात्वालम्बनत्वात्। किमभियुगपदालम्बन्ते आहोस्वित् क्रमशः? यदि क्रमशः अयेषामपि प्रसङ्ग। अथ युगपत् न सकलेन कामधातुना युक्तिः अन्यप्रकारेण वा कारणत। सकलं नोच्यते सकलं युगपदालम्बन्त इति। अपि तु पञ्चप्रकारमपि सर्वं युगपत्। एवमपि यथा सत्कायदृष्टिस्तथा तृष्णा यथाधातुदृष्टी तत्र तत्रावना तत्र च मान इति तृष्णामानयोरपि सर्वत्रगत्व प्राप्नोति। 'स्वलक्षणक्लेशत्वात् न सामान्य क्लेशौ। तस्मान्न सर्वत्रगाविति वैभाषिका। *Akb* v 12

वैभाषिक इदानीं स्वपक्षं स्थापयति 'स्वलक्षणक्लेशत्वात् न सामान्यक्लेशौ भवत, तस्मान्न सर्वत्रगौ' इति। यथा सत्कायदृष्टिवत् तृष्णामानौ। न तु युगपत्सर्वस्मिन्। स्वलक्षण क्लेशत्वात्। एवदालम्बना हि तौ। तस्मान्न सर्वत्रगौ। न चैकसर्वत्रगौ तत्र यौ सत्कायदृष्टयालम्बनौ तौ सत्कायदृष्टी, परिगृह्णन्तौ भावनाहेयावपि सिद्धम्। *Sakv* p 459

[ 285 ] सर्वगोऽनुशयः कृत्स्नामनुशेते स्वधातुगः ।
स्वामालम्बनतो भूमिं स्वनिकायं त्वसर्वगः ॥[१]

द्विविधाः खलु सर्वगाः । स्वधातुभूमिसर्वगाः, वि(5)सभागधातुभूमिसर्वगाश्च । असर्वगा अपि द्विविधाः । सास्रवालम्बनाः, अनास्रवालम्बनाश्च । तत्र ते[२] येऽनुशयाः स्वधातुभूमिसर्वत्रगास्ते सकलामेव पञ्चप्रकारां स्वधातुभूमिमालम्बनतोऽनुशेरते । ये त्वसर्वत्रगाः सास्रवालम्बनास्ते स्वभूमौ स्वनिकायमालम्बनतोऽनुशेरते । दुःखदर्शन(न)प्रहातव्याः दु खदर्शन(न)(6)प्रहातव्यमेव निकायं यावद्भावनाप्रहातव्या भावनाप्रहातव्यमेवेति ॥

आलम्बनतश्च

[ 286 ] अस्वीकाराद्विपक्षत्वान्नोर्ध्वभूमार्गगोचरः ।[३]

आलम्बनतोऽनुशेरत इति वर्तते । किं कारणम् ? अन्यभूमिकस्यानास्रवस्य च वस्तुनः 'अस्वीकाराद्विपक्षत्वा'च्च । आत्मदृष्टितृष्णाभ्यां हि स्वीकृते वस्तुन्यनुशयोऽनुशयितुमुत्सहते । अना(7)स्रवे तु वस्तुन्यूर्ध्वभूमिक(के) च प्रवृत्तिरेव सत्कायदृष्टितृष्णयोर्नास्तीति ष(न) तत्रानुशेरते ।

संप्रयोगिनि(णि) तु स्वस्मिन्नहीने संप्रयोगतः ॥[४]

अनुशेरत इत्यधिकृतम् । यो येन धर्मेणानुशयः संप्रयुक्तः स तस्मिन्संप्रयोगिणि संप्रयोगतोऽनुशेरते यावदप्रहीणो भवतीति 'तु' शब्दो विशिनष्टि । त(8)तश्चेदमपि सिद्धं भवति—अनास्रवालम्बना विसभागधातुभूम्यालम्बनाश्च संप्रयोगत एवानुशेरते । सास्रवालम्बनाः स्वभूमावालम्बनतः संप्रयोगतश्चेति ॥

कुतः पुनरेतेऽनुशया उच्यन्ते ? तदुच्यते । प्रागाविष्कृतमेतत्प्रसङ्गागतं न तु सूत्रितमित(ति) । तदिदानीं सूत्रगतं प्रदर्श्यते ।

[ 287 ] धात्रीवत्समलन्यायैः खचराम्बुचरक्रमैः ।
ए(9)तेऽनुशेरते यस्मात्तस्मादनुशयाः स्मृताः ॥

---

[१] सर्वत्रगा अनुशया सकलामनुशेरते ।
स्वभूमिमालम्बनत स्वनिकायमसर्वगा ॥ *Ak.* v 17

[२] This ते is not required

[३] Cf नानास्रवोर्ध्वविषया अस्वीकाराद्विपक्षत । *Ak.* v 18 ab

[४] Cf. येन य सप्रयुक्तस्तु स तस्मिन्संप्रयोगत । *Ak* v 18 cd

स्वभूमिनिरोध एव निरोधालम्बनानां [V A, 4 Fol 106 b] (1)मिथ्यादृष्ट्यादीनामालम्बनम्। कामावचराणां कामावचरणि(नि)रोधः। एवं यावद्भवाग्रभूमिकानां भवाग्रस्यैव। मार्गालम्बनानां तु कामावचराणां सर्व एव स्वभूमिकाः क्लेशाः मार्ग आलम्बनम्। योऽप्यसौ रूपारूप्यप्रतिपक्षः, रूपारूप्यावचराणामप्यष्टभूमिकाणां(नां) मिथ्यादृष्ट्यादीनां नवभूमिकोऽन्वयज्ञानपक्ष्यो[1] मार्ग आल(2)म्बनः। किं पुनः कारणं मिथ्यादृष्ट्या निरोधः परिच्छिन्न आलम्ब्यते, न मार्गेण? तदुच्यते। 'हेतुत्वाद्धेतुभावतश्च।' मार्गो हि परस्परहेतुकः,[2] न तु निरोध इत्यस्ति विशेषः॥

अथ कस्माद्रागप्रतिघमाना दृष्टिशीलव्रतपरामर्शौ च नानास्रवालम्बना इष्यन्ते? तदापदिश्यते—

[284] न रागः शक्त्यहेतुत्वान्न द्वेषो[ऽ]नपराधतः।
न (3)मानोऽतिप्रशान्तत्वान्न भावत्वाद् द्वयोऽपराः॥[3]

तत्र रागस्तावदयदनास्रवालम्बनः स्यान्निर्वाणाभिलापप्रवृत्तत्वात्कुशलधर्मच्छन्दवत्, न योगिणा(नां) वर्जनीयः[4] स्यात्। द्वेषोऽप्यपकारवस्तुन्युत्पद्यते, मोक्षस्तु सर्वदुःखोपरमादुपकारी। मानोऽप्यप्रशान्तत्वादुन्नतिलक्षणः, निर्मलास्तु धर्मास्तदपघातिनः। परामर्शौ च यद्य(4)नास्रवालम्बनौ स्यातां सम्यग्दृष्टित्वं प्रतिपद्येयाताम्। तस्मात्पूर्वोक्ता एवानुशया निर्मलगोचराः॥

अथैतेषामष्टानवतेरनुशयानां कत्यालम्बनतोऽनुशेरते कति संप्रयोगतः?[5]

---

[1] अन्वयज्ञानपक्ष्य पुनर्नवभूमिक —अनागम्यध्यानान्तर चतुर्ध्यान-आकाशविज्ञानाकिञ्चन्यायतनभूमिक। स सर्व एव प्रथमध्यानभूमिकाना एषा त्रयाणामनुशयानामालम्बनम्। एव यावद् भवाग्रभूमिकानामिति। *Sakv* p 461

[2] Cf कस्मात्पुन स्वभूमिनिरोध एव तद्गोचरावलम्बनम, मार्गस्तु षड्भूमिकोऽपि नवभूमिकोऽपि वा तेषामालम्बनमित्यत्र हेतु दर्शयति। 'मार्गो ह्यन्योन्यहेतुक' इति। कथमन्योन्यहेतुक। षड्भूमिको धर्मज्ञानपक्ष्यो मार्गोऽधरभूमिकस्योर्ध्वभूमिकस्य वा समस्य विशिष्टस्य वा धर्मज्ञानपक्ष्यान्तरस्यान्वयज्ञानपक्ष्यस्यापि च मार्गस्य हेतुर्भवति। सोऽपि तस्यान्वयज्ञानपक्ष्य नवभूमिको योज्य। *Sakv* p 461 See *Akb* ii 52 cd

[3] Cf न रागस्तस्य वर्ज्यत्वान्न द्वेषोऽनपकारत।
न मानो न परामर्शौ शान्तशुद्धपथभावत। *Ak* v 16

[4] न वर्जनीय स्यादिति। न प्राप्तिच्छेदेन प्रहेय स्यादित्यर्थ। *Sakv* p 462

[5] य आलम्बनतोऽनुशेरते तत्रस्य सम्प्रयोगतोऽनुशेरते…। ये तु सम्प्रयोगत एवानुशेरते ते नालम्बनतोऽनास्रवविसभागभूम्यालम्बना अनुशया इति। *Ibid*

[ 292 ] चलत्वादूर्ध्ववृत्तित्वादव्यापित्वाद्यथाक्रमम् ।[1]

चला हि विचिकित्सा मतिद्वयार्थश्च (7)मूलार्थः । ऊर्ध्ववृत्तिरुन्नतलक्षणो मानः, अधोगमनवृत्तीनि च मूलानि । न चैतौ क्लेशौ षड्विज्ञानकायिकौ । तस्मादव्यापित्वाच्च मूलेषु व्यवस्थाप्येते ।

अव्याकृता[ः] तृष्णादृष्टिमानाविद्या इति बहिर्देशीयकाः, ध्यायिस्प्रोक्तेः ।[2] त्रयो हि ध्यायिनः—तृष्णादृष्टिमानोत्तरध्यायिभेदात् । सर्वे च तेऽविद्यावशाद्भवन्तीति चत्वार्य(8)व इति ।

एतच्च न ते । कस्मा[त्] ?

सूत्रस्यार्थापरिज्ञानादहेतुर्ध्यायिचोदनात् ॥ –

---

या काचिदव्याकृता तृष्णा अविद्या प्रज्ञा चानतो विपाकजाऽपि सर्वाऽसावव्याकृतमूलमिति काश्मीराः । *Akb* v 20 d.

'अव्याकृतमूलानि' इति । अनेनाव्याकृतशब्देन केवलं तृष्णाऽविद्यामनयो विशेषिता इति दर्शयति । अत्र च मतिरक्लेशस्वभावाप्यव्याकृतमूलमितीष्यते वैभाषिकैः । 'या काचिदव्याकृता तृष्णा' इति । आस्वादनासम्प्रयुक्तायां ध्यानाम्ब्येपूपपत्तिकाले वा विमानादिषु सम्भवन्त । या काचिदविद्या रूपारूप्यधात्वोः कामधातौ च सत्कायान्तग्राहदृष्टिसम्प्रयोगिणीति । एवं प्रज्ञा च या काचिदव्याकृता । अन्तता विपाकजाऽपि । कामधातौ विपाकजैर्यापथिकशैल्पस्थानिकनिर्माणचित्तसम्प्रयुक्ता सत्कायान्तग्राहदृष्टिसम्प्रयुक्ता च रूपारूप्यधात्वोः सर्वक्लेशसम्प्रयुक्ता प्रज्ञा । *Sakv* p 464

१ Cf द्वयोर्ध्ववृत्तेर्नातोऽन्यौ । *Ak.* v 21 a

२ Cf चत्वार्येवेति बाह्यकाः ।

तृष्णादृङ्मानमोहास्ते ध्यायित्रित्वादविद्यया ॥ *Ak.* v 21 bcd

बाह्यकास्तु चत्वार्यव्याकृतमूलानीच्छन्ति—अव्याकृता तृष्णा दृष्टिर्मानोऽविद्या च ।… यस्मात् त्रयो ध्यायिनः, तृष्णादृष्टिमानोत्तरध्यायिनः । ते चाविद्यावशाद्भवन्तीति । *Akb* v 21 —

'अव्याकृता तृष्णा' इति । रूपारूप्यधात्वोः । दृष्टिरपि तयोश्च कामधातौ च सत्कायान्तग्राहदृष्टिस्वभावा । अविद्याऽपि कामधातौ तत्सम्प्रयोगिण्येव । रूपारूप्यधात्वोश्च सर्वा । 'तृष्णादृष्टिमानोत्तरध्यायिन' इति । य आस्वादनासम्प्रयुक्तध्यानध्यायी स तृष्णोत्तरध्यायी । यो ध्याननिश्रयेण शाश्वतादि दृष्टिमुत्पादयति । स दृष्ट्युत्तरध्यायी । मानोत्तरध्यायी च । यस्तेन मन्यते लाभ्यहमस्य ध्यानस्य नान्ये इति स मानोत्तरध्यायी ।… ते चाविद्यावशाद्भवन्तीति ते च त्रयो ध्यायिनोऽविद्यावशादविद्यायोगात्तथा भवन्ति । अतोऽविद्याप्यव्याकृतमूलमिति । समापत्तिसमापन्नाना च एता बहिःसमुदाचारवश्या अव्याकृतानां धर्माणां मूलं कारणमिति । *Sakv* p 464.

Cf. तस्य कतमा झायी ? अत्थि "दिट्ठुत्तरो झायी, तण्हुत्तरो झायी, पञ्ञुत्तरो झायी ति । *Nett.* p 76 See *Vbh* p. 342

'सर्वेऽपि (4)निवृताव्याकृता मला ।'[1] समाधिसमापत्त्युपहतत्वा[त्] न शक्नुवन्ति निवर्तयितुम् । कुशलास्तु धर्मा अव्याबाधफलत्वाद्विपाकं जनयितुमुत्सहन्ते ॥

[ 290 ] कामेष्वकुशलाः शेषाः[2]

सत्कायान्तग्राहदृष्टितत्संप्रयुक्ताऽविद्यावर्जिता क्लेशा कामधातावकुशला, सव्याबाधफलनिर्वर्तकत्वात् ।

एष्व पुन कत्यकुशलमूलानि कति नेति ? तदु(5)च्यते—

रागद्वेषतमास्यतः ।
त्रीण्येनाशुभमूलानि पञ्चकारणयोगतः ॥[3]

ये धर्मा अकुशलाश्चाकुशलमूलं च दर्शनभावनाहेयाश्च पञ्चप्रकाराश्च[4] षड्विज्ञानकायिकाश्च[5] त एवाकुशलमूलानीत्युच्यन्ते ॥[6]

किं पुनर्यथा[ऽ]कुशल(लानि) अनुशयाना मूलानि सन्त्येवमव्याकृतानामपि सन्तीति ? आह—

[ 291 ] अव्याकृतद्वयस्यापि त्रीणि मूलानि तत्समाः ।
(6)अविद्या धीश्च तृष्णा च न काङ्क्षामानदृष्टयः ॥

"त्रीणि खल्वव्याकृतमूलानि, अव्याकृताऽविद्या तृष्णा प्रज्ञा" इति काश्मीरा ।[7] हेत्वर्थो हि मूलार्थं । अनिवृताव्याकृता च प्रज्ञा हेतुत्वेन वर्तत इत्यसावप्यव्याकृतमूलम् । विचिकित्सा नाव्याकृतमूलम् । न च मान ॥

[1] रूपारूप्यावचरास्तावत्सर्व एवाव्याकृता । किं कारणम् । क्लिष्टानां धर्माणां दुःखविपाकः स्यात् न च तयोरस्ति परव्याबाधहेत्वभावात् । *Akb* v 16 a

[2] Cf शेषास्त्विहाशुभाः । *Ak* v 19 d

[3] Cf कामेऽकुशलमूलानि रागप्रतिघमूढयः । त्रीण्यकुशलमूलानि । *Ak* v 20 abc.
See *Dhs* 1058—1061

[4] दुःखसमुदयनिरोधमार्गदर्शनहेया भावनाहेयाश्च ।

[5] चक्षुःश्रोत्रघ्राणजिह्वाकायमनोविज्ञानकायाः ।

[6] कामधातौ सर्वरागः प्रतिघः सर्वो मानश्च यथा सत्कायान्तग्राहदृष्टिसंप्रयुक्ता यथाक्रमम् । यदि अकुशलं यावदकुशलस्य च मूलं तच्चाकुशलमूलमिष्टम् । *Akb* v 20 bc
See *Dhs* 1062 1070

[7] Cf तृष्णाविद्या मतिश्च ताः । *Ak* v 20 d

कानि पुनस्तानि चत्वारि व्याकरणानि ? काश्च ताश्चतस्रः स्थितयः ? तदवद्योत्यते—

[ 294 ] एकांशाख्यं विभज्याख्यं पृच्छाख्यं स्थाप्यमेव च ।
मरणप्रसवोत्कर्षजीवद्रव्यान्यतादिवत् ॥[१]

[२]तत्रैकांशव्याकरणम्[३]—कि (किं) यः कश्चिज्जायते सर्वोसौ मृ(म्रि)यते ? ओमिति वाच्यम् । अथ यः कश्चिन्म्रियते सर्वोसौ जायत इति ? विभज्य व्याकर्तव्यम्[४]—क्षीणास्रवो न (2)जायतेऽन्यः सर्वो जायते । किं मनुष्यो विशिष्टोऽथ हीन इति ? परिपृच्छ्य व्याकर्तव्यम्[५]—कानधिकृत्य पृच्छसि ? देवास्तिर्यगादीन्वा ? यदि देवानारभ्य हीन इति वाच्यम् । अथ तिरश्चः श्रेष्ठ इति व्याकर्तव्यम् । किमन्यः स्कन्धेभ्यः पुरुषो वाऽनन्य इति ? एष प्रश्नः स्थापनीयः[२], सदसतोरन्यानन्यत्वव्याकरणायोगात्[६], खपुष्पसौगन्ध्यदौर्गन्ध्यव्या(3)करणवत् ॥[*]

---

[१] Cf एकांशतो व्याकरण विभज्य परिपृच्छ्य च ।
स्थाप्य च मरणोत्पत्तिविशिष्टात्मान्यतादिवत ॥ *Ak* v 22

Also cf चत्तारो पञ्हव्याकरणा । एकंसव्याकरणीयो पञ्हो, विभज्ज व्याकरणीयो पञ्हो पटिपुच्छा व्याकरणीयो पञ्हो, ठपनीयो पञ्हो । *Digha* xxxiii 1 11

एकंसवचन एक विभज्जवचन पर ।
ततिय पटिपुच्छेय्य चतुत्थ पन ठापय ॥ *Ang* ii p 46

[२] [२] This whole passage ( upto एष प्रश्न स्थापनीय ) is almost identical with *Akb* v 22 The *Akb* begins —कि सर्वसत्वा मरिष्यन्तीत्येकांशेन व्याकर्तव्य मरिष्यन्तीति ।

[३] Cf एकंसिका पि खो पोट्ठपाद, मया धम्मा देसिता अनेकंसिका पि । *Digha* ix 33 Also cf न खोत्थ सारिपुत्त सुकर एकंसेन व्याकातु । *Ang* i p 120

[४] Cf विभज्जवादो खो अहमेत्थ माणव, नाहमेत्थ एकंसवादो । *M sutta* 99

[५] पञ्चविधा हि पुच्छा—अदिट्ठजोतना पुच्छा दिट्ठसंसन्दना पुच्छा, विमतिच्छेदना पुच्छा, अनुमतिपुच्छा कथेतुकम्यता पुच्छा । *Dhs A* iii 3

[६] *Akb* has सत्वद्रव्यस्याभावात वन्ध्यापुत्रस्यामणोरतादिवत ।

[*] The Kośakara gives three other illustrations (of the four *prashna-vyakaranas*) according to Bhadanta Rama, the Abhidharmikas and the Mahāsanghikas See *Sakv* pp 465-7

Cf अस्ति प्रश्न एकान्तवचनीय सर्वो जातो मरिष्यति । ॐ भो इति । अथ सर्वे मृत्वा जनिष्यन्त इति विभज्य वचनीयमेतत् । प्रमुदितस्याति क्षीणतृष्ण कुशलो न जनिष्यते इतरस्तु जनिष्यते । तथा मनुष्यजाति श्रयसी वा न श्रयसी ? इत्यत्र परिपृष्टे

न खल्वेषा ध्यायिनिस्वचोदनाऽव्याकृतमूलनिर्देशपरा (रा)। किं पर्या तर्ह्येषा (षा)? योगिना त्रिपत्तिध्यानाधिमोक्षव्यावृत्तिपरेति पूर्वोक्रमेन साधु ॥[1]

अथ यानि सूत्रे चतुर्दशाव्याकृतवस्तून्युक्तानि,[2] किं तानि कुशलाकुशल पक्षाव्याकरणादव्याकृ(?)तवस्तूनि ?[3] नेत्याह। किं तर्हि? स्थापनी यत्वात्।

[ 293 ] प्रश्नव्याकरणान्याख्यच्चत्वारि वदतां वरः।
शिष्यानां(णा) वादशिक्षार्थं स्थितीना च चतुष्टयीम् ॥

त्रीणि खलु कथावस्तून्यारभ्य[4] चत्वारि व्याकरणान्यवबुध्य[5] चतस्रश्च स्थितीरवगम्य[6] विगृह्य सभाया पञ्चभिरवयवै.[7] स्वपक्ष प्रतिष्ठाप्य वाद करणीयो नातोऽन्यथा इत्यत्र वि[V A, 5 Fol 107 b ](1)निश्चयात् ॥

[1] The Kośakara does not disapprove the view of the Bahirdeśiyaka See *LVPAk* v p 43 n 1 2

[2] शाश्वतो लोक अशाश्वतो लोक इत्यवमादि। *Sakv* p 465 See *M sutta* 63

[3] अव्याकृतसवचन पयनुयुक्ते। *Sakv* p 465 For an allied controversy on the *drishtis* being *avyakrita* see *Kv* xiv 8—इदानि अव्याकतकथा नाम होति। तत्थ विपाकरिरियरूपनिब्बानमखात चतुब्बिध अब्याकतत्ता अव्याकत ति वुत्त। दिट्ठिगत सस्सतो लोकोति खो वच्छ अव्याकतमेत ति सस्सनादिभावेन अकथितत्ता। यम पन इम विभाग अग्गहेत्वा पुरिमाब्याकत विय दिट्ठिगत पि अब्याकत ति लद्धि सेय्यथापि अन्धकानञ्च उत्तरा पथकानञ्च। *Kv A* xiv 8

[4] Cf तीणिमानि भिक्खवे कथावत्थूनि। कतमानि तीणि? अतीत वा भिक्खवे अद्धान आरब्भ कथ कथेय्य—एव अहोसि अतीतमद्धान ति। अनागत वा एव भविस्सति अनागत मद्धान ति। एतरहि वा भिक्खवे पच्चुप्पन्न एव एतरहि पच्चुप्पन्न ति। *Ang* I p 197

Also cf अहञ्च न गामणि अतीत अद्धान आरब्भ दुक्खस्स समुदयञ्च अत्थ गमञ्च देसेय्य अनागतमद्धान आरब्भ देसेय्य, अपि चाहं इधेव निसिन्नो एत्थ च त निसिन्नस्स दुक्खस्स समुदयञ्च अत्थगमञ्च देसिस्सामि। *S* IV p 327

See *Addhana katha Kv* xv 3

[5] V infra, *Ad karikā* 294

[6] V infra. *Ad karika* 295

[7] The five *avayavas* probably refer to *pratijña, hetu drishtanta upanaya* and *nigamana* The *Asm* deals with various aspects of *vāda*, viz, *vāda vinischaya vāda-adhishthāna, vādalamkāra vada nigraha* and *vāda nihsarana* वादाधिष्ठान यदधिष्ठाय वाद क्रियत। तत्पुनो द्विविधम। साध्य साधन च। साध्य द्विविधम्। स्वभावा विशेषश्च। साधनानि अष्टौ। प्रतिज्ञा हेतु दृष्टान्त उपनय निगमनं प्रत्यक्षं अनुमानं आप्तागमश्च। *Asm* p 105 The *Akb* does not refer to the *pañcha avayavas* of *vāda* For the *attha mukha-vāda* of the *Kathā atthu* see *Points of Controversy* Prefatory notes pp xlviii and *Dhs A* 1 6

कश्चिद्धि वादी स्थानास्थाने संभवासंभवाख्ये संतिष्ठते कश्चिन्न संतिष्ठते। प्रथमः कथ्यः(थ्यः), द्वितीयस्त्वकथ्यः। परिकल्पे संतिष्ठते, यः परिकल्पिते दृष्टान्ते दार्ष्टान्तिकार्थं(र्थे) प्रसाधके संतिष्ठते, स च कथ्यो यो न सन्तिष्ठते सोऽकथ्यः। (4)एवं प्रतिपदि ज्ञानवादितायां यः सन्तिष्ठते स कथ्यते। यस्तु न संतिष्ठते स दुर्मतिरकथ्यते।

इदमिदानीं वक्तव्यम्। अथ केनानुशयेन कस्मिन्वस्तुनि संयुक्तः ?[1] तत्र तावद्वस्तु क्षेत्रवस्त्वादिपञ्चप्रकारम्।[2] तदिह संयोगवस्त्वधिकृतं वेदितव्यम्। त[द्] द्विविधमाश्रयालम्बननैयम्येन प्रकारनैयम्येन च।

तत्राश्रयालम्बननैयम्येन ता(5)वच्चक्षुर्विज्ञानकायिकैरनुशयैः, रूपेष्वालम्बनतः संयुक्तः। तत्संप्रयुक्तेषु संप्रयोगतः। ते च मनोधर्मायतने। एवं यावत्कायविज्ञानिकैर्यथाविषयमालम्बनतः, तत्संप्रयुक्तेषु संप्रयोगतः। मनोविज्ञानकायिकैर्द्वादशस्वायतनेष्वालम्बनतः। संप्रयुक्तेषु संप्रयोगतः। इत्याश्रयालम्बननियमः।

प्रकार(6)नैयम्येन तु दुःखदर्शनप्रहातव्यैः सर्वत्रगैः पञ्चसु निकायेष्वालम्बनतः संयुक्तः। तत्संप्रयुक्तेषु संप्रयोगतः। असर्वत्रगैस्तु स्वनैकायिकेष्वालम्बनतः। संप्रयुक्तेषु संप्रयोगतः[3]। इत्येवं सर्वत्र यथासंभवं वक्तव्यम्॥

अथेदानीमतीतानागतप्रत्युत्पन्ननैयम्येन[4] कः पुद्गलः कस्मिन्वस्तुनि कतमेनानुशयेण(न) सं(7)युक्तः ? तदिदमुद्भाव्यते—

---

[1] Cf. यस्य पुद्गलस्य योऽनुशयो यस्मिन्नालम्बने अनुशेते स तेन तस्मिन् सम्प्रयुक्त.। इद तु वक्तव्यम्। अतीते न कस्मिन् यावत् प्रत्युत्पन्ने न कस्मिन्निति ?…*Akb*. v. 22.

See *Jpl* p 19 and *Yogasūtra*, IV. 11.

[2] पञ्चविधवस्तु। स्वभाववस्तु। यथोक्त—"यद्वस्तु प्रतिलब्ध समन्वागमत. स तेन वस्तुना" इति। आलम्बनवस्तु। यथोक्त—"सर्वधर्मज्ञेया ज्ञानेन यथावस्थिति"। संयोगवस्तु। यथोक्त—"यस्मिन् वस्तुनि अनुनय संयोजनेन सप्रयुक्त प्रतिघसयोजनेनापि तस्मिन्" इति। हेतुवस्तु। यथोक्त—"सवस्तुका. धर्मा कतमे ? सस्कृता धर्मा." इति। परिग्रहवस्तु। यथोक्त—"क्षेत्रगृहवस्तु" इति। *Akb*. II 55. See *Sakv*. pp. 21-22.

[3] See *Asm*. pp. 33, 44 and 51.

[4] कथमतीत कत्यतीतानि किमर्थमतीतपरीक्षा। उत्पन्ननिरुद्धलक्षणतोऽपि हेतुफलोपयोगतोऽपि सक्लेशव्यवदानपारिम्पर्यसमतिशान्तितोऽपि हेतुपरिग्रहविनाशतोऽपि फलस्वलक्षणभावाभावनोऽपि स्मरणवलम्बननिमित्ततोऽपि अपेक्षाणक्लेशनिमित्ततोऽपि उपेक्षाव्यवदाननिमित्ततोऽपि अतीत द्रष्टव्यम्। सर्वधर्मैकदेश.। प्रवर्तकात्माभिनिवेशत्याजनार्थम्।

कथमनागतं…। हेतौ सत्यनुत्पन्नतोऽपि अलब्धस्वलक्षणतोऽपि हेतुफलानुपयोगतोऽपि

स्थितयश्चतस्रो निर्दिश्यन्ते ।[१]

[ 295 ] स्थानवादित्वसंज्ञैका परिकल्पाह्वया परा ।
अन्या प्रतिपदाख्याऽन्या ज्ञानवादित्वसंज्ञिता ॥[२]

---

विभज्य वचनीय प्रश्न, पशूनुद्दिश्य श्रेयसी, देवान् ऋषींश्चाधिकृत्य नेति । अथ त्ववचनीय प्रश्न. ससारोऽयमन्तवानथानन्त इति ? कुशलस्यास्ति ससारक्रमपरिसमाप्तिर्नेतरस्येति अन्यतरावधारणे दोष ।··· *Yoga bhāshya*, iv. 33

The *Milinda pañho* gives a different illustration of these ofur *vyākaranas* चत्तारिमानि महाराज पञ्हव्याकरणानि । कतमानि चत्तारि···। कतमो च महाराज एकसब्याकरणीयो पञ्हो ? रूप···पे···विञ्ञाण अनिच्च ति एकसब्याकरणीयो पञ्हो । कतमो विभज्जब्याकरणीयो पञ्हो ? अनिच्च पन रूप···पे···विञ्ञाण ति···अय विभज्जब्याकरणीयो पञ्हो । कतमो पटिपुच्छाब्याकरणीयो पञ्हो ? किं नु खो चक्खुना सब्ब विजानातीति अय पटिपुच्छाब्याकरणीयो पञ्हो । कतमो ठपनीयो पञ्हो ? सस्सतो लोको ति···नेव होति न नहोति तथागतो पर मरणा ति ठपनीयो पञ्हो ।·· किं कारणा ठपनीयो ? न तस्स दीपनाय हेतु वा कारण वा अत्थि । *Milinda*, p. 147.

१ These are not given in *Akb* See *sānkathya parichchheda*, *Asm.* pp. 102—107.

२ Cf. कथासम्पयोगेन भिक्खवे पुग्गलो वेदितब्बो यदि वा कच्छो यदि वा अकच्छो ति ।

सचाय भिक्खवे पुग्गलो पञ्ह पुट्ठो समानो ठानट्ठाने न सण्ठाति, परिकप्पे न सण्ठाति, अञ्ञावादे न सण्ठाति, पटिपदाय न सण्ठाति, एव सन्ताय पुग्गलो अकच्छो होति ! *Ang* iii p 197

अकच्छो ति कथेतु न युत्तो ।···ठानट्ठाने न सण्ठातीति कारणाकारणे न सण्ठाति, तत्राय नयो—सस्सतवादी युत्तेन कारणेन पहोति उच्छेदवादिं निग्गण्हातु, उच्छेदवादी तेन निगण्हियमानो क पनाह उच्छेद वदामीति सस्सतवादिभावमेव दीपेति अत्तनो वादे पतिट्ठातु न सक्कोति; एव उच्छेदवादिम्हि पहोन्ते सस्सतवादी, पुग्गलवादिम्हि पहोन्ते सुञ्ञतवादी ·· न सण्ठाति नाम ।

परिकप्पे न सण्ठातीति इद पञ्हपुच्छनेपि पञ्हकथनेपि लब्भति । कथ ? एकच्चो हि पञ्हं पुच्छिस्सामीति कण्ठ सोधेति सो इतरेन इद नाम त्व पुच्छिस्ससीति वुत्तो ञातभाव ञत्वा न एत, अञ्ञ पुच्छिस्सामीति वदति, एव परिकप्पे सण्ठाति नाम ।

अञ्ञावादे न सण्ठातीति ञातवादे जानितवादे न सण्ठाति । कथ ? एकच्चो पञ्हं पुच्छति त इतरो 'मनापो तया पञ्हो पुच्छितो कह ते एस उग्गहितो'ति वदति । इतरो पुच्छितस्सनियमेनेव पञ्ह पुच्छित्वापि तस्स कथाय अपञ्ह नु खो पुच्छित ति विमतिं करोति···

पटिपदाय न सण्ठातीति पटिपत्तिय न तिट्ठति, वत्त अजानित्वा अपुच्छितट्ठाने पुच्छतीति अत्थो । *Ang A.* ii. pp 308-311.

कश्चिद्धि वादी स्थानास्थाने संभवासंभवाख्ये संतिष्ठते कश्चिन्न संतिष्ठते। प्रथमः कत्थ्यः(थ्यः), द्वितीयस्त्वकथ्यः। परिकल्पे संतिष्ठते, यः परिकल्पिते दृष्टान्ते दार्ष्टान्तिकार्थ(र्थे) प्रसाधके संतिष्ठते, स च कथ्यो यो न सन्तिष्ठते सोऽकथ्यः। (4)एवं प्रतिपदि ज्ञानवादितायां यः सन्तिष्ठते स कथ्यते। यस्तु न संतिष्ठते स दुर्मतिरकथ्यते।

इदमिदानीं वक्तव्यम्। अथ केनानुशयेन कस्मिन्वस्तुनि संयुक्तः?[1] तत्र तावद्वस्तु क्षेत्रवस्त्वादिपञ्चप्रकारम्।[2] तदिह संयोगवस्त्वधिकृतं वेदितव्यम्। त[द्] द्विविधमाश्रयालम्बननैयम्येन प्रकारनैयम्येन च।

तत्राश्रयालम्बननैयम्येन ता(5)वच्चक्षुर्विज्ञानकायिकैरनुशयैः, रूपेष्वालम्बनतः संयुक्तः। तत्संप्रयुक्तेषु संप्रयोगतः। ते च मनोधर्मायतने। एवं यावत्कायविज्ञानिकैर्यथाविषयमालम्बनतः, तत्संप्रयुक्तेषु संप्रयोगतः। मनोविज्ञानकायिकैर्द्वादशस्वायतनेष्वालम्बनतः। संप्रयुक्तेषु संप्रयोगतः। इत्याश्रयालम्बननियमः।

प्रकार(6)नैयम्येन तु दुःखदर्शनप्रहातव्यैः सर्वत्रगैः पञ्चसु निकायेष्वालम्बनतः संयुक्तः। तत्संप्रयुक्तेषु संप्रयोगतः। असर्वत्रगैस्तु स्वनैकायिकेष्वालम्बनतः। संप्रयुक्तेषु संप्रयोगतः[3]। इत्येवं सर्वत्र यथासंभवं वक्तव्यम्॥

अथेदानीमतीतानागतप्रत्युत्पन्ननैयम्येन[4] कः पुद्गलः कस्मिन्वस्तुनि कतमेनानुशयेण(न) सं(7)युक्तः? तदिदमुद्भाव्यते—

---

[1] Cf. यस्य पुद्गलस्य योऽनुनयो यस्मिन्नालम्बने अनुशेते स तेन तस्मिन् सम्प्रयुक्तः। इद तु वक्तव्यम्। अतीते न कस्मिन् यावत् प्रत्युत्पन्ने न कस्मिन्निति ?···*Akb.* v. 22.

See *Jpt* p 19 and *Yogasūtra*, IV. 11.

[2] पञ्चविधवस्तु। स्वभाववस्तु। यथोक्त—"यद्वस्तु प्रतिलब्ध समन्वागमत स तेन वस्तुना" इति। आलम्बनवस्तु। यथोक्त—"सर्वधर्मज्ञेया ज्ञानेन यथावस्त्विति"। संयोगवस्तु। यथोक्त—"यस्मिन् वस्तुनि अनुनयः संयोजनेन सप्रयुक्त प्रतिघसयोजनेनापि तस्मिन्" इति। हेतुवस्तु। यथोक्त—"सवस्तुका. धर्मा. कतमे ? सस्कृता धर्मा." इति। परिग्रहवस्तु। यथोक्त—"क्षेत्रगृहवस्तु" इति। *Akb.* II 55. See *Sakv.* pp. 21-22.

[3] See *Asm.* pp. 33, 44 and 51.

[4] अयमतीतं यत्यतीतानि विमर्शमतीतपरीक्षा। उत्पन्ननिरुद्धलक्षणतोऽपि हेतुफलोपयोगतोऽपि सक्लेशव्यवदानकारित्रसमनिक्रान्तितोऽपि हेतुपरिग्रहविनाशतोऽपि फलस्वलक्षणभावाभावतोऽपि स्मरणालम्बननिमित्ततोऽपि अपेक्षासक्लेशनिमित्ततोऽपि उपेक्षाव्यवदाननिमित्ततोऽपि अतीत द्रष्टव्यम्। सर्वेषामेकदेश.। प्रवर्तकात्माभिनिवेशत्याजनार्थम्।

अयमनागतं···। हेतौ सत्यनुत्पन्नतोऽपि अलब्धस्वलक्षणतोऽपि हेतुफलानुपयोगतोऽपि

[ 297 ] अजातैर्मानो(न)सैरेतैः सर्वत्रान्यैः स्वकाध्विकैः ।
सर्वत्राजैस्तथा शेषैः संयुक्ता स्कन्धसन्ततिः ॥[१]

यथा प्रहीणा इति वर्तत(ते)। यस्य खलु योऽतीतः क्लेशप्रकारः प्रहीणोऽनागतोऽपि। अतो ये मानरागादयो नागता न प्रहीणास्तैः सर्वस्मिन्नै(१)यध्विके वस्तुनि संयुक्तः। तदालम्बनानामुत्पत्तिसंभवान्मानसानां च त्रैयध्वविषयत्वात्। अतोऽन्यै रागादिभिरनागतैरणा(ना)गत एव वस्तुनि संयुक्तोऽतीतैरतीत एव प्रत्युत्पन्नैः प्रत्युत्पन्न एव। मानसेभ्यो ह्यन्ये पञ्चविज्ञानकायिकाः। ततः सिद्धं भवत्यतीतप्रत्युत्पन्नैरपि मानसैरस्वाध्विकेऽपि वस्तुन्यप्रहीणैः सं[V. B, 6. Fol. 108 a][(1)]युक्तः स्यान्न च केवलं मानसैरेवानागतैरेभिः सर्वत्र। किं तर्हि? पञ्चविज्ञानकायिकैरपि। अनुत्पत्तिधर्मिकैस्तु पञ्चविज्ञानकायिकैः सर्वत्र त्रैयध्विकैर्वस्तुनि संयुक्तः, तद्विषयस्यातीतानागतप्रत्युत्पन्नत्वात्।[२] सामान्यक्लेशैस्तु दृष्टिविचिकित्साऽविद्याख्यैस्त्रैयध्विकैरपि सर्वस्मिंस्त्रैयध्विके वस्तुनि संयुक्तः, तेषां सामान्य[(2)]क्लेशत्वाद्यावदप्रहीणा इत्यनुवर्तते।

कथं पुनर्गम्यतेऽतीतादिषु वस्तुषु रागादय उत्पद्यन्ते तैश्च तत्र संयुक्तो भवतीति? सूत्रादेव हि। भगवतोक्तम्—"त्रयश्छन्दरागस्थानीया धर्माः। अतीताश्छन्दरागस्थानीया धर्माः, अनागतप्रत्युत्पन्नाः। अतीतांश्छन्दरागस्थानीयान्धर्मान्प्रतीत्योत्पद्यते च्छन्दः। उत्पन्ने च्छन्दे संप्रयुक्तस्तैर्धर्मै[(3)]-

---

क्लेशाश्च दृष्टिविचिकित्साऽविद्या। *Akb* v. 22.—'स्वलक्षणक्लेशाश्च' इति स्वलक्षणं सुखवेदनीयादि वस्तु। तत्र रागः सुखवेदनीयमेव वस्त्वालम्ब्योत्पद्यत इति स्वलक्षणक्लेश इत्युच्यते। तेन सुखवेदनीयेन वस्तुनालम्ब्यमानेनोन्नतिर्भवतीति मानोऽपि स्वलक्षणक्लेशः। तथा दुःखवेदनीयं वस्त्वालम्ब्य प्रतिघ उत्पद्यत इति प्रतिघोऽपि स्वलक्षणक्लेश इत्युच्यते। 'सामान्यक्लेशाश्च दृष्टिविचिकित्सादयः' सामान्याः सामान्येन वा क्लेशाः सामान्यक्लेशाः। एते ह्यविशेषेण सुखवेदनीयादिके वस्तुन्युत्पद्यन्त इति। अतस्तदालम्ब्योत्पन्ना सामान्यक्लेशा इत्युच्यन्ते। *Sakv* p. 467. V. supra, p. 240, n. 4

१ Cf. सर्वत्रानागतैरेभिर्मानसैः स्वाधिके परैः।
अजैः सर्वत्र दोषैस्तु सर्वैः सर्वत्र सयुतः ॥ *Ak.* v. 24.

२ 'तैरनुत्पत्तिधर्मिभिः सर्वत्र वस्तुनि त्रैयध्विके संयुक्तः।' एते ह्यनुत्पत्तिधर्मिणोऽनागत एवाध्वन्यवतिष्ठन्ते। एषां चालम्बनानि प्रचरन्ति। समप्रयोगा हि क्लेशाः पुनश्चालादनुत्पत्तिधर्मिणो विषयाभिमुखा एवावतिष्ठन्ते। तथा ह्यनुत्पत्तिधर्मिणो नैवालम्बनमालम्ब्योत्पद्यन्त इति। अत्र केषाञ्चिदालम्बनमतीतम्। केषाञ्चिद्वर्तमानम्। केषाञ्चिदनागतं भवति। न ह्यालम्बनानुत्पत्तित एव तेषामनुत्पत्तिः। किं तर्हि? प्रत्ययवैकल्यात्। असत्याफलं हि सामर्थ्यं न द्रव्यफलमिति सिद्धान्तः। *Sakv.* p. 468.

र्वक्तव्यो न विसंयुक्तः।"[१] तथा—"यस्मिन् रूपेऽतीतानागतप्रत्युत्पन्ने उत्प धतेऽनुनयो वा प्रतिघो वा।"[२] इत्येवमादि।

कः पुनरत्र संयुज्यते ? यदा शून्याः[३] सर्वसंस्काराः, नित्येन ध्रुवेन(ण) शाश्वतेनाविपरिणामधर्म(र्मे)णात्मनाऽत्मीयेन[४] वा ? तथोक्तम्—"अस्ति कर्मास्ति विपाकः कारकस्तु नोपलभ्यते य इमांश्च स्कन्धान् प्रतिनिक्षिप्यान्यान् स्कन्धान् प्रति(4)संदधातीत्यन्यत्र धर्मसंकेतात्"[५] इति विस्तरः।

---

[१] The Sarvāstivādin quotes a similar *āgama* against the Sthaviravādin

न वत्तब्ब 'अतीत अत्थि अनागत अत्थी' ति ? आमन्ता।

ननु वुत्त भगवता—"य किञ्चि भिक्खवे रूप अतीतानागतपच्चुप्पन्नं···या काचि वेदना·· विञ्ञाण···अय वुच्चति विञ्ञाणक्खन्धोति।" [*S* III. p 47.] अत्थेव सुत्तन्तो ति ?···तेन हि अतीत अत्थि अनागत अत्थी ति। *Kv.* I 1.

Cf अतीतानागत स्वरूपतोऽस्त्यध्वभेदाद्धर्माणाम्।

नास्त्यसत सम्भव। न चास्ति सतो विनाश इति द्रव्यत्वेन सम्भवन्त्य कथ निवर्तिष्यन्ते वासना इति। अतीतानागत स्वरूपतोऽस्त्यध्वभेदाद्धर्माणाम्। भविष्यद्व्यक्तिकमनागतम्। अनुभूतव्यक्तिकमतीतम्। स्वव्यापारोपरूढ वर्तमानम्। त्रय चैतद्वस्तु ज्ञानस्य ज्ञेयम्। यदि चैतत्स्वरूपतो नाभविष्यन्नेद निर्विषय ज्ञानमुदपत्स्यत तस्मादतीतानागत स्वरूपतोऽस्तीति। *Yoga bhāshya,* IV 12

[२] Cf. "पपञ्चेति अतीतानागतपच्चुप्पन्न चक्खुविञ्ञेय्य रूपमारब्भ···" Quoted in *Netti*, p 38.

[३] 'सुञ्ञो लोको सुञ्ञो लोको ति भन्ते वुच्चति। कित्तावता नु खो भन्ते सुञ्ञो लोको ति वुच्चती ति ?' 'यस्मा खो आनन्द सुञ्ञ अत्तेन वा अत्तनियेन वा तस्मा सुञ्ञो लोको ति वुच्चति।···*S* IV. p. 54

···परमत्थेन हि सब्बानेव सच्चानि वेदक कारक निब्बुत-गमकाभावतो सुञ्ञानी ति वेदितब्बानि। *Vm.* XVI. 90.

शून्यतालक्षण कतमत्। तेषु तस्य अभावः। तेषु अभाव कतम। स्कन्धधात्वायतनेषु नित्यध्रुवकूटस्थाविपरिणामधर्मात्मात्मीयाभाव। अनेन नयेन तेषा शून्यता। *Asm* p. 40

[४] अनात्मलक्षण कतमत्। यथाऽऽत्मवादे स्थितस्य आत्मलक्षणस्य स्कन्धधात्वायतनेषु तल्लक्षणस्याभाव। स्कन्धधात्वायतनेषु आत्मलक्षणाभावतामुपादाय। इदमुच्यते अनात्मलक्षणम्। एतदभिसधायोक्त भगवता सर्वे धर्मा अनात्मन इति। *Ibid*

[५] See *LVPAk.* V p 59, n 3 Quoted in *Akb.* III 18a, *B Pañjikā,* IX. 73, *Ts Pañjikā*, p. 11.

Cf स च तथागतस्य हेतुप्रत्ययगर्भुवर्ता धर्मदेशनामवतरेत्। नात्र कश्चिदात्मा वा सत्त्वो वा जीवो वा पुद्गलो वा य करोति प्रतिसवेदयते इति शङ्कनामनभिसस्कारा माया-

तत्र प्रतिसमाधानम्—'संयुक्ता स्कन्धसन्ततिः ।' स्कन्धसन्ततौ हि स्कन्धलक्षणसन्तानैकत्वाभिमानात्, संवृत्या सत्त्वसंज्ञासिरित्यदोषः ॥[1]

अथापुनरेतस्मात्—

[ 298 ] द्वयमेवात्र निष्पन्नं तृतीयं तूपचारतः ।

वस्तुसंयोजनाख्यं द्वयं परमार्थतो विद्यते सत्त्वाख्यस्तु तृतीयोऽर्थः संवृ(5)त्या विद्यत इति ।[2]

---

धर्मतामसंक्लेशधर्मतां प्रकृतिप्रभास्वरतां सर्वधर्माणामवतरत्यादिशुद्धान्सर्वधर्मानभिश्रद्धधात्यधिमुच्यते ।··· *Tathāgata-koṣa-sūtra.* (Quoted in *Śikshā*, p. 172.)

Also cf. दुक्खमेव उप्पज्जमानं उप्पज्जति, दुक्खमेव निरुज्झमानं निरुज्झति । *S.* II. p. 17.

किन्नु सत्तो ति पच्चेसि । मारदिट्ठिगतं नु ते ।
सुद्धसङ्खारपुञ्जोयं । नयिध सत्तूपलब्भति ॥
दुक्खमेव हि सम्भोति । दुक्खं तिट्ठति वेति च ।
नाञ्ञत्र दुक्खा सम्भोति । नाञ्ञं दुक्खा निरुज्झति ॥ *S.* I. p. 135.

दुक्खमेव हि, न कोचि दुक्खितो, कारको न, किरिया व विज्जति ।
अत्थि निब्बुति, न निब्बुतो पुमा, मग्गमत्थि गमको न विज्जति । *Vm.* XVI. 90.

The *Abhidharma-mūla-ṭīkā* gives the following comment:—

"यथापि अङ्गसम्भारा होति सद्दो रथो इति ।
एवं खन्धेसु सन्तेसु होति सत्तोति सम्मुतीति ॥" [*S.* I. p. 135.]

—यदि पुग्गलो न विज्जति कथं सारम्मणता सिया ति ? अविज्जमानस्सापि आरम्मणस्स गहणतो । अविज्जमानम्पि हि परिकप्पितं लोकसञ्ञातं वा विज्जमानं वा सभावभूतं आरम्मणं गहेत्वा वा उप्पज्जनतो सारम्मणता वुत्ता । सियारम्मणता ति हि वचनं चित्तचेतसिकानं आरम्मणेन विना अप्पवत्तिञ्ञेव दीपेति न तेहि गहितस्स आरम्मणस्स विज्जमानतं वाति । अय मखतामंखतविनिम्मुत्तस्स अत्थितापटिसेधो सब्बथा अनुवत्तन्तानं विनिच्छयो । *A. Mūlaṭīkā.* p. 131. V. infra, *Adv. kārikā* 306.

[1] Cf. नात्मास्ति

कीदृश आत्मा य इमान्निक्षिपत्यन्यांश्च स्कन्धान् प्रतिसन्दधातीति परिकल्प्यते । स तादृशो नास्त्यन्तर्व्यापारपुरुष । एव तूक्त भगवता—'अस्ति कर्म···धर्मसङ्केतात् ।'···कीदृशस्तर्ह्यात्मा न प्रतिषिध्यते ?

स्कन्धमात्रन्तु क्लेशकर्माभिसंस्कृतम् ।

यदि तु स्कन्धमात्रमेवात्मेत्युपचर्यते तस्याप्रतिषेधः । *Akb.* III. 18 ab.

[2] Cf. बुद्धान पन द्वे कथा सम्मुतिकथा परमत्थकथा च । तत्थ सत्तो पोसो देवो ब्रह्मा ति आदिका सम्मुतिकथा नाम । अनिच्चं दुक्खं अनत्ता खन्धा धातुयो आयतनानि

कुत पुनरेतद् द्वय परमार्थतो विद्यते ? तदुच्यते —

सदसद्धेतुनो यस्मान्मध्यस्थैश्च परिग्रहात् ॥

शुभाशुभफल कर्मनैयम्याद् गुणदोषफलनियम्यता (ता) । किञ्च, 'मध्यस्थैश्च परिग्रहात् ।' मध्यस्था उच्यन्ते वीतक्लेशा । तै शुभ च शुभतो ऽशुभ चाशुभत, गुणाश्च गुणत दोषाश्च दोषत परिगृही ⁽¹⁾ता । तत्फल चेष्ट मिष्टत परिगृहीतमनिष्ट चानिष्टत । इति सिद्ध द्वय परिनिष्पन्न[1] तृतीय तूपचारत इति ।

युक्त तावदिदम् । यदिद प्रत्युत्त वस्तुहेतुप्रत्ययात्प्रतीत्योत्पन्न परमार्थतो विद्यते[2] प्रत्यात्मवेदनीयत्वात्, तद्यालम्बनाश्च रागादय द्रव्यत सन्तीति । यत्पुनरिदमुक्तमतीतानागते वस्तुनि नैय⁽²⁾ह्यिकैरनुशयै सयुक्त इति तदेतत्सा हसमाहापुरुषिकमात्रम् । क पुनरेतदतीतानागतादि द्रव्यतोऽभिवाञ्छ तीत्याह्यभिधार्मिका ॥[3]

सनिपट्ठाना सम्मण्यन्ताना नि आन्कि परमत्यक्त्या नाम । पकतिया पन पठम एव परमत्यक्य कथन्तस्स दमना लूखाकारा होन्ति तस्मा बुद्धा पठम सम्मुतिकय कथन्ता पि सच्चमेव समावमेव अमुसा व कयन्ति परमत्थकय कथन्ता पि सच्चमेव समावमेव अमुसा व कथन्ति ।

दुवे सच्चानि अक्खासि सम्बुद्धो वदता वरो ।
सम्मुति परमत्यञ्च ततिय नूपलब्भति ॥
सकेतवचन सच्च लोकसम्मुतिकारण ।
परमत्यवचन सच्च धम्मान भूतलक्खण ति ॥ *Dgha A* ix. 49

For a d scussion on the terms *paramattha* and *sachcha* see *Points of Controversy* pp 371—4

For the Mahayanist definit ons of *paramartha* and *samvritisatya* see *B Panj ka* ix. 2 *Madhyamakavatara* vi 23 25 *Madhyam kakarika* xxiv 8

[1] On *parin shpanna* see *Trisvabhavan rdesa* 3, *Points of Controversy* pp 395-6

[2] The Mahayanists hold the opposite view —तदुपदर्शित च प्रतीत्यसमुत्पन्न वस्तुरूप सवृतिरुच्यते । तदेव लोकसवृतिसत्यमित्यभिधीयते । *B Panj ka* ix. 2.

[3] The Kośakara initiates a long d scussion on this controversy and gives the Vaibhāshika view as below —

कि पुनरिदमतीतानागतमुच्यतेऽस्त्यथ न । यद्यस्ति सर्वकालास्तित्वात्सस्कृताना शाश्वतत्व प्राप्नोति । अथ नास्ति । कथ तत्र तेन वा सयुक्तो भवति विसयुक्तो वा । न सस्कृताना शाश्वतत्व प्रतिज्ञायते वैभाषिकै सस्कृतलक्षणयोगात् । प्रतिज्ञायते तु विगद सर्वकालास्तित्वोत्कर्षात

उक्त हि भगवता— अतीत चे भिक्षवो रूप नाभविष्यन्न श्रुतवानार्यश्रावकोऽतीते रूपेऽनपेक्षोऽभविष्यत्

चत्वारः खल्विह प्रवचने वादिनः । कतमे चत्वारः ? तदपदिश्यते—

[ 299 ] सर्वमस्ति प्रदेशोऽस्ति सर्वं नास्तीति चापरः ।
अव्याकृतास्तिवादीति चत्वारो वादिनः स्मृताः ॥[१]

तत्र सर्वास्ति(8)वादा(द)स्याध्वत्रयमस्ति स ध्रुवत्रयमिति । विभज्य-वादिनस्तु[२] दार्ष्टान्तिकस्य च प्रदेशो वर्तमानाध्वसंज्ञकः । वैतुलिकस्य अयोग-

---

द्वयात्

"द्वय प्रतीत्य विज्ञानस्योत्पादात्' इत्युक्तम् । ···वसति वा अतीतानागते तदालम्बन विज्ञान द्वय प्रतीत्य न स्यात् ।"

सद्विषयात्

सति विषये विज्ञान प्रवर्तते नासति । यदि चातीतानागत न स्यादालम्बन विज्ञान न स्यात् ।···

फलात् ।

यदि चातीत न स्यात् शुभाशुभस्य कर्मण फलमायत्या कथ स्यात् ।···तस्मादस्त्येवातीतानागतमिति वैभाषिका । अवश्य च किलैतत्सर्वास्तिवादेन सताऽभ्युपगन्तव्यम् । *Akb* v 25 ab

For a detailed exposition of the arguments between the Vaibhāshika and the Sautrāntikas on the question of Sarvāstivāda, see Stcherbatsky *The Central Conception of Buddhism*, pp 76—91 (Appendix 1), *LVPAk.* v pp 49—66 For the त्रैकाल्यवादिमतखण्डन, see *Bodhicharyavatāra-pañjika*, ix 143-150 For the earliest reference to this topic in the Pali literature, see *Poṭṭhapāda-sutta* (*Digha* ix. 50—53)

This controversy is recorded in the *Kathavatthu*, i 6-8

—इदानि सब्बमत्थी ति वादकथा नाम होति । तत्थ यम 'य किञ्चि रूप अतीतानागतपच्चुप्पन्न —पे— अय वुच्चति रूपक्खन्धो ति आदिवचननो सब्बे पि अतीतादि भेदा धम्मा खन्धसभाव न विजहन्ति तस्मा सब्ब अत्थि येव नामा ति लद्धि, सेय्यथापि एतरहि सब्बत्थि-वादानं । तस लद्धिविसोधनत्थ सब्बमत्थीति पुच्छा सकवादिस्स । *KvA* i 6 On 'सब्बं अत्थि' see *Points of Controversy*, pp 375—7

[१] Cf तदस्तिवादात् सर्वास्तिवादा इष्टाश्चतुर्विधा । *Ak.* v. 25 cd.

[२] ये तु किञ्चिदस्ति यत्प्रत्युत्पन्नमदत्तफल चातीत कर्म, किञ्चिन्नास्ति यद्दत्तफलमतीतानागत चेति विभज्य वदन्ति त विभज्यवादिन । *Akb* v 25 cd

This view, attributed to the Vibhajyavādins, is referred to in the *Kathā vatthu* —अतीत अत्थीति ?

एकच्च अत्थि एकच्चं नत्थीति ।

···कि अत्थि कि नत्थीति ?···अतीता अविपक्कविपाका धम्मा ते अत्थीति ?

शून्यतावादिन.[१] सर्वं नास्तीति। पौद्गलिकस्यापि[२] अव्याकृतवस्तुवादिन पुद्गलोऽपि द्रव्यतोऽस्तीति।

अत्र पुन

[300] एभ्यो यः प्रथमो वादी भजते साधुतामसौ।
तर्काभिमानिनस्त्वन्ये (?)युक्त्यागमबहिष्कृताः ॥

यः खल्वेष प्रथमो वादी सर्वास्तिवादाख्यः, एष खलु युक्त्यागमपोपपन्नाभिधायित्वात्सद्वादी। तदन्ये वादिनो दार्ष्टान्तिकवैतुलिकपौद्गलिका न युक्त्यागमाभिधायिन, तर्काभिमानिनस्ते। मिथ्यावादित्वादेते लोकायतिक

---

आमन्ता।

अतीता विपक्कविपाका धम्मा ते अत्थीति ? न हेव वत्तब्बे।

अनागता उप्पादिनो धम्मा ते अत्थीति ? आमन्ता।

अनागता अनुप्पादिनो धम्मा ते अत्थीति ? न हेव वत्तब्बे। *Kv* I 8

—इदानि एकच्च अत्थी ति कथा नाम होती। तत्थ ये एकच्च अतीत अत्थी ति मञ्ञन्ति, सेय्यथा पि कस्सपिका। अय हि स्स अधिप्पायो अविपक्कविपाका अत्थि, विपक्कविपाका नत्थी ति। *Kv A* I 8

From this it would appear that the Kassapikas are vibhajyavadins The Sthaviravadins too claim to be vibhajyavadins —'विभज्जवादी भन्ते सम्मासम्बुद्धो ति' ? आम महाराजा ति। *Vinaya A* I p 61 Also see विभज्जवादिमण्डल ओगाहेत्वा *Vm* xvii. 25

Cf 'राजा आह किमेत अद्धान नामा ति ? अतीतो अद्धा। अनागतो अद्धा। पच्चुप्पन्नो अद्धा ति। किं पन भन्ते सब्बे अद्धा अत्थी ति ? कोचि महाराज अद्धा अत्थि, कोचि नत्थी ति। ये ते महाराज सङ्खारा अतीता विगता निरुद्धा विपरिणता सो अद्धा नत्थि। ये धम्मा विपाका ये च विपाकधम्मधम्मा ये च अञ्ञत्र पटिसन्धिं देन्ति, सो अद्धा अत्थि। ये सत्ता कालङ्कता अञ्ञत्र उप्पन्ना सो च अद्धा अत्थि। ये सत्ता कालङ्कता अञ्ञत्र अनुप्पन्ना सो अद्धा नत्थि। ये च सत्ता परिनिब्बुता सो च अद्धा नत्थि परिनिब्बुतत्ता ति। *Milinda*, p 52

Also cf एकोवासस्स हि कम्मस्स विपाको दुविधो—खणप्पत्तो अप्पत्तो च। तत्थ 'खणप्पत्तो' उप्पन्नो नाम। 'अप्पत्तो' चित्तानन्तरे वा उप्पज्जतु, कप्पसतसहस्सातिक्कमे वा। धुवपच्चयपट्ठेन नत्थि नाम न होति, उप्पादिनो धम्मा नाम जाता। *Dhs A* v 41 See *A Mulatika*, p 121

१ V supra, p 33

२ The Kośakara does not mention in this connection, the views of Vaitulika and Paudgalika.

वैनाशिकनग्नाटपक्षे प्रक्षेप्तव्याः । इत्यतश्च सर्वं सर्वगतमुपदर्प(र्श)-
[V. A, 6. Fol. 108 b.](1)यिष्यामीति ॥

कः पुनरयं सर्वास्तिवादी साधुना(तां) भजते ? तदिदमवद्योत्यते । एष खलु वादी

[ 301 ] इच्छत्यध्वत्रयं यस्मा[त्] कृत्यतश्च ध्रुवत्रयम् ।
सर्वास्तिवाद इत्युक्तस्तस्मादाद्यश्चतुर्विधः ॥

खल्वेष सर्वास्तिवादश्चतुर्धा भेदं प्रतिपन्नः । कथम् ? तदारभ्यते—

[ 302 ] भा[वाद्या ऽ]न्यथिकाख्यौ द्वाव[व]स्थाऽन्यथिको परः ।
अन्यथाऽन्यथिकश्चान्यः, तृ(2)तीयो युक्तिबाधतः ॥[1]

[2]तत्र भावान्या(न्य)थिको भदन्तधर्मत्रातः । स ह्येवमाह—धर्मस्याध्वसु प्रवर्तमानस्यानागतादिभावमात्रमन्यथा भवति । न द्रव्यान्यथात्वम् । यथा सुवर्णस्य कटकादिसंस्थानान्तरेण क्रि(क्रि)यमान(ण)स्य पूर्वसंस्थाननाशे न सुवर्णनाशः । क्षीरस्य वा दधित्वेन परिणमतो यथा रसवीर्यविपाकपरित्यागो न व(3)र्णस्येति ।[3] तदेष वार्षगण्यपक्षमजमानत्वात्तद्वर्ग्य एव द्रष्टव्यः । यस्मात् एषोऽवस्थितस्य द्रव्यस्य जातिलक्षणस्य समुदायरूपस्य वाऽन्यथाऽन्यथावस्थानलक्षणं परिणाममिच्छति ।[4]

लक्षणान्यथिको[5] भदन्तघोषक इह पश्यत्यतीतो धर्मोऽतीतलक्षणेन युक्तोऽनागतप्रत्युत्पन्नलक्षणाभ्यामवियुक्तः, एवमनागतप्रत्युत्पन्ना(4)वपि । यथा पुरुषः

---

[1] Cf. ते भावलक्षणावस्थाऽन्यथाऽन्यथिकसंज्ञिताः ।
तृतीयः शोभनोऽध्वानः कारित्रेण व्यवस्थिताः ॥ *Ak.* v. 26.

[2] The following *Adv*, containing the views of the four Āchāryas, is almost identical with *Akb* v. 26.

[3] Cf. तत्र धर्मस्य धर्मिणि वर्तमानस्यैवाध्वस्वतीतानागतवर्तमानेषु भावान्यथात्वं भवति न तु द्रव्यान्यथात्वम् । यथा सुवर्णभाजनस्य भित्त्वाऽन्यथाक्रियमाणस्य भावान्यथात्वं भवति न सुवर्णान्यथात्वमिति ।··· *Yoga bhāshya*, III. 13.

[4] एषा तु प्रथम. परिणामवादित्वात् सांख्यपक्षे निक्षेप्तव्य. । *Akb* v. 26 ab.

[5] Cf. लक्षणपरिणामो धर्मोऽध्वसु वर्तमानोऽतीतलक्षणयुक्तोऽनागतवर्तमानाभ्यां लक्षणाभ्यामवियुक्त. । तथा वर्तमानो ··तथानागतो···। यथा पुरुष एकस्यां स्त्रियां रक्तो न शेषासु विरक्तो भवतीति । *Yoga-bhāshya*, III. 13.

एकस्यां स्त्रियां रक्तोऽन्यास्वविरक्तः। तद्दस्याप्यध्वसंकरो[१] भवत्येकस्य धर्मस्य त्रिलक्षणयोगाभ्युपगमात्। एषोऽपि पुरुषकारणि(?)वागुरायां प्रवेशयितव्यः।

अवस्थाऽन्यथिको भदन्तवसुमित्रः। स खल्वाह—धर्मोऽध्वसु प्रवर्तमानोऽवस्थामवस्थां प्राप्याऽन्यथाऽन्यथाऽस्तीति निर्दिश्यते। अवस्थान्तरविशेषवि(5)कारात्स्वभावापरित्यागाच्च। यथा निक्षेपवर्तिकैकाङ्कविन्यस्तैकेत्युच्यते, सैव शताङ्के शतं सहस्राङ्के सहस्रमिति।[२]

अन्यथाऽन्यथिको भदन्तबुद्धदेवः। स ब्रूते। धर्मोऽध्वसु प्रवर्तमानस्या(-मानः) पूर्वापरमवेक्ष्यान्यथा चान्यथा चोच्यते। नैवास्य भावान्यथात्वं भवति द्रव्यान्यथात्वं वा। यथैका स्त्री पूर्वापरमपेक्ष्य माता चो(6)च्यते दुहिता च। तद्वद्धर्मोऽनागतप्रत्युत्पन्नमवे(पे)क्ष्यातीत इत्युच्यते। तथेतरोऽपीतरद्वयमपेक्ष्येति।[३]

अस्याप्येकस्यातीतस्याध्वनः पूर्वोत्तरक्षणत्र(द्व)यमपेक्ष्याध्वत्रित्वापत्तिदोषप्रसङ्गः।

तदेभ्यश्चतुर्भ्यः सर्वास्तिवादेभ्यस्तृतीयः स्थविरवसुमित्रः पञ्चविंशतितत्त्वनिरासी परमाणु(णु)संचयवादोन्माथी (7)च। इत्यतोऽसावेव युक्त्यागमानुसारि[त्वा]दासः प्रामाणिक इत्यध्यवसेयम्।

भदन्तबुद्धदेवोऽपि तीर्थ्यपक्ष्यमज्जमानत्वान्न परिगृह्यते।[४]

भदन्तघोषकोऽप्यध्वसंकरवादित्वादेकैकस्याध्वनोऽध्वत्रयलक्षणभाग्भवति।

---

[१] द्वितीयस्याध्वसङ्करः प्राप्नोति। सर्वस्य सर्वक्षणयोगात्। पुरुषस्य तु कस्यांचित् स्त्रिया रागः समुदाचरति कस्याचित् केवल समन्वागम इति किमत्र साम्यम्। *Akb.* v 26 ab.

Cf. अत्र लक्षणपरिणामे सर्वस्य सर्वलक्षणयोगादध्वसङ्करः प्राप्नोतीति परैर्दोषश्चोद्यत इति। तस्य परिहारः—धर्माणा धर्मत्वमप्रसाध्यम्। सति च धर्मत्वे लक्षणभेदोऽपि वाच्यो न वर्तमानसमय एवास्य धर्मत्वम्। एवं हि न चित्त रागधर्मकं स्यात्, क्रोधकाले रागस्यासमुदाचारादिति। किञ्च त्रयाणा लक्षणाना युगपदेकस्या व्यक्तौ नास्ति सम्भव। क्रमेण तु स्वव्यञ्जकाञ्जनस्य भावो भवेदिति" *Yoga-bhāshya*, III 13.

[२] Cf. धर्मास्तु त्र्यध्वानस्ते लक्षिता अलक्षितास्तत्र लक्षितास्ता तामवस्था प्राप्नुवन्तोऽन्यत्वेन प्रतिनिर्दिश्यन्ते। अवस्थान्तरतो न द्रव्यान्तरत। यथैका रेखा शतस्थाने शत दशस्थाने दश एका चैकस्थाने। *Ibid.*

[३] Cf. यथा चैकत्वेऽपि स्त्री माता चोच्यते दुहिता च स्वसा चेति। *Ibid.*

[४] Cf. चतुर्णामप्येषामिमेषाध्वनि त्रयोऽध्वान प्राप्नुवन्ति। अतीतेऽध्वनि पूर्वपश्चिमौ क्षणावतीतानागतौ मध्यम क्षण प्रत्युत्पन्न इति। एवमनागतेऽपि। *Akb.* v. 26 ab.

इत्यतस्तृतीय एवापदोषः । यस्मात्—

[ 303 ] कारित्रेणाध्वनामेष व्यवस्थामभिवाञ्छति ।
तत्कुर्वन्वर्तमानोऽध्वा (8)कृतेऽतीतोऽकृते परः ॥[१]

ये खलु भगवतोक्ताः स्वभावसिद्धास्त्रैयाध्विका धर्मा अतीतानागतप्रत्युत्पन्नास्तेषामयमाचार्यः क्रियाद्वारेणावस्थाभेदमिच्छत्यजहत्स्वरूपो हेतुसामग्रीसन्निधानप्रबोधितशक्तिः । क्रियावा[न्] हि संस्कारो वर्तमान इत्युच्यते । स एव त्यक्तक्रियोऽतीतोऽनुपात्तक्रियोऽनागतः । इत्येवं च (9)सति कालत्रयस्यैकाधिकरण्यमेकाधिष्ठानव्यापारपरिच्छेद्यत्वं चोपपन्नम् । अन्यथैकः(क)द्रव्यजातिनिमित्ताभावे वैयधिकरण्ये सति कालत्रयसंबन्धाभावः प्राप्नुयादिति ।[२]

अत्राह चोदकः—न, अतीतानागतस्यार्थस्य प्रज्ञप्त्या[३] व्यपदेशसिद्धेः । न, परमार्थद्रव्याभावे निरधिष्ठानप्रज्ञप्तिव्यपदेशानुपपत्तेः । व[ V. B, 7. Fol. 109a ](1)र्तमानापेक्षयस्तद्व्यपदेश इति चेत् । न । वर्तमानस्वरूपस्थितिशक्तिक्रियाभावे सत्त्वानुपपत्तेः, सदसतोरपेक्षासंबन्धाभावाच्च । सत्त्वलक्षणमिदानीमेव द्योत्यते अतीतादीनां पदार्थानाम्—

---

[१] Cf तृतीयः शोभनोऽध्वानः कारित्रेण व्यवस्थिताः । *Ak.* v. 26 cd.

यदा स धर्मं कारित्र न करोति तदाऽनागत । यदा करोति तदा प्रत्युत्पन्न. । यदा कृत्वा निरुद्धस्तदाऽतीत इति । *Akb* v. 26 cd.

—'तृतीय शोभन' इति वैभाषिकः ।…कारित्रं पुन चक्षुरादीना दर्शनादीनीति । रूपादीनामपि स्वेन्द्रियगोचरत्वम् । *Sakv.* p. 471.

[२] अवस्थापरिणामे कौटस्थ्यदोषप्रसङ्गदोष कैश्चिदुक्त । कथम् । अध्वनो व्यापारेण व्यवहितत्वाद्यदा धर्मं स्वव्यापार न करोति तदानागतो यदा करोति तदा वर्तमानो यदा कृत्वा निवृत्तस्तदातीत इत्येव धर्मधर्मिणोर्लक्षणानामवस्थाना च कौटस्थ्य प्राप्नोतीति परैर्दोष उच्यते । नासौ दोष । कस्मात् ? गुणिनित्यत्वेऽपि गुणाना विमर्दवैचित्र्यात् ।…तत्रेदमुदाहरणम्—मृद्धर्मी पिण्डाकाराद्धर्माद्धर्मान्तरमुपसम्पद्यमानो धर्मत. परिणमते घटाकारमिति । घटाकारोऽनागत लक्षण हित्वा वर्तमानलक्षण प्रतिपद्यत इति लक्षणतः परिणमते । घटो नवपुराणता प्रतिक्षणमनुभवन्नवस्थापरिणाम प्रतिपद्यत इति । धर्मिणोऽपि धर्मान्तरमवस्था धर्मस्यापि लक्षणान्तरमवस्थेत्येक एव द्रव्यपरिणामो भेदेनोपदर्शित इति । *Yoga-bhāshya,* III. 13.

[३] On *prajnapti (paññatti)*, see *Dhs* 1306—7, *Dhs A.* v. 112, *Vm.* VII 54, *A. Mūlaṭīkā*, pp. 129—131, and *JPTS.* 1913—14, pp. 124—9. V. infra, *Adv. kārikā* 319.

[ 304 ] बुद्ध्या यस्येक्ष्यते चिह्नं तत्संज्ञेयं चतुर्विधम् ।
परमार्थेन संवृत्या द्वयेनापेक्षयाऽपि च ॥[1]

यस्य खल्वर्थवस्तुन(नः) स्वभावसिद्धस्वरूपस्याविपरी(2)ताकारया धर्मो पलक्षणया परिच्छिन्नं लक्षणमुपलक्ष्यते तत्स[द्]द्रव्यमित्युच्यते । तत्पुनः सत् प्रतिमिमान(नं) चतुर्विधं भवति ।

---

[1] This topic is discussed in the Sixth *Kośasthana* of *Akb* —
"'द्वे अपि सत्ये संवृतिसत्यं परमार्थसत्यं च । तयो किं लक्षणम् ?

यत्र भिन्ने न तद्बुद्धिरन्यापोहे धिया च तत् ।
घटाम्बुवत्संवृतिसत् परमार्थसदन्यथा ॥

यस्मिन्नवयवशो भिन्ने न तद्बुद्धिर्भवति तत् संवृतिसत् । तद्यथा घट । तत्र हि कपालशो भिन्ने घटबुद्धिर्न भवति । यत्र चान्यानपोह्य धर्मान बुद्धया तद्बुद्धिर्न भवति तच्चापि संवृतिसद्वेदितव्यम् । तद्यथाम्बु । तत्र हि बुद्धया रूपादीन् धर्मानपोह्याम्बुबुद्धिर्न भवति । तेष्वेव तु संवृतिसंज्ञा कृतेति संवृतिवशात् घटश्चाम्बु चास्तीति ब्रुवन्त सत्यमेवाहुर्न मृषेत्येतत् संवृतिसत्यम् ।

अतोऽन्यथा परमार्थसत्यम् । तत्र भिन्नेऽपि तद्बुद्धिर्भवत्येव । अन्यधर्मापोहेऽपि बुद्धया तत परमार्थसत् । तद्यथा रूपम् । तत्र हि परमाणुशो भिन्ने वस्तुनि रसादीनपि च धर्मानपोह्य बुद्धया रूपस्य स्वभावबुद्धिर्भवत्येव । एव वेदनादयोऽपि द्रष्टव्या । एतत् परमार्थेन भावात् परमार्थसत्यमिति ।

यथा लोकोत्तरेण ज्ञानेन गृह्यते तत् पृष्ठलब्धेन वा लौकिकेन तथा परमार्थसत्यम् । यथाऽन्यन तथा संवृतिसत्यमिति पूर्वाचार्या । *Akb* vi 4

—'संवृतिसत्' इति । संव्यवहारेण सत् । 'परमार्थेत सत्' इति । परमार्थेन सत् । स्वलक्षणेन सदित्यर्थत । 'एव वेदनादयोऽपि द्रष्टव्या' इति । वेदना-चेतना—संज्ञादयोऽपि द्रव्यसन्त एव द्रष्टव्या । कथम् ? वेद(चेत)नादीन् धर्मानपोह्य बुद्धया वेदनास्वभावे बुद्धिर्भवतीति । द्रव्यसती वेदना । एव संज्ञा चेतनादयोऽपि योज्या ।"

'न मृषे'ति । संवृतिसत्यस्य वचने प्रयोजनं दर्शयति । उक्तं च

"द्वे सत्ये समुपाश्रित्य बुद्धानां धर्मदेशना ।
लोकसंवृतिसत्यं च सत्यं च परमार्थत ॥" इति [*Madhyamika karika*, xxiv 8.]

तथा 'परमार्थसत्यम्' इति । परमस्य ज्ञानस्यार्थं परमार्थ । 'यथा अन्येन ज्ञानेन लौकिकेन गृह्यते तथा संवृतिसत्यम् । संवृत्या संव्यवहारेण ज्ञानेन वा क्लिष्टनाक्लिष्टेन वा गृह्यत इति संवृतिसत्यम् ।

त्रिविधं हि योगाचाराणां सत् । परमार्थ-संवृतिसत् द्रव्यसच्च । द्रव्यत स्वलक्षणत सत् द्रव्यसदिति । *Sakv* p 524

See also—सर्वमेवेदमशून्यमिति सौत्रान्तिका । *Akb*. ii. 55 cd.

परमार्थेन यन्नित्यं स्वभावेन संगृहीतं न कदाचित्स्वमात्मानं जहाति, विशिष्टज्ञानाभिधानापौरुषेयविषयविषयिसंबन्धं तत्परमार्थसदित्युच्यते ।

यत्पुनरणे(नै)करूपरमार्थसत्यपृष्ठे[3]न व्यवहारार्थं प्रज्ञप्तिरूपतया निर्दिश्यते तत्संवृतिसत् । तद्यथा घटपटचनपुद्गलादिक[म्] ।

किञ्चिदुभयथा । तद्यथा पृथिव्यादि । किञ्चित्सत्त्व[ा]पेक्षया पितृपुत्र-गुरुशिष्यकर्तृक्रियादि ॥

अथ यदिदमुक्तं द्रव्यसन्तोऽतीतानागताऽध्वस्था धर्मा इति तदागमयु-क्त्यनभिधानादभिधानमात्रम् । तस्मादागमयुक्तिभ्यामु[4]पपाद्योऽयमर्थं इत्यत इदं प्रतिज्ञायते—

---

Also cf "दुवे सच्चानि अक्खासि सम्बुद्धो वदता वरो ।
सम्मुतिं परमत्थञ्च ततियं नूपलब्भति ॥
सङ्केतवचनं सच्चं लोकसम्मुतिकारणं ।
परमत्थवचनं सच्चं धम्मानं तथलक्खणं ॥"ति । Quoted in *KvA* 1 1

The *Abhidharma samuchchaya* gives the following illustrations of the twofold preaching of Buddha —

यदुक्तं द्विविधे दुःखे इति । तत्र संवृतिसत्येन दुःखं परमार्थसत्येन दुःखं च । जातिर्दुःखं यावत् यदपीच्छन्न लभते तदपि दुःखमिति संवृतिसत्येन दुःखम् । यदुक्तं संक्षिप्तेन पञ्चोपादानस्कन्धा दुःखमिति परमार्थसत्येन दुःखम् । *Asm* p 38

संवृतितः कतमत ? लौकिकमार्गैर्बीजनिग्रहेण यो निरोधो लभ्यते । अतो भगवता तदांशिकनिर्वाणमित्युच्यते । परमार्थतः कतमत ? आर्यप्रज्ञया बीजनिर्मूलनेन यो निरोधो लभ्यते । *Ibid* p 63

Cf 'एकं हि सच्चं न दुतीयं [*Suttanipata*, 884] आदिसु परमत्थसच्चे निब्बाने चेव मग्गे च । *Vm* xvi 26

The Mahayanist view is fully discussed in the *B Panjika* —

संवृतिः परमार्थश्च सत्यद्वयमिदं मतम् ।
बुद्धेरगोचरस्तत्त्वं बुद्धिः संवृतिरुच्यते ॥

· तदुपदर्शितं च प्रतीत्यसमुत्पन्नं वस्तुरूपं संवृतिरुच्यते । तदेव लोकसंवृतिसत्य मित्यभिधीयते ।

विनोपघातेन यदिन्द्रियाणां षण्णामपि ग्राह्यमवैति लोकः ।
सत्यं हि तल्लोकत एव शेषं विकल्पितं लोकत एव मिथ्या ।

· परमार्थः । अकृत्रिमं वस्तुरूपं यदधिगमात् सर्वावृतिवासनानुसंधिक्लेशप्रहाणं भवति । सर्वधर्माणां निःस्वभावता । शून्यता तथता भूतकोटिः धर्मधातुः । सर्वस्य हि प्रतीत्यसमुत्पन्नस्य पदार्थस्य निःस्वभावता पारमार्थिकं रूपम् । *B Panjika*, ix 2.

For other views and details, see *LVPAk*. vi pp 139 142, notes

[305] सदतीतासमुत्पन्नं बुद्धोक्तेर्वर्तमानवत् ।
धीनामगोचरत्वाच्च तत्सत्त्वं वर्तमानवत् ॥

उक्तं हि भगवता—"अस्ति भिक्षवोऽतीतं रूपं नोचेदतीतं रूपं अभविष्यन्नेमे सत्त्वा अतीते रूपे समरज्यन्त। यस्मात्तर्ह्यस्त्यतीतं रूपं तस्मादिमे सत्त्वा अतीते रूपे संरज्यन्ते।"[1] एवमनागतमप्यु(5)त्पन्न(न्नं) चेति वाच्यम्। विभक्तिप्रतिरूपकोऽयं निपात इति चेत्।[2] न। वर्तमानेऽपि तत्प्रसङ्गात्। क्रियावचनेन चोत्तरपदेन पूर्वस्य क्रियावचनस्यैव पदस्य सामानाधिकरण्यात्।

---

[1] Cf सर्वमस्तीत्युक्तत्वात्

उक्तं हि भगवता—'अतीतं चेद् भिक्षवो रूपं नाभविष्यन्न श्रुतवानार्यश्रावकोऽतीते रूपेऽनपेक्षोऽभविष्यत्। यस्मात्तर्ह्यस्त्यतीतं रूपं ·'। *Akb* v 25 a.

Also cf "अतीते राध रूपे अनपेक्खो होहि, अनागतं रूपं मा अभिनन्दि, पच्चुप्पन्नस्स रूपस्स निब्बिदाय विरागाय निरोधाय चागाय पटिनिस्सग्गाय पटिपज्ज' ति। Quoted in *Netti* p 30

See *M suttas* 109, 132, 133, *Madhyamaka-vṛtti*, xxi 11

This passage from Scriptures provides the first argument for the case of *sarvāstivada* of the Vaibhāshika — 'अथासत्यतीतानागते कथं तेन तस्मिन् वा संयुक्तो भवति ?' The answer of the Sautrantika is "तज्जनक्लेशानुशयभावात् क्लेशेन तदालम्बनक्लेशानुशयभावाद्वस्तुनि संयुक्तो भवति।' *Akb* v 27 c. See *Sakv* p 477 and *The Central Conception of Buddhism*, p 90

[2] यत्तूक्तमुक्तत्वादिति। वयमपि ब्रूमोऽस्त्यतीतानागतमिति। अतीतं तु यद्भूतपूर्वम्। अनागतं यत्सति हेतौ भविष्यति। एवं च कृत्वास्तीत्युच्यते। न पुनर्द्रव्यतः। कश्चैवमाह वर्तमानवत्तदस्तीति। कथम् तर्ह्यस्ति। अतीतानागतात्मना। इदं पुन तदेव कथमतीतमनागतं चोच्यते यदि नित्यमस्ति। तस्माद्यत् भूतपूर्वस्य च हेतोरानन्तर्येण फलस्य भूतपूर्वता भाविता च ज्ञापयितुं हेतुफलापवाददृष्टिप्रतिषेधार्थमुक्तं भगवता—'अस्त्यतीतमस्त्यनागतमिति।' अस्ति शब्दस्य निपातत्वात्। यथा अस्ति दीपस्य प्रागभावोऽस्ति पश्चादभाव इति वक्तारो भवन्ति यथा चास्ति निरुद्धः स दीपो न मया निरोधित इति। एवमतीतानागतमप्यस्तीत्युक्तम्। अन्यथा ह्यतीतानागतभाव एव न सिध्येत्। *Akb* v 27 c.

—अस्त्यतीतं भविष्यत्यनागतमिति वक्तव्ये अस्तिशब्दस्य निपातत्वात्। विभक्तिप्रतिरूपका हि निपाताः। भविष्यदर्थे भविष्यत्यर्थे प्रवर्तते। यथा॰ि इत्यन्ति विग्रह। न चापि प्रयोगविरुद्धोऽस्त्यभावस्तीति। ननु च भावविकल्पे नित्योऽस्यमानस्तीति। नावगति। ननु प्रतीतकल्पाभव विधान नास्ति इत्यादि तेनैव स्यान्न विधानं तथापि तद् न सिध्यन्ति। *Sakv* p 473.

See *B. Pañjikā*, ix 143 ab. V Infra, *Adv Kārikā* 319, notes.

पुनश्चोक्तं भगवता—[१]"रूपमनित्यमतीतानागतम्, कः पुनर्वादः प्रत्युत्पन्नस्य ? एवंदर्शी श्रुतवानार्यश्रावकोऽतीते रूपेऽनपेक्षो भवत्यना(6)गतं रूपं नाभिनन्दति। प्रत्युत्पन्नस्य रूपस्य निर्विदे विरागाय निरोधाय प्रतिपन्नो भवति। अतीतं चेद्रूपं नाभविष्यन्न श्रुतवानार्यश्रावकोऽतीते रूपेऽनपेक्षोऽभविष्यत्। यस्मात्तर्ह्यस्त्यतीतं रूपं तस्माच्छ्रुतवानार्यश्रावकः अतीते रूपेऽनपेक्षो भवति"[१] इति विस्तरः।

तथोक्तम्—"यच्छारिपुत्र कर्माभ्यतीतं क्षीणं (7)निरुद्धं विगतं विपरिणतं[२] तदस्तीति। तच्चेत् कर्म शारिपुत्र नाभविष्यन्नैहैकतीयस्तद्धेतोः तत्प्रत्ययादपायदुर्गतिविनिपातं कायस्य भेदान्नरकेषूपपत्स्यते"[३] इति विस्तरः।

---

[१-१] This *sūtra*-passage is also quoted in *Akb.* v 25 ab and in *Sakv.* pp 468-9. Yaśomitra says निर्विषयत्वाद्वैराग्यकालेऽतीतविषयापेक्षार्यश्रावकस्यानपेक्षा मतिर्न स्यादित्यर्थं । यदातीत रूपमपेक्ष्यते तदा तत्रासक्तिरिति ।···प्रत्युत्पन्न चेद्भिक्षवो रूप नाभविष्यन्न श्रुतवानार्यश्रावक प्रत्युत्पन्नस्य रूपस्य निर्विदे···प्रतिपन्नोऽभविष्यदित्येतन्नोक्तमुभयपक्षप्रसिद्धत्वात् । *Sakv.* p 469

Cf. रूपा भिक्खवे, अनिच्चा अतीतानागता, को पन वादो पच्चुप्पन्नान, एवं पस्स भिक्खवे, सुतवा अरियसावको अतीतेसु रूपेसु अनपेक्खो होति, अनागते रूपे नाभिनन्दति, पच्चुप्पन्नानं रूपान निब्बिदाय विरागाय निरोधाय पटिपन्नो होति। सद्दा गन्धा रसा फोट्ठब्बा धम्मा अनिच्चा···पटिपन्नो होति । *S.* iv. p. 5

Also cf पुब्बे मे भिक्खवे सम्बोधा···एतदहोसि—ये मे पञ्चकामगुणा चेतसो सम्फुट्ठपुब्बा अतीता निरुद्धा विपरिणता तत्थ मे चित्त बहुल गच्छमान गच्छेय, पच्चुप्पन्नेसु वा अप्प वा अनागतेसु···*S* iv p. 97.

[२] क्षीणमुपचयविनाशात्, निरुद्धं प्रबन्धविनाशेन, विगतं प्रकृतिविनाशात्, विपरिणत विकारविनाशेन । *Aaa* p 233.

[३] Cf फलात्

यदि चातीत न स्यात, शुभाशुभस्य कर्मण फलमायत्या कथ स्यात्, न हि फलोत्पत्तिकाले वर्तमानो विपाकहेतुरस्तीति । तस्मादस्त्येवातीतानागतमिति वैभाषिकाः । *Akb* v. 25 6

The Kośakāra refutes this Vaibhāshika view :—यदप्युक्त फलादिति । नैव हि सौत्रान्तिका अतीतात् कर्मण फलोत्पत्ति वर्णयन्ति । किं तर्हि ? तत्पूर्वकात् सन्तानविशेषादित्यात्मवादप्रतिषेधे सम्प्रवेदिष्याम । यस्य त्वतीतानागत द्रव्यतोऽस्ति तस्य फल नित्यमेवास्तीति किं तत्र कर्मण. सामर्थ्यम् ? *Akb.* v 27 ab

Also cf यदप्युच्यते । अस्त्यतीत कर्म । अस्त्यनागत फलमिति सूत्रवचनात् । अस्त्यतीतादिभाव । तदपि हेतुफलापवादे तद् दृष्टिप्रतिषेधार्थमुक्त भगवता । *B. Pañjikā,* ix. 143

[305] सदतीतासमुत्पन्न युद्धोक्तेर्वर्तमानवत् ।
धीनामगोचरत्वाच्च तत्सत्त्व वर्तमानवत् ॥

उक्त हि भगवता—"अस्ति भिक्षवोऽतीत रूपं नोचेदतीत रूपं अभविष्यन्नेमे सत्त्वा अतीते रूपे समरज्ज्यन्त । यस्मात्त्वस्त्यतीतं रूप तस्मादिमे सत्त्वा अतीते रूपे सरज्ज्यन्ते ।"[१] एवमनागतप्रत्यु(5)त्पन्न(न्नं) चेति वाच्यम् । विभक्तिप्रतिरूपकोऽय निपात इति चेत् ।[२] न । वर्तमानेऽपि तत्प्रसङ्गात् । क्रियावचनेन चोत्तरपदेन पूर्वस्य क्रियावचनस्यैव पदस्य सामानाधिकरण्यात् ।

---

[१] Cf सर्वस्यास्तितोक्तत्वात

उक्त हि भगवता— अतीत चेद भिक्षवो रूप नाभविष्यन्न श्रुतवानार्यश्रावकोऽतीते रूपेऽनपेक्षोऽभविष्यत । यस्मात्तह्यस्त्यतीत रूप । *Akb* v 25 a

Also cf अतीते राच रूपे अनपक्खो होहि अनागत रूप मा अभिनन्दि पच्चुप्पन्नस्स रूपस्स निब्बिदाय विरागाय निरोधाय चागाय पटिनिस्सग्गाय पटिपज्जा ति । Quoted in *Netti* p 30

See *M suttas* 109 132 133 *Madhyamaka-vritti* xii 11

This passage from Scriptures provides the first argument for the case of *sarvastivada* of the Vaibhashika — अथास्त्यतीतानागते कथ तेन तस्मिन वा संयुक्तो भवति ? The answer of the Sautrantika s तज्जतद्वत्वनुशयभावात् क्लेशान तदालम्बन क्लेशानुशयभावाद्वस्तुनि संयक्तो भवति । *Akb* v 27 c. See *Sakv* p 477 and *The Central Concept of Buddhism* p 90

[२] यत्तूक्तमुक्तत्वादिति । वयमपि ब्रूमोऽस्त्यतीतानागतमिति । अतीत तु यदभूत पूर्वम । अनागत यत्सति हेतौ भविष्यति । एव च कृत्वास्तीत्युच्यते । न पुनर्द्रव्यत । कश्चैवमाह वर्तमानवत्त स्तीति । कथम यथाऽस्ति । अतीतानागतात्मना । इद पुन तयोः स्थितम । कथ तस्तीतमनागत चोच्यते यदि नित्यमस्तानि । तस्माद्यत भूतपूर्वस्य च हेतोर्भाविनश्च फलस्य भूतपूर्वता भाविता च ज्ञापयितु हेतुफलापवाददृष्टिप्रतिषेधार्थमुक्त भगवता— अस्त्यतीतमनागतमिति । अस्ति शब्दस्य निपातत्वात । यथा अस्ति दीपस्य प्रागभावोऽस्ति पश्चाद्भाव इति वक्तारो भवन्ति यथा चास्ति निरुद्ध स दीपो न मया निरोधित इति । एवमतीतानागतमप्यस्तीत्युक्तम । अन्यथा ह्यतीतानागतभाव एव न सिध्यत । *Akb* v 27 c.

—आसीदतीत भविष्यत्यनागतमिति वक्तव्यऽस्तीतिवचनमस्तिशब्दस्य निपातत्वात । त्रिकालविषयो हि निपात । आसीदस्य भविष्यत्यपि प्रवतन । यथाऽस्ति दीपस्यति विस्तर । न चास्ति प्रयोगाविरुद्धोऽप्यसावस्तीति । ननु च वभाविकस्य निरुद्धोऽप्यसा वस्तीति । सत्यमस्ति न तु प्रदीपस्तत्रामेव विधाण सोऽस्ति । यदि तेनव दृष्टान्तेन विद्यमानातानागत एव न सिध्यन्तीय । *Sakv* p 473

See *B Panjika* ix. 143 ab V infra, *Adv karika* 319 notes

पुनश्चोक्त भगवता—[1]"रूपमनित्यमतीतानागतम्, क. पुनर्वाद. प्रत्युत्पन्नस्य ? एवंदर्शी श्रुतवानार्यश्रावकोऽतीते रूपेऽनपेक्षो भवत्यना(6)गत रूप नाभिनन्दति। प्रत्युत्पन्नस्य रूपस्य निर्विदे विरागाय निरोधाय प्रतिपन्नो भवति। अतीत चेद्रूप नाभविष्यन्न श्रुतवानार्यश्रावकोऽतीते रूपेऽनपेक्षोऽभविष्यत्, यस्मात्तर्ह्यस्त्यतीत रूप तस्माच्छ्रुतवानार्यश्रावकः अतीते रूपेऽनपेक्षो भवति"[1] इति विस्तर.।

तथोक्तम्—"यच्छारिपुत्र कर्माभ्यतीत क्षीण(7)निरुद्ध विगत विपरिणत[2] तदस्तीति। तच्चेत् कर्म शारिपुत्र नाभविष्यन्नैहैकतीयस्तद्धेतो तत्प्रत्ययादपायदुर्गतिविनिपात कायस्य भेदान्नरकेपूपपत्स्यते"[3] इति विस्तरः।

---

[1-1] This *sutra* passage is also quoted in *Akb* v 25 ab and in *Sakv* pp 468 9 Yaśomitra says निर्विषयत्वाद्वैराग्यकालेऽतीतविषयापेक्षायश्रावकस्यानपेक्षा मतिन स्यादित्यथ। यदातीत रूपमपेक्ष्यत तदा तत्रासक्तिरिति। प्रत्यताश्च चेद्भिक्षवो रूप नाभविष्यत श्रुतवानार्यश्रावक प्रत्युत्पन्नस्य रूपस्य निर्विदे प्रतिपन्नोऽभविष्यदित्यतन्नोक्तम् मयपक्षप्रसिद्धत्वात। *Saki* p 469

Cf रूपा भिक्खवे अनिच्चा अतीतानागता को पन वादो पच्चुप्पन्नान, एव पस्स भिक्खवे सुतवा अरियसावका अतीतेसु रूपेसु अनपेक्खो होति अनागते रूपे नाभिनन्दति पच्चुप्पन्नान रूपान निब्बिदाय विरागाय निरोधाय पटिपन्नो होति। सद्दा गन्धा रसा फोट्ठब्बा धम्मा अनिच्चा पटिपन्नो होति। *S* iv p 5

Also cf पुब्बे मे भिक्खवे सम्बोधा एतदहोसि—य मे पञ्चकामगुणा चेतसो सम्फुट्ठपुब्बा अतीता निरुद्धा विपरिणता तत्थ मे चित्त बहुल गच्छमान गच्छेय्य पच्चुप्पन्नेसु वा अप्प वा अनागतेसु *S* iv p 97

[2] क्षीणमुपचयविनाशात निरुद्ध प्रबन्धविनाशत, विगत प्रकृतिविनाशात विपरिणत विकारविनाशत। *Aaa* p 233

[3] Cf फलात

यदि चातीत न स्यात शुभाशुभस्य कमण फलमायत्या कथ स्यात न हि फलोत्पत्तिकाले वर्तमानो विपाकहेतुरस्तीति। तस्मादस्त्यवातीतानागतमिति वैभाषिका। *Akb* v 25 6

The Kośakara refutes this Vaibhashika view —यदप्युक्त फलादिति। नैव हि सौत्रान्तिका अतीतात कमण फलोत्पत्ति वर्णयन्ति। कि तर्हि ? तत्पूर्वकात सन्तान विशेषादित्यात्मवादप्रतिषेधे सम्प्रवेदयिष्याम। यस्य त्वतीतानागत द्रव्यतोऽस्ति तस्य फल नित्यमेवास्तीति कि तत्र कमण सामर्थ्यम ? *Akb* v 27 ab

Also cf यदप्युच्यते। अस्त्यतीत कर्म। अस्त्यनागत फलमिति सूत्रवचनात्। अस्त्यतीतादिभाव। तदपि हेतुफलापवादे तद दृष्टिप्रतिषेधायमुक्त भगवता। *B Panjika*, ix 143

तदाहितचित्तभावना सन्धाय वचनाददोष[1] इति चे[त्]। न। उक्तोत्तरत्वात्। उक्तोत्तरो ह्येष वाद.[2]। किं तिलपीडकवत्पुनरावर्तसे ?

किञ्च,(8) भावनाभाव्यमानचित्तयो स्वरूपशक्तिक्रियानुपपत्ते पुष्पवासिततैलवत्, अन्यानन्यत्वादिवक्ष्यमाण(ण)दोषाच्च।

परमार्थशून्यतासूत्रादसदिति चेत्। न। तदर्थापरिज्ञानात्। तत एवानागताद्यस्तित्वसिद्धेश्च। तत्रैतत् स्यात्—परमार्थशून्यता सूत्रे भगवता

---

[1] Cf यर्त्तहि लगुडशिखिपकान परिव्राजकानधिकृत्योक्त भगवता यत्कर्माभ्यतीत क्षीण निरुद्ध विगत विपरिणत तदस्ती ति। किं ते तस्य तस्य कर्मणो भूतपूर्वत्व नेच्छन्ति स्म ? तत्र पुनस्तदाहित तस्या सन्ततौ फलदानसामर्थ्यं सन्धायोक्तम। अन्यथा हि स्वेन भावेन विद्यमानमतीत न सिद्ध्येत। *Akb* v 27 cd

—यर्त्तहि लगुडशिखीयकान इति विस्तर। नालन्दाया बुद्धभाषित च सूत्रम्। सयुक्तागमे च। आर्यमहामौद्गल्यायनश्च मारित इत्याहुरभियुक्ता। यतो नो मारित इत्यत्र सूत्र एव पठ्यते लगुडशिखीयका परिव्राजका आनन्तर्यकारिणो य कर्माभ्यतीत तन्नास्तीत्येववादिन इति विस्तर। एतदुक्त भवति। इच्छन्ति स्म ते तस्य कर्मणो भूतपूर्वताम्। किंतु न द्रव्यमिति तस्मिन् कर्मणि ते विप्रतिपन्ना। नास्ति तत्कर्माभ्यतीतमिति। यत भगवता यत्र ते विप्रतिपन्ना स्वभावे तत्कर्माभ्यतीतमस्तीति विस्तरेण। तस्मादस्ति स्वभावेनातीतमिति विस्तर। तत्र पुन सूत्र यद भूतपूर्व कर्म, न तदेवानीनमित्यभिसन्धायोक्त तत्कर्मास्तीति। किं तर्हि ? तदाहित तेन भूतपूर्वेण कर्मणा आहितमर्पितम। तस्या सन्ततौ फलदानसामर्थ्यं सन्धायोक्तमित्ययनाभिप्रायेणोक्तमिति। कथ गम्यत इत्याह। अन्यथा हि स्वलक्षणत विद्यमान तत्कर्म प्रत्युत्पन्नलक्षणत विद्यमानमतीत न सिध्येत। प्रत्युत्पन्नमेव सिध्येदित्यभिप्राय। तदाहितमिति विस्तरेणोच्यमानेऽभ्यतीत कर्मास्तीति सिध्यति। *Sakv* p 474

For the legend of Moggallana s death see *DhammapadaA* x 7 and *Jataka* 522. Also see—एतग्ग भिक्खवे मम सावकान भिक्खून इद्धिमन्तान यदिद महामोग्गल्लानोति। पुन च किर सो लगुलेहि परिपोथितो भिन्नसीसो सञ्चुण्णितट्ठिमसधमनि मज्जपरिक्खितो परिनिब्बुतो। *Milinda* p 188 See *DPPN* ii p 546

[2] While discussing the *visamyogaphala* the Kośakara incidentally deals with a subtopic—'त्रैयध्विकस्य दुःखस्य प्रहाणम' and says —एतदतीतानागतस्यास्तित्वचिन्तायां चिन्तयिष्याम। *Akb* ii 55

It is possible that the Dipakāra too, had discussed this top c in the corresponding portion of the Second *Adhyaya* of *Adv*, which is lost. V supra, p 114, n. 4

For क्रमफलसम्बन्धपरीक्षा see *Tattvasangraha* 479 544 *B Panj ka*, ix 70-73 and *Madhyamikakārikā*, xvii 21—33

विस्पष्टमनागतादिनास्तित्वं प्रदर्शितम् । तत्र ह्युक्तम्—"चक्षुरुत्प[9]द्यमानं न कुतश्चिदागच्छति, निरुध्यमानं न क्वचित्संनिचयं गच्छति" इति विस्तरः ।[1] अतीतानागतसद्भावे चागतिगतिदोषो(षा)भ्युपगमः प्राप्नोतीति[2] ।

एतच्च न । कुतः ? सूत्रार्थापरिज्ञानात् । अत एवानागताद्यस्तित्व-सिद्धेश्च ।

सूत्रस्य तावदयमर्थः । यदुक्तम्—"चक्षुरुत्पद्यमानं न कुतश्चिदागच्छति, निरुध्यमानं न क्वचित्संनिचयं ग[V.A. 7 Fol. 109 b](1)च्छति" इति तद्वेदोक्तवादविधिप्रतिषेधार्थं सांख्यमतव्युदासार्थं च ।

वेदे ह्युक्तम्—"पञ्चत्वमापद्यमानस्य चक्षुरादित्यादागतं पुनस्तत्रैव प्रतिविगच्छति । श्रोत्रमाकाशम् । घ्राणं पृथिवीम् । जिह्वा आपः । कायो वायुम् । मनः सलिलं सोममित्यर्थः ।"[3] तत्प्रतिषेधार्थं भगवानवोचत्—"चक्षुरुत्पद्यमानं न कुतश्चिदागच्छति" इति विस्तरः ।

---

[1] Cf. इत्य चैतदेव यत परमार्थशून्यतायामुक्तं भगवता—"चक्षुरुत्पद्यमान···संनिचय गच्छति । इति हि भिक्षवश्चक्षुरभूत्वा भवति भूत्वा च प्रतिविगच्छति" इति । *Akb* v. 27 ab. See *LVPAk.* v. p. 59, n 3

Also cf. यथेव चक्खुविञ्ञाणं मनोधातु अनन्तरं ।

न चेव आगतं नापि न निब्बत्तं अनन्तरं ॥ *Vm.* xix. 23.

सो एव पजानाति—इमस्स नामरूपस्स उप्पत्तितो पुब्बे अनुप्पन्नस्स रासि वा निचयो वा नत्थि, उप्पज्जमानस्सापि रासितो वा निचयतो वा आगमनं नाम नत्थि, निरुज्झमानस्सापि दिसाविदिसागमनं नाम नत्थि, निरुद्धस्सापि एकस्मिं ठाने रासितो निचयतो निधानतो अवट्ठानं नाम नत्थि । यथा पन वीणाय वादियमानाय उप्पन्नस्स सद्दस्स नेव उप्पत्तितो पुब्बे सन्निचयो अत्थि···न निरुद्धो कत्थचि सन्निहितो तिट्ठति, अथ खो वीणञ्च उपवीणञ्च पुरिसस्स च तज्जं वायामं पटिच्च अहुत्वा सम्भोति, हुत्वा पटिवेति एवं सब्बे पि रूपारूपिनो धम्मा अहुत्वा सम्भोन्ति हुत्वा पटिवेन्तीति । *Vm.* xx. 96.

Also see—षडिमे महाराज धातव···षडिमानि स्पर्शायतनानि···अष्टादशेमे मन-उपविचाराः ।··तत्र महाराजाध्यात्मिकः पृथ्वीधातुः उत्पद्यमानो न कुतश्चिदागच्छति, निरुध्यमानो न क्वचित्संनिचयं गच्छति···*B. Pañjikā*, ix. 88 See *Śikshā*, p 229.

[2] Cf. यदि चानागतं चक्षुः स्यान्नोक्तं स्याद् 'भूत्वा न भवती'ति । वर्तमानेऽध्वन्यभूत्वा भवतीति चेत् । न । अध्वनो भावादनर्थान्तरत्वात् । अथ स्वात्मन्यभूत्वा भवति, सिद्धमिदमनागतं चक्षुर्नास्तीति । *Akb* v. 27 ab See *B. Pañjikā*, ix. 142 ab

[3] Cf. याज्ञवल्क्येति होवाच यत्रास्य पुरुषस्य मृतस्याग्निं वागप्येति वातं प्राणश्चक्षुरादित्यं मनश्चन्द्रं दिशः श्रोत्रं पृथिवीं शरीरमाकाशमात्मौषधीर्लोमानि वनस्पतीन्केशा अप्सु लोहितं च रेतश्च निधीयते···*Brihadāraṇyakopanishat*, iii. 2. 13.

२६८ साङ्ख्याः खल्वप्याचक्षते—"चक्षुष्प्रधानादागच्छति तत्रैव च पुनर्वि-गच्छति" इति। तन्निरासार्थं च भगवानवोचत्—"चक्षुरुत्पद्यमानं न कुतश्चिदागच्छति।" अदेशप्रदेशस्थाः खल्वनागतातीतपरमार्थविज्ञप्ति-सञ्ज्ञिता धर्म.(र्मा.) इति तदागमनगमनानुपपत्तिः।

कस्तर्हि वाक्यार्थः—"अभूत्वा भवति। भूत्वा च प्रतिविगच्छति"[१] इति? द्विविधं हि चक्षुर्द्रव्यसदे[3]व परमार्थसतो यदप्रबुद्धमुभयम्(?)। अन्यत्प्रबुद्धमनु(-द्धमु?)पात्तक्रियम्। पूर्वं तद्धेतून्प्रतीत्य क्रियामुपादत्ते प्रबुध्यत इत्यर्थः। उपात्तक्रियं च द्वितीयम्। तद्धि क्रियामुज्झत्प्रतिविगच्छतीत्युक्तं भवति।

साङ्ख्यमतनिषेधार्थं वा। साङ्ख्याना खल्वेकं कारणं नित्यं स्वां जातिमजहत्तेन तेन विकारविशेषात्मना भूत्वा भूत्वाऽन्येनान्येन कार्य[4]विशेषात्मना परिणमतीति। तत्प्रतिषेधार्थं भगवानवोचत्—"चक्षुरुत्पद्यमान न कुतश्चिदागच्छति निरुध्यमानं न क्वचित्संनिचय गच्छति" इति। चक्षुरभूत्वा वर्तमानेऽध्वनि क्षणमात्र क्रियारूपमादाय त्यक्त्वा पुनरदर्शनं गच्छति।

किञ्चान्यत्, अत एवानागतास्तित्वसिद्धे.। यदुक्तमस्मिन्नेव सूत्रे "चक्षुरुत्पद्यमानं न कुतश्चि[5]दागच्छति" इत्यत्रैतदादर्शितम्। सदिदं चक्षुरन्तरङ्गबहिरङ्गकारणसामग्रीसन्निधानोपाधिवशेन क्रियामुपाददान न कुतश्चिदागच्छति। कुत. पुनस्तत्सत्त्वमिति चेत्। मुख्यसत्ताविष्टे कर्तरि शानचो विधानान्निरुध्यमानवदिति। तस्मा[द्] दुर्विहितवेताडोत्थानवत् सौत्रान्तिकैः स्वपक्षोपघाताय सूत्रमेतदाश्रीयते।

[6]एवं तावदागमात्सिद्धमध्वत्रयास्तित्वम्।

युक्तितोऽपि—'धीनामगोचरत्वाच्च तत्सत्त्व वर्तमानवत्।'[२] तदाकारया खलु बुद्ध्या यस्यार्थस्य स्वसामान्यलक्षण परिच्छिद्यते, यश्च बुद्धोक्तनामकायधर्मकायाभ्या(भ्या)मभिद्योत्यते स परमार्थतो विद्यते। कथम्? वर्तमान चक्षूरूपादिवत्। ज्ञानज्ञेयाभिधानाभिधेयसम्बन्ध[ः] खल्वव्यतिक[7]इति शिष्टा-ह(:) प्रतिपद्यन्ते॥

असदालम्बनाऽपि बुद्धिरस्तीति चेत्। अत्रापदिश्यते—

[ 306 ] नासदालम्बना बुद्धिरागमादुपपत्तितः ।

आगमस्तावत्—"चक्षुः प्रतीत्य रूपं चोत्पद्यते चक्षुर्विज्ञानं यावन्मनः प्रतीत्य धर्मांश्चोत्पद्यते मनोविज्ञानम् । एतावच्चैतत्सर्वमस्ति"[1] इत्युक्तं भगवता । तत्र मनोविज्ञानं त्रैयध्विकासंस्कृतधर्मविषया[यम्], [(8)]पञ्चविज्ञान-कायाः प्रत्युत्पन्नपञ्चविषयालम्बनाः । न तु कचिदसा(स)[दा]लम्बनमुक्तं नापि तदस्तीति तद्विषयबुद्ध्यभाव· ।[2]

तथोक्तम्—"यद्व(दु)त लोके नास्ति तदहं द्रक्ष्यामि" इति विस्तरः[3] ।

---

[1] Cf सब्ब वो भिक्खवे देसिस्सामि ।···किञ्च भिक्खवे सब्ब ? चक्खु चेव रूपा च । सोतञ्च सद्दा च । घानञ्च गन्धा च । जिह्वा रसा च । काया च फोट्ठब्बा च । मनो च धम्मा च । इद वुच्चति भिक्खवे सब्ब । *S* iv. p 15 See *S* iv pp. 15-30, V. supra, p 3, n 2 The Pāli passage is according to the *ayatanadesanā*— इति छन्न विञ्ञाणकायान उप्पत्तिद्वारारम्मणता द्वादस वुत्तानी ति । *Vm* xv. 10.

For the *dhātu desanā*, see the following —चक्खुञ्च पटिच्च रूपे च उप्पज्जति चक्खुविञ्ञाण । सोत च पटिच्च ···मनञ्च पटिच्च धम्मे च उप्पज्जति मनोविञ्ञाण . *S*. ii p 72

[2] यदप्युक्तम "द्वय प्रतीत्य विज्ञानस्योत्पादात्" इतीद तावदिह सम्प्रधार्यम् । यन्मन प्रतीत्य धर्मांश्चोत्पद्यते मनोविज्ञान, कि तस्य यथा मनो जनक प्रत्यय एव धर्मा आहोस्विदा-लम्बनमात्र धर्मा इति । यदि तावत् जनक प्रत्ययो धर्म कथ यदागत कल्पसहस्रेण भवि-ष्यति वा न वा तदिदानीं विज्ञान जनयिष्यति । निर्वाण च सर्वप्रवृत्तिनिरोधान्जनक नोपपद्यते । अथालम्बनमात्र धर्मा भवन्ति, अतीतानागतमप्यालम्बन भवतीति ब्रूम । यदि नास्ति कथमालम्बनम् ।

अत्रेदानीं ब्रूम । यदा तदालम्बन तथास्ति । कथ तदालम्बनम् । अभूत् भविष्यति चेति । नहि कश्चिदतीत रूप वेदना वा स्मरन्नस्तीति पश्यति । कि तर्हि । अभूदिति । यथा खल्वपि वर्तमान रूपमनुभूत तथा तदतीत स्मर्यते । यथा चानागत वर्तमान भविष्यति तथा बुद्ध्या गृह्यते । यदि च तत्तथैवास्ति वर्तमान प्राप्नोति । अथ नास्ति, असदप्या-लम्बन भवतीति सिद्धम् । तदेव तद्विकीर्णमिति चेत् । न । विकीर्णस्याग्रहणात् । यदि च तत्तदेव रूप केवल परमाणुशो विभक्तम् । एव सति परमाणवो नित्या प्राप्नुवन्ति । परमाणुसचयविभागमात्र चैव सति प्राप्नोति । न तु किंचिदुत्पद्यते नापि निरुध्यत इत्याजीवि-कवाद आलम्बितो भवति । सूत्र चापविद्ध भवति । 'चक्षुरुत्पद्यमान न कुतश्चिदागच्छती'-ति विस्तर । अपरमाणुमयानाना वेदनादीना कथ विकीर्णत्वम् । तेऽपि च यथोत्पन्नानुभूता स्मर्यन्ते । यदि च ते तथैव सन्ति नित्या प्राप्नुवन्ति । अथ न सन्ति, असदप्यालम्बनमिति सिद्धम् । *Akb*. v. 27 ab. See *Sakv* p 474

[3] *Cf*. यत्तर्हि बोधिसत्वेनोक्तम्—"यल्लोके नास्ति तदह ज्ञास्यामि वा द्रक्ष्यामि वा नेद स्यात् विघ्न" इति । अपरे आभिमानिका भवन्त्यसन्तमप्यवभास सन्त पश्यन्ति । अहं

तथा—"त्रयाणां सन्निपातः स्पर्शः। सहजाता वेदना"[1] इति विस्तरः। एतेनाभिधानाभिधेयसंबन्धः प्रत्युक्तः। तदेवं सति सूत्रेऽस्मिन्मध्यमाप्रति(९)-पत्प्रदर्शिता। यदुत—केनचित्प्रकारेण शून्याः संस्काराः मिथ्यापरिकल्पितेन पुद्गलात्मविज्ञानाभूतपरिकल्पादिना। केनचिदशून्याः, यदुत—स्वलक्षण-सामान्यलक्षणाभ्यामिति[2]। यथा कात्यायत(-य)न सूत्रे—"लोकसमुदयं ज्ञात्वा या लोके नास्तिता सा न भवति। लोकनिरोधं ज्ञात्वा या लोकेऽस्तिता सा न भवति इतीमौ[V B, 8 Fol 110a](1)द्वावन्तौ परित्यज्य मध्यमया प्रतिपदा तथागतो धर्मं देशयति।"[3] न चैतद् द्व[यम]स्तिनास्तित्वाख्य-मेकाधिकरणं विरोधादुपपद्यते न च निराधिष्ठानम्। नापि खपुष्पशून्या-धिष्ठितम्।

---

तु सन्तमेवास्तीति पश्यामीत्यय तत्राभिप्राय। इतरथा हि सर्वबुद्धीना सदालम्बनत्वे कुतोऽस्य विमर्श स्यात्, को वा विशेष। इत्य चैतदेवम्। *Akb* v 27 ab

—यद्यभावो विज्ञानस्यालम्बन यत्तर्हीति विस्तर। बोधिसत्त्वेन चरमभविकेनैवमुक्तम्—यल्लोके नास्ति, तज्ज्ञास्यामीत्येष सम्भवो नास्तीति वचनादभावालम्बनं न भवतीति दर्शित भवति। आचार्योऽन्याभिप्रायतामस्य सूत्रस्य दर्शयन्नाह—अपरे आभिमानिका इति विस्तर। अपरिशुद्धसमाधयोऽपरे…असन्तमप्यवभास दिव्यचक्षुरवभास प्रयोगावस्थाया सन्तमित्येव पश्यन्ति। अह तु सन्तमेवावभास पूर्वस्य दिव्यचक्षुषोऽस्तीति पश्यामीत्ययमत्र सूत्रेऽभिप्राय। कुतोऽस्य विमर्श इति। सर्वबुद्धीना सद्विषयत्वे व्यवस्थाप्यमाने कुतोऽस्य विमर्शविचार सन्देहो वा स्यात्। यदुत लोके नास्तीति विस्तरेण य उक्त। सदसदालम्बने तु बुद्धीनामय विमर्श सम्भवति। नान्यथा। को वा विशेष इति। को वा बोधिसत्त्वस्यान्यभ्यो विशेष, यदि तेऽपि सन्तमेवावभास पश्यन्ति नासन्तम। सदसदालम्बनत्वे हि बुद्धीनामय विशेषो भवति। इत्य चैतदेव सत्, असदालम्बना बुद्धय इति। *Sakv* pp 475—6

[1] Cf चक्खुञ्चावुसो पटिच्च रूपे च उप्पज्जति चक्खुविञ्ञाण तिण्ण सगति फस्सो, फस्सपच्चया वेदना *M sutta* 18

[2] काय स्वसामान्यलक्षणाभ्या परीक्षते। वेदना चित्त धर्माश्च। स्वभाव एवैषा स्वलक्षणम्। सामान्यलक्षण तु अनित्यता संस्कृताना दु खता सास्रवाणा शून्यतानात्मते सर्वधर्माणाम्। *Akb* vi 14 cd —'स्वभाव एवैषा स्वलक्षणम्। क स्वभाव? कायस्य भूतभौतिकत्वम। वेदनाया अनुभवत्वम्। चित्तस्योपलब्धित्वम्। *Sakv* p 529. See *LVPAk.* vi p 158

[3] Cf कित्तावता नु खो भन्ते सम्मादिट्ठि होती ति? द्वयनिस्सितो ख्वाय कच्चायन लोको येभुय्यन अत्थित च नत्थित च।

लोकसमुदयं खो कच्चायन यथाभूत सम्मप्पञ्ञाय पस्सतो या लोके नत्थिता सा न होति। लोकनिरोध खो कच्चायन यथाभूत सम्मप्पञ्ञाय पस्सतो या लोके अत्थिता सा न होति। *S.* II. p 17

युक्तिरपि। ज्ञानज्ञेयाभिधानाभिधेयसंबन्धस्याज्ञानकत्वात्। नास्ति-शशविषान(ण)मित्यस्य ज्ञानस्याभिधानस्य चासद्विषयत्वमिति चेत्। तत्र ब्रूमः—

(2)अन्यापेक्ष्येऽथ संबन्धप्रतिषेधोऽथशृङ्गयोः ॥

योऽयं नास्ति शशविषाणादिप्रतिषेधोऽस्य तर्हि किं प्रतिषेध्यम्? यदसदालम्बना बुद्धिर्नास्त्यभिधानं वा निरभिधेयमिति? अत्रापदिश्यते। 'अन्यापेक्ष्येऽथ संबन्धप्रतिषेधः।' कार्यकारणादिस्त्रिविधः[1] संबन्धोऽत्र गोविषाणादिषु पूर्वदृष्टः शशविषाणादिषु प्रतिषिद्ध्यते। श(3)शपि(शि)रोमाग्रकाकाशधातुसंबन्धदर्शणा(ना)द्यदि शशशिरस्या(स्य)पि विषाणमभविष्यत्तद्वदेवोपलप्स्यत। न चोपलभ्यते। तस्मात्संबन्धान्तरापेक्षं शशविषाणशब्दगडुमात्र नञा संबन्ध्यन्तरसंबन्धबुद्ध्यपेक्षेणावद्योत्यते, न तु किञ्चिदभिधानमभिधेय वा प्रतिषेध्यात्मनः(ना) श्रीयत इति सिद्धं सर्वा बुद्धिः सद्विषयेति।

(4)एतेनाजातं ध्वस्तं च गोविषाणं प्रत्युक्तम्। गोशिरसा(शिरो)-मात्रमाकाशधातुवेष्टित(तं) दृष्ट्वाः(ष्ट्वा) जनिष्यते ध्वस्त वा गोविषाणमिति द्रष्टव्यम्।

त्रयोदशायतनप्रतिषेधबुद्धिविषयाद् अस्तित्वादसदालम्बना बुद्धिरस्तीति चेत्[2]। न। भगवतैव वाग्वस्तुमात्रमेतदिति निर्णीतत्वात्। उक्तं हि भगवता हस्ततालो(लो)पमे सूत्रे—"एतावत्सर्वं यदुत(5) चक्षू रूपं च यावन्मनो धर्माश्च। यः कश्चिदेतद् द्वयं प्रत्याख्याया[न्य]द् द्वयं ज्ञेयमभिधेयं वा

[1] सज्ञासज्ञि-ज्ञानज्ञेय क्रियाकारणसबन्धा। V. infra, *Adv. kārikā* 313

[2] *Cf* यद्यसदप्यालम्बन स्यात्, त्रयोदशमप्यायतन स्यात्। अथ त्रयोदशमायतन नास्तीत्यस्य किमालम्बनम्? एतदेव नामालम्बनम्। एव तर्हि नाम एव नास्तीति प्रतीयेत। यश्च शब्दस्य प्रागभावमालम्बते किं तस्यालम्बनम्। शब्द एव। एवं तर्हि य शब्दाभाव प्रार्थयते तस्य शब्द एव कर्तव्य स्यात्। अनागतावस्थ इति चेत्। सति कथ नास्तिबुद्धि। वर्तमानो नास्तीति चेत्। न। एकत्वात्। यावता तस्य विशेषस्तस्याभूत्वाभावसिद्धि। तस्मादुभयं विज्ञानस्यालम्बन भावश्चाभावश्च। *Akb* v. 27 ab.

त्रयोदशमप्यायतनमालम्बनं स्यादिति। त्रयोदशानामायतनाना त्रयोदशमायतनम्। तद्विज्ञानस्यालम्बन स्यात्। असदालम्बनत्व इष्यमाणे तदालम्बन वा विज्ञान स्यात्। एव वैभाषिकेणोक्ते आचार्य आह—अथ त्रयोदशमिति विस्तर। एतदेव नामेति वैभाषिका। यदेतन्नाम त्रयोदशमायतनमिति। तदालम्बनम्। एव तर्हि नामैव नास्तीति प्रतीयेत। नाभिधेय त्रयोदशायतनाभावलक्षणम्। किं च यश्च शब्दस्य प्रागभावमालम्बते, किं तस्यालम्बनम्। भवतीति वाक्यशेष। एव प्रकृते वैभाषिक आह—शब्द एवालम्बनमिति प्रकृतम्। एव तर्हीति विस्तरेणाचार्य।...*Sakv* p 475

कल्पयेत् वाग्वस्तुमात्रमेवास्य स्यात्। पृष्टो वा न संप्रजानीयादुत्तरे वा संमोहमापद्येत। यथापि तदविषयत्वात्।"[१] इति।

किञ्च, अस्तिशशविषाणाभिधानाभिधेयवच्छास्त्युक्तिरपि वाग्वस्तुमात्रं विषाणाख्याभिधेयार्थसंब(6)न्धविहीनम्। एतेन षष्ठः स्कन्धः प्रयुक्तः। किञ्च, पञ्चस्कन्धविषयविपरीतज्ञानप्रतिषेधात्। अलातचक्रबुद्धिप्रतिषेधवत्, द्विचन्द्रबुद्धिप्रतिषेधवच्च। उक्तं हि भगवता—"ये केचिदात्मेति समनुपश्यन्तः समनुपश्यन्ति सर्वे त इमानेव पञ्चोपादानस्कन्धान्समनुपश्यन्तः समनुपश्यन्ति"[२] इति स्कन्धविषये चैषा निरात्म(7)द्रव्यभ्रान्तिरिन्यवद्योत्यते।

किञ्च, नञः सदसत्प्रतिषेध्यविषयत्वानुपपत्तेश्च। सन्तं तावदर्थं न प्रतिषेद्धुम(म्) समर्थः। यदि हि सन्तमर्थं शक्नुयात्प्रतिषेद्धुं न राजानो हस्त्यश्वं वि(बि)भृयुर्ण(र्न) सन्ति दस्यव इत्येवं ब्रूयुः। इत्युक्ते दस्यूनामभाव[ः] स्यात्। न चैतदस्ति। अथासन्तं प्रतिषेधयति, तेनाभावप्रतिषेधाद्भाव ए(8)व स्यादिति। तस्मान्नञो न गोविषाणादि[ः] नापि शशः(श)[विषाणादिः] प्रतिषिध्यते। किं तर्हि। शशाकाशधातुसंबन्धबुद्ध्यपेक्षेण गोविषाणादिद्रव्यासंबन्धबुद्धयोऽवद्योत्यन्ते। सिद्धा सदालम्बनैव बुद्धिः। एवमन्यत्रापि॥

[ 307 ] रूपादौ वस्तुनि क्षीणे सत्येवोत्पद्यते मतिः।
सा ज्ञानस्यासदाकारा शास्तुस्तथान्यचित्तवत्॥

रूपादौ खल्वपि (9)वस्तुन्यभ्यतीते सत्येव बुद्धिरुत्पद्यते। न ह्यसदालम्बना बुद्धिरुत्पद्यते। सदालम्बना बुद्धिरस्तीत्युपपादितम्। न च नो द्रव्यं विनश्यतीत्युक्तम्। यदेतद् रूपादिद्रव्यं पूर्वानुभूतं तदेव तत्स्मृत्या गृह्यत इत्युपरिष्टादपि साधयिष्यामः।

या तर्हि निरुद्धदेवदत्तानुस्मृतिर्घटानुस्मृतिर्वा सा कथं जायते? अतीतानाग[V A, 8 Fol 110 b.](1) तयोर्देवदत्तघटप्रज्ञप्त्युपादानयोरिति। अत्र ब्रूमः। सापि खलु साविद्यास्यासदाकारोत्पद्यते स्थान्वा(ण्वा)दौ पुरुषादिबुद्धिवत्। निरविद्यस्य तु शास्तुस्तत्त्वाकारा भवति रूपादिधर्ममात्रबुद्धिरेव।

---

[१] किञ्च भिक्खवे सब्ब। चक्खु चेव रूपा च · पे · मनो च धम्मा च। इद वुच्चति भिक्खवे सब्ब। यो भिक्खवे एव वदेय्य। अहमेत सब्ब पच्चक्खाय अञ्ञ सब्ब पञ्ञापेस्सामीति। तस्स वाचावत्थुरेवस्स। पुट्ठो च न सम्पायेय्य। उत्तरिञ्च विघात आपज्जय्य। त किस्स हेतु। यथा त भिक्खवे अविसयस्मि नि। S iv p. 15

V. supra, p. 269, n. 1

[२] Cf ये हि केचि भिक्खवे समणा वा ब्राह्मणा वा अनेकविहितमत्तान समनुपस्समाना समनुपस्सन्ति। सब्ब ते पञ्चुपादानक्खन्धे समनुपस्सन्ति एतेस वा अञ्ञतर। S. iii p 46 See *Sakv* p 587

तद्यथा परचित्तविदः स्वलक्षणाकारा बुद्धिरुत्पद्यते। तत्सामर्थ्योपाधि[व]शे-नान्यथापि जानीते। तद्वत्तत्सामर्थ्येण भाविनीं भूतां च संज्ञा(ज्ञां) (2)रूपा-दिषु देवदत्तघटलक्षणां प्रतिपद्यत इति॥

इतश्च सदतीतानागतम्—

[ 308 ] हर्षोत्पादभयोद्वेगस्मृत्युत्पत्त्य(त्त्य)न्नभावतः ।

अतीतानागतं हि मित्रममित्रौ(त्रं) वा मनसि कृत्वा हर्षोत्पादभयाद-योऽभ्युपजायन्ते। ते चानिमित्ता न भवितुमर्हन्ति। कथम्? वर्तमानवत्। तद्यथा सति वर्तमाने मित्रेऽमित्रे वा हर्षभयादयो भवन्ति नासती(3)ति तद्वत्।

किञ्च,

साङ्गस्य शक्त्यभिव्यक्तेः सदीपघटरूपवत् ॥

विद्यमानस्य ह्यनागतस्य वस्तुनोऽतीतप्रत्युत्पन्नसहकारिकारणसाम-ग्रीपरिगृहीतस्य शक्तिमात्रमाविर्भवति। कथम्? 'सदीपघटरूपवत्।' तद्यथा तमसि विद्यमानस्य घटरूपस्य स्वात्मोद्भावनशक्तिः प्रदीपादिकारणसामग्री-सन्निधाने सति भवति (4)तद्वदिति। इतश्चास्त्यनागतम्॥

[ 309 ] जनीहाकर्तृसाध्यत्वात्पञ्चभावविकारवत् ।

तद्यथा अस्ति विपरिणमते वर्धते क्षीयते विनश्यतीति सति मुख्यसत्ता-विष्टे कर्तरि एते पञ्च भावविकारा भवन्ति। तद्वज्जायत इत्ययमपि षष्ठः भाव-विकारः[1] सति मुख्याविष्टे कर्तरि भवितुमर्हतीति। किञ्च, जायमानता सत्ता नश्यता वा(5)सामानाधिकरण्ये सत्यनन्यतापत्तिसङ्करदोषप्रसङ्गात्। वैयधिक-रण्याभ्युपगमे संबन्धाभावादेकत्र तद्व्यपदेशानुपपत्तिः। किञ्च, जायमान-तादिक्रियाभावेऽस्तित्वायोगात्। कथम्? शशविषाणवदिति।' उपचारसत्तेति चेत्। न। मुख्यसत्ताया सत्यामुपचारसद्भावात्, वक्ष्यमान(ण)दोषाच्च।

इतश्चास्ति—

सतः कृ(क्रि)याङ्गत्वाद्दृष्टेर्विकार्य(6)प्राप्यकर्मवत् ॥

तद्यथा विकार्ये कर्मणि सति करणं दृष्टं काष्ठास्कटी करोति। प्राप्ये च कर्मणि सति ग्रामं गच्छति देवदत्तः सूर्यं च पश्यतीति गमनदर्शिक्रिये सति कर्मणि भवतः। तद्वन्निर्वर्त्येऽपि कर्मणि मुख्यद्रव्यास्तित्वे सति देवदत्त-कर्तृका घटक्रियोपपद्यत इति॥

सांख्यः पश्यति—विद्यमानमेव जायते। (7)तद्यथा क्षीरे विद्यमानं दधि, कार्यकारणयोरेकत्वात्। तं प्रत्यपदिश्यते—

[1] See *Nirukta*, 1. 2. 8.

[ 310 ] द्वितीयं जन्म जातस्य वस्तुनो नोपपद्यते ॥

यदि खलु क्षीरे दध्यादयो विकारा सन्ति बाजे चाङ्कुराद्य शुक्रशो णि(णि)ते च कललादय तेषां जातानां क्षारादिवज्जन्म पुनर्ण(र्न) युज्यते। यथा च न युज्यते तथा पूर्वमेवाविष्कृतम्।

वैशेषिको मन्यते—कपालेष्वविद्यमानं घटद्रव्यं तन्तुषु चाविद्यमानं पटद्रव्यं कपालतन्तुसंयोगादुत्पद्यते। गौण्या च कल्पनया विप्रकृतावस्थाविप या जनिकर्तृसत्ता व्यपदिश्यत इति। अस्याप्यवयविद्रव्यं सहावयवै पूर्वमेव विहितोत्तरम्। यत्पुनरुक्तमुपचारसत्तया जनिकर्त्रोपदिश्यत इत्यत्र ब्रूम —

मुख्यसत्ता गुणाभावाद्गौणी(णी) सत्ता न विद्यते ॥

न हि मुख्यसत्ता[या] गुणाभावेऽवयवाभावे वा कारणेषु प्राग् पत्त्यभावे वा कार्यसत्तोपचारो युज्यते ॥

कस्मात् ?

[ 311 ] साधर्म्ये सति तद्वृत्तेर्व्याहार मधुरोक्तिवत्।

तद्यथा मधुरवाग्देवदत्त इति वाचि माधुर्यगुणयुक्तस्य गुडद्रव्यस्य मधुनो वा साधर्म्यमभिलषणीयता विद्यते इत्यतो वाचि [VI B 1 Fol 111 a][1] माधुर्यशब्द प्रयुज्यते। कन्यामुखे च चन्द्रकान्तिसादृश्य दृष्ट्वा चन्द्रशब्द प्रयुज्यते। वाहीके च जाड्यसाधर्म्याद्गोशब्द प्रयुज्यते—गौरयं वाहीक इत्येव मादि। न च तथा कश्चिद्गुणोऽवयवगन्धोऽपि तन्तुषु तत्संयोगे वा प्रागुत्पत्त्य भाव निरात्मन कार्यस्यास्तीति। न च कार्यं किञ्चिदीषत्कृतमुपपद्यते। निष्ठासत्त्वैककालाभ्यु[2]पगमात्। प्रागव्यपदेश्य वस्तुमात्र विप्रकृत जायत इति चेत्। न। उक्तोत्तरत्वात्। मम तु चन्द्रकोटीप्रकाशलक्षणो दृष्टान्तो विद्यते।

आनिष्टलिङ्गमुख्यस्य जन्मेष्ट दारकादिवत् ॥

अयं हि जनिरभिनिष्क्रमणादिवचनो नात्मप्रादुर्भाववचन। कथम् ? 'दारि(र)कादिवत्। तद्यथा दारको मुख्यसत्तावित्वा मातुकुक्षेर्निष्क्रमने(णे) जायत[3] इत्युच्यते। तद्वदत्रापीति ॥

दार्ष्टान्तिक खलु ब्रूते—कारणशक्तिषु निरात्मकजनिकर्तृपचार प्रव र्तत। त प्रति ब्रूम —

[ 312 ] स्यात्खपुष्पं समुत्फुल्लं स्याच्चटालश्च दर्दुर ।
स्वभावो यदि भावाना प्रागभूत्वा समुद्भवत् ॥

न ह्यसत कस्यचिच्छशविषाणादेरुत्पादो भवति नैरात्म्याविशेषसर्वा

सदुत्पत्तिप्रसङ्गात्।[1] तद्धेतु[(4)]कानां च जायमानजातनश्यत्कालेष्वात्मास्तित्वस्थितशक्तीनामनुपपत्तेः। कारणानां च कार्यात्मकत्वा[त्] प्रागुत्पत्तेरसत्त्वम्, असत्त्वादनुपपत्तिदोषापत्तिः। कुतश्च नाभावो भावीभवति? स्थितिशक्तिक्रिया[ऽ]योगात्॥

कथमयोग इति चेत्। तदाविष्क्रियते—

[ 313 ] स्थितिशक्तिपरित्यक्तान्धर्मान्नाशान्वितोदयान्।
वद सोम्य कथं याति प्रतीत्या [(5)]वस्तु वस्तुताम्॥

इह खलु भवतामहेतुको विनाशः[2] सर्वोत्पत्तिमतां नित्यसंनिहितः। तस्मिंश्च सति जन्मस्थितिशक्तिक्रिया न विद्यन्ते, विरोधात्। तास्वसतीषु कारणमपि चे(चै)व विनष्टम्। तदस्मिंश्चासति किं प्रतीत्य असन्निरात्मकं वस्तु वस्तुतां यातीत्याचक्ष्व। कथं ते कार्यं कारणं चोपपद्यते? सतां हि संज्ञासंविधानध्येयक्रियाकारणहे[(6)]तुफलादीनामन्योन्यापेक्षप्रसक्तेः। अथ तथाभावो न कश्चिदस्ति भावविरोधी, कथं तर्हि स भावो नष्ट इत्युच्यते? तस्माद्भवतो वाङ्मात्रमेतत्, मम तु विद्यमानयोरेवोपकार्युपकार[क]भावो युक्तः॥

यस्मात्—

---

[1] Cf ···यस्य त्वतीतानागत द्रव्यतोऽस्ति तस्य फल नित्यमेवास्तीति किं तत्र कर्मण सामर्थ्यम्। उत्पादने सामर्थ्यम्। उत्पादस्तर्ह्यभूत्वा भवतीति सिद्धम्। अथ सर्व एव चास्ति। कस्येदानीं क्व सामर्थ्यम्। वार्षगण्यवादश्चैव द्योतितो भवति—'यद्यस्त्यस्त्येव तत्। यन्नास्ति नास्त्येव तत्। असतो नास्ति सम्भव। सतो नास्ति विनाश' इति। वर्तमानीकरणे तर्हि सामर्थ्यम्। किमिद वर्तमानीकरण नाम। देशान्तराकर्षण चेत्। नित्य प्रसक्तम्। अरूपिणा च कथ तत्। यच्च तदाकर्षण तदभूत्वा भूतम्। स्वभावविशेषण चेत् सिद्धमभूत्वा भवनम्। तस्मान्नैव सर्वास्तिवाद शासने साधुर्भवति यदतीतानागतं द्रव्यतोऽस्तीति वदति। *Akb* v 27 c

—वर्तमानीकरण इति वैभाषिक। किमिदानीं वर्तमानीकरणमिति विस्तरेणाचष्टे। देशान्तराकर्षण चेत्। यदि मन्यसे हेतुना फलस्य देशान्तराकर्षण वर्तमानीकरणमिति, अत्र ब्रूम। नित्य प्रसक्त फलमिति वाक्यशेष। केवल देशान्तराद्देशान्तराकर्षणम्, न किञ्चिदपूर्वमुत्पद्यत इति नित्य प्रसक्तम्। अरूपिणा च वेदनादीनाम्। कथ तद्देशान्तराकर्षणम्। अमूर्तत्वेनादेशस्थत्वान्न तद्युज्यत इत्यभिप्राय। यच्च तदाकर्षण क्रियासंज्ञकम्, तदभूत्वा भूतमित्यभूत्वाभावसिद्धिरित्यभिप्राय। स्वभावविशेषण चेत्। यदि मन्यसे हेतुना स्वभावोऽस्य फलस्य विशेष्यते, तेन फलविशेषण भवतीति। अत्र ब्रूम। सिद्धमभूत्वा भवनमिति। सिद्धमभूत्वा विशेषणस्य भवन प्रादुर्भाव इति। *Sakv.* pp 476—7.

[2] V. supra, p 107, n 1.

[314] लोके दृष्टः सतोरेव परस्परमनुग्रहः ।
तद्वदेवोपघातोऽपि नाश्वशृङ्गाहिवा(पा)द्योः ॥

अनुग्रहोपघातयोश्च (7)कार्यकारणसंबन्धोपचारश्च सतोरेव भवतीत्यास्तनन्धयेभ्यः प्रसिद्धमेतत्, नासतोः न च सदसतोरिति ॥

वैतुलिकः[1] कल्पयति—

[315] यत्प्रतीत्यसमुत्पन्नं तत्स्वभावान्न विद्यते ।[2]

यत्खलु निस्वभावं निरात्मकं हेतून्प्रतीत्य जायते तस्य खलु स्वभावो नास्ति । न हि तत्कारणेषु प्रत्येकमवस्थितं नापि भागशो नाप्यन्य(8)त्र कचित् । नापि हेतुसमुदाये तद्रूपाभावात् । यच्च न कचिदस्ति तत्कतमेन स्वभावेनोत्पत्स्यत इति नास्ति स्वभावः । यस्य च नास्ति स्वभावः तत्कथमस्तीत्युच्यते ? तस्मादलातचक्रवन्निस्वभावत्वात् सर्वधर्मा निरात्मान इति[3] ।

तं प्रत्यपदिश्यते—

---

[1] Cf नैवासतो नैव सत प्रत्ययोऽर्थस्य युज्यते ।
असत प्रत्ययः कस्य सतश्च प्रत्ययेन किम् ॥
न सन् नासन् न सदसद् धर्मो निर्वर्तते यदा ।
कथं निर्वर्तको हेतुरेवं सति हि युज्यते ॥ *Mādhyamika-kārikā*, 1 6-7.
न भावाज्जायते भावो भावोऽभावान्न जायते ।
नाऽभावाज्जायतेऽभावोऽभावो भावान्न जायते ॥ *Chatuh śataka*, 364

[2] Cf हेतुप्रत्ययसामग्रीं प्रतीत्य जातस्य परायत्तात्मलाभस्य प्रतिबिम्बसमस्य कुतः स्वभावता ?

यः प्रत्ययैर्जायति स ह्यजातो ।
न तस्य उत्पादु स्वभावतोऽस्ति ॥
यः प्रत्ययाधीनु स शून्य उक्तो ।
यः शून्यतां जानति सोऽप्रमत्तः ॥ *B Pañjikā*, ix 2

See *Sikshā*, p 241

[3] Cf यदुक्तं बुद्धेन निःस्वभावाः सर्वधर्मा इति । तत्र कोऽभिसन्धिः ? स्वयमभावतामुपादाय स्वेनात्मनाऽभावतामुपादाय स्वे भावेऽनवस्थिततामुपादाय बालग्राह्यस्वलक्षणाभावतामुपादाय ॥ अपि खलु परिकल्पिते स्वभावे लक्षणनिःस्वभावतामुपादाय परतन्त्रे उत्पत्तिनिःस्वभावतामुपादाय परिनिष्पन्ने परमार्थनिःस्वभावतामुपादाय । अनुत्पन्ना अनिरुद्धा आदिशान्ताः प्रकृतिपरिनिर्वृता इति कोऽभिसन्धिः ? यथा निःस्वभावास्तथा अनुत्पन्नाः । यथा अनुत्पन्नास्तथा अनिरुद्धाः । यथा अनुत्पन्ना अनिरुद्धाश्च तथा आदिशान्ताः । यथा आदिशान्तास्तथा प्रकृतिपरिनिर्वृताः ॥ *Asm* p 84

न विद्यते स्वभावाद्यद्विद्यते तत्ततोऽन्यथा ॥

प्रश्नोद्यमेतत्—यत्प्रतीत्यसमुत्पन्नं (१)तत्संवृत्यात्मना विद्यते वनसंघादिवत्। यत्परमार्थतो विद्यते तस्य प्रतीत्यावस्थाशक्तिमूर्तिक्रियादिमात्रमुत्पद्यत[1] इति ॥

तस्य तर्हि हेतवो विद्यमानस्य कमुपकारं कुर्वन्तीति ? अत्राभिधीयते। न खलु द्रव्यस्वभावास्तित्वं प्रति कश्चिदुपकारं कुर्वन्ति।[2] न च स्वभावस्यापेक्ष्य प्रज्ञप्तिः। किं तर्हि ?

[ 316 ] प्रकुर्वन्ति दशामात्रं [VI A, 1 Fol 111 b]
(१)हेतवो वस्तुनः सतः।
राजत्वं राजपुत्रस्य सात्मकस्यैव मन्त्रिणः ॥

तद्यथाऽभिजातस्य राजपुत्रस्य विद्यमानस्य मन्त्रिणः सचलसमुदयाः परिग्रहानुग्रहमात्रेणोपकुर्वन्तो राजत्वं कुर्वन्त्येवमनागतस्य वस्तुनः सतो हेतुप्रत्ययाः समेत्य लक्षणमात्र(त्रं) [वर्त]मानाख्यमैश्वर्याधिपत्यं कुर्वन्तीत्यवबोद्धव्यम् ॥

अन्ये पुनर्वर्णयन्ति—

[ 317 ] (२)धर्माणां सति सामग्र्ये सामर्थ्यमुपजायते।
चितानां परमानू(णू)नां यद्वदात्मोपलम्भने ॥

यथा खलु परमानु(णु)संचयश्चक्षुषा गृह्यते, प्रत्येकं परमान(ण)वो न गृह्यन्ते, तथा कारणसामग्र्ये सति धर्माणां क्रियासामर्थ्यमुपजायत इति द्रष्टव्यम्।

भदन्तकुमारलातः पश्यति—वातायनप्रविष्टस्या(स्या)न्तःपार्श्वद्वयेऽपि त्रुटयः (३)सन्ति। रश्मिगतस्य तु दर्शनमस्य त्रुटे रश्मिपार्श्वगास्त्वनुमेयाः। एतेन व्याख्यातं धर्माणामध्वयोर्द्वयोरस्तित्वम्। प्राप्य ज्ञानातिशयं मुनयः पश्यन्ति, तास्तु धीर्हि त्रिकज्ञा ॥

---

[1] V infra, *Ad kārika* 323

[2] Cf वैभाषिकाणामेनन्मतम्। अनागत विद्यमान उत्पद्यत इति। तस्मादय पराञ्जयति। 'ननु चैव सति सभागहेतुरभूत्वा अनागतावस्थाया हेतुर्भवति वर्तमानावस्थायामिति प्राप्त' प्रसक्तमित्यर्थ। 'इष्यत एवावस्था प्रति न द्रव्यम्' इति। 'अवस्थाफल हि सामर्थ्य न द्रव्यफलम्' इति। *Sakv* p 201

यस्तु मन्यतेऽतीत कर्माभावीभवत्यनागत च न विद्यते त प्रत्यपदिश्यते-[१]

[ 318 ] कर्मातीतमसद्यस्य फल भावि करोत्यसत् ।
व्यक्तं वन्ध्यासुतस्तस्य जायते व्य[(4)]न्तरात्मजात् ॥

न हि भवतो वर्तमानकालास्तित्वमुपपद्यते, अतीतानागतहेतुफलाभावात्, वन्ध्याव्यन्तरपुत्रजन्मवत् ॥

अत्र प्रत्यवतिष्ठन्ते दार्ष्टान्तिका —न ब्रूम सर्वथाऽतीत न विद्यते। किं तर्हि ? द्रव्यात्मना न विद्यते प्रज्ञप्त्यात्मना तु सदिति ।[२] तत्र प्रतिसमाधीयते—

---

[१] V supra, p 26[illegible]

[२] Cf यत्तक्तमुक्त वास्तीति । वयमपि ब्रूमोऽस्त्यतीतानागतमिति । अतीत तु यद भूतपूर्वम । अनागत यत्सति हेतौ भविष्यति । एव च कृत्वास्तीत्युच्यते । न पुनद्रव्यत । *Akb* v 27 c.

—अतात तु यद्भूतपूर्वमिति । न स्वलक्षणनास्तीति दर्शयति । अनागत यत्सति हेतौ भविष्यतीति अविद्यमानमपि हेतुनद्भावादयवस्थाप्यत इति दर्शयति । एव हि कृत्वाऽस्तीत्युच्यत इति भूतपूर्व भविष्यति चेति कृत्वा । *Sakv* pp 472—3

Also cf एव तु साधुभवति । यथा सूत्र सवमस्तीत्युक्त तथा वदति । कथ च सूत्र सवमस्तीति उक्तम । सवमस्तीति ब्राह्मण यावदेव द्वादशायतनानीति । अध्वत्रय वा । यथा तु तदस्ति तथोक्तम । *Akb* v 27 c

The f lowne Pāli passage supports the Sauntrāntika view that the *atīta* and *anā ata* are only no ions and not realities —

[illegible] —अहोसि त्व अतीतमद्धान न त्व नाहोसि भविस्ससि त्व अनागतमद्धान न त्व न भविस्ससि अत्थि त्व एतरहि न त्व नत्थीति ? एव पुट्ठो त्व [illegible] ? एवं पुट्ठो अह भन्ते एवं [illegible] अहोसाहं भविस्सामहं [illegible] —यो मे अहोसि अतीतो अत्तपटिलाभो स्वेव मे अत्तपटिलाभो सच्चो मोघो अनागतो मोघो पच्चुप्पन्नो यो मे एतरहि पच्चुप्पन्नो अत्तपटि[illegible] [illegible] मोघो अतीतो मोघो अनागतो ? एव पुट्ठो अह भन्ते एव ब्याकरेय्य—यो मे अहोसि अतीतो अत्तपटिलाभो स्वेव मे अत्तपटिलाभो तस्मि समये सच्चो अहोसि मोघो अनागतो मोघो पच्चुप्पन्नो यो मे भविस्सति [illegible] तस्मि समये सच्चो भविस्सति मोघो अतीतो मोघो पच्चुप्पन्नो ।" [illegible] [illegible] इमा खो [illegible] लोकसमञ्ञा लोकनिरुत्तियो लोकवोहारा लोकपञ्ञत्तियो [illegible] । *D* [illegible] ix 45-53

[319] नामसल्लक्षणाभावाद् द्रव्यसत्याङ्गसिद्धितः ।
अनाग(5)तास्यतीतस्य नास्ति प्रज्ञप्तिसत्यता ॥

सोपादानं हि सर्वं प्रज्ञप्तिसत् । न च वर्तमानमुपादानमुपपद्यते । अनागताभ्यतीतस्य तस्मान्निरुपादानस्य प्रज्ञप्त्यभावादसदेतत् ।

यदि तर्ह्यनागतं चक्षुरादिद्रव्यं विद्यते कस्मान्न पश्यति न दृश्यते न विजानाति ? न व्यक्तं कारित्राभावादी(दि)ति ॥

तदत्र कोशकारः प्रश्नयति—

[320] को विघ्नः[1]

(6)यदि चक्षुर्विद्यते किं न पश्यति ? वयं ब्रूमः—

अङ्गवैकल्यम्[2]

दृष्टं हि प्रदीपाद्यङ्गवैकल्ये वर्तमानस्यापि चक्षुषो रूपादर्शनम् ।
स प्रत्याचष्टे—सर्वस्य सदास्तित्वे कुतोऽङ्गवैकल्यम् ? वयमाचक्ष्महे—

न तत्सर्वास्तिता सदा ।

त्रैयध्विकानि खल्वत्राङ्गानि विवक्षितानि । तत्र केषाञ्चिदसांनिध्यं भवति तद्वैकल्यात्कारित्रं न करो(7)तीति ।

स प्रत्याचष्टे—

तत्कथं[3]

---

[1] इद तु वक्तव्यम् । यद्यतीतमपि द्रव्यतोऽस्त्यनागतमिति । कस्मात्तदतीतमित्युच्यतेऽनागतमिति वा ननु चोक्त—'अध्वान कारित्रेण व्यवस्थिता' इति । यद्येव प्रत्युत्पन्नस्य तत्सभागस्य चक्षुष किं कारित्रम् । फलदानप्रतिग्रहणम् । अतीतानामपि तर्हि समागहेत्वादीना फलदानात् कारित्रप्रसङ्गोऽर्द्धकारित्रस्य वेति लक्षणसकर । इद च वक्तव्यम् । तेनैवात्मना सतो धर्मस्य नित्यं कारित्रकरणे

को विघ्नः

येन कदाचित् कारित्र करोति कदाचिन्नेति । *Akb* v. 27a

[2] प्रत्ययानामसामर्थ्यमिति चेन् । न । नित्यमस्तित्वाभ्युपगमात् । *Ibid.*

[3] यच्च तत्कारित्रमतीतानागत प्रत्युत्पन्न चोच्यते

तत्कथं

किं कारित्रस्याप्यन्यदस्ति कारित्रम् । अथ तेनैवातीत नाप्यनागत न प्रत्युत्पन्नमस्ति

किं लक्षणात्कारित्रं ततो वा द्रव्यात्, किमन्यदाहोस्विदनन्यदिति ? तत्र वयं प्रतिवच्मः—

श्रूयतां सद्भ्यः

छायासनमध्यास्य न हि सर्वज्ञप्रवचनगाम्भीर्यं सदेवकेनापि लोकेन शक्यं तर्कमार्गेणावबोद्धुम्[1] । यस्मात्सौम्य—

दुर्बोधा खलु धर्मता ॥[2]

तथापि तु श्रूयताम् ॥

---

च । तेनासंस्कृतत्वान्नित्यत्वमस्तीति प्राप्तम् । अतो न वक्तव्यं यदा कारित्रं न करोति धर्मस्तदाऽनागत इति ।

नान्यत्

अतो न भवत्येव दोषः । एवं तर्हि स एव

अध्वायोगस्तथा सतः । *Akb* v 27 ab

[1] Cf. "Vaibhâshika (does not feel discountenanced by this series of arguments, and says ) We Vaibhashikas, nevertheless, maintain that the past and the future certainly do exist. But (regarding the everlasting essence of the elements of existence, we confess) that this is something we do not succeed in explaining, their essence is deep (it is trascendental), since its existence cannot be established by rational methods " *The Central Conception of Buddhism*, pp 90—91 (See *Ibid*, note 1 )

[2] अजानन्पश्यता केन

"अथागम्यतीतानागते क्व तत्र तस्मिन् वा संयुक्तो भवति ? तज्जातद्वेषानुशयभावात् अतीते तदालम्बनक्लेशानुशयभावादस्तु ति संयुक्तो भवति । अस्त्येव त्वतीतानागतमिति वैभाषिकाः । यश्च नेतुं शक्यते तत्रात्मगम्यतैव वेदितव्यम् ।

गम्भीरा खलु धर्मता ॥

नावश्यं तर्कगम्या भवतीति । अस्ति पर्यायो यदुत्पद्यते तन्निरुध्यते । रूपमुत्पद्यते रूपं निरुध्यते । अस्ति पर्यायोऽन्यदुत्पद्यतेऽन्यन्निरुध्यते । अनागतमुत्पद्यते वर्तमानं निरुध्यते । अध्वाप्युत्पद्यते । उत्पद्यमानस्याध्वसंगृहीतत्वात् । अध्वनोऽप्युत्पद्यते । अनेकक्षणिकत्वादनागतस्याध्वन । *Akb* v 27 cd

—धर्मता इति । धर्माणां स्वभाव । अतीतादिष्वध्वव्यवस्थाने सति तत्संव्यवहारमुत्पादनार्थमाह । अस्ति पर्याय इत्यादि । अस्ति वचनक्रम । रूपमुत्पद्यते रूपं निरुध्यते द्रव्यानन्यत्वात् । अन्यदुत्पद्यतेऽन्यन्निरुध्यते । अनागतमुत्पद्यतेऽन्यदुत्पादाभिमुखत्वात् । वर्तमानं निरुध्यतेऽन्यन्निरोधाभिमुखत्वात् । अध्वाप्युत्पद्यते, उत्पद्यमानस्य धर्मस्याध्वसंगृहीतत्वात्, अध्वस्वभावादित्यर्थः । 'त एवाध्वा कथावस्तु' इति लक्षणात् । अध्वनोऽप्युत्पादनक्षणादुत्पद्यते धर्मः । बहुभाविन्याह । अनेकक्षणिकत्वादनागतस्याध्वन इति । यस्मादनेकेषां क्षणानामनागतानां राशिरूपाणां मध्यादेक क्षण उत्पद्यते । अतोऽध्वनोऽप्युत्पादन इत्युच्यते । *Sakv* pp 477—8

[ 321 ] वर्तमानाध्वसंपातात् मा(8)मग्र्याऽङ्गपरिग्रहात् ।
लब्धशक्तेः फलाक्षेपः कारित्रमभिधीयते ॥

अनागतस्य खलु धर्मस्य वर्तमानाध्वसंपातादन्तरङ्गबहिरङ्गसामग्र्याङ्गपरिग्रहात् लब्धसामर्थ्यस्य धर्मस्य यः फलाक्षेपस्तत्कारित्रमित्युच्यते ।[1] सा च वर्तमानकाला वृत्तिः कारित्रमित्याख्यायते । तत्र यो ब्रूतेऽनन्यत्कारित्रमिति तस्य द्रव्य(9)स्वभावपरित्यागः प्रसज्यते ॥

शास्त्रे तु खलु—

[ 322 ] न वर्तमानता रूपमतीताजा(ना)न(ग)ता न च ।
यतोऽतो नाध्वसंचाराद् रूपात्मान्यथतेष्यते ॥

यदि द्रव्यात्मनो नान्यथात्वं किं तर्हि हेतु[न्] प्रतीत्य जायते ? ब्रूमः—

[ 323 ] अवस्था जायते काचिद्विद्यमानस्य वस्तुनः ।
तथा शक्तिस्तथा वेला तथा सत्ता तथा क्रिया ॥

तत्रावस्थाशक्तिप्रचय [VI B, 2 Fol 112 a](1)क्रियापेक्षा द्रव्यवशा शक्तिः क्रियापेक्षाकृतं सामर्थ्यम् । क्रियाणा(ना)गतफला । द्रव्यवृत्तिवे(वे)ला कालो वर्तमानाख्ये(ख्य.) । मूर्तिः परमाणु(णु)प्रचयविशेषः । सत्ता प्रयोगाख्यं प्रज्ञप्तिसत्यम् । इति सर्वमेतदन्तरङ्गबहिरङ्गकारणसामग्रीसन्निधानापेक्षासत्कस्वरूपम् ॥[2]

---

[1] On *karitra*, see *Aaa* pp 362 ff

[2] Cf यदि धर्म एव कारित्र कस्मात्स एव धर्मस्तेनैवात्मना विद्यमान कदाचिदतीत इत्युच्यते कदाचिदनागत इत्यध्वना व्यवस्थान न सिध्यति । किमत्र न सिध्यति ? यो ह्यजातो धर्म सोऽनागत । यो जातो भवति न च विनष्ट स वर्तमान । यो विनष्ट सोऽतीत इति । एतदवात्र वक्तव्यम । यदि यथा वर्तमान द्रव्यतोऽस्ति न तथाऽतीतमनागत चास्ति । तस्य तेनैव स्वभावेन सतो धर्मस्य कथमिद सिध्यत्यजात इति यो विनष्ट इति वेति । किमस्य पूर्वं नासीद्यस्याभावादजात इत्युच्यते ? किं च पश्चान्नास्ति यस्याभावाद्विनष्ट इत्युच्यत ? तस्मान्न सिध्यति सर्वथाऽप्यध्वत्रयम्, यद्यभूत्वा भवतीति नेष्यते भूत्वा च पुनर्न भवतीति । यदप्युक्तम्—'सस्कृतलक्षणयोगान्न शाश्वतत्वप्रसङ्ग' इति । तदिद केवल वाङ्मात्रमुत्पादविनाशायोगात् । नित्य च नामास्ति स धर्मो न च नित्य इत्यपूर्वैषा वाचो युक्ति । आह खल्वपि—

"स्वभाव सर्वदा चास्ति भावो नित्यश्च नेष्यते ।
न च स्वभावाद् भावोऽन्यो व्यक्तमीश्वरचेष्टितम् ॥" *Akb* v 17 bc.

Also cf अथ पूर्वापरकाल्यो कारित्रशून्यतया धर्मस्याध्वसु विशष । तथा हि

अथ सर्वास्तिवादविभ्रष्टैर्वैतुल्किैर्निराद्य(इ)—वयमपि त्रीन् स्वभावान् कल्प[2]यिष्यामः।[1] तस्मै प्रतिवक्तव्यम्—

[ 324 ] परिकल्पैर्जगद्व्याप्तं मूर्खचित्तानुरञ्जिभिः।
यस्तु विद्वन्मनोग्राही परिकल्पः स दुर्लभः॥

ते खल्वेते भवत्कल्पितास्त्रयः स्वभावाः पूर्वमेव प्रत्यूढाः। एवमन्येऽप्यसत्परिकल्पाः प्रोत्सारयितव्याः। इत्येतदपरमघस(सं)मोहाङ्कनास्थानं कोशकारकस्येति।[2]

गतमेतत्प्रासङ्गिकं प्रकरणम्। शास्त्र[3]मेवानुवर्तताम्॥

व्याख्यातमिदं यस्मिन्वस्तुनि यैः क्लेशैर्यद्वस्थैर्यैः संयुक्तः। इदमिदानीं वक्तव्यम्। यद्वस्त्वप्रहीणं संयुक्तः स तस्मिन्वस्तुनि? यस्मिन्वा वस्तुनि संयुक्तोऽप्रहीणं तस्य तद्वस्तु? यत्तावद्वस्त्वप्रहीणं संयुक्तः स तस्मिन्वस्तुनि। स्याद्वस्तुनि संयुक्तो न च तद्वस्त्वप्रहीणं यथा तावद्दर्शनमार्गे।[3]

---

यदासमर्थान्कारित्रं, कृत्यं न करोति, तदाऽनागताऽभिधीयते। यदा करोति तदा प्रत्युत्पन्नः। यदा तु कृत्याद्विरतः, तदाऽतीत इति विभागः।

एतदपि न किंचित्। तेनैवात्मना तस्यैव तदापि सद्भावात्। कारित्रमपि कथं न स्यात्? इति वक्तव्यम्। प्रत्ययान्तरापेक्षापि नियमवस्थितस्वरूपस्य न संभवति। कारित्रभूतस्य च वस्तुनः स्वत्रित्वादीनामपि तत्त्वप्रसङ्गः। कारित्रं वा कथमतीतमनागतं प्रत्युत्पन्नं चोच्यते। किं तदपरकारित्रसद्भावात्। स्वयमेव वा। पूर्वत्रानवस्थानम्। पश्चात्त्वे च धर्मस्यापि स्वयमतीतादिव्यवस्थाया न किंचिद्दूष्यते। यदि च यथा वर्तमानं द्रव्यतोऽस्ति तथाऽतीतमनागतं चास्ति। तदा नैवम्। स्वभावेन सतो धर्मस्य कथमनुत्पन्नविनष्टस्वभावता। 'तस्मादभूत्वाभवनधर्मता न संगच्छते कथंचिदप्यत्रयोगे। ततश्चानुपगच्छता नातीतादिसद्भावः। तदयमत्र संग्रहश्लोकः—स्वभावः सर्वदा चास्ति '।
*B Pañjikā*, ix 143 ab

[1] कल्पितः परतन्त्रश्च परिनिष्पन्न एव च।
त्रयः स्वभावा धीराणां गम्भीरज्ञेयमिष्यते॥
यत् ख्याति परतन्त्रोऽसौ यथा ख्याति स कल्पितः।
प्रत्ययाधीनवृत्तित्वात् कल्पनामात्रभावतः॥
तस्य ख्यातुर्यथाख्यानं या सदाविद्यमानता।
ज्ञेयः स परिनिष्पन्नः स्वभावोऽनन्यथात्वतः॥ *Trisvabhāva nirdeśa*, 1—3

[2] V supra, p 33, p 101, n 4

[3] Cf यद्वस्तु प्रहीणं विसंयुक्तः स तस्मिन्वस्तुनि? यत्र वा विसंयुक्तः प्रहीणं तस्य तद्वस्त्विति। यत्र तावद्विसंयुक्तः प्रहीणं तस्य तद्वस्तु। स्यात्तु प्रहीणं न च तत्र विसंयुक्तः · । *AKB* v 29—यद्वस्तु प्रहीणविषयादि। इह प्रहाणं प्राप्तिविगमात्। विसंयोगस्तदालम्बनक्लेशाप्रहाणात्। *Sakv* p 477

[ 325 ] अन्यसर्वत्रगैर्व[4]द्धः प्रहीणे दुःखदृक्त्यये ।[1]

दुःखज्ञाने उत्पन्ने समुदयज्ञाने चानुत्पन्ने दुःखदर्शनप्रहातव्यं वस्तु[2] प्रहीणं भवति । तस्मिन्प्रहीणेऽपि समुदयदर्शन(न)प्रहातव्योऽप्रहीणः, तदालम्बनैः सर्वत्रगैः संयुक्तः ।

भावनामार्गेऽपि—

प्रहीणे प्राक्प्रकारेऽपि शेषैस्तदवलम्बिभिः ॥[3]

नवानां प्रकाराणां[4] यो यः प्रकारः पू[5]र्वं प्रहीणस्तस्मिन्प्रहीणेऽपि शेषैस्तद्वलम्बिभिः क्लेशैः[5] संयुक्तो विज्ञातव्यः ॥

अथ कस्मिन्वस्तुनि कत्यनुशया अनुशेरते ? अत्र चालम्बननियम एव तावद्दर्शयितव्यः । कतमो धर्मः कतमस्य विज्ञानस्यालम्बन[म्] ? तत एव [त]द्विस्पष्टं गम्यते—अमुष्मिन्वस्तुनि इयन्तोऽनुशया अनुशेरत इति ।[6] तदिदमभिधर्मगह्वरं प्रतार्य(य)ते—

[ 326 ] [6]धर्माः षोडश(श) विज्ञेयाः प्रत्येकं त्रिभवात्मकाः ।
पञ्चधा निर्मलाश्चैव विज्ञानानि तथैव च ॥

धर्मास्तावत् कामरूपारूप्यधातुषु प्रत्येकं पञ्चप्रकारा दुःखादिदर्शनहेया अप्रहेयाश्च निर्मला इति षोडश भवन्ति । एवं विज्ञानानि द्रष्टव्यानि ॥

तत्र तावदाभिधार्मिकोऽन्यैः पृष्टः—

[ 327 ] धात्वायतनसत्येषु प्रकारेषु च ल[7]क्षयेत् ।
धर्मसंग्रहविज्ञानज्ञानानुशयचोदितः ॥

धर्मसंग्रहविज्ञाने वा पृष्टो धात्वायतनस्कन्धेषु पाद(त)यित्वा लक्षयेत् ।

---

[1] Cf प्रहीणे दुःखदृग्घेये सयुक्त शेषसर्वगैः । *Ak* v 28 cd

[2] निकाय in *Akb*

[3] Cf. प्राक् प्रहीणे प्रकारे च शेषैस्तद्विषयैर्मलैः । *Ak* v 28 cb

[4] V supra, p 165, n 2.

[5] शेषैस्तद्विषयैर्मलैरिति । प्रहीणप्रकारविषयानुशयैरित्यर्थः । तद्यथाऽधिमात्राधिमात्रे प्रकारे प्रहीणेऽधिमात्रमध्यादिभि शेषैरप्रहीणैरनुशयैः सयुक्त । तथा ह्यसावधिमात्राधिमात्रेण प्रहीणेन क्लेशप्रकारेण विसयुक्तोऽपि स सयुक्त एव तैः शेषैरिति । *Sakv* p 478

[6] Cf तत्र कतमो धर्मः कस्य चित्तस्यालम्बनमिति ज्ञात्वा अमुष्मिन्नियन्तोऽनुशया अनुशेरत इत्येतदभ्यूहितव्यम् । *Akb* v 28

ज्ञानेषु पृष्टः सत्येषु पातयित्वा लक्षयेत् । अनुशयेषु पृष्टः प्रकारेषु पातयित्वा निर्दे(दि)शेत् । एवमसंमूढो व्याकरोतीति ॥

तत्र तावत् । विज्ञानेषु षोडशधर्मा ध्योच्यन्ते । कस्य विज्ञा(ना)नस्य कतमे धर्मा गोचर[।] इति ? तदाविष्क्रियते—

[328] सदुःखहेतुदृग्घेयाः कामाप्ता भावनाक्षयाः ।
स्वकत्रयैकरूपाप्तविरजाश्चित्तगोचराः ॥[1]

कामावचराः खलु दुःखसमुदयदर्शनभावनाप्रहातव्या धर्माः प्रत्येकं पञ्चानां विज्ञानानां गोचरीभवन्ति । कतमेषां पञ्चानाम् ? स्वेषां[2] त्रयाणां कामावचर(?)स्य दुःखदर्शण(न)प्रहातव्यस्य विज्ञानस्यालम्बनम् । समुदयदर्शण(न)प्रहातव्यस्य सर्वत्रगसंप्रयुक्तस्य । भावनाप्रहातव्यस्य कुशलस्य । एकस्य च रूपाप्तस्य भावनाप्रहातव्यस्य कुशलस्यानास्रवस्य चेति । एवं समुदयदर्शण(न)भावनाप्रहातव्यावपि वक्तव्यौ ॥

एत एव त्रयो धर्माः

[ 329 ] आत्मीयाधरत्रयैकोर्ध्वनिर्मलानां तु [VI. A, 2. Fol. 112b]
(1)रूपजाः ।[3]

रूपावचरो हि दुःखदर्श[न]प्रहातव्यो धर्मः अष्टानां विज्ञानानामालम्बनम् । स्वकत्रयस्याधरत्रयस्योर्ध्वकस्यामलस्य च । स्वधातुकस्य त्रयस्य पूर्ववत् । अधरधातुकस्य तु कामावचरयोर्दुःखसमुदयदर्शण(न)प्रहातव्यविसभागधात्वालम्बनयोः । भावनाप्रहातव्यस्य च कुशलस्य ऊर्ध्वकस्यारूप्यावचर(2)स्य[4] भावनाप्रहातव्यस्य कुशलस्यानास्रवस्य[5] च । एवं समुदयदर्शनभावनाप्रहातव्यौ वाच्यौ ।

आरूप्यास्त्रिधात्वाप्तत्रिकनिर्मलगोचराः ॥[6]

[1] Cf दुःखहेतुदृगभ्यासप्रहेया कामधातुजाः ।
स्वकत्रयैकरूपाप्तामलविज्ञानगोचराः ॥ Ak v 29

[2] स्वधातुकानाम् in Akb v 29 See Sakv p 479

[3] Cf स्वकाधरत्रयोर्ध्वामलानां रूपधातुजाः । Ak v 30 ab

[4] [illegible] । Sakv p 479

[5] [illegible] । Ibid

[6] Cf आरूप्यजास्त्रिधात्वाप्तत्रयानास्रवगोचराः । Ak v 30 cd

आरूप्यावचरास्त एव त्रयो धर्माः, दशानां विज्ञानानामालम्बनम्। त्रैधातुकानां प्रत्येकं त्रयाणाम्, एषामेवानास्रवस्य च। इत्येवं ता(ता)वत् त्रैधातुकाः दुःखसमुदयदर्शण(न)हेया (3)भावनाहेयाश्च धर्मा उक्ताः ॥

[ 330 ] सर्वे स्वाधिकविज्ञेयाः समनिर्याणदृक्त्वयाः ।[1]

सर्व एव त्रैधातुकाः निरोधमार्गदर्शनहेयाः स्वनैकायिकाधिकश्चि(चि)त्त गोचरा विज्ञातव्याः।[2] कामावचरो हि निरोधदर्शण(न)प्रहातव्यो धर्मो दुःखदर्शनप्रहातव्यादिवत् पञ्चानां विज्ञानानामालम्बनम्। स्वनैकायिकस्य चानिरोधदर्शनप्रहात(4)व्यस्येति षण्णाम्। एवं मार्गदर्शण(न)प्रहातव्योऽपि वेदितव्यः। रूपावचरौ निरोधमार्गदर्शण(न)प्रहातव्यौ पूर्ववदष्टाणां(नां) विज्ञानानां प्रत्येकमालम्बनं स्वनैकायिकस्य चाधिकस्येति नवानाम्। एवमारूप्यावचरौ पूर्ववद्दशानां स्वनैकायिकस्य चाधिकस्येत्येकादशानामालम्बनं भवतः। उक्ताः पञ्चदशधर्माः।[3]

निष्क्लेशा(5)स्त्रिभवासान्त्यत्रयनिर्मलगोचराः ॥[4]

त्रैधातुकानां पञ्चानां प्रकाराणां प्रत्येकं येऽन्त्यास्त्रयः प्रकारा णि(नि)रोधमार्गदर्शण(न)भावनाहेयाख्याः, तेषां नवानामनास्रवस्य चेति। एवमनास्रवा धर्मा दशानां विज्ञानानामालम्बनं भवन्ति ॥[5]

पुनरप्येष एवार्थपिण्डः श्लोकेनावद्योत्यते—

[ 331 ] कामाप्त(प्तं) पञ्चविषयो रूपाप्तं त्वष्टगोचरः ।
(6)आरूप्याप्तं दशानां तु दशानामेव चामलम् ॥

---

[1] Cf निरोधमार्गदृग्घेया· सर्वे स्वाधिकगोचरा । *Ak* v 31 ab

[2] Cf निरोधमार्गदर्शनहेयाना स्व चित्त निरोधमार्गदर्शनहेयमेव तस्याधिकस्य ते धर्मा आलम्बन ज्ञेया।··· *Akb* v 31 ab

[3] See *Sakv* p 480

[4] Cf अनास्रवास्त्रिधात्वन्त्यत्रयानास्रवगोचरा । *Ak* v 31 cd

[5] अनास्रवा इति निरोधादय । त्रिषु धातुषु यान्यन्त्यानि त्रयाणि निरोधमार्गदर्शनभावनाप्रहातव्यलक्षणानि । तेषा यथायोगमनास्रवस्य च गोचर· । कथम् ? प्रतिसंख्यानिरोधार्यमार्गौ तावत्तदालम्बनाना मिथ्यादृष्टिविचिकित्साऽविद्यासम्प्रयुक्तानां भावनाप्रहातव्यानामनास्रवस्य च धर्मज्ञानान्वयज्ञानपक्षस्य यथायोगमालम्बनम् । आकाशाप्रतिसंख्यानिरोधौ तु भावनाप्रहातव्यस्यैवाक्लिष्टस्य चित्तस्यालम्बनमिति वेदितव्यम् । आचार्यगुणमतिवसुमित्रौ तु व्याचक्षाते—आकाशाप्रतिसंख्यानिरोधौ भावनाप्रहातव्यस्य क्लिष्टाक्लिष्टस्यालम्बनमिति । तदयुक्तम् ।···अतो न क्लिष्टचित्तस्य भावनालम्बनमिति सिद्धान्त । *Sakv* p 481.

तस्मिन्विज्ञाने ते[ऽ]नास्रवालम्बनाः संप्रयोगतोऽनुशेरते । सास्रवालम्बनाः आलम्बनतः । एवं कामाव[3]चराश्चत्वारो निकाया भवन्ति ।

रूपावचरे विज्ञाने सर्वत्रगसंप्रयुक्ते स्वसर्वत्रगालम्ब्यते (?)। एवं रूपावचराश्चि(स्त्र)यो निकाया भवन्ति । तस्य तु चतुर्थध्यानभूमिस्याक्लिष्टस्य विज्ञानस्य कामधात्वालम्बनस्योष्मगतविमोक्षाप्रमाणा(णा)शुभादिसंप्रयुक्तस्योपेक्षोपविचारसंप्रयुक्तस्य विज्ञानस्यालम्बनम् । तत्पुनराकाशा[4]नन्त्यायतनसामन्तकेन कुशलेनालम्ब्यते । अतस्तत्रारूप्याः सर्वत्रगा भावनाहेयाश्चानुशेरते । उक्तं दुःखदर्शनप्रहातव्यम् ॥

[ 334 ] तद्वदेव द्वितीयेऽपि पञ्चमेऽपि तथैव च ।

एवं समुदयदर्शनभावनाप्रहातव्ययोरपि विज्ञानयोर्यथोक्तयोर्द्रष्टव्यम् । अयं तु विशेषः । दुःखे दुःखदर्श(ण)(न)हेयाः सर्वे, समुदयसर्वत्र[5]गाश्च । समुदये तु समुदयदर्शनहेयाः सर्वे, दुःखदर्शनहेयाश्च सर्वत्रगाः । अन्यत्सर्वं समानम् ।

सास्रवालम्बनाः स्वे च तृतीयेऽप्यनुशेरते ॥

निरोधदर्शनप्रहातव्यं तृतीयं विज्ञानम् । तत्राप्येते च त्रयो निरोधदर्शनहेयाश्च सास्रवालम्बनाः ॥

[ 335 ] परिवृत्ते तु कामाप्ताः संस्कृतार्थावलम्बिनः ।

परिवृत्ते तु [6]विज्ञाने कामावचराश्चत्वारो णि(नि)कायाः, निरोधदर्श(ण)(न)हेयालम्बनाश्च सास्रवालम्बनाः । ये त्वणा(ना)स्रवालम्बनास्ते निर्वाना(णा)लम्बने विज्ञानेऽनुशेरते, न विज्ञानालम्बने ।

शेषं पूर्ववदाख्येयम्

पूर्वे चत्वारो णि(नि)कायाः, दुःखसमुदयमार्गभावनाहेयाश्चानुशेरत इत्यर्थः ।

चतुर्थेऽपि तृतीयवत् ॥

चतुर्थेऽपि [7]खलु मार्गदर्शनहेये विज्ञाने कामावचरास्त्रयो मार्गदर्श(ण)(न)हेयाश्च सास्रवालम्बना रूपावचराः सर्वत्रगा भावनाहेयाश्च ॥

[ 336 ] परिवृत्ते तु कामाप्ताश्चत्वारोऽन्यत्र पूर्ववत् ।

परिवृत्ते तु खलु विज्ञाने कामावचराश्चत्वारो णि(नि)रोधदर्श(ण)(न)हेयं

मुक्त्वा । रूपावचरास्त्रयो दुःखसमुदयदर्शनभावनाहे(8)याः । आरूप्याः सर्वत्रगाः भावनाहेयाश्च । समाप्तं कामावचरं विज्ञानम् ॥

रूपाप्ते प्रथमेऽधस्तात् त्रयः स्वे खल्वपि त्रयः ॥

[ 337 ] आरूप्याः सर्वगाः सार्धं भावनापथसंचयैः[ः] ।

रूपावचरे प्रथमे खलु विज्ञाने कामावचरास्त्रयो दुःखसमुदयविसभागधात्वालम्बनाः संप्रयोगतः । असर्वत्रगास्त्वालम्बनतो (9)भावनाहेयाश्च स्वे च त्रयः । एत एवारूप्याः सर्वत्रगा भावनाहेयाश्च ।

परिवृत्ते त्रयोऽधस्तात्

दुःखसमुदयदर्शन(न)भावनाहेयाः ।

चत्वारश्च स्वधातुतः ॥

मार्गदर्शन(न)हेयाश्च दुःखसमुदयान्वयज्ञानक्षान्तिसंप्रयुक्ते विज्ञाने ॥

[ 338 ] आरूप्याप्ताश्च चत्वारो खि(नि)काया अनुशेरते ।

दुःखसमुदययोः [VI A, 30 Fol 113 b] (1)मार्गदर्शन(न)मिथ्यादि(दृ)ष्ट्यादिसंप्रयुक्तचित्तालम्बनत्वात् ।

तद्वदेव द्वितीयेऽपि पञ्चमेऽपि तथैव च ॥

द्वितीयेऽपि खलु कामावचररूपावचरास्त्रयो दुःखसमुदयभावनाहेयाः । आरूप्याः सर्वगा भावनाहेयाश्च ॥

[ 339 ] सास्रवालम्बनाः स्वे च तृतीयेऽप्यनु[शेर]ते ।

यथा निर्दिष्ट इति ।

परिवृत्ते तु रूपाप्ताः संस्कृतार्थाव(2)लम्बिनः ॥

निरोधदर्शनहेया असंस्कृतालम्बनान् मुक्त्वा ॥

[ 340 ] अन्यत्तु पूर्ववज्ज्ञेयं चतुर्थेऽपि तृतीयवत् ।

कामावचराः त्रयो दुःखसमुदयभावनाहेयाख्याः, आरूप्यावचराश्चत्वारः, निरोधार्थं मुक्त्वा । 'चतुर्थेऽपि' मार्गदर्शन(न)हेये 'तृतीयवत्' द्रष्टव्यम् । यथा तृतीये सास्रवालम्बनाः स्वनैकायिका अधिशेरते, (3)तथा चतुर्थेऽपि स्वे सास्रवालम्बना अधिशेरते ।

समाप्तानि षोडशचित्तानि । तेषु चानुशयनिर्देशः कृतः । अधुना चक्षु[8]रिन्द्रियादीनां वक्तव्यः ।[1] सोऽयमुपदिश्यते—

[ 344 ] भावनापथहातव्यो निकायः सर्वगैः सह ।
अनुशेते द्विधात्वाप्तो व्यारूप्याश्चक्षुरिन्द्रिये ॥

चक्षुरिन्द्रिये खलु भावनाहेया सर्वत्रगाश्चानुशयाः कामावचररूपावचरा अनुशेरते । एवं यावत्कायेन्द्रिये चक्षुर्धातौ रूपधातौ चक्षुर्विज्ञानधातौ याव द्विस्तरेण [9]कायविज्ञानधातौ यावद्रूपस्कन्धे वाच्यम् ॥

अधुना चक्षुरिन्द्रियालम्बने विज्ञाने वक्तव्या —

[ 345 ] निकायाः कामरूपाप्ताश्चक्षुरिन्द्रियगोचरे ।
दुःखहेतुदृगभ्यासप्रहातव्यास्त्रयस्त्रयः ॥

[ 346 ] आरूप्या भावनाहेयाः सर्वगाश्चानुशेरते ।

चक्षुरिन्द्रियालम्बने खलु विज्ञाने कामावचररूपावचरा दुःखसमुदयद [VI B, 6 Fol 114 a][1]र्शनभावनाप्रहातव्याः, आरूप्यावचराश्च भावनाप्रहातव्याः, सर्वत्रगाश्चानुशेरते ।

परिवृत्ते तु चत्वारः समदृक्त्रयवर्जिताः ॥

चक्षुरिन्द्रियालम्बनालम्बने तु विज्ञाने चत्वारो णि(नि)काया अनुशेरते । निरोधदर्शनहेयं हित्वा । तद्धि चक्षुरिन्द्रियालम्बनं विज्ञानं सर्वत्र सम्प्रयुक्तम् । तदप्यालम्बनं सर्वत्रगाणाम् । एवं त्रय [2]परावृत्ते ।

द्विष्परावृत्ते तु चक्षुरिन्द्रियं परमालम्बनं दुःखसमुदयधर्मज्ञानक्षान्ति संप्रयुक्तस्य चित्तस्य । तत्पुनरालम्बनं कामावचरमार्गदर्शनप्रहातव्यम् । मिथ्यादृष्टिविचिकित्साऽविद्या[त]त्संप्रयुक्तानां विज्ञानानाम् । तेषु विज्ञानेष्व नास्रवालम्बना संप्रयोगतः, सास्रवालम्बनास्त्वालम्बनतोऽनुशेरते । एवं चतुर्थो नि[3]कायो यदि मार्गदर्शनहेय । तदेव सति कामावचराश्चत्वारः, आरूप्यावचराश्चत्वारः, सर्वेऽभिसमस्य त्रैधातुकाश्चत्वारो भवन्ति ।

आकाशानन्त्यायतनस्य खलु कुशलस्य चक्षुरिन्द्रियमालम्बनम् । तत्रा रूप्याः सर्वत्रगा भावनाहेयाश्चानुशेरते । तत्रापि सर्वत्रगसम्प्रयुक्ते चेतसि असर्वत्रगा वर्धन्त इति त्रयो [4]भवन्ति । दुःखसमुदयालम्बनज्ञानक्षान्ति संप्रयुक्तस्य च विज्ञानस्य चक्षुरिन्द्रियमालम्बनम् । तदारूप्यमार्गदर्शनप्रहातव्यस्य मिथ्यादृष्ट्यादिसम्प्रयुक्तस्य विज्ञानस्यालम्बनम् । तत्र तेऽनास्रवा लम्बनाः संप्रयोगतः, सास्रवालम्बनाः आलम्बनतः । एवमारूप्यावचरा अपि चत्वारो निकाया भवन्तीति ॥

[1] The AKB has not discussed this. Only the *sakkhendriya* is explained as an … See *Sphu* pp. 433—4

[ 347 ] दुःखेन्द्रिये[1] तु का(5)माप्ताः स्वैरेव सह सर्वगैः ।
तद्गोचरे तु विज्ञाने निकाया अनुशेरते ॥

[ 348 ] कामापत्त्याप्तयो रूपा[ः] सर्वगाम्यासस्रत्रयाः ।
परवृत्ते तु चत्वारः कामाप्ता अनुशेरते ॥

[ 349 ] त्रयो रूपभवादन्त्याद्भावनाहेयसर्वगाः ।
सकला द्विप्पराहृत्तेश्चत्वारश्चानुशेरते ॥

[ 350 ] सुखेन्द्रिये तदालम्बे चित्ते तद्गोचरेऽपि च ।
कामाद्याप्ताः (6)यथायोगं सर्वगाश्चानुशेरते ॥[1]

तत्र तावत् । [3]सुखेन्द्रियं सप्तविधम् । कामावचरं भावनाप्रहातव्यम्, रूपावचरं पञ्चप्रकारम्, अनास्रवं चेति । तदेतत्समासतो द्वादशविधस्य विज्ञानस्यालम्बनं भवति । कामावचरस्य चतुष्प्रकारस्य[4] अन्यत्र निरोधदर्शनहेयात्[5], रूपावचरस्य पञ्चप्रकारस्य,[6] आरूप्यावचरस्य द्वि(7)प्रकारस्य मार्गदर्शनभावनाहेयस्य [अ]नास्रवस्य च । इदं द्वादशविधं सुखेन्द्रियालम्बनं विज्ञानम् । तत्र यथायोगं कामावचराश्चत्वारो निकायाः रूपावचराः संस्कृतावलम्बनाः, आरूप्यावचरौ द्वौ निकायौ, सर्वत्रगाश्चानुशया अनुशेरत इति ।[3]

[7]तत्पुनः सुखेन्द्रियालम्बनं विज्ञानं यस्य चित्तस्यालम्बनं तच्चित्तं सुखेन्द्रिया(8)लम्बनालम्बनम् । तस्मिन् कत्यनुशयाऽनुशेरते ? तत्खलु सुखे-

---

[1] See *Sakv.* pp 483-4.

[2] The *Akb* gives only this as an illustration.…दिङ्मात्र दर्शयिष्याम । सुखेन्द्रियालम्बने विज्ञाने कत्यनुशया अनुशेरत इति प्रश्न आगते विचारयितव्यम् । सुखेन्द्रिय सप्तविधम् ।…

[3-3] From सुखेन्द्रिय सप्तविधम् to अनुशेरत इति is identical with *Akb* v 31 cd.

[4] कामावचरस्य चतुःप्रकारस्य इति । दुःखसमुदयमार्गदर्शनभावनाप्रहेयस्य ।… *Sakv.* p 481.

[5] न तु निरोधदर्शनहेयस्य चित्तस्य । तत्र मिथ्यादृष्ट्यादीना निरोधालम्बनत्वात् । दृष्टिपरामर्शादीना च स्वनिकायालम्बनत्वात् । तत्र च सुखेन्द्रियाभावात् । तेनोच्यते—अन्यत्र निरोधदर्शनहेयादिति । *Ibid* p 482

[6] रूपावचरस्य पञ्चप्रकारस्येति । यस्मात् तृतीयध्यानसगृहीत पञ्चप्रकार सुखेन्द्रिय भवति । *Ibid.*

[7] Cf. सुखेन्द्रियालम्बनालम्बने विज्ञाने कत्यनुशया अनुशेरते ? तत् पुन… *Akb* v. 31 cd.

न्द्रियालम्बनं द्वादशविधं चित्तं कतमस्य विज्ञानस्यालम्बनम् ?' 'तस्यैव च द्वादशविधस्यारूप्यावचरस्य च भूयो द्विप्रकारस्य दुःखसमुदय[दर्शन]प्रहातव्यस्य। इदं चतुर्दशविधं सुखेन्द्रियालम्बनं[1] विज्ञानम्। तत्रारूप्यावचरौ दुःखसमुदयदर्शन[(1)]हेयौ सर्वत्रगा कामावचरा आरूप्यावचराश्च चत्वारो निकाया, रूपावचराश्च संस्कृतालम्बना अनुशया अनुशेरत इति[1] 'यथायोग' वचनात्, 'अपि'शब्दाच्च द्रष्टव्यम् ॥[2]

[351] त्रिधातुसंगृहीतास्तु सकला मनइन्द्रिये ।
तदालम्बिनि विज्ञाने सर्वसंस्कृतगोचराः ॥

मनइन्द्रिये खलु सर्वत्रैधातुका ये ऽपि [VI A 6 Fol 114 b][(1)]ते निर्वाणालम्बनास्ते ऽपि संप्रयोगतः। मनइन्द्रियालम्बनं खलु विज्ञानं संस्कृतालम्बनम्। अतस्तत्रा(त्र) संस्कृतालम्बनास्ते ऽनुशया अनुशेरते।

[352] संस्कृतालम्बना एव परिवृत्ते ऽनुशेरते ।
विशेषो हि परावृत्तौ विद्यते ऽत्र न कश्चन ॥

पूर्वनीत्य(त्या) चात्र परिवृत्ते[ऽनुश]यकार्यं बोद्धव्यम्। द्विष्परावृत्ते ऽप्यत्र न कश्चिद्विशेष इति द्र[(2)]ष्टव्यम् ॥

अधुना षोडशानां चित्तानां कस्य चित्तस्य समनन्तरं कति चित्तान्युत्पद्यन्त इत्युपदिश्यन्ते(ति)।[3]

[353] दुःखं दर्शनहेयाद्वेषिचित्ताच्चित्तानि कामिनः ।
भवत्यनन्तरं षड् वा तस्योर्ध्वं पञ्च पञ्च वा ॥

कामधातूपपन्नस्य तु दर्शनहेयाद्वेषिचित्तादनन्तरं स्वभूमिकानि पञ्च, षष्ठं च भावनाप्रहातव्यं प्रथमध्यानसामन्तकम्। (3) स यदा कामधातौ(तो) च्युत्वा रूपधातावुपपद्यते तस्य तत्रत्यानि पञ्च भवन्ति। एवमारूप्येषूपपद्यमानस्यारूप्याणि(णि) पञ्च भवन्तीति ॥

[354] रूपधातूपपन्नस्य चित्तानि तु विनिर्दिशेत् ।
एकं वा पञ्च वा षड् वा सप्त वा यदि वा दश ॥

---

[1] [1] From कतमस्य … अनुशेरत इति is identical with Akb v 31 cd
[2] … in Akb II d
[3] … II d
[4] The Akb does not discuss further … कर्मपात्रद्वयम् … । II d
[5] This topic is not discussed in Akb

तत्र 'एकम्' वीतरागस्योपरिसामन्तकाद्भावनामयम् । 'षड्' वीतरागस्य कामावचरं भावना[4]प्रहातव्यं निर्माणचित्तं प्रथमध्यानफलम् । 'पञ्च' स्वभूमानि । 'सप्त वा' उपरिसामन्तकाद्भावनाप्रहातव्यं कुशलं सास्रवम् । 'दश वा' रूपेभ्यः प्रच्युतस्य कामरूपेषूपपद्यमानस्येति ॥

[ 355 ] आरूप्यधातुजातस्य चित्तानीमानि लक्षयेत् ।
स्वधातुकानि पञ्चैव च्युतिकाले दशान्यतः ॥

रूपकामेषूपपद्यमानस्य तत्रत्यानि द[5]श भवन्ति । स्वानि पञ्च पञ्चान्यतः । गतमेतत् ॥

इदानीं वक्तव्यम् । अथ यदिदं सानुशयं चित्तमुक्तं तत्कथम् ? इत्यत्राभिधीयते—

[ 356 ] साचिव्यादनुशायित्वाच्चित्तं सानुशयं मतम् ।
द्विधा वा क्लिष्टमक्लिष्टमेकधैवापदिश्यते ॥[1]

द्वाभ्यां खलु प्रकाराभ्यां चित्तं सानुशयमुच्यते । साचिव्यभावेनानुशायित्वेन च । तत्र क्लिष्टं द्वाभ्यां का[6]रणाभ्यां सानुशयं यदप्रहीन(ण)क्लेशम् । अक्लिष्टं पुनरेकधा साचिव्यभावनैवेति । तत्र क्लिष्टं चित्तमनुशयैः संप्रयुक्तैरप्रहीणैः सानुशयं तदालम्बनैश्चाप्रहीणैः ।

कथमिह योऽनुशयो येन चित्तेन संप्रयुक्तः स खल्वप्रहीन(ण)स्तस्मिंश्चित्तेऽनुशेते ?[2] यावद्धि तदनुशयानुप्राप्तिविशेषेण सा चित्तसन्ततिर[7]नुबद्धा चाधिष्ठिता च भवति, निष्यन्दफलस्य चानागतस्य तस्यां चित्तसन्ततौ समागहेतुरुत्पत्तये कृतास्पदो भवति, तावदसावनुशयस्तस्मिंश्चेतस्यनुशेत इत्युच्यते । तस्य पुनः क्लेशाशीविषस्य प्रासिद्धंष्ट्राभङ्गे कृते विद्यमानोऽपि सन् क्लेशस्तस्मिंश्चेतस्यनर्थानुत्पादनात् सन्नपि संप्रयोगतः ना[8]नुशेत इत्यु-

---

[1] Cf द्विधा सानुशय क्लिष्टमक्लिष्टमनुशायकैः । *Ak* v. 32 ab.

क्लिष्ट चित्तमनुशयानैरनुशयै सानुशय तत्संप्रयुक्तैस्तदालम्बनैरप्रहीणैरननुशयानैश्च तत्सप्रयुक्तै प्रहीणैस्तत्सहितत्वात् । अक्लिष्टं तु चित्तमनुशयानैरेव तदालम्बनैरप्रहीणैरिति । *Akb* v. 32 ab.

अनुशयानैरननुशयानैश्चानुशयै. सानुशयं क्लिष्टमित्यर्थः । तत्सहितत्वात् सदावस्थितत्वात् । अक्लिष्टं चित्तमनुशयानैरेव सानुशय विवेचयितुं शक्यत्वात् । *Sakv.* p. 484.

This topic is dealt with in detail in *Adv.* The *Akb.* is very brief

[2] Cf यैरनुशयैर्यच्चित्त सानुशय तेऽनुशयास्तस्मिंश्चित्तेऽनुशेरते ? स्युरनुशेरते । येऽनुशयास्तेन चित्तेन सप्रयुक्ता अप्रहीणास्तदालम्बनाश्चाप्रहीणा ? स्युर्नानुशेरते । येऽनुशयास्तेन चित्तेन सप्रयुक्ता प्रहीणास्तदालम्बनाश्च । तदेव कृत्वा भवति—

द्विधा सानुशयं क्लिष्टमक्लिष्टमनुशायकैः । *Akb* v 32 ab.

च्यते। नित्यं च तदालम्बनतो कारित्राकरणात्, तस्मिन्नालम्बने मार्गविदूषणाकारदूषिते आलम्बनतोऽपि नानुशेत इत्युच्यते। न तु कदाचिन्मुञ्जेषीकावदुद्धृत्य शक्यते तस्मात् क्लेश चित्तात्पृथक्कर्तुं निर्नाशयितुं वा स्वालम्बनाद्वा विमुखीकर्तुम्। उक्तं हि—"यो धर्मो यस्य धर्मस्यालम्बनं कदाचित्स धर्मस्तस्य धर्मस्य नालम्बनम्? आह—न कदाचित्"[1] इति। अतस्तच्चित्तं सहायभावेन सानुशय सहायभावस्यापरित्यागात्। न त्वनुशयभावेन सानुशयं तत्रानर्थानुत्पादनात्।

कतरत्पुनश्चित्तं सानुशयम्?[2] त्रैधातुक प्रत्येकं पञ्चप्रकारम्। पुनः प्रत्येक द्विधा भिद्यते। सर्वत्रगासर्वत्रगसास्रवा[VI B, 7. Fol 115 a](1)नास्रवालम्बना(न)क्लिष्टाक्लिष्टभेदै.।

तत्र दु.खदर्शनप्रहातव्य सत्कायदृष्टिसंप्रयुक्तम्। तया च सत्कायदृष्ट्या तत्संप्रयुक्तया चाविद्यया सहायभावेन चानुशयाने च सानुशयम्। शेषै. स्वनिकायिकैः समुदयदर्शनप्रहातव्यैश्च सर्वत्रगैरनुशयभावेनैव। शेषैर्नोभयथा। एव सर्वैः दु खदर्शनप्रहात(2)व्यै. समुदयदर्शन(न)प्रहातव्यैश्च सप्रयुक्तं चित्त यथायोगमभ्यूहितव्यम्।

निरोधदर्शन(न)प्रहातव्य मिथ्यादृष्टिसंप्रयुक्तम्। तयैव तत्संप्रयुक्तया चाविद्ययोभयथा। शेषैः स्वानिकायिकसास्रवालम्बनै सर्वत्रगैश्चानुशयभावेनैव। स्वानिकायिकानास्रवालम्बनैस्तदन्यैश्च नोभयथा। एवमन्यै(3 र्नि)रोधदर्शनप्रहातव्यै. मार्गदर्शनप्रहातव्यैश्च यथासंभवं वक्तव्यम्।

भावनाप्रहातव्य रागसंप्रयुक्तम्। तेनैव तत्संप्रयुक्तया चाविद्ययोभयथा। शेषैर्भावनाप्रहातव्यैः सर्वत्रगैश्चानुशयैर्भावेनैव। अन्यैर्नोभयथा। एवमन्यद्भावनाहेयसंप्रयुक्तमपि यथायोग वाच्यम्।

अक्लिष्टन्तु स्वानिकायिकै. स(4)र्वत्रगैश्चानुशया(य)भावेनैव सानुशयमिति॥

क पुनरेषामनुश(श)यानां प्रवृत्त्यनुक्रम.? तदुच्यते। मोहस्तावत् सर्वक्लेशाग्रणी, तस्मात्क्लेशपुरोयायिन.।

[357] मोहात्सत्कायदृक्तस्या अनुग्राहेद्वयं ततः।
काङ्क्षामिथ्येद्वयं तस्याः शीलामर्शस्ततो द्वशः॥[3]

---

[1] Quoted in *Akb* ii 62 c. See *LVPAk* ii p 307

[2] V supra, p 221

[3] Cf मोहत्काङ्क्षा ततो मिथ्यादृष्टि सत्कायदृक्तत.।
ततोऽन्तग्रहणं तस्माच्छीलामर्शस्ततो दृग॥ *Ak.* v 32 cd, 33 ab

[ 358 ] रागः सु(स्व)दृशि मानश्च द्वेषोऽन्यत्र प्रतायते ।
(5)ज्ञेयः प्रवृत्तिबाहुल्यादेवमेषामनुक्रमः ॥[1]

इह तावद् बालस्य पञ्चोपादानस्कन्धात्मके दुःखे संमुग्धस्य फलभूता[न्] पञ्चोपादानस्कन्धानजानतः सत्कायदृष्टिरुपजायते । सत्त्वजी(वी)जपुद्गलात्मग्राहयोगेन । ततोऽस्य तच्छाश्वतोच्छेदान्तग्राहलक्षणाऽन्तग्राहदृष्टिः । तस्यैवं भवति—यदि तावदयं (6)नित्योऽविकारी पुरुषः किं धर्मेण यः सुखेन नानुगृह्यते, दुःखेन वा नोत्पीड्यते । अथायमुच्छेदधर्माऽनित्यस्तथापि किं धर्मि(र्मे)णेति विचारयतः कांक्षो(काङ्क्षो)त्पद्यते । कांक्षा(काङ्क्षा)प्रवृद्ध्या मिथ्यादर्शण(न)मावहति । तदकारणे कारणाभिनिवेशान्निहीनं चाग्रतो ग्रहणात् शीलव्रतदृष्टिपरामर्शाबाकर्षति । (7)ततोऽस्य 'रागः स्वदृशि मानश्च द्वेषोऽन्यत्र प्रतायते ।' तस्य खलु मिथ्यादर्शनभूतग्रहावेधवशादश्रेयसि श्रेयोबुद्ध्या प्रवृत्तस्यानग्र(ग्रे) चाग्र्यबुद्ध्यभिनिविष्टस्य स्वपक्षे रागो भवति परपक्षे च द्वेषः प्रवर्तते ।[2] इत्यतः त्य(तत्) 'ज्ञेयः प्रवृत्तिबाहुल्यादेवमेषामनुक्रमः' ॥

वयं तु पश्यामः

[ 359 ] सदसन्मि(8)त्रयोगात्तु तद्वृत्त्यनियमो मतः ।

कल्याणमित्रपापमित्रसंसर्गाद्धि प्रायेण श्रद्धादीनां गुणानामेषां च क्लेशानां समु[दा]चारप्रवृत्तिः आचार्याणामभिमतेति । स पुनरेषः—

क्लेश उत्पद्यते कश्चित्संपूर्णैः कारणैस्त्रिभिः ॥[3]

हेतुप्रयोगविषयबलैः[4] कश्चित् त्रिभिरुत्पद्यते । कश्चिद् द्वाभ्यामिति ।

---

[1] राग. स्वदृष्टौ मानश्च द्वेषोऽन्यत्रेत्यनुक्रम । *Ak.* v. 33 cd.

[2] स्वदृष्टयध्यवसितस्य तत्प्रत्यनीकभूताया परदृष्टौ द्वेष प्रवर्तते । अपरे स्वदृष्टावेवान्यत्र गृहीते त्यक्ताया द्वेषमिच्छन्ति । दर्शनहेयाना दृष्टीना स्वासान्तिकदृष्ट्यालम्बनत्वात् । *Akb* v 33 d

[3] अप्रहीणादनुशयाद्विषयात्प्रत्युपस्थितात् ।
अयोनिशो मनस्कारात्क्लेश· संपूर्णकारण· ॥ *Ak.* v. 34.

[4] तद्यथा रागानुशयोऽप्रहीणो भवत्यपरिज्ञान कामरागपर्यवस्थानीयाश्च धर्मा आभासगता भवन्ति तत्र चायोनिशो मनस्कार एव कामराग उत्पद्यते । तान्येतानि यथाक्रम हेतुविषयप्रयोगबलानि । *Akb* v. 34 abc.

हेतुविषयप्रयोगबलानीति । हेतुबल कामरागोत्पत्तये कामरागानुशयोऽप्रहीणो भवत्यपरिज्ञात । कामरागपर्यवस्थानीया विषयबलम् । तत्र चायोनिशोमनस्कारः प्रयोगबलम् । *Sakv.* p. 485

(७)तत्र हेतुबलं सभागसर्वत्रगादिहेतुभावनाऽनागतोत्पत्तये वर्तमानप्राप्त्युत्सर्गमेधिकादिनिदर्शना(ना)त्[१]। प्रयोगबलमप्ययोगि(नि)शो मनस्कारादिसंनिधानम्। प्रत्ययबलमपरिज्ञातविषयाभासगमनं निदर्शण(न)मर्हत्परिहाणिसूत्रमिति[२]॥

अभिधर्मदीपे विभाषाप्रभाया वृत्तौ

पञ्चमस्याध्यायस्य द्वितीय [VI A, 7 Fol 115b] (१)पाद ॥

---

[१] See *Ang* iv pp 354-358

[२] कदाचित् किल विषयबलेनैवोत्पद्यन्ते। न हेतुबलेन। यथा परिहाणधर्मकस्यार्हत इति। *Akb* v 34 d

This is one of the major controversial points recorded in the *Kathā vatthu* Buddhaghosa gives the following details —

इदानि परिहानिकथा नाम होति। "परिहानधम्मो अपरिहानधम्मो", "पञ्चिमे भिक्खवे धम्मा समयविमुत्तस्स भिक्खुनो परिहानाय संवत्तन्ति। [कतमे पञ्च? कम्मारामता भस्सारामता निद्दारामता सङ्गणिकारामता यथाविमुत्तं चित्तं न पच्चवेक्खति। इमे पञ्च धम्मा *Ang* iii p 173] इति वा एवमादीनि हि सुत्तानि निस्साय सम्मितिया वज्जिपुत्तका, सब्बत्थिवादिनो एकच्चे च महासङ्घिका अरहतो पि परिहानिं इच्छन्ति तेसं लद्धिभिन्दनत्थं परिहायति अरहा अरहत्ता ति पुच्छा सकवादिस्स। तत्र परिहायती ति द्वे परिहानियो पत्तपरिहानि च अप्पत्तपरिहानि च। तत्थ 'दुतियम्पि खो आयस्मा गोधिको तम्हा सामयिकाय चेतोविमुत्तिया परिहायती' ति अयं पत्तपरिहानि नाम। इध पत्तपरिहानि अधिप्पेता। सकसमये पन इमं पत्तपरिहानिं नाम लोकियसमापत्तिया व इच्छन्ति, न अरहत्तादीहि सामञ्ञफलेहि। परसमये पि न सब्बसामञ्ञफलेसु सब्बभवेसु सब्बकालेसु सब्बसं पुग्गलानं न इच्छन्ति। *KvA* i 3

Cf गोत्राच्चतुर्णां पञ्चानां फलाद्धानिर्न पूर्वकात्।

स्रोतआपत्ति फलान्नास्ति परिहाणि। दर्शनहेयानामवस्तुकत्वात्।

अर्हत्त्वादपि नास्ति परिहाणिरिति सौत्रान्तिकाः। एष एव च न्यायः। कथमिदं गम्यते? आगमानुविधानतः। 'शैक्षस्य चाप्रमादकरणीयं वदामी'त्युक्तं नार्हतः। सामयिकया अस्तीति चेत्। वयमप्येवं ब्रूमः। सा तु विचार्या। किमर्हत्त्वमाहोस्विद् ध्यानानीति। प्रतिज्ञायते हि लौकिकमार्गप्रतिलब्धात्फलद्वयात्परिहाणि। अर्हत्त्वादपि तु परिहाणिं वर्णयन्ति वैभाषिकाः। *Akb* vi 58 ab

See *Ang* iii p 173 P *Pañnatti*, P 11 *Aam* p 87 *Sakv* pp 586—590 and *LVPAk* vi pp 256—261 V infra *Ad kārikā* 437, notes

# पञ्चमाध्याये

## तृतीयपादः ।

अथ य इमे भगवता त्रय आस्रवा आख्याताः—"कामास्रवो भवास्रवोऽविद्यास्रवश्च।"[1] एषां कः स्वभावः? तदिदमारभ्यते—

[ 360 ] व्यविद्याः सकलाः क्लेशाः कामे कामास्रवो मतः।
स्त्यानौद्धत्ये च हित्वोर्ध्वे समानत्वाद्भवास्रवः॥[2]

सर्वे ह्येते स]माना निवृताव्याकृतत्वादन्तर्मुखप्रवृत्तत्वाच्च॥

[ 361 ] अविद्या(2)ख्यस्तु मूलत्वादविद्या सार्वधातुकी।[3]

अविद्या खलु संसारमूलम्। उक्तं हि भगवता—"अविद्याप्रत्ययाः संस्काराः।"[4] तथा—"याः काश्चन दुर्गतयोऽस्मिंल्लोके परत्र च।
सर्वास्ता अविद्यामूलिकाः"[5] इति।

तत्र तावत्कामास्रवः एकचत्वारिंशद् द्रव्यानि(णि)। रागप्रतिघमानाः प्रत्येकं पञ्चप्रकारत्वात् पञ्चदश भवन्ति। विचि(3)कित्साः चतस्रः। दृष्टयो द्वादश। दश पर्यवस्थानानि। इत्येतान्येकचत्वारिंशद् द्रव्यानि(णि) कामास्रव इत्याख्यायते।

---

[1] Cf. तयो आसवा। कामासवो भवासवो अविज्जासवो। *Digha*, xxxiii 1 10

[2] Cf कामे सपर्यवस्थाना क्लेशा कामास्रवो विना।
मोहेनानुशया एव रूपारूप्ये भवास्रव॥ *Ak.* v 35

V supra, pp 18, 220 For a controversy whether *asrava*, is *sasrava*, see *Kv* xv 5—इदानि आसवकथा नाम होति। तत्थ यस्मा चतूहि आसवेहि उत्तरि अञ्ञो आसवा नाम नत्थि, अन चत्तारो आसवा सासवा सियु, तस्मा चत्तारो आसवा अनासवा ति येस लद्धि, सेय्यथापि हेतुवादान। *KvA* xv 5

[3] Cf मूलमविद्येत्यास्रव पृथक्। *Ak.* v 36 d

[4] Cf अविज्जापच्चया सङ्खारा। *Vbh* p 135

[5] Cf या काश्चन दुर्गतयोऽस्मिल्लोके परत्र च।
अविद्यामूलिका सर्वा इच्छालोभसमुत्थिता॥ Quoted in *Sakv* p 486

Cf also, या काचि मा दुग्गतियो अस्मि लोके परम्हि च।
अविज्जामूलका सब्बा इच्छालोभसमुस्सया॥ *Itivuttaka*, 40

तथैवैकाकिन्योऽपि द्रष्टव्य इति। तदेवं सति कामौघ एकान्नत्रिंशत् द्रव्याणि ।[१] रागप्रतिघमानाः पञ्चदश। विचिकित्साश्चतस्रः। दश पर्यवस्थानानीति।

भवौघोऽष्टाविंशतिर्द्रव्याणि ।[२] रागमाना विंशतिः ।[३] विचिकित्सा अष्टौ। दृष्ट्योघः षट्त्रिंशद् द्रव्याणि ।[४] अविद्यौघः[५] पञ्चदशद्रव्याणि। एवमेव [६]योगा द्रष्टव्याः ॥[६]

[ 362 ] साऽविद्या द्वे उपादाने यथोक्तो(क्तौ) द्वे तु दृङ्मये ।[७]
चतस्रोऽप्येकमन्त्यैकं कुमार्गादिसमाश्रयात् ॥

[ 363 ] शेषास्त्रैधातुकास्त्वन्त्ये सात्मभावप्रवृत्तितः ।

[८]तत्र कामयोग एव सहाऽविद्यया कामोपादानं चतुस्त्रिंशद् द्रव्याणि। रागप्रतिघमानाविद्या विंशतिः। विचिकित्साश्चतस्रः। दशपर्यव[७]स्थानानि।

भवयोग एव सहाविद्यया[९] आत्मवादोपादानम्,[१०] अष्टात्रिंशद् द्रव्याणि। रागमानाविद्यास्त्रिंशत्। विचिकित्सा अष्टौ।

---

[१] द्वादशदृष्ट्यपनयनाच्चास्यवदेव चत्वारिंशद् द्रव्याणि भवन्ति। किं तर्हि ? एकान्नत्रिंशद् द्रव्याणि भवन्ति। *Sakv.* p. 487.

[२] भवास्रवो द्विपञ्चाशद् द्रव्याण्युक्तानि। ततश्चतुर्विंशतिर्दृष्टीरपनीयाष्टाविंशतिर्द्रव्याणि *Ibid.*

[३] रागमाना विंशतिरिति द्विधातुका रागा दश भवन्ति। माना अपि दशेति विंशति.। *Ibid*

[४] दृष्ट्योघ षट्त्रिंशद् द्रव्याणीति त्रिषु धातुषु त्रिद्वादश द्रष्टव्य इति। *Ibid.*

[५] स्रोतोऽनुकूल प्रवाहावर्त ओघार्थः। *Asm.* p. 47. यस्स संविज्जन्ति तं वट्टस्मि ओहनन्ति ओसीदापेन्तीति ओघा। *Dhs A.* II. 45. See *Jpt.* p. 66.

[६] योगश्चतुर्विधः।···विसयोगपरिपन्थकरो योगार्थः। *Asm.* p. 47. यस्स संविज्जन्ति तं वट्टस्मि योजेन्तीति योगा। *Dhs A.* II. 46. See *Jpt.* p. 66.

[७] Cf. यथोक्ता एव साऽविद्या द्विधा दृष्टिविवेचनात्।
उपादानानि। *Ak.* v. 38 abc.

[८] From तत्र कामयोग एव to शुद्धिप्रत्यागमतादिति, is almost identical with *Akb.* v. 38 abc.

[९] The Kośakāra discusses one more point here:

अविद्या तु ग्राहिका नेति मिश्रिता। *Ak.* v. 38 d.

—'अविद्या तु ग्राहिका नेति मिश्रिता' इति। न केवला अविद्या भवमुपादाति। कस्मादित्याह। असंप्रख्यानलक्षणतया अपटुत्वादिति। मिश्रितात्वन्यक्लेशसंपर्कवशादुपाददातीत्यभिप्रायः। *Sakv.* p. 487. See *LVPAk.* v. p 77.

[१०] On *upādāna*, see *Dhs A.* v. 99 and *Asm.* p. 47.

दृष्टियोगाच्छीलव्रतं निष्कृष्य[1] दृष्ट्युपादानं त्रिंशद् द्रव्याणि। शीलव्रतो-पादानं षड्द्रव्याणि। कस्मात्पुनरेते(त)द् द्वि(द)ष्टिभ्यो निष्कृष्टम्? 'कुमार्गादि-समाश्रयात्।' मार्गप्रतिद्वन्द्वभूतं[2] ह्येन[(8)]दुभयपक्षविप्रलम्भकं च। गृहिणो-(णो)ऽपि ह्यनेन विप्रलब्धाः अनशनादिभिः स्वर्गमार्गसंज्ञया। प्रव्रजिता अपीष्टविषयविवर्जने शुद्धिप्रत्यागमनादिति[3]।

'शेषास्त्रैधातुकाः।' दृष्टयो दृष्ट्युपादानम्। त्रैधातुकाश्च शीलव्रत-परामर्शाः परामर्शोपादानम्। कामास्रवस्तु एकधा[(9)]तुकः। भवास्रवस्तु द्विधातुकः। तस्मादेव तद् 'अन्त्यम्' द्वयं सार्वधातुकमेव। 'आत्मभाव-प्रवृत्तिनः।' आत्मभावालम्बनप्रवृत्तं खल्वेतदिति।

ते खल्वेते अनुशयाः

संयोजनादिभिः शब्दैर्दर्शिताः पञ्चधा पुनः ॥[4]

संयोजनबन्धनानुशयोपक्लेशपर्यवस्थानभेदेन पञ्चधा भित्त्वोक्ताः।
[VI. B. 4. Fol. 116. a]

[ 364 ] [(1)]नव संयोजनान्यस्मिन्नीर्ष्यामात्सर्यमेव च।
द्रव्यामर्षणसामान्याद् दृशः संयोजनद्वयम् ॥[5]

[ 365 ] शेषान्य(ण्य)नुशयाः पञ्च

[6] नव खलु संयोजनानि सूत्र उक्तानि—अनुनयप्रतिघमानाविद्यादृष्टि-परामर्शविचिकित्सेर्ष्यामात्सर्यसंयोजनानि।[7]

---

[1] दृष्टियोगाच्छीलव्रतं निष्कृष्येति षट्त्रिंशद् द्रव्यकाद् दृष्टियोगाद्धातुभेदेन पञ्चशील-व्रतपरामर्शान्निष्कृष्य। *Sakv* p. 437

[2] मार्गप्रतिद्वन्द्वभूतमिति। [illegible] *Ibid*

[3] Yaśomitra seems to refer to the Jaina ascetics: [illegible] *Ibid.* Cf. *Tattvārtha-sūtra*, ix. 19

[4] *Cf* संयोजनादिभेदेन पुनस्ते पञ्चधोदिताः। *Ak.* v 41 ab.

[5] *Cf* द्रव्यामर्षणसामान्याद् दृशौ संयोजनान्तरम्। *Ak.* v 41 cd.

[6] From नव ... to दृशौ is identical with *Akb* v. 40 ab.

[7] नव संयोजनानि। *Asm* p 44 [illegible] संयोजनानि। *Asm.* p. 52. The *Saṅgītisutta* enumerates only seven सप्त संयोजनानि। अनुनयसंयोजन, प्रतिघ…

तत्रानुनयसंयोजनं त्रैधातुको रागः। एवमन्यानि यथायोगं वक्तव्यानि। दृ(2)ष्टिसंयोजनं तिस्रो दृष्टयः परामर्शसंयोजनं द्वे दृष्टी।

किं पुनः कारणं संयोजनेषु तिस्रो दृष्टयो दृष्टिसंयोजनं पृथगुक्तम्? द्वे पुनर्दृष्टी परामर्शसंयोजनं पृथगिति? तदुच्यते—'द्रव्यामर्षणसामान्याद् दृशः संयोजनद्वयम्।' अष्टादशद्रव्यानि(णि) खलु तिस्रो दृष्टयः।[1] अष्टादशैव द्वे परामर्शदृ(3)ष्टी।[2] द्वयोश्च नामसामान्यम्। तस्मादेतद् द्वयमेकं संयोजनमुक्तमिति।[3]

पुनरप्यन्यत्र भगवान्संयोजनम्

पञ्चधा पञ्चधा पुनः।
जगादावरभागीयमूर्ध्वभागीयमेव च ॥[4]

---

दिट्ठि···विचिकिच्छा ··मान···भवराग···अविज्जासयोजन। *Digha*, xxxiii 2. 3 The following ten are often mentioned in the Pali *suttas* —सक्कायदिट्ठि, विचिकिच्छा सीलब्बतपरामासो, कामच्छन्दो, व्यापादो, रूपरागो, अरूपरागो, मानो, उद्धच्च, अविज्जा। A different enumeration of the ten *sanyojanas* is found at *Chullaniddesa*, 657 and *Dhs* 1113—1463 —कामरागो, पटिघो, मानो, दिट्ठि, विचिकिच्छा, सीलब्बतपरामासो, भवरागो, इस्सा, मच्छरिय, अविज्जा। See *A Buddhist Manual of Psychological Ethics*, p 297, n 1.

The *Aam* identifies the ten *anuśayas* with ten *sanyojanas* For their relation, see *M sutta* 64

[1] कथम्? कामधातौ सत्कायान्तग्राहदृष्टी द्वे। ते च दुःखदर्शनप्रहातव्ये एवेष्टे। मिथ्यादृष्टिश्चतुःप्रकारा। दुःखदर्शनप्रहातव्या यावन्मार्गदर्शनप्रहातव्या। इत्येव कामधातौ षड् भवन्ति। यथा कामधातौ षड् एव रूपधातावारूप्यधातौ चेत्यष्टादश भवन्ति। *Sakv*. p 499

[2] अष्टादशैव द्वे परामर्शदृष्टी। कथम्? कामधातौ दृष्टिपरामर्शो दुःखदर्शनप्रहातव्यो यावन्मार्गदर्शनप्रहातव्य इति चतुःप्रकारा। शीलव्रतपरामर्शोऽपि दुःखदर्शनप्रहातव्य, मार्गदर्शनप्रहातव्यश्चेति द्विप्रकार। इत्यव कामधातौ षड् भवन्ति।···एव रूपधातावारूप्यधातौ च। द्वयेनमष्टादश द्रव्याणि भवन्ति। *Ibid*

[3] After this the Kośakāra discusses one more point —अथ कस्मादीर्ष्यामात्सर्ये सयोजने पृथक् सयोजनद्वयमुक्तम्, नान्यत् पर्यवस्थानम्? *Akb* v 42 This is not discussed in *Adv*

[4] Cf पञ्चधावरभागीय द्वाभ्या कामानतिक्रम।
त्रिभिस्तु पुनरावृत्ति। *Ak* v 43 abc.

Cf also, अह खो भन्ते धारेमि भगवता देसितानि पञ्च ओरभागियानि सयोजनानि··· सक्कायदिट्ठि···विचिकिच्छ · सीलब्बतपरामास ··कामच्छन्द·· व्यापाद··। *M sutta* 64

[ 366 ] आद्यन्त्ये द्व दृशौ कांक्षा(काङ्क्षा) कामच्छन्दो द्विरेव यः ।

तत्र पञ्च संयोजनान्यवरभागीयानि । तद्यथा—सत्कायदृष्टिः शीलव्रतपरामर्शो [4] विचिकित्सा कामच्छन्दो व्यापाद इति । एते हि कामधातुहितत्वादवरभागीया इत्युच्यते(न्ते) । अवरा हि कामधातुरेतानि च तदनुगुणानि । यस्मात्

द्वाभ्यां कामानतिक्रान्तिः पुनराग(न)यनं त्रिभिः ॥[१]

कामच्छन्दव्यापादाभ्यां कामधातुं नातिक्रामति । सत्कायदृष्ट्यादिभिस्त्रिभिरतिक्रान्तोऽपि पुनरावर्तते दौवारिकानुचर[5]साधर्म्यात्[१] ।

अन्ये पुनराहुः—त्रिभिः सत्त्वावरतां नातिक्रामति पृथग्जनत्वम्, द्वाभ्यां धात्ववरतां कामधातुमिति ॥[२]

[३]यदा खलु स्रोतआपन्नस्य पर्यादाय त्रिसंयोजनप्रहाणे षट् क्लेशाः प्रहीणाः किमर्थं तिस्रो दृष्टीरपहाय प्रयाना(ण्त्रय)मेवाह सत्कायदृष्टी(ष्टिं) शीलव्रतपरामर्शं विचिकित्सां च ?[३] तदुच्यते—

---

पञ्चिमानि भिक्खवे उद्धम्भागियानि संयोजनानि । रूपरागो, अरूपरागो, मानो, उद्धच्चं, अविज्जा । *Ang* IV p 460

See *Ang* I. p 232, II. p 238, IV p 459, *Jpś* p 67 8 and *A Buddhist Manual of Psychological Ethics*, pp 302, n 1

[१] द्वाभ्यां कामानतिक्रम इति तदप्रहाणे कामधात्वनतिक्रमात् । दौवारिकानुचरसाधर्म्यादिति । दौवारिकसधर्मणौ कामच्छन्दव्यापादौ । तौ हि कामधातुबन्धनागारान्निर्गमं न दत्त । दौवारिकस्थान । अनुचरसधर्माणः सत्कायदृष्ट्यादयः ।···*Sakv* pp 491 2.

[२] त्रिभि सत्त्वावरतामिति । पृथग्जनत्वलक्षणा सत्त्वावरता सत्कायदृष्टिशीलव्रतपरामर्शविचिकित्साप्रहाणेनातिक्रामति । द्वाभ्यां कामच्छन्दव्यापादाभ्याम् । धात्ववरतां कामधातुस्वभावां नातिक्रामति । नातिवर्तत । आर्येभ्यो ह्यवरा पृथग्जना । धातुषु च कामधातुरवर । तस्मादेव तान्यवरभागीयानि । अपरे योगाचारा । *Sakv* pp 491 2.

[३-३] From यदा खलु ... विचिकित्सा च is identical with *Akb* v 43 c

—पर्यादाय त्रिसंयोजनप्रहाणादिति । निरवशेष सत्कायदृष्टिशीलव्रतपरामर्शविचिकित्साप्रहाणादित्यर्थं । षट् क्लेशा प्रहीणा इति । पञ्च दृष्टयो विचिकित्सा च । ननु रागादय ... । त्रिस्रो दृष्टीरपहायेति । अन्तग्राहमिथ्यादृष्टिदृष्टिपरामर्शदृष्टी । त्रयमेवाहेति । सत्कायदृष्टिशीलव्रतपरामर्शविचिकित्सात्रयमेवाह । कस्मात् । यथा हि सूत्रे पठ्यते—'कियता भदन्त स्रोतआपन्नो भवति ? ... इह ... दु ... इदं दु ...

[ 367 ] द्व्येक(6)दृग्घेयकार्योक्तेर्द्दष्टिहेयमुखग्रहात् ।
सर्वदृग्घेयभाक्त्वेऽपि त्रयमेतदुदाहृतम् ॥[1]

प्रवर्तकग्रहणे खलु प्रवर्त्यमपि गृहीतं भवति प्रदीपालोकवत्। तत्र सत्कायदृष्ट्या तत्प्रवर्तितान्तग्राहदृष्टिर्गृहीता। शीलव्रतपरामर्शेण दृष्टिपरामर्शः प्रवर्तितः। विचिकित्सया मिथ्यादृष्टिः प्रवर्तिता। अतो हेतु(7)ग्रहणात्कार्यग्रहणं वेदितव्यम्।

अथवा त्रिविधा क्लेशाः—एकप्रकाराः, द्विप्रकाराः, चतुष्प्रकाराश्च।[2] तत्र सत्कायदृष्ट्या एकप्रकारा गृहीताः। शीलव्रतपरामर्शेन द्विप्रकाराः। विचिकित्सया चतुष्प्रकाराः गृहीता भवन्ती(न्ती) ति ॥

वयं ब्रूमः—[3]

[ 368 ] सर्वानर्थनिदानत्वान्मार्गप्रत्यर्थिभावतः ।
तथ्यो(8)ह्यविधुरत्वाच्च त्रिसंयोजनदेशना ॥[3]

सत्कायदृष्टिः खलु सर्वानर्थमलानां क्लेशस्य च भवत्रयस्य च मूलम्। अतस्तयोरुत्खाततया सर्वानर्थवृक्षस्योत्सादनं भवति। मार्गस्य च सद्भूतस्य प्रत्यर्थिभूतः कुमार्गावलम्बी शीलव्रतपरामर्शः। तेन प्रहीणेन सन्मार्गेण मोक्षपुरप्रवेशो भवति। सम्यग्दृष्ट्यादि(9)मार्गं प्रतिपत्तिप्रतिबन्धभूता च विचिकित्सा।

---

यथाभूत प्रजानाति। त्रीणि चास्य सयोजनानि प्रहीणानि भवन्ति परिज्ञातानि। तद्यथा सत्कायदृष्टिः शीलव्रतपरामर्शो विचिकित्सा च। स एषा त्रयाणा सयोजनाना प्रहाणात् स्रोतापन्नो भवत्यविनिपातधर्मा सम्बोधिपरायण सप्तकृद्भवपरम. सप्तकृत्वो देवाश्च मनुष्याश्च ससृत्य सन्धाय दुःखस्यान्त करिष्यतीति।" सर्वमेतद्वक्तव्यं स्यात्। भवेदित्यर्थ.। *Sakv.* p. 492. Cf. इधेकच्चो पुग्गलो तिण्ण सयोजनान परिक्खया सोतापन्नो होति अविनिपातधम्मो नियतो सम्बोधिपरायणो, सो सत्तक्खत्तु देवे च मनुस्से च सन्धावित्वा ससरित्वा दुक्खस्सन्त करोति। *P. Paññatti*, p. 15.

जानाति भन्ते भगवा···अय पुग्गलो यथानुसिट्ठ तथा पटिपज्जमानो, तिण्णं सयोजनानं परिक्खया सोतापन्नो भविस्सति अविनिपातधम्मो नियतो सम्बोधिपरायणो ति। *Digha*, xxviii. 13.

[1] Cf. मुखमूलप्रहात् त्रयम्। *Ak.* v. 43 d.

[2] त्रिप्रकाराः किल क्लेशा इति। दर्शनहेया इहाधिकृता। एकप्रकाराः सत्कायान्तग्राहदृष्टय. दुःखदर्शनमात्रप्रहेयत्वात्। द्विप्रकाराः शीलव्रतपरामर्शः। चतुष्प्रकाराः विचिकित्सामिथ्यादृष्टिदृष्टिपरामर्शाः। ये तु रागादयो दर्शनहेया। तेऽपि तदालम्बनत्वात् गृहीता एवेति शक्य वक्तुमिति। *Sakv.* p. 492

[3] This view is not referred to either by the Kośakāra or Yaśomitra.

तया प्रहीन(ण)या सम्यग्दृष्टिसंकल्पपुरःसरो मार्गो निर्विबन्धः प्रवर्तते। इत्यष्टाशीत्यनुशयप्रहाणेऽपि सति त्रयाणामेव ग्रहणम्।

वैभाषाः पुनः पश्यन्ति[1]—मोक्षान्तराय(याः) त्रयोद्भावनाः। [2]यथा खलु त्रयोऽन्तराया मार्गगमने भवन्त्यगन्तुकामताऽन्यमा[VI A 4 Fol 116 b](1)र्गग्रहण मार्गचङ्क्रमसंदेहाच्च मार्गगमनाप्रतिपत्तिः। एवं मोक्षगमने त्रयोऽन्तराया भवन्ति। सत्कायदृष्ट्या मोक्षादुत्रा(त्त्रा)सं गतस्यागन्तुकामता भवति। शीलव्रतपरामर्शेनान्यमार्गग्रहणात् मार्गविभ्रान्तिः। विचिकित्सा मार्गसंशये सति मार्गाप्रतिपत्ति[रित्ये]षां मोक्षगमनान्तरायाणां प्रहाणं स्रोतआपन्नस्य द्योतयद्भगवान् (2)क्लेशत्रयस्यैव ग्रहणमकार्षीदिति ॥[2]

यथा च पञ्चविधमव(व)रभागीयं संयोजनमुक्तवांस्तथा पञ्चोर्ध्वभागीयाणि(नि) संयोजनान्याख्यातवा(वान्) सूत्रे।

[369] द्वौ रूपारूपजौ रागौ मानमोहोद्धवास्त्रयः।

पञ्च खलूर्ध्वभागीयाणि(नि) संयोजनानि।[3] तद्यथा—रूपरागः, आरूप्यरागः, औद्धत्यम्, मानोऽविद्या च। एषामप्रहीणाना ऊर्ध्वं(3)धातुद्वयं नातिक्रामन्ति सत्त्वाः। समाप्तः संयोजनाधिकारः।

बन्धनानीदानीमुच्यन्ते। त्रीणि बन्धनानि। रागो बन्धनं द्वेषो मोहो

---

[1] Kośakāra says अपरे पुनराहु —

अगन्तुकामता मार्गविभ्रमो मार्गसंशयः।
इत्यन्तराया मोक्षस्य गमनेऽतस्त्रिदेशना ॥ *Ak* v 44

Yaśomitra says that this is a view of the Kośakara —अपरे पुनराहुरित्यपमेवाचार्यः। *Sakv* p 492.

Prof Pradhan gives the following note on this *Kośa karika*(v 44)—This *karikā* is a problem. the Tsang Yao edition does not include this *karika* at its proper place and gives a note that this Sanskrit *gatha* does not occur in the original Sanskrit But other editions of Chinese Translations regard it as a *karika*

[2] [2] This passage (from यथा खलु to ग्रहणमकार्षीदिति ) is almost identical with *Akb* v 44

[3] Cf पञ्चधोर्ध्वभागीय द्वौ रागौ रूप्यरूपिजौ।
औद्धत्यमानमोहाश्च *Ak.* v 45 abc

V supra, p 301, n 4

बन्धनम् ।[1] एभिस्त्रैधातुकाः सत्त्वाः संसारचारके बद्धाः यथायोगम् । कस्मात्पुनरेतानि बन्धनानीत्युक्तानि ? तदुच्यते—

त्रिवेदनानुशायित्वाद् दृढत्वाद्बन्धनत्रयम् ॥[2]

त्रिवेदनावशात्खलु बन्धनत्र(4)यमुक्तम् । तत्र सुखायां वेदनायां रागोऽनुशेरते । दुःखायां द्वेषः ।[3] अदुःखासुखायां मोहः[4] ।[5] एते च त्रयो मूलक्लेशाः षड्विज्ञानभौमाः पञ्चप्रकाराः । तस्मादेते दृढत्वाद् बन्धनशब्देनोक्ताः ॥

पुनरन्ये भगवता सूत्रे—

[370] द्विपक्षग्रन्थनाद् ग्रन्थाश्चत्वारः समुदाहृताः ।
अभिध्याख्यस्तथा द्वेषः परामर्शद्वयं तथा ॥[6]

तत्र गृही अभिध्यया वि(5)षयेषु ग्रथितस्तद्व्याघातकर्तृषु विवादमारभमाणो द्वेषेणानुबध्यते । प्रव्रजितः शीलव्रतपरामर्शग्रथितस्तदपवादश्रवणादिदमेव सत्यमिति सत्याभिनिवेशपरामर्शेन दृष्टिपरामर्शाख्येन बध्यते । इति चत्वारो भवन्ति ॥

उक्ताः क्लेशाः ।

---

[1] रागो भन्ते बन्धन दोसो बन्धन मोहो बन्धन । *S.* iv. p. 292

बन्धन त्रिविधम् । रागबन्धनेन सत्त्वाना विपरिणामदुःखताया बन्धनम् । द्वेषबन्धनेन सत्त्वाना दुःखदुःखताया बन्धनम् । मोहबन्धनेन सत्त्वाना संस्कारदुःखताया बन्धनम् । *Asm* p 46. See *Aam* p 81 and *Yogasūtra*, ii. 7—8.

[2] Cf. त्रिवेदनाद्बन्धनत्रयम् । *Ak* v. 45 d.

[3] V. supra, p 48, n. 6.

[4] Cf. अदुक्खमसुखाय हि वेदनाय अविज्जा अनुसेति । *Netti.* p. 32.

[5] After this the Kośakāra says .—न तथा रागद्वेषौ । स्वसान्तानिकालम्बनतो वा नियम । *Akb.* v. 45 d.—ननु च रागद्वेषावप्यदुःखासुखाया यथायोग तथैवानुशयाते । कस्मान्मोह एवोच्यते इत्याह···रागद्वेषावप्यनुशयाते । न तु तथा यथा मोहः । मोहो ह्यपटुत्वादपट्व्यामदुःखसुखाया वेदनामनुकूलत्वात्सुतरामनुशेत इति ।···स्वसान्तानिकसुखाद्यनुभूतिसामर्थ्यात्तया नियम । अपरे तु व्याचक्षते···*Sakv.* p. 493.

See *A. Vibhāṣā*, pp. 43-44.

[6] This topic is not found in *Akb* Cf. चत्तारो मे भिक्खवे गन्था । अभिज्झा कायगन्थो, व्यापादो···सीलब्बतपरामासो···इद सच्चाभिनिवेसो कायगन्थो ।···*S* iv. p. 59.

Also cf. ग्रन्थाश्चत्वार ।···समाहितमन स्वभावस्य कायस्य परिग्रन्थनार्थेन ग्रन्थो वेदितव्यः । तेन किं भवति । चतुर्विध चित्त विक्षिप्यते । *Asm.* p. 48.

[ 371 ] उपक्लेशास्तु विज्ञेयाः संरम्भाद्या यथोदिताः ।
सर्वे वा चैत(७)साः क्लिष्टाः संस्कारस्कन्धसंज्ञिताः ॥[१]

ये तावत्खलु क्लेशा उपक्लेशा अपि ते चित्तोपक्लेशनात् ।[२] [३]इह तु पर्यवस्थानक्लेशमलसगृहीता क्षुद्रकवस्तुकोद्दिष्टा[४] वेदितव्याः । येऽपि चान्ये चैतसिकाः संस्कारस्कन्धसगृहीताः तेऽप्युपक्लेशा इत्याख्यायन्ते ॥[३]

के पुनस्ते क्लेशमला कानि वा पर्यवस्थानानि ? तत्र तावत्—

[ 372 ] मूल(7)क्लेशमलास्त्वन्ये षडुपक्लेशसंज्ञिताः ।

त इमे उच्यन्ते—

शाठ्योपनाहप्रदाशमायामदविहेठनाः ॥[५]

---

[१] V supra p 76 n 3 For *upakleśa* see *M sutta* 7 *MA* I p 233 235 and *Khuddakavatthu Vibhanga Vbh* pp 345 392

Cf यऽप्यन्ये चैतस्या क्लिष्टा सस्कारस्कन्धसज्ञिता ।
क्लेशेभ्यस्तेऽप्युपक्लेशास्ते तु न क्लेशसज्ञिता ॥ *Ak* v 46

[२] Cf ये क्लेशास्ते उपक्लेशा अपि भवन्ति । उपक्लेशास्तु न क्लेशा । क्लेशान् स्थापयित्वा तदन्य क्लिष्ट सस्कारस्कन्धसगहीत सर्वश्चैतसिको धर्म । स पुन कतम । षड्रागादीन् क्लेशान स्थापयित्वा क्लिष्ट सस्कारस्कन्धसगहीत क्रोधादिकश्चैतसिको धर्म । अपि खलु रागो द्वेषो मोहश्च चैतसिका उपक्लेशा उच्यन्ते । *Asm* p 47

[३-३] Cf यऽप्यन्य क्लेशभ्य क्लिष्टा धर्मा सस्कारस्कन्धसगृहीताश्चैतसिकास्त उपक्लेशास्ते पुनर्ये क्षुद्रकवस्तुके पठिता । इह तु पर्यवस्थानक्लेशमलसगहीतानेव निर्देश्याम । *Akb* v 46

[४] ये क्षुद्रकवस्तुके पठिता इति । क्षुद्रकवस्तुके प्रवचनभागे य पठिता । न तु चेतनादय एवेत्यभिप्राय । तद्यथा अरतिर्विजम्भिका चेतसो लीनत्व तन्द्री भक्षऽसमता नानात्वमना अमनसिकार कायदुष्ठुल्य भृङ्गी भित्तिरीका अनार्जवता अमार्दवता अस्वभावानुवर्तिता कामवितर्को व्यापादवितर्को विहिंसावितर्को ज्ञातिवितर्को जनपदवितर्कोऽमरवितर्कोऽवमन्यना प्रतिसयुक्तो वितर्क कुलोदयताप्रतिसयुक्तो वितर्क शोक दुःख दौर्मनस्यमुपायास इति । *Sakv* p 493

The *Kshudrakavastu* corresponds to the *Khuddhakavatthu Vibhanga Vbh* pp 345-392. The latter enumerates a long list of evil states and gives a detailed comm ntary on them See *VbhA* pp 465 516 and *Milinda* p 283

[५] Cf अन्ये च षट् क्लेशमला माया शाठ्य मदस्तथा ।
प्रदाश उपनाहश्च विहिंसा चेति रागजो ॥ *Ak* v 49cd 50 ab

तत्र चित्तकौटिल्यं शाठ्यं चित्तस्यानृजुता वक्रीभावः ।[1] उपनाहः[2] प्रतिघनिष्यन्दो वैरानुबन्धकृद्बन्धावधानता । सन्तोष्यमानस्याप्यधर्मदृढग्राहिता प्रदाशः ।[3] पराभिसन्धानाय मिथ्योपदर्शनकारी (θ)परवञ्चना मायाः(या) ।[4] चित्तस्मयो मदः । सतुरूपकुलबलभोगयौवनारोग्यपरिजनसंपत्तिसंरागजः प्रमादास्पदं विविधेन्द्रियविभ्रमोत्पादजनकः ।[5] सत्त्वव्यापादो विहिंसा विहेठनेत्यर्थान्तरम् । उक्ताः षट् क्लेशमलाः ॥

---

[1] Cf. कतमं साठेय्यं ?...या तत्थ सठता सठत्तं ...परिक्खत्तता...। *Vbh.* p 358. शाठ्यं स्वदोषप्रच्छादनोपायसंगृहीतं चेतसः कौटिल्यम् ।...शाठ्यं प्रज्ञाप्यते । स हि स्फुटमेव प्रच्छादयति न कारवा ।... *Trb.* 14. चित्तकौटिल्यं शाठ्यं येन यथाभूतं नाविष्करोति विक्षिपत्यपरिस्फुटं वा प्रतिपद्यते । *Akb* v. 49 cd.

[2] Cf. पुब्बकाले कोधो अपरकाले उपनाहो ।...दळ्हीकम्मं कोधस्स अयं वुच्चति उपनाहो । *Vbh.* p. 493. आघातवस्तुबहुलीकारः उपनाहः । *Akb* v. 49 cd. ...प्रतिघांशिक एव वैराशयस्यानुत्सर्गः । *Asm* p. 8

[3] Cf. कतमो पळासो ? यो पळासो...विवादट्ठानं युगग्गाहो अप्पटिनिस्सग्गो अयं वुच्चति पळासो । *Vbh* p. 357. सावद्यवस्तुदृढग्राहिता प्रदाशो येन न्यायसंज्ञप्तिं न गृह्णाति । *Akb.* v. 49 cd. प्रदाशः कतमः ? प्रतिघांशिकः क्रोधोपनाहपूर्वङ्गमश्चेतस आघातः । *Asm.* p. 8. प्रदाशश्चण्डवचोदाशिता ।...मर्मघट्टनवचनेन दशनशीला दाशी तद्भावो दाशिता ।...अयं च क्रोधोपनाहपूर्वकश्चेतस आघातस्वभाव इति प्रतिघांशिक एव न द्रव्यतो भिद्यते । *Trb* 14.

[4] Cf. कतमा माया ? इधेकच्चो कायेन...वाचाय...मनसा दुच्चरितं चरित्वा, तस्स पटिच्छादनहेतु पापिकं इच्छं पणिदहति...या एवरूपा माया । *Vbh* p 357. माया परवञ्चना...। इयं च रागमोहाभ्यामभूतान् गुणान्...समुदितयोः प्रज्ञप्यत इति...प्रज्ञप्तित एव न द्रव्यतः । *Trb* 14

[5] Cf. मदः स्वधर्मेष्वेव रक्तस्य दर्पश्चेतसः पर्यादानाकुशलधर्मक्रियाभ्यां प्रतिसंहार मद इत्याचार्यसंघभद्रः *Sakv* p. 140.

Also cf. मदः स्वधर्मे रक्तस्य पर्यादानं तु चेतसः । *Ak.* ii 33 cd.

...गोत्रादिविशेषं मद इत्यपरे । *Akb.* ii. 33 cd —...मद इति...। ...संभावितः । ...। *Sakv* p. 141. Cf. मदः स्वसंपत्तौ रक्तस्योद्धर्षश्चेतसः पर्यादानम् ।...उद्धर्षो हर्षविशेषः ।...*Trb* 14

मदो कतमो ? यो मदो मज्जना ... चित्तस्स ... इति मदो । मानो कतमो ? यो मानो ... मदमानानं को भेदो ? ... न उच्चते मदो । ... न उच्चते मानो । इति भेदो । *Jsl* p. 55 V. supra, p 84, n. 6. The *Vibhaṅga* (p. 345) enumerates 28 different kinds of *mada*.

दश पर्यवस्थानान्युच्यन्ते ।

[ 373 ] मदर्येर्ष्याह्रियनपत्राप्यस्त्यानमिद्धोद्धवक्रुधः ।
मात्स(1)र्यं कुकृतत्वं च दशधा पर्यवस्थितिः ॥[1]

एते ह्यनुबन्धाऽदार्ढ्यान्नानुशया । न ह्येषामनुबन्धदार्ढ्यमस्त्यनुशयास्तु दृढानुबन्धा । तस्मादेतानि कालान्तरमात्र चित्तपर्यवस्थापनात् पर्यवस्थानानीत्युच्यन्ते ।[2]

अवद्य छादयते(त) चित्तापलेपो म्रक्ष, चित्त म्रक्षयतीति म्रक्ष ।[1] परसम्पत्त्यमर्षणमीर्ष्या । अकार्यं कुर्वत [VI B 5 Fol 117 a ](1)स्यात्मान

---

[1] Cf कानि पुन पर्यवस्थानानीत्याह— क्लेशा अपीहि पर्यवस्थान कामरागपर्यवस्थानप्रत्ययदु खम इति सूत्र वचनात । प्रकरणशास्त्र तु

आह्रीक्यमनपत्राप्यमीर्ष्यामात्सर्यमुद्धव ।
कौकृत्य स्त्यानमिद्ध च पर्यवस्थानमष्टधा ॥

वैभाषिकन्यायेन पुनर्दश पर्यवस्थानान्येतानि चाष्टौ
क्रोधम्रक्षौ च । *Akb* v 47 48 a

Cf पर्यवस्थानान्यष्टौ । स्त्यान मिद्धमौद्धत्य कौकृत्यमीर्ष्या मात्सर्यमाह्रीक्यमनपत्राप्य च । पुन पुन उद्भवन चित्त पर्यवनह्यतीति पर्यवस्थानानि । तथा च शमथप्रग्रहनिमित्त भावनाकाले तत्सनिश्रयब्रह्मचर्यादिशुद्धिसगृहीतशीलकाले चित्त पर्यवनह्यन्ति । *Asm* p 47

ओकासदानवसेन किलेसान चित्त कुसलप्पवत्ति परियादियित्वा ठान परियुट्ठान । त समाधि विक्खम्भति । *VmT* p 18 समुदाचारवसेन परियुट्ठतीति परियुट्ठान । *Vbh A* p 509 Only seven *paryutthanas* are mentiond in the Pali Canon— तत्थ कतमे सत्त परियुट्ठाना ? कामरागपरियुट्ठान पटिघ—मान—दिट्ठि—विचिकिच्छा—भवराग—अविज्जा परियुट्ठान । इमे सत्त परियुट्ठाना । *Vbh* p 383 These seven *paryutthanas* correspond to the seven *anuśayas* For a con roversy on the relation of these two see *Kv* xiv 5—इदानि अञ्ञो अनुसयो ति कथा नाम होति । तत्थ यस्मा पुथुज्जनो कुसलाब्याकते चित्ते पवत्तमाने सानुसयो ति वत्तब्बो न परियुट्ठितो ति तस्मा अञ्ञो अनुसयो अञ्ञ परियुट्ठान ति यस लद्धि सेय्यथापि अन्धकान । सानुसयो ति आदि पन तस्मि समये अनुसयस्स अप्पहीनत्ता सानुसयो ति वत्तब्ब अनुप्पन्नत्ता च परियुट्ठितो ति अवत्तब्बत्त दीपेति न अनुसयपरियुट्ठानान अञ्ञत्त तस्मा असाधकमेत । *KvA* xiv 5 V supra pp 222 ff

[2] अवद्यप्रच्छादन म्रक्ष । *Akb* v 48 a म्रक्ष आत्मनोऽवद्यप्रच्छादना । छदवमयादीभिरात्म्य काले तदिनपिणा चोदनेन तत्र त्वमेवकारीत्यनुयुक्तस्य मोहाशिक्षावद्यप्रच्छादना म्रक्ष । *Tvb* 14 तत्थ कतमो मक्खो ? यो मक्खो मक्खायना मक्खितत्त निट्ठुरियं निट्ठुरियकम्मं अयं वुच्चति मक्खो । *Vbh* p 357

मवेक्ष्यालज्जनाऽह्रीः ।[१] परमपेक्ष्यालज्जनाऽनपत्राप्यम् ।[२] कायाकर्मण्यता स्त्यानं तन्द्रीपर्यायवचनम्[३] । कायचित्ताकर्मन्य(ण्य)ता मिद्धं चित्ताभिसंक्षेपः स्वप्नाख्यः, स तु क्लिष्ट एव पर्यवस्थानम् ।[२] चित्ताव्युपशान्तिरौद्धत्यम् ।[3] परापकारनिमित्तोद्भवोऽपरित्यागयोगेण(न) चण्डीभावः क्रोधः ।[४] स्ववस्तुन्याग्रहो मात्सर्यम्,[५] मत्तो मा सरेदेतदिति निरुक्तिः ।[६] [(2)]कुकृतभावः कौकृत्यम् ।[७] इत्येतानि दश पर्यवस्थानानि ॥

अथैषामुपक्लेशमलपर्यवस्थानानां कः कस्य रागादेर्मूलक्लेशस्य निष्यन्दः ? तदिदमारभ्यते ॥

[ 374 ] एभ्योऽनुनयनिष्यन्दा आह्रीक्यौद्धततादयः ।[८]

इमे खलूपक्लेशाः रागणि(नि)ष्यन्दाः । यदुत—[९]अह्रीक्यौद्धत्यमदमात्सर्यकुहनालपनानैमित्तिकतानैष्पेशिकता लाभेन लाभस्य [(3)]निश्चिकीर्षता पापेच्छता महेच्छतेच्छास्विता कामच्छातिजनपदवितर्कपापमित्रतादयः ।[१०]

---

[१] V. supra, p. 73, n. 1.

[२] V. supra, p. 74, n. 1.

[३] Cf. औद्धत्य चित्तस्याव्युपशम ।…स पुनरेष रागानुकूलपूर्वहसितरसितक्रीडिताद्यनुस्मरतश्चेतसोऽव्युपशमहेतु. शमथपरिपन्थकर्मकः । *Tvb.* 14. See *DhsA.* III. 547.

[४] Cf. व्यापादविहिंसावर्जित सत्वासत्वयोराघात. क्रोध. । *Akb.* v. 48 a. वर्तमानमपकारमागम्य यश्चेतस आघात. सत्वासत्वविषयो दण्डदानादिसंनिश्रयदानकर्मकश्च स क्रोध इति प्रज्ञप्यते । *Tvb.* 14.

[५] Cf. कौशलप्रदानविरोधी चित्ताग्रहो मात्सर्यम् । *Akb* v. 47. cd. पञ्च मच्छरियानि । आवासमच्छरिय–कुल–लाभ–वण्ण–धम्ममच्छरिय । य एवरूप मच्छेरं…वेविच्छ कदरिय कटुकञ्चुकता अग्गहितत्तं चित्तस्स, इद वुच्चति मच्छरिय । *Vbh.* p. 357. See *Ang* III. 301.

[६] Cf. मच्छरयोगेन मच्छरी ति पवत्तमान मच्छरियंद् गहेत्वा आह मच्छरभावो मच्छरिय ति । निब्बत्तिनयेन पन 'मा इद अच्छरियं अञ्ञेसं होतु, मय्हमेव होतू ति मच्छरियं ति पोराणा । *VmT.* p. 494.

[७] Cf. कुच्छित कत कुकत । तस्स भावो कुक्कुच्च । त पच्छानुतापनलक्खणं, कताकतानुसोचनरस, विप्पटिसारपच्चुपट्ठान, कताकतपदट्ठान । *Dhs A.* III. 563. See *Dhs.* v. 95-96. V. supra, p. 80, n. 3.

[८] Cf. रागोत्था अह्रीक्यौद्धत्यमत्सराः । *Ak.* v 48 b.

[९] The Kośakāra mentions only three *upakleśas*, viz , *āhrīkya*, *auddhatya* and *mātsarya* (*Akb.* v. 48 b )

[१०] Cf.…मदो पमादो थम्भो सारम्भो अत्रिच्छता महिच्छता पापिच्छता सिङ्ग तिन्तिण चापल्य असभागवुत्ति अरति तन्दि विजम्भिता भत्तसम्मदो चेतसो च लीनत्त कुहना लपना नेमि-

तत्राह्रीक्यानपत्राप्यमदा व्याख्यातलक्षणा । लाभसत्कारयशोलोभाद भूतगुणदर्शनार्थमीर्यापथविकल्पकश्चैत्तविशेषः कुहना । लाभाद्यर्थमेव गुणप्रि(प्रि)यालपनकृल्लपना.(ना) । उपकरणार्थित्वनिमित्तदर्शनकृच्चैत्त(4)विशेषो नैमित्तिकता । परगुणवद्दोषवचननिष्पेषणकृदेव चेतसिको नैष्पेषिकता । लब्धलाभख्यापनेनान्यलाभनिश्चिकीर्षणता [लाभेन लाभस्य निश्चिकीर्षता] । परैरभूतगुणसम्भावनेच्छा पापेच्छता । लाभसत्कारपरिवारप्रार्थना महेच्छता ।[1]

लोभात्परैर्भूतगुणसम्भावनेच्छा इच्छुस्विता । कामरागप्रतिसंयुक्तो वितर्कः कामवितर्कः । ज्ञाति(5)स्नेहपरीतस्य तदावाहविवाहकृषिवाणिज्याजसेवादीनां गृहसन्धारन(ण)मुपजीवनोपायानां राजतस्करादिभयप्रशमनोपायानां च वितर्कणा [वितर्कः] ज्ञातिवितर्कः । पर्याप्तजीवितोपकरणापरितुष्टस्य लोकरुचि(मि)त्रता, छन्दरागापहृतचेतसस्तेषां जनपदानां भूमिरमनी(णी)यता सुभिक्षक्षेमताप्रचुरगोरसेक्षु(6)विकारगोधूमशाल्यादीनां वितर्कणाज्जनपदवितर्कः । शीलदृष्ट्याचारविपन्नानां रतिकृता ससेवा पापमित्रता ।

प्रदानपत्रपास्त्यानमिद्धाद्या मोहसंभवाः ॥[2]

तत(त्र) 'प्रक्षाण(न)पनपास्त्यानमिद्धा' । 'आदि'ग्रहणाल्लय', अमनसिकारा(रो)द(ऽ)नादरता, दौर्वचस्य तन्त्री(न्द्री) भक्तासमतेत्येवमादय ।

तत्र लयो[3] नाम दोषगुणत्यागा(7)र्जनं प्रति आत्मपरिभवजश्चित्तसंकोचः । कुशलासमन्वाहार औदासीन्ययोगेणामनसिकार । गुणेषु गुणवत्सु चाबहु-

त्तिकता निप्पेसिकता लाभेन लाभ निजिगिंसनता सेय्योहमस्मीति मानो ञातिवितक्को जनपद अमरम्परानुद्दयतापटिसयुत्तो लाभसक्कारसिलोकपटिसयुत्तो अनवञ्ञत्तिपटिसयुत्तो वितक्को । *Vbh* p 345 V supra, p 306, n 4 For the definitions of these terms see *Vbh* pp 350-7 and *Vm* I 61 83

[1] Cf अलब्धेच्छा महेच्छता । *Ak* vi 6 d

अलब्धे तु प्रणीतेऽपि वा प्रभूतेऽपि वा इच्छाभिलाषा महेच्छतेत्याचार्यमतम । *Saks* p 525

[2] Cf प्रक्षे विवाद

तृष्णानिष्यन्द इत्यके । अविद्यानिष्यन्द इत्यपरे । उभयोरित्यन्ये । यथाक्रम ज्ञाताज्ञातानामिति ।

अविद्यात स्त्यानमिद्धानपत्रपा । *Akb* v 48 cd

यथाक्रमं ज्ञाताज्ञातानामिति । राजादिभिर्ज्ञातानां प्रक्षवतां पुद्गलानां म्रक्ष तृष्णानिष्यन्द । मा मे लाभसत्कारो न भविष्यतीति । अज्ञातानामविद्यानिष्यन्द । कर्मस्वकतामश्रद्दधान तन्वद्य प्रच्छादयति । न परस्यान्तिके विशुद्ध्यर्थं देशयतीत्येवमुभयनिष्यन्दो म्रक्ष इत्यपरे । *Saks* p 494

[3] For *laya* see *Tib* 11 abc.

मानवृत्तिरणा(ना)दरता । धर्मानुशास्त्रपु सासूयितप्रतिमन्त्रकदौर्वचस्यम् । जृम्भिकोद्गम(मा)दक्षिवत्मैस्तम्भनिद्रास्पदः चैत्तविशेषः स्त्यानाख्या तन्द्री । कुशलपक्षानुकूलभोजनसमताप्रति[8]वेधश्चेतसो भक्तासमता ॥

[ 375 ] कौकृत्यं विचिकित्सोत्थं क्रोधाद्या द्वेषसम्भवाः ।[1]

कौकृत्यं खलु यथोक्तलक्षणं विचिकित्सासमुत्थितम् । क्रोधाद्या द्वेषनिष्यन्दाः । 'आदि'शब्दादीर्ष्या[ऽ]क्षान्त्युपनाहप्रदाशसंरम्भादयः ।

तत्रेर्ष्या पूर्वोक्तलक्षणा । सह्यासहिष्णुताऽक्षान्तिः । रन्ध्रावधाना-निवृत्तिरुपनाहः । संतोषमानस्या[1]ऽप्यदृढग्राहिता प्रदाशः । परान्विमर्दिपतः पाणिपादोष्ठकपोलशरीरकम्पयोनिर्भ्रान्तमनसः क्षोभः संरम्भः । निमित्त-मात्रेण सातत्यविहेठनकृच्छ्रकी । निस्तनतोऽभीक्ष्णविवाच(द)कृत्तंस्तत्त्व(कृत्यं स्त)म्भनता । काम्यान्विषयाननुस्मरतो रतिविपरीतमनसः प्रवृत्तिररतिः । चित्तापैशल्यमनार्जवता । व्यापादार्थ[ VI A, 5 Fol 117 b ][1]प्रयुक्तो वितर्को व्यापादवितर्कः । विहिंसासंप्रयुक्तो वितर्कः [विहिंसावितर्कः] ।

प्र[मा]दस्तम्भमार्द्द(?)व्य मायाशाठ्यविजृम्भिकाः ॥

[ 376 ] कायदुष्ठुलताद्याश्च ज्ञेया व्यामिश्रसम्भवाः ।

तत्र दोषप्रवणस्य गुणानभिसंमुख्यं प्रमादः । पूजार्हेष्वसंन(न)तिः स्तम्भः । परानुरोधात्पापानुवृत्तिकृ[च्चै]तो(त्तो) मार्द्दक्यम्(?)[2] । पराभिस न्धानाय मिथ्योपदर्शण(न)कृच्चैत्तो म(मा)या । चित्तकोटि[2]ल्यं शाठ्यम् । क्लेशसमुत्थितः कायस्यानमनविनमनकृच्चैत्तो विजृम्भिका । क्लेशकृता विविधालम्बनं(न)संज्ञा नानात्वसंज्ञाः । अतिवीर्यभक्तासमतानिर्ज(र्जा)त-कायवैषम्याबाध(धः) कायदौष्ठुल्यम् । कल्याणमित्राणां गुरुष्वननुशिक्षा असभागानुवर्तनता । क्लेशसमुत्था परसम्पद्वितर्कणा, परोदयप्रतिसंयुक्तो वितर्कः । इत्येवमा[3]दयो व्यामिश्रसमुत्थिता द्रष्टव्याः ।

प्रदाशो दृक्परामर्शनिष्यन्दः शठता दृशः ॥[3]

पूर्वोक्तलक्षणः प्रदाशः परामर्शनिष्यन्दः । शाठ्यं दृष्टिसमुत्थितमिति ॥

अथ कः क्लेशः कया वेदनया संप्रयुज्यते ? तदिदमारभ्यते—

---

[1] Cf कौकृत्य विचिकित्सात· क्रोधेर्ष्ये प्रतिघान्वये । *Ak* v 49 ab

[2] The reading of this word is doubtful

[3] Cf. दृक्परामर्शात्प्रदाशस्तु शाठ्यं दृष्टिसमुत्थितम् । *Ak* v 51 ab.

[ 377 ] सौमनस्येन रागस्य संप्रयोगः सुखेन च ।

राग खलु सुखसौमनस्याभ्यां सम्प्रयुक्त ।

द्वेषस्य दौर्मण(न)स्येन दुःखेन (4)च निगद्यते ॥[१]

सम्प्रयोग इति वर्तते। प्रतिघ खलु दु खदौर्मण(न)स्याभ्या सम्प्रयुक्त ॥

[ 378 ] सर्वैर्मोहस्य

मोहस्य तु पञ्चभिरपीन्द्रियै सम्प्रयोग ।

विचित्स्या चैतसीभ्यामसद्दृशः ।[२]

मिथ्यादृष्टिर्हि दौर्मण(न)स्यसौमनस्याभ्या सम्प्रयुज्यते, पापकर्मणा पुण्यकर्मणा च यथाक्रमम् ।

काङ्क्षा च दौर्मण(न)स्येन

साशयितो हि निश्चि(श्च)याकाक्षी(काङ्क्षी) (5)दौर्मण(न)स्येन सबध्यते।

शेषाणा सुमनस्तया ॥[३]

शेषास्त्वनुशया —चतस्रो दृष्टय,[४] मानश्च। पापांक(हर्षाका)रवृत्ति त्वात्सौमनस्येन सम्प्रयुक्ता ॥

[ 379 ] उपेक्षया तु सर्वेषाम्

सर्वेऽप्यविशेषेणानुशया उपेक्षया सम्प्रयुज्यन्ते। प्रवाहच्छेदकाले खलु क्लेशानामवश्यमुपेक्षा समुपोभवति।[५]

कामाप्तानामयं विधिः ।

---

[१] Cf सुखाभ्यां संप्रयुक्तो हि राग द्वेषो विपर्ययात । *Ak* v 55 ab

[२] Cf मोह सर्वैरसद्दृष्टिर्मनोदुःखसुखेन तु । *Ak* v 55 cd

[३] Cf दौर्मनस्येन कांक्षान्य सौमनस्येन कामजा । *Ak* v 60 ab

[४] चतस्रो दृष्टय इति । सत्कायदृष्टि अन्तग्राहदृष्टि दृष्टिपरामर्श शीलव्रत परामर्शश्च । *Sakv* p 496

[५] उपेक्षा सन्तिष्ठन्त इति विनाशावस्थायां मन्दत्वात । *Sakv* p 496

कामावचराणां खल्वनुशयानामेष विधिः द्रष्टव्यः ।

इतोऽन्यधातुजानां तु प्रतिभूम्यन्तरं स्वकैः ॥[१]

यस्यां यस्यां भूमौ यावदि(न्तो)न्द्रियाणि सन्ति तत्रापि चातुर्विज्ञान-कायिकाश्चातुर्विज्ञानकायिकैर्मनोभूमिका मनोभूमिकैरेव यथासंभवम् ॥[२]

उक्ताः क्लेशानामिन्द्रियसंप्रयोगः । उपक्लेशानामुच्यते—

[ 380 ] ईर्ष्यया दौर्मण(न)स्येण(न) कौकृत्यस्य तथा क्रुधः ।
[7]प्रदष्टेश्चोपनद्धेश्च विहिंसायास्तथैव च ॥[3]

दौर्मण(न)स्येन खल्वीर्ष्याकौकृत्यक्रोधप्रदाशोपनाहविहिंसाः संप्रयुज्यन्ते ॥

[ 381 ] मात्सर्यं दौर्मण(न)स्येन सौमनस्येन कस्यचित् ।[४]

प्रार्थ्यमानो ह्यप्रयच्छन् परस्य जह्रीयमानो दुर्मणा(ना)यते । केचित्पुनः व्याचक्षते—सौमनस्येन संप्रयुज्यते लोभान्वयत्वेन हर्षाकारवर्तित्वात् ।

द्वाभ्यां[8] माया तथा शाठ्यं प्रद्यो मिद्धं तथैव च ॥[५]

दौर्मण(न)स्यसौमनस्याभ्यां मायाशाठ्यमिद्धानि संप्रयुज्यन्ते । कदा-चिद्धि सुमनाः परं वञ्चयते । कदाचिद्दुर्मनाः । एवं यावत्स्वपि(पी)ति ॥

[ 382 ] मदस्तु सुमन[ः]स्कन्धसुखाभ्यां संप्रयुज्यते ।[१]

तृतीये ध्याने सुखेनाधस्तात्सौमनस्येनोर्ध्वं नोपेक्षया । 'तु' शब्दस्य विशेषणत्वादयं विशेषो लभ्यते ।

आ[9]ह्रीक्यमनपत्राप्य(प्यं) स्त्यानौद्धत्ये च पञ्चभिः ॥

---

[१] Cf. सर्वेऽप्युपेक्षया स्वैः स्वैर्यथाभूम्यूर्ध्वभूमिका । *Ak.* v. 56 cd

[२] See *Sakv* p 496

[३] Cf दौर्मनस्येन कौकृत्यमीर्ष्या क्रोधो विहिंसनम् ।
उपनाह प्रदाशश्च । *Ak.* v 57 abc

[४] Cf मात्सर्यं तु विपर्ययात् ।
सौमनस्येनेत्ययं । लोभान्वयत्वेन हर्षाकारवर्तित्वात् *Akb* v. 57 d

[५] Cf माया शाठ्यमथो म्रक्षो मिद्ध चोभयथा मद. ।
सुखाभ्या सर्वगोपेक्षा चत्वार्यन्यानि पञ्चभि ॥ *Ak* v 58.

पञ्चभिरपीन्द्रियैः आह्रीक्यानपत्राप्यस्त्यानौद्धत्यानि संप्रयुज्यन्ते। एषां चतुर्णां पर्यवस्थानानामकुशलमहाभूमिकत्वात् क्लेशमहाभौमिकत्वाच्च ॥

इदमिदानीं वक्तव्यम्। क एषां किं प्रहातव्यः? यानि तावद्दश पर्यवस्थानानि तेभ्यः—

[383] आह्रीक्यमनपत्राप्यं स्त्यानमिद्धं तथोद्धवः ॥[1]

[Folios 118—125 lost.][2]

.....[ अभिधर्मदीपे विभाषाप्रभायां वृत्तौ पञ्चमाध्यायस्य तृतीयः पादः ॥]

..... [ पञ्चमोऽध्यायः समाप्तः ॥ ]

---

[1] Cf. तत्राह्रीक्यानपत्राप्यस्त्यानमिद्धोद्धवा द्विधा ॥
तदन्ये भावनाहेया स्वतन्त्राश्च तथा म्रक्षः । *Ak.* v. 51 cd, 52 ab

[2] Folios 118—125 (comprising the last portions of the third *pāda*, the entire fourth *pāda* of the Fifth *Adhyāya* and the first *pāda* of the Sixth *Adhyāya*) are lost. In these lost folios the *Adv* might have discussed following topics, which are dealt with in the corresponding *Akb* v 53—70 —

१ कति पुनरेषां (उपक्लेशानां) कुशलस्या वेदितव्या ?
२ कत्यकुशला कत्यव्याकृता ?
३ अनुशयाना कति मनोभूमिका कति षड्विज्ञानभूमिका ?
४ पञ्च निवरणानि ।
५ विषभागधातुप्रवर्तनगाणां निरोधमार्गदर्शनप्रहातव्यानां च सास्रवालम्बनानां यदालम्बनं परिज्ञायते तदा न प्रहीयन्ते। यदा प्रहीयन्ते तदालम्बनं न परिज्ञायते, इति कथमेषां प्रहाणम् ?
६ कतिविधश्च प्रतिपक्षः ?
७ प्रहीयमाणः क्लेशः कुत्र प्रहातव्यः ?
८ चतुर्विधा दूरता ।
९ किं मार्गविशेषगमनात् क्लेशानां पुनः प्रहाणविशेषो भवति ? कतिषु कालेषु ?
१० नव परिज्ञाः परिज्ञास्थानानि च ।
११ कः कतिभिः परिज्ञाभिः समन्वागतः ?
१२ कः कति परिज्ञास्त्यजति लभते वा ?

# षष्ठोऽध्यायः

## प्रथमः पादः ।....[1]

· .... [VII B, 1 Fol 126 a]र्यौदारिकम्[2] । अतस्तत्पूर्वम् । ततो वेदनास्मृत्युपस्थानं द्वाभ्यां स्थूलतरं वेदनास्कन्धवत् । ततः चित्तस्मृत्युपस्थानं रूपादिप्रतिविज्ञप्तिस्वाभाव्यात्स्थूलतरम् । धर्मास्तु संज्ञाचेतनाद्याः संप्रयुक्ताः, प्राप्त्यादयः विप्रयुक्ताः, संस्कृताश्च परमसूक्ष्मास्तस्मादन्ते धर्मस्मृत्युपस्थानम् । अत एवोत्पत्तिक्रमोऽपि[3] तथैव ।

---

[1] A major portion of the First *pada* of this *Adhyaya* is lost in the lost folios (V supra, p 314, n. 2.) In these lost folios the *Adv* might have discussed the following topics, which are dealt with in the corresponding *Akb* vi 1—15 —

(१) दर्शनभावनामार्गौ किमनास्रवौ सास्रवौ वा ?

(२) कानि सत्यानि कति च ?

(३) कथ सर्वे सास्रवाः संस्कारा दुःखम् ?

(४) संवृतिसत्य परमार्थसत्य च । तयोः किं लक्षणम् ?

(५) कथ पुनस्तेषां दर्शनं भवति ?

(६) किं पुनरासां प्रज्ञानां लक्षणम् ?

(७) भावनायां प्रयुक्तस्य कथ भावना संपद्यते ?

(८) कः पुनरल्पेच्छतासन्तुष्ट्योः स्वभावः ?

(९) चतुर्भिरार्यवंशैः किं दर्शितं भगवता ?

(१०) भावनायाः कथमवतारो भवति ?

(११) स्मृत्युपस्थानभावनानां कः स्वभावः ?

[2] The topic under discussion is *smrtyupasthana* —

निष्पन्नशमथः कुर्यात्स्मृत्युपस्थानभावनाम् ।
कायविच्चित्तधर्माणां द्विलक्षणपरीक्षणात् ॥ *Ak.* vi. 14

[3] Cf यथोत्पत्ति

कस्मात्पुनरेवमुत्पत्तिः । यौदारिकस्य पूर्वं दर्शनात् । *Akb* vi. 15 c

औदारिकस्य पूर्वं दर्शनादिति । कायस्तावदौदारिकः । पञ्चविज्ञानविषयत्वादिति । तस्य पूर्वं दर्शनम् । द्वाभ्यां वेदना प्रकारौदारिकतरेति तदनन्तरं तस्या दर्शनम् । सूक्ष्मप्रकारत्वाद् दुर्विज्ञेया धर्मा सूक्ष्मा इत्यचरमस्य पूर्वं चित्तस्य दर्शनम् । अन्ते धर्माणामिति । *Sakv* p 531

नत्वात् । पञ्चस्कन्धालम्बनमेव तु सामान्यालम्बनमिति निर्दिश्यते । तेन तु चत्वार्यपि स्मृत्युपस्थानान्यमिसमस्यानित्यतो दुःखतः शून्यतोऽनात्मतश्चेति चतुर्भिराकारैः प्रत्यवेक्षते । ततः पुनर्योगी कायं परमाणुसंघातक्षणसन्ताना(न)·भेदेन प्रभिद्य परमा(?)णुशः क्षणशश्च निरीक्षते । कललादीनां वा बीजाद्यशुच्य-(च्य)ङ्गाणि(नि) पृथङ्मिश्रीभूतानि च योगी रूपानि(णि) निमित्तेषु पश्यति । तदूर्ध्वं तस्यानित्यत्वादिभिः सामान्यलक्षणेन यथायोगं सर्वधर्मकजातीयत्वाधिमोक्षे सत्यहंकारममकारविष्कम्भनप्रहानं(णं)[1] भवति । तत्प्रहाणाद्रागाद-योपि दोषाः श्रुतचिन्तामयाभ्यां (?)ज्ञानाभ्यां विष्कम्भ्यते(न्ते) ।

कतमेन पुनरत्र स्मृत्युपस्थानेन[2] क्लेशात्यन्तक्षयो भवति ? प्रश्नः ।

क्लेशात्यन्तक्षयोऽन्त्येन संभिन्नालम्बनेन वा ॥[3]

---

च द्वे पश्यति धर्मसमत्युपस्थान तत् सभिन्नालम्बनम् । यदि काय यावद्धर्माश्च पश्यति तदपि तथैव । यदपि काय वेदना चित्त धर्माश्च समस्तान् पश्यति, तदपि सभिन्नालम्बन धर्मस्मृत्युपस्थानमिति । *Sakv* p 532

[1] य ससेवाले उदके पक्खित्तेन घटेन सेवालस्स विय तन तेन लोकियसमाधिना नीवरणादीन पच्चनीकधम्मान विक्खम्भन, इद विक्खम्भनप्पहाण नाम । पाळिय पन, "विक्खम्भनप्पहानञ्च नीवरणान पठमज्झान भावयतो" [*Patisambhidā*, I p 27 ] ति नीवरणान येव विक्खम्भन वुत्त, त पाकटत्ता वुत्त ति वेदितब्ब ।'''*Vm* xxii 111

अप्राप्तेऽनास्रवचित्ते शीलग्रहणभावनाभ्या स्थापयति रागद्वेषमोहान् चित्त भवत्यनपादानमिति विष्कभणप्रहाण । *Aam* p 74

[2] *Cf* एकायनो अय भिक्खवे मग्गो सत्तान विसुद्धिया सोकपरिदेवान समतिक्कमाय दुक्खदोमनस्सान अत्थङ्गमाय ञायस्स अधिगमाय निब्बानस्स सच्छिकिरियाय, यदिद चत्तारो सतिपट्ठाना । कतमे चत्तारो ? इध भिक्खवे भिक्खु काये कायानुपस्सी विहरति'''वेदनासु वेदनानुपस्सी चित्ते चित्तानुपस्सी धम्मे धम्मानुपस्सी विहरति आतापी सम्पजानो सतिमा, विनेय्य लोके अभिज्झादोमनस्स । *Digha*, xxii 1 See *Satipatthāna Vibhanga Vbh* pp 193—207

कुसलरासी ति भिक्खवे वदमानो चत्तारो सतिपट्ठाने ''वदेय्य । केवलो हाय भिक्खवे कुसलरासी यदिद चत्तारो सतिपट्ठाना । *S* v p 146

कुत पुनरेतत् स्मृत्युपस्थानभावनया विपश्यना सपद्यत इति ? सूत्रात् । एकायनोऽय भिक्षवो मार्गं यदुत स्मृत्युपस्थानानि । केवलोऽय कुशलराशिर्यदुत चत्वारि स्मृत्युपस्थानानीति वचनात् । *Sakv* p 529

[3] अथ स्मृत्युपस्थानाना क स्वभाव ? त्रिविधस्मृत्युपस्थान स्वभावससर्गालम्बनस्मृत्युपस्थानम् । तत्र स्वभावस्मृत्युपस्थानम्—

प्रज्ञा श्रुतादिमयी

श्रुतचिन्ताभावनामयानि स्मृत्युपस्थानानि ।

अथ ससर्गालम्बना. कम ।

संसर्गस्मृत्युपस्थानेन खलु 'संभिन्नालम्बनेन अत्यन्तक्लेशप्रहाणं क्रियते। 'वा' शब्दो विकल्पार्थः ॥

यस्मात्—

[ 385 ] असंभिन्नार्थविषयं त्रयमेतद् द्विधेष्यते।

साम्रवानास्रवभेदात्। त(?)त. पुन स्कन्धाननित्यादिना

तस्यैवं पश्यतः साचादुदयव्ययदर्शन(न)म् ॥

[ 386 ] स्कन्धेषु जायते पश्चाचक्रभ्रमरिकादिवत्।

---

अथ तत्सहभुवो धर्मा ससर्गस्मृत्युपस्थानम। तदालम्बना आलम्बनस्मृत्युपस्थानम। स्वभावस्मृत्युपस्थान प्रज्ञति। कुत एव तत ? काय कायानुपश्यना स्मृत्युपस्थानम' इति वचनात। का पुनरनुपश्यति ? प्रज्ञा। कस्मात्प्रज्ञा स्मृत्युपस्थानमित्युक्त भगवता ? स्मृत्युद्रेकत्वादिति वैभाषिका। एव तु युज्यते। स्मृतिरनयोपतिष्ठत इति स्मृत्युपस्थान प्रज्ञा, यथा दृष्टस्याभिल्पनात्। तद्यथा ह्युक्तमनिरुद्धेन—'तस्य काय कायानुपश्यिनो विहरत कायालम्बनानुस्मृतिरुपतिष्ठति सतिष्ठते। भगवताऽपि— तस्य काय कायानुपश्यिनो विहरत उपस्थिता स्मृतिर्भवत्यसमूढा' इति। यत्र तूक्त—'चय भिक्षवश्चतुर्णां स्मृत्युपस्थानाना समुदयश्चास्तगमश्च। आहारसमुदयात कायस्य समुदयो भवत्याहारनिरोधात्कायस्यास्तगम इति। अत्र आलम्बनमेव स्मृत्युपस्थानमुक्तम। स्मृतिरत्रोपतिष्ठत इति कृत्वा। *Akb* vi 16ab See *Saky* pp 529—531

Cf चत्वारि स्मृत्युपस्थानानि। नित्य स्मृतिरक्षिणी प्रज्ञोच्यते स्मृत्युपस्थानम। *Aam* p 113 स्मृत्युपस्थानाना स्वभाव कतम ? प्रज्ञा स्मृतिश्च। *Asm* p 71 सतिपट्ठाना ति तयो सतिपट्ठाना सतिगोचरोपि तिधा पटिपन्नेसु सावकेसु सत्थुनो पटिघानुनयवीतिवत्तताषि, सति पि। चतुन्न भिक्खवे सतिपट्ठानान समुदयञ्च अत्थङ्गमञ्च देसिस्सामि का पन भिक्खवे कायस्स समुदयो ? आहारसमुदयो कायस्स समुदयो ति आदिसु हि सतिगोचरो सतिपट्ठान ति वुच्चति। तथा कायो उपट्ठान, नो सति सति पतिट्ठाति ? मति सतिया पट्ठानं सतिपट्ठान। तयो सतिपट्ठाना यदरियो सेवति। तदरियो भवमानो सत्था गण अनुसासितुमरहता ति एत्थ तिधा पटिपन्नेसु सावकेसु सत्थुनो पटिघानुनयवीतिवत्तता सतिपट्ठान ति वुत्ता। तस्सत्थो पट्ठपेतब्बतो पट्ठान। चत्तारो सतिपट्ठाना भाविता सत्तसम्बोज्झङ्ग परिपूरेन्ती' ति आदीसु पन सति येव सतिपट्ठान। अथवा सरणट्ठेन सति उपट्ठानट्ठेन पट्ठान इति सति च सा उपट्ठानञ्चाति सतिपट्ठान, इदमिध अधिप्पेत। *Vbh A* p 224

For various interpretations of the term *smrtyupasthana* see *The Bodhisattva Doctrine* pp. 83 ff

एषा च स्मृत्युपस्थानकुशलमूलनिष्ठा । तस्य खल्वनित्याकारमभ्यस्यतः सर्वसंस्कारेषु प्रतिक्षणमुदयव्ययदर्शन(न)मुत्पद्यते, 'चक्रभ्रमरिकादि[वदि]'ति।

स प्रतीत्यसमुत्पादं स्कन्धानां प्रत्यवेक्षते ॥

(6)तस्य प्रतिक्षण(णं) उत्पादव्ययं पश्यतः एवं भवति—कथं वैते संस्काराः सन्तानेन प्रवर्तन्ते नोच्छिद्यन्ते। स प्रतीत्यसमुत्पादं पश्यति ग्रैयध्विकानां संस्काराणां हेतुफलसम्बन्धनियमावस्थितानाम्। ततः पुनः प्रतीत्यसमुत्पादम्॥

[387] सत्वेषु पातयित्वतं तदा कश्चित्परीक्षते।

तदनित्यत्वदुःखत्वे समवेत्य ततः पुनः ॥

एकैकमङ्गं सत्वेषु पातयित्वाऽनित्यतो दुःखतश्च प्रत्यवेक्ष्य

[388] अकर्तृकान्निरीहांश्च प्रत्ययाधीनसंभवान्।

दृष्ट्वा सर्वेष्वनात्मेति तत्त्वाकारं णि(नि)षेवते॥

तत्र स्वतन्त्रकर्तृविरहित्वाच्छून्यान्पश्यति स्ववशेन विना सहकारिभिः प्रत्ययैः क्रियाकरणात्, पराधीनजन्मत्वाद्या[ना]त्मानं पश्यति। 'दृष्ट्वा सर्वेष्वनात्मेति [VII A, 1. Fol. 126 b.] (1)तत्त्वाकारं णि(नि)षेवते'॥

तदभ्यस्यतः

[389] अनधिष्ठातृकत्वं च पारतन्त्र्यं च पश्य[तः]।

न ह्यत्र कश्चित्पुरुषो वा परमेष्ठी वेश्वरः स्वतन्त्रश्चैकश्च विद्यते, परतन्त्रजन्मप्रसरा एव सर्वसंस्काराः स्वसामान्यलक्षणाधिष्ठितस्वभावाः, इति परीक्ष्यमाणस्य

सर्वधर्मे[षु नै]रात्म्ये स्थिरा बुद्धिः प्रवर्तते॥

यथोक्तम्—

"सर्वधर्मा अना(2)त्मानः पश्यति प्रज्ञया यदा।
तदा निर्विद्यते दुःखादेष मार्गो विशुद्धये॥"[1]

---

[1] Cf सब्बे सङ्खारा अनिच्चा ति यदा पञ्ञाय पस्सति।
अथ निब्बिन्दति दुक्खे, एस मग्गो विसुद्धिया॥
सब्बे सङ्खारा दुक्खा ति यदा पञ्ञाय पस्सति।
अथ निब्बिन्दति दुक्खे एस मग्गो विसुद्धिया॥
सब्बे धम्मा अनत्ता ति यदा पञ्ञाय पस्सति।
अथ निब्बिन्दति दुक्खे एस मग्गो विसुद्धिया॥ *Dhammapada*, xx. 5-7.

सब्बे सङ्खारा ति कामभवादिसु उप्पन्ना खन्धा तत्थ तत्थेव निरुज्झनतो अनिच्चा ति यदा विपस्सना पञ्ञाय पस्सति'। दुक्खा ति पटिपीळनट्ठेन'। सब्बे धम्मा ति पञ्चक्खन्धाव अधिप्पेता। अनत्ता ति जीयन्तु मा मीयन्तु ति वसं वत्तेतुं न सक्कोति अवसवत्तनट्ठेन सुञ्ञा अस्सामिका अनिस्सरा ति अत्थो। *Dhammapada A* xx. 5 7.

अथ कस्मादिह शून्याकारो न देशितः ?[1] तदुच्यते—

[ 390 ] स्वभावेनाविशून्यत्वा[द्] धर्ममुद्रा नु(उ)दाहृते(ता) ।
तदुक्त्या च तदुक्तत्वाच्छून्याकारो ण(न) देशितः ॥

न खलु संस्काराः स्वभावेन शून्याः पृथिव्यप्तेजोवायुप्रभृतीनां काठिन्यादिलक्षणस्य धृत्यादिक्रियायाश्च प्र(3)त्यक्षत्वात् । रागादीनां दोषाणां श्रद्धादीनां च गुणानां चित्तमाल्यशुद्धिकरणसामर्थ्यात् । तेषां च सामर्थ्यं यथा द्रव्याणां हरीतकीचित्रकदन्तीप्रभृतीनां रसवीर्यविपाकप्रभावादिदर्शणा(ना)त् सस्वभावप्रभावाः सर्वधर्माः धर्ममुद्रायाश्च 'शून्याकारो' णो(नो)क्तः । तस्मादिहापि नोच्यते । अथवा 'तदुक्त्या च तदुक्तेः ।' अनात्माकारो(4)क्त्या च शून्यताप्युक्ता भवति ॥

तदेवं नैरात्म्ये स्थिरमतिः

[ 391 ] गोत्रद्वारसमूहादीन् धात्वादीनां यथायथम् ।
स्वसाधारणचिह्नाभ्यां सदत्तोपपरीक्षते ॥

धात्वायतनस्कन्धेषु स्वसामान्यलक्षणपरिच्छिन्नेषु

[ 392 ] प्रतिस्कन्धं ततस्तस्य स्वाभाव्यादिषु तत्त्वतः ।
क्रमेण जायते पश्चात्कौशलं स्थानसप्तके ॥

"रूपं यथाभूतं प्रजानाति (5)रूपसमुदयं रूपनिरोधं रूपनिरोधगामिनीं प्रतिपदं रूपस्यास्वादं रूपस्यादीनवं रूपस्य निःसरणमेवं यावद्विज्ञानस्य ।" उक्तं हि भगवता—"सप्तस्थाने कुशलो भिक्षुः त्रिविधार्थोपपरीक्षी क्षिप्रमेवास्रवक्षयं करोति"[2] इति ॥

अभिधर्मदीपे विभाषाप्रभाया वृत्तौ षष्ठस्याध्यायस्य प्रथम पादः ॥

---

[1] This discussion is not found in *Akb* V. supra, pp 262 ff

[2] Cf सत्तट्ठानकुसलो भिक्खवे भिक्खु तिविधूपपरिक्खी इमस्मिं धम्मविनये केवली वुसितवा उत्तमपुरिसो ति वुच्चति ।

कथ च भिक्खवे भिक्खु सत्तट्ठानकुसलो होति ? इध भिक्खवे भिक्खु रूपं पजानाति, रूपसमुदयं... रूपनिरोधं... रूपनिरोधगामिनिं पटिपदं रूपस्स अस्सादं... रूपस्स आदीनवं... रूपस्स निस्सरणं पजानाति । वेदनं... सञ्ञं ...सङ्खारे... विञ्ञाणं ...पजानाति ।...

कथ च भिक्खवे भिक्खु तिविधूपपरिक्खी होति । इध भिक्खवे भिक्खु धातुसो उपपरिक्खति । आयतनसो उपपरिक्खति । पटिच्चसमुप्पादसो उपपरिक्खति । *S* III pp 61-65.

# षष्ठाध्याये

## द्वितीयपादः ।

(6)तस्यैदानीं योगिनः स्मृत्युपस्थानादिषु कुशलमूलेषु दृष्टपूर्वं क्षेयं सत्याकारव्यवस्थानेनानुचितश्रुतचिन्तामयाकारसमुदाचारण्या(न्या)येण(न)

[ 393 ] निर्मथ्नतः क्रमेणा(णा)स्य दुःखसत्यभवारणिम् ।
श्रद्धावीर्यसहायस्य तत्त्वज्ञानानलार्थिनः ॥

[ 394 ] आकारपतितं ज्ञानं ततः शमनियामकम् ।
भावनामयमूष्माख्यं जा(7)यते सानुवर्तकम् ॥[1]

तत्खलूष्मगतं[2] प्रकर्षितत्वात् षोडशाकारम्, प्रतिसत्यं चतुराकारत्वात्, सामान्यं धर्मस्मृत्युपस्थानं भविष्यस्यार्यमार्गाग्नेर्निमित्तभूतं धूमाग्निवत्। तस्मिंश्च लब्धे शमः[3] प्रत्यासन्नीभवति। अतस्तत् 'शमनियामकं भावनामयम्' इति। ध्यानसंवराश्रितसमाधिबलेन दृढीभावाच्चित्तं भावयति (8)चम्पकपुष्पतिलतैलवदिति। 'सानुवर्तकं' च पञ्चस्कन्धस्वभावं नैरात्म्यबुद्धिपरितोषाच्चानुस्कन्धशः प्रसाद उत्पद्यते—स्कन्धमात्रकमेवेदं सत्कायदृष्टेर्वस्तुभूतं नात्रात्मास्त्यात्मीयं वा ॥

[ 395 ] ततस्तथैव मूर्धानो मिथ्यादृष्ट्युपघातिनः ।
ऊष्मभ्योऽधिकसामर्थ्याद्रत्नश्रद्धाविवर्धिनः ॥[4]

तदूर्ध्वं ततो मूर्धा(9)नतस्थैव षोडशाकाराः ।[5] तेषां पुनरयं विशेषः ।

---

[1] Cf तत ऊष्मगतोत्पत्तिः

तस्माद्धर्मस्मृत्युपस्थानादेवमभ्यस्तात् क्रमेणोष्मगतं नाम कुशलमूलमुत्पद्यते । ऊष्मगतमिवोष्मगतम् । क्लेशेन्धनदहनस्यार्यमार्गाग्नेः पूर्वरूपत्वात् ।

तच्चतुः सत्यगोचरम् । *Ak* vi. 17 ab

[2] ऊष्मगतमित्यूष्मप्रकारं कुशलमूलम् । प्रकर्षकत्वादिति प्रारम्भकत्वादित्यर्थं । *Saks*. p s 33. ऊष्मा कतम । सद्धर्मविनयेऽल्पश्रद्धासमादानम् । *Jpt* p 7.

V. infra, *Adi kārikā* 421 ab, notes.

[3] see *Śikshā*, p 119.

[4] Cf षोडशाकारमूष्मेभ्यो मूर्धानस्तेऽपि तादृशाः । *Ak* vi 17 cd

[5] मृदुमध्याधिमात्रक्रमाभिवृद्धेभ्य ऊष्मभ्यो मूर्धानि उत्पद्यन्ते । यादृशा ऊष्मगतश्चतुःसत्यालम्बना षोडशाकाराश्च । उत्कृष्टतरत्वात् नामान्तर चलकुशलमूलमूर्धत्वात् मूर्धान ।

मिथ्यादृष्टिश्चक्त्युपघातिवम्। तदुपघातान्न कुशलमूलानि न समुच्छिन्दन्ति।[1] ऊष्मभ्योऽधिको विशेष रत्नत्रयश्रद्धाविवर्धिनश्च। तेषु सत्वधिमात्रेण बुद्धादिषु रत्नेषु त्रिप्राकारतः प्रसादोऽभिवर्धते, न स्कन्धशः, प्रागेवोष्मगतेषु तद्बुद्धिपरितोषात्। मूर्धसु [Folio No 127 lost][2]

---

*Akb* v 17 cd —मूर्धान्तोऽयं प्रकर्षपर्यन्तवाची। तथा हि लोके वक्तारो भवन्ति। मूर्धगता ख वस्य श्रीरिति। द्व हि कुशलमूले चले। ऊष्मगतमूर्धलक्षण परिहाणिमभवात। द्व अचले क्षान्तिलौकिकाग्रधर्मलक्षण विपर्ययात। तत्र तयोर्यन्मृदु तदूष्मगतम। यदधिमात्र ते मूर्धानः अचल्यारपि यन्मृदु सा क्षान्तिः। यदधिमात्र ते लौकिकाग्रधर्मा। *Sakv* p 532

Cf मूर्धा कतम बुद्धधर्मसंघरत्नप्रमाणश्रद्धोत्पाद। यथा पारायणमाणवक मवोचद् भगवान्—

बुद्धे धर्मेऽथ संघे चेत्प्रसादोऽल्पोऽपि जायते।
मूर्धधर्म गतो नाम विज्ञातव्यः स माणव॥

मूर्धपात कतम।

एव निश्चयतो यदि परिहीयेत पूरुष।
वदामि मूर्धपतित त्वयं नाम तथाविधम॥ *Jpt* p 6

The terms *m rdha* and *mu dha pa a* occur w h a d fferent mean ng in *Suttan pata* मुद्धं मुद्धातिपातं च बावरी परिपुच्छति।
तं व्याकराहि भगवा कङ्ख विनय नो इसे।
अविज्जा मुद्धा ति जानाहि विज्जा मुद्धाधिपातिनि।
सद्धासतिसमाधीहि छन्दविरियेन संयुता। *Suttan pa a* 1025 26

[1] V supra p 167 n 1

[2] Fol o No 127 s los In h s los fol o he *Adv* m ght have d scussed the follow ng top cs wh ch are d cu ssed by the Kośakāra n *Akb* vi 18-25 ab

(१) मूर्धान।
(२) उभयथा (ऊष्म मध) विन्यसन वर्धनं च
(३) त्रिप्रकारा क्षान्ति (मृद्वी मध्या अधिमात्रा)।
(४) क्षान्ति कामावचरदुःखालम्बना।
(५) लौकिकाग्रधर्मा
(६) चतुर्विधमपि निर्वेधभागीयं भावनामयं पञ्चभौमं च।
(७) एतानि चत्वारि कामाश्रयाणि।
(८) सर्वं निर्वेधभागीयानां त्याग ?
(९) एषां पुनर्विहानिपरिहाणा किं स्वभाव ?
(१०) निर्वेधभागीयानि त्रिगात्राणि श्रावकाः भगवान्।
(११) मानभागीयानि कर्माणि।

[ VII. B, 2. Fol. 128 a ] ······ [1]

[ 396d. ] ···नैत्वस्मिन्नुभयत्रापि पश्चिमा ॥[2]

विन्यासे विवर्धने चैव धर्मस्मृत्युपस्थानां(नं) प्रत्युत्पन्नं तदेव चानागतं भाव्यते ॥[3]

[ 397 ] भाव्यते स्कन्धदृक्त्वादौ न(न) तन्निर्वाणदर्शिनः ।

न खलु स्कन्धोपरमदर्शिनः स्कन्धमतिर्भाव्यते ।

आकारांस्तुल्यजातीयात्(न्) सर्वत्रात्र तु निर्दिशेत् ॥[4]

यादृशाः प्रत्युत्पन्नास्तादृशा एवानागता भाव्यन्ते ॥

[ 398 ] द्रष्टव्याऽन्यतरा (2)ताभ्यः प्रत्युत्पन्ना विवर्धने ।
चतसृभ्योश्च(भ्यस्त्व)न्यतमा प्रत्युत्पन्ना विवर्धते(ने) ॥[5]

---

[1] V. supra. p 322, n. 2.

[2] The topic under discussion is *ākarana* of *ūshmagata* and *mūrdha* by *dharmasmṛtyupasthāna*. किमिदमाकरणम् ? सत्येष्वाकाराणां प्रथमतो विन्यसनम् ।··· चतुर्भिरपि स्मृत्युपस्थानैरेषां वर्धनम् । *Akb* vi 18 ad. The Kośakāra deals with this topic in brief in *Akb* vi 19 d (corresponding to *Ad. kārikās* 396—408).

[3] Cf. तत्र त्रिसत्यालम्बनोष्मगताकरणे धर्मस्मृत्युपस्थान प्रत्युत्पन्नमनागतानि चत्वारि भाव्यन्ते । निरोधसत्यालम्बने तदेवोभयथा । *Akb* vi 19 d.

—त्रिसत्यालम्बनोष्मगताकरण इति । दुःखसमुदयमार्गालम्बनोष्मगताकरणे । धर्मस्मृत्युपस्थानं प्रत्युत्पन्नम् । यत्नजन्यस्य कार्यस्याकरणे समस्तालम्बनत्वेन धर्मस्मृत्युपस्थानस्यैव समर्थत्वात् । प्रतिनियतालम्बनत्वेन हि कायस्मृत्युपस्थानादीन्यसमर्थानीति । अनागतानि चत्वारि भाव्यन्त इति । यस्मात्स्मृत्युपस्थानेन कायवेदनादयोऽपि दुःखसत्यादिसगृहीता गृह्यन्ते । कायस्मृत्युपस्थानादीनि च पूर्वप्रतिलब्धानि भवन्तीत्यनागतान्यपि भाव्यन्ते प्रात्युत्पन्नादिति । निरोधसत्यालम्बने तदेवोभयथेति । निरोधसत्यालम्बने ऊष्मगताकरणे धर्मस्मृत्युपस्थान प्रत्युत्पन्नम्, तदेव चानागत भाव्यते । न कायस्मृत्युपस्थानादीनि । निरोधसत्ये कायाद्यभावात् । *Sakv* pp. 535—536.

[4] Cf सर्वत्राकारा समागा । *Akb*. vi. 19 d —सर्वत्राकारा सभागा इति । त्रिसत्यालम्बनस्य निरोधसत्यालम्बनस्य चोष्मगतस्याकरणे सदृश एवाकारा भाव्यन्ते । दुःखसत्यालम्बने दुःखसत्याकारा एव चत्वारो भाव्यन्ते । न समुदयसत्याकाराः ।··· *Sakv* p. 536

[5] Cf. विवर्धने चतुर्णामन्यतमदनागतानि चत्वारि । *Akb*. vi 19 *d* —विवर्धन इति त्रिसत्यालम्बने । कायस्मृत्युपस्थानादीनामन्यतमत् प्रत्युत्पन्नं भवति । *Sakv* p. 536.

[399] अनागतास्तु भाव्यन्ते चतस्रोऽप्यत्र निश्चयात् ।
मौर्द्धेऽन्त्ये संमुखीभूता[ः] समग्राः स्वनागताः ॥[१]

निरोधे तु प्रत्युत्पन्नं धर्मस्मृत्युपस्थानं चत्वारि त्वनागतानि भाव्यन्ते ॥

[400] आकाराः खलु सर्वेपि भाव्यन्ते गोत्रलाभतः[२] ।

गोत्रानि(णि) खलु लब्धानि निरोध[3]सत्यतोऽत्र षोडशाप्याकारा भाव्यन्ते ।

गोत्रलाभे तु विज्ञेया सभागाकारभावना ॥

प्रथमयोः सत्ययोः गोत्राणि आलम्बनानि । तेनात्र न विसभागाकारभावना ॥

[401] सर्वत्राकिरणे मूर्ध्नो निरोधाकिरणैधने ।
धर्माख्याः संमुखीभूताश्चतस्रः स्वनागताः ॥

मूर्धाकारविन्यासे 'निरोधाकिरणैधने' च धर्मस्मृत्युप[4]स्थानं प्रत्युत्पन्नम्, चत्वार्यनागतानि भाव्यन्ते ॥[३]

[402] आकाराः सकलास्तत्र भाव्यन्ते गोत्रलाभतः ।
सर्वाभ्योऽन्यतरोत्पन्ना[ः] सत्यत्रयनिवर्धने ॥[४]

---

[१] Cf तत्रैव निरोधालम्बनान्त्यमनागतानि चत्वारि । *Akb* vi 19 d—निरोधस्यालम्बनस्य प्रत्युत्पन्न सम्भवति । *Saki* p 53(

[२] Cf आकारा सर्वे लब्धत्वाद् गोत्राणाम । *Akb* vi 19 d—आकारा सर्वेऽपि षोडशापि भाव्यन्ते । किं कारणम ? लब्धत्वाद् गोत्राणाम् । सम्भवतश्चतु सत्यालम्बन कायस्मृत्युपस्थानादिजातीनां लब्धत्वादियं । *Saki* p 536 The Kośakāra deals in detail with *gotras*—निर्वेधभागीयानि त्रिगोत्राणि श्रावकादिगोत्रभेदात *Akb* vi 23 c. See *Akb* vi 57 and 58 Yaśomitra gives the following views तत्र केचिदेव वर्णयन्ति कुशलमूलानि गोत्रमिति । अन्ये पुनराहु पृथग्जनावस्थायामारभ्येन्द्रियभेदो गोत्रमिति । सौत्रान्तिका पुनर्वर्णयन्ति—बीजं सामर्थ्यं चेतसो गोत्रमिति । *Saki* pp 593-4 On *gotta*, see *The Bodhisattva Doctrine* pp 51 ff and *AMBRH* pp 55, 84 7

[३] Cf मूर्धाकरणे चतु सत्यालम्बनानि निरोधालम्बनवर्जं चान्त्यमनागतानि चत्वारि । *Akb* vi 19 d—मूर्धाकरणे सत्वानि धर्मस्मृत्युपस्थानमत्र प्रत्युत्पन्नम् । कायादिस्मृत्युपस्थानानामसम्भवात् । निरोधालम्बननिर्वर्धनेऽप्यन्त्य धर्मस्मृत्युपस्थान प्रत्युत्पन्नम । इतरेषामनागतत्वात् । *Saki* p 536

[४] Cf आकारा सर्वे । त्रिसत्यालम्बननिर्वेधने चतुर्णामन्यतमदनागतानि चत्वारि । *Akb* vi. 19 d

[ 403 ] अनागताश्चतस्रस्तु भाव्यन्ते तत्र निश्चयात् ।
आकाराः सकला ज्ञेयाः क्षान्तिविन्यसने त्रि(मृ)षु ॥[1]

[ 404 ] सर्वत्रान्त्याः समुत्पन्नाश्चतस्रः स्वल्वनागताः ।
आकाराः सकलास्तत्र भाव्यन्ते चाप्यना(?)गताः ॥

[ 405 ] प्रत्युत्पन्नाग्रधर्मेषु धर्माख्या स्मृत्युपस्थितिः ।
अनागतास्तु भाव्यन्ते चतस्रस्तेषु निश्चयात् ॥[2]

[ 406 ] आकाराः खलु चत्वारो दृङ्मार्गसदृशत्वतः ।[3]
यथोष्मकिरणे तद्वद् द्रष्टव्यं दृष्टिवर्त्मनि ॥

[ 407 ] अन्त्यां मार्गान्वयज्ञाने प्रत्युत्पन्नां विनिर्दिशेत् ।
चतस्रोऽनागतास्तद्वत् षोडशाकारभावनात्(:) ॥

[ 408 ] तदूर्ध्वमपि चार्यस्य सर्वापूर्वेषु(?)खोदये ।
श्रुतचिन्तामयं हित्वा सूक्ष्मसूक्ष्मं व्यपोह्य च ॥

एवं तावदार्यस्य स्मृत्युपस्थानभावना द्रष्टव्या ॥

[ 409 ] बालस्यारम्भमार्गे तु चतुर्भूमिविनिर्जयैः ।
भूतामन्यतरां ताभ्यश्चतस्रः स्वल्वनागताः ॥

[ 410 ] आनन्तर्यपथे मुक्तावन्त्यां सर्वास्त्वनागताः ।
अन्त्ये ध्याने प्रयोगादिमार्गेष्वष्टासु पूर्ववत् ॥

---

1 Cf क्षान्तीनां सर्वत्र चान्त्यम् । *Akb* vi 19 d—आकरण विवर्धने चान्त्य धर्मस्मृत्युपस्थानं प्रत्युत्पन्नम् । तथा ह्युक्तम्—सर्वस्या क्षान्त्या धर्मेण वर्धनमिति । *Saku* p 536

2 Cf अग्रधर्मेष्वन्त्यमनागतानि चत्वारि । *Akb* vi 19 d—अग्रधर्मेषु सम्मुखी-क्रियमाणेष्वन्त्य धर्मस्मृत्युपस्थानं प्रत्युत्पन्नम् । अनागतानि चत्वार्यनुत्पत्तिधर्माण्येव प्राप्यन्ते । *Saku.* p 536

3 Cf आकाराश्चत्वार एव । अन्याभावाद्दर्शनमार्गसादृश्याच्च । *Akb* vi 19 d—आकाराश्चत्वार एवेति । अनित्यदुःखशून्यानात्माकाराः । दर्शनमार्गसादृश्याच्चेति । दुःखाकारा एव चत्वारो भाव्यन्ते । कस्मात् ? दर्शनमार्गसादृश्यात् । दर्शनमार्गे ह्यस्य समस्य दर्शनं भवति । तदाकारा एव भाव्यन्ते । दर्शनमार्गसदृशा ह्यग्रधर्माः ।… *Saku* p 536

[ 411 ] तिस्रस्तु नवमे विद्यात् [7]मौलभूमिप्रवेशतः ।
सामन्तकप्रयोगे तु चतस्रोऽन्त्याथवा भवेत् ॥

[ 412 ] दिव्यादिश्रुत्यभिज्ञायां विमोचादौ तथैव चः(च) ।
प्रथमां संमुखीभूतां चतस्रः खल्वनागताः ॥

[ 413 ] परि(र)चित्ते तृतीयास्तु(या तु) चतस्रश्चाप्यनगताः ।
प्राङ्निवासाप्रमाना(णा)नामन्त्यां सर्वास्त्वनागताः ॥

[ 414 ] आरूप्यानां(णां) विमोचाणां तिसृभ्योऽन्यतमां वदेत् ।
सं[8]मुखे नाम जातास्तु तिस्र एव विनिर्दिशेत् ॥

[ 415 ] आरूप्यकृत्स्नयोस्त्वन्त्यां प्रत्युपन्नामुदाहरेत् ।
तिस्रः खल्वसमुत्पन्नाः कथयन्नियमेन तु ॥

[ 416 ] आर्यस्य खलु वैराग्यप्रयोगे चेपने(णे) पि च ।
सर्वेभ्योऽन्यतराभूताश्चतस्रश्चाप्यनागताः ॥

[ 417 ] आनन्तर्यपथे मुक्तावन्त्याः सर्वास्त्वनागताः ।
रि(ऋ)ध्यादौ तु गुणाः सर्वमनार्यस्यैव निर्दिशेत् ॥

[ 418 ] [9]अन्त्यपूर्वनिवासादौ स(च) धर्मप्रतिसंविदि ।
तथापरसमाध्यादावरणायां तथैव च ॥

[ 419 ] आरूप्याख्यविमोचादौ संज्ञाक्षत्नमोदये तथा ।
सर्वाभ्योऽन्यतराभूताश्चतस्रः खल्वनागताः ॥

[ 420 ] ब्रूयात्तु क्षत्नमक्षत्नमेऽन्त्यां भूतां तिस्रस्त्वनागताः ।
समासेनेयमाख्याता स्मृत्युपस्थानभावना ॥

निर्वेधभागीयानधिकृत्य [ VII. A, 2. Fol. 128 b. ]

[ 421 ] [1]एतन्निर्वेधभागीयं चतुर्धा भावनामयम् ।[1]

---

[1] Cf इति निर्वेधभागीयं चतुर्धा भावनामयम् । Ak vi 20 ab.
इत्येतानि चत्वारि निर्वेधभागीयानि कुशलमूलानि यदुत ऊष्मगत मूर्धानः क्षान्तयोऽग्रधर्माश्च । Akb vi. 20 ab

**परमार्थदर्शिर्णीयभिक्षुसङ्घप्रवेशद्वारभूतत्वात्[1] भावनामयं न श्रुतमयं चिन्तामयम् । कुतः पुनरुपपत्तिप्रातिलम्भिकं भविष्यतीत्येतच्च सन्धाय**

---

Also cf. निर्वेधभागीयानि कुशलमूलानि ऊष्मगतः मूर्धानः सत्यानुकूलक्षान्तिः लौकिकाग्रधर्मश्च । ऊष्मगतं कतमत् । प्रत्यात्मं सत्येष्वालोकलब्ध समाधि प्रज्ञासंप्रयोगश्च । मूर्धानः कतमत् । प्रत्यात्मं सत्येष्वालोकवृद्ध समाधि प्रज्ञासंप्रयोगश्च । सत्यानुकूलक्षान्तिः कतमा । प्रत्यात्मं सत्येष्वेकदेशप्रविष्टानुसृत समाधि प्रज्ञा संप्रयोगश्च । लौकिकाग्रधर्मः कतमः । प्रत्यात्मं सत्येष्वानन्तर्यचित्तसमाधि प्रज्ञासंप्रयोगश्च । *Asm* pp 65—66.

ध्यानविधिषु पौविको भवति चित्तस्यैकायतनप्रतिसंयोग ।·· क्रमेण प्रत्यवेक्षते काय वेदना चित्त धर्मान् इत्यवतरन् धर्मस्मृत्युपस्थितौ सुविनीतैकाग्रचित्तस्य पारमार्थिकप्रज्ञाधिगम । प्रत्यवेक्षते सर्वे संस्काराः···अनित्या ···दुःखा ···शून्या ···अनात्मान । ततो लभते ऊष्मधर्म चित्तोत्पादितम् । यथा मथनात्काष्ठेष्वनलोत्पादस्तथा बुद्धधर्मेषु परिशुद्धकुशलमूलश्रद्धोत्पाद ।

चतुर्भि प्रत्ययै पश्यति षोडशाकारान् । चतुर्भिराकारै पश्यति दुःखसत्य···समुदय ·· निरोध···मार्गसत्यम् । पश्यन् षोडशाकारकुशलधर्मान् नित्यमातापी विहरति वीर्यवानिस्यूष्मधर्म । एतस्मादूष्मगत कुशलमूल सप्रवृद्धमुच्यते मूर्धा कुशलमूलम् ।···ऊष्मधर्मोत्तरमूर्धा उद्वृद्ध इति । सत्यक्षान्तिमनुगतो मूर्धा नाम क्षान्तिकुशलमूलम् । त्रिविध एष···अधिमात्र मध्य· मृदुश्च । चतुःसत्यत्रिपरिवर्तनामुपादाय पश्यति षोडशाकारान् सत्यमनुसरन् सप्रवर्धयति कुशलमूलमित्युच्यते लौकिकाग्रधर्म इति ।···कश्चिदाह । लौकिकाग्रधर्मो हि श्रद्धादीनि पञ्चेन्द्रियाणि । परमार्थतस्तु एकाग्रचित्तकाले चित्तचैतसिका धर्मा लौकिकाग्रकुशलमूलमिति । *Aam* pp 83-84

The Mahāyānistic interpretations of these terms are given in *Aaa.*—

एव कृतधर्मप्रविचय समाहितचित्तश्च सर्वधर्मनैरात्म्य भावयन् क्रमेण यदा पृथग्भूतार्थाभिनिवेशाभावादीषत्स्पष्टज्ञानालोकेन मनोमात्रमेव पश्यति तदाऽस्योष्मगतावस्था । स एवात्रालोकलब्धो नाम समाधिरुच्यते महायाने ।

यदा तस्यैव धर्मालोकस्य वृद्धयर्थं नैरात्म्यभावनाया वीर्यारम्भेण मध्यस्पष्टो ज्ञानालोको भवति, तदा मूर्धावस्था । स एव वृद्धालोको नाम समाधि ।

यदा तु चित्तमात्रावस्थानेन स्पष्टतरो बाह्यार्थाभिनिवेशाभावो ज्ञानालोको जायते, तदा क्षान्त्यवस्था । ग्राह्याकाराभावानुप्रवेशात्तत्त्वार्थैकदेशप्रविष्टो नाम समाधि ।

यदा पुनर्ग्राहकविशेषणाभासो ज्ञानालोको निष्पद्यते, तदा लौकिकाग्रधर्मावस्था । स एवानन्तर्यो नाम समाधि । सर्वाश्चैता अवस्था बुद्धापिमुक्तिनोऽधिमुक्तिचर्याभूमिरुच्यते । *Aaa.* p 64

[1] Cf. निर्वाणद्वारोद्घाटनप्रतिबल इति पृथग्जनधर्मेष्वग्र प्रतीत्य प्रथमसत्यदर्शन चतुराकार ··। *Asm* p 84. यानत्रयाधिगमप्राप्तये मृदूष्मगा कुशल हेतुरिति । अयं च हेतुभाव सर्वेषामेवोष्मादीनां वेदितव्य । *Aaa* p 50

<u>भगवतोक्तम्</u>—"च्युतौ वर्तेमौ मोहपुरुषावस्माद्धर्मवि[न]याद्यत्र नामानयो मोहपुरुषयोरूष्मगतमपि नास्ति" 'इति। तच्चैतत्सर्वम्

(2)षड्भौमं[2] षोडशाकारं पञ्चस्कन्धा विनाप्तिभिः ॥[3]

'षड्भौम' दर्शनमार्गवतो [3] 'षोडशाकार' दर्शनमार्गवत् सानुपरिवर्तक। 'पञ्चस्कन्ध[4] विनाप्तिभि ।' आसय. खलु नोष्मागतादिस्वभावा ।[6] तत्स्वा

---

[1] Cf ऊष्मा कतम । सद्धर्मविनयस्य श्रद्धामादानम । यथा भगवानुद्दिश्याश्वजि स्पुनर्वसू भिक्षू अवोचत । एतौ मोघपुरुषौ मम सद्धर्मेण विगतौ विनयेन च । तथा हि । महापृथिवी दूरमाकाशाद गता । एतौ मोघपुरुषौ मम सद्धर्मविनये नाल्पाशतोऽप्यूष्मीकृतौ । *Jpt* p 7

Cf also अपि नाय अरिट्ठो भिक्खु गद्धबाधिपुब्बो उस्मीकतो पि इमस्मिं धम्मविनये। *M sutta* 22—उस्मीकतो ति यथा निब्बुतेपि महन्ते अग्गिक्खन्धे खज्जूपनकमत्तापि अग्गिप पटिका होति एव य निस्साय पुन महा अग्गिक्खन्धो भवेय्य किन्तु खो एव इमस्स अप्पमत्तिका पि ञाणुस्मा अत्थि य निस्साय वायमन्ता मग्गफलानि निब्बत्तेय्या ति ? *MA sutta* 22

[2] Cf अनागम्यान्तरध्यानभूमिक द्व त्वधोऽपि वा । *Ak* vi 20 cd

[3] Cf तथाप्रधर्मा सर्वे तु पञ्चस्कन्धा विनाप्तिभि । *Ak* vi 19 cd

[4] The six *bh mis* are the following —

अनागम्य ध्यानान्तर चत्वारि च ध्यानानि अस्य (निर्वेधभागीयस्य) भूमि । तत्स गृहीतत्वात । नोर्ध्वम । दर्शनमार्गपरिवारत्वात । तदभाव कामधात्वालम्बनत्वात । तस्य च पूर्व परिज्ञेयप्रहेयत्वात । भदन्तघोषकस्य तु प्रथम निर्वेधभागीय सप्तभूमिके कामाव चरेऽपि स्त । *Akb* v 20 cd —नारूप्येषु निर्वेधभागीयमस्ति । दर्शनमार्गप्रयोगत्वात । दर्शनमार्गस्य ऊर्ध्वम आरूप्येषु अभाव । यस्मादारूप्या कामधातु नालम्बन्ते । आह । किं कामधात्वालम्बनेन दर्शनमार्गेण प्रयोजनमिति ? अत उच्यते । तस्य पूर्व परिज्ञेयप्रहेयत्वादिति । तस्य कामधातोर्दुःखरूपस्य पूर्व परिज्ञेयत्वात । समुदयरूपस्य च प्रहेयत्वात । अत्र च हेतुरस्मात्म योगी कामावचरेण दु खेन विहन्यते । तेन स सर्व ततो मोक्षमन्वेषत इति । *Sakv* p 537 According to the Sthavaravād ns the *darshana mārga* ( e the first supermundane path) is not attained in the *Arupa loks* due to the absen e of *hadaya vatthu* —अरूपावचरा देवा वत्थुस्स अभावा दुक्खसच्च परिञ्ञातु असमत्था तस्मा पठममग्ग उप्पादेतु न सक्कोन्ति । *A Sangaho Navanita Tika* vi 24 See *Jpt* 3 and *Aam* p 84

The *Adv* m ght have contained a full d scussion on this topic in its lost portion V supra p 322 n 2

[5] सर्वे तु पञ्चस्कन्धा सपरिवारग्रहणादिति । समाहितभूमिकत्वादूष्मगतादीनाम विनाप्तिवर्जाणो ध्यानसंवरसंस्ववाचकिनि पञ्चस्कन्धा ऊष्मगतादय सपरिवारा गृह्यन्त इति । *Sakv* p 535

[6] Cf प्राप्तया ऊष्मगतादिभि संगृह्यन्ते । मा भूत्यस्य तत्सम्मुखाभावादूष्मग

भाव्ये हि तासामार्यस्योष्मगतादिसंमुखीभावः स्यात्। न चेष्यते। सत्यदर्शनसमङ्गिनो दृष्टसत्यस्य वा सत्यदर्शनप्रयोगसंमु(3)खीभावे प्रयोजनाभावादिति।

आह। के पुनस्ते षोडशाकाराः[1] येषां भावनेन(नया) स्रोतआपन्नो भवति? तदुच्यते। चतुर्भिराकारैरनि(नि)त्यदुःखशून्यानात्माकारैः दुःखं परीक्षते। तत्र बोधिसत्त्वादृते तृष्णाचरितः[2] प्रायोऽनि(नि)त्याकारेण, कौसीद्याधिको दुःखाकारेण, आत्मीयदृष्टिचरितः शून्याकारेण, आत्मदृष्टिचरितोऽनात्माका(4)रेण।

हेतुसमुदयप्रभवप्रत्ययतः समुदयम्। हेतुतः अहेतुदृष्टिचरितः। समुदयतः एककारणदृष्टिचरितः। प्रभवतो नित्यकारणदृष्टिचरितः। प्रत्ययतोऽबुद्धिपूर्वकृतदृष्टिचरितः।

निरोधशान्तप्रणीतनिःसरणतो निरोधम्। एभिश्चतुर्भिर्निरोधः। नास्ति मोक्ष इत्येवं दृष्टिचरितो निरोधतः। श(4)रीरादिमत इत्येवं चरितः शान्ततः। विषयसुखचरितः प्र[णीत]तः। ध्यानादिसुखचरितो निःसरणतः।

मार्गन्यायप्रतिपत्नैर्याणि(णि)कतो मार्गः(र्गम्)। एभिश्चतुर्भिर्मार्गः। नास्ति मोक्षमार्ग इत्येवं दृष्टिचरितो मार्गतः। कष्टतपोभिरित्येवं दृष्टिचरितो न्यायतः। लौकिकवैराग्यमार्गचरितः प्रतिपत्तितः। अ(6)सकृल्लौकिकमार्गपरिहाणितो(को) नैर्याणिकतः।[3] इत्येवमादिते(के?) समये व्यभिचरणकाले स्वेकोपि सर्वैः

---

तादीनां सम्मुखीभाव इति। *Akb* vi 19 d —प्राप्तिसम्मुखीभावादार्यपुद्गलस्योष्मगतादीनां फलप्राप्तिप्रयोगभूतानां सम्मुखीभावो मा भूदिति प्राप्तया नोष्मगतादिषु गृह्यन्ते। न हि प्राप्तप्रयोगफलस्यार्यस्य प्रयोगसम्मुखीकरणं न्याय्यमिति। *Saku* p 535

[1] See *Aam* p 83

Cf. कथं तथट्ठेन चत्तारि सच्चानि एकपटिवेधानि? सोळसहि आकारेहि तथट्ठेन चत्तारि सच्चानि एकपटिवेधानि। दुक्खस्स पीळनट्ठो, सङ्खतट्ठो, सन्तापट्ठो, विपरिणामट्ठो तथट्ठो। समुदयस्स आयूहनट्ठो, निदानट्ठो, संयोगट्ठो, पलिबोधट्ठो तथट्ठो। निरोधस्स निस्सरणट्ठो विवेकट्ठो, असङ्खतट्ठो, अमतट्ठो तथट्ठो। मग्गस्स निय्यानट्ठो, हेतुट्ठो, दस्सनट्ठो, अधिपतेय्यट्ठो तथट्ठो। इमेहि सोळसहि आकारेहि तथट्ठेन चत्तारि सच्चानि एकपटिवेधानीति। *Patisambhidā*, vol. ii. pp 104 5 See *Vm* xvi. 15.

[2] चरिया च छ चरिया। रागचरिया दोसचरिया मोहचरिया, सद्धाचरिया, बुद्धिचरिया, वितक्कचरिया। *Vm* iii 74. For details, see *Vm.* iii 74-96

[3] Cf स एतेन लौकिक तत्र दुःखज्ञाने वा ध्रुवशुभसुखात्मभावविरहितेषु स्कन्धेषु ध्रुवशुभसुखात्मभावसद्ग्राह एवं विप्रतिपत्ति, समुदयज्ञाने ईश्वरप्रधानकालस्वभावादिहि लोको प्रवर्तत इति अकारणे कारणाभिमानरूपेण हेतुषु विप्रतिपत्ति, निरोधज्ञाने अपवर्ग-

परीक्षते। रोगगण्डशल्याघाताकारादिभिर्ण(र्न्) तु तैरत्यन्तप्रहाणमित्यत षोडशैवार्याकारा इत्युच्यन्ते ।[१] पुरस्ताच्चैतच्छ्लोकानुगतमेवोपदर्शयिष्यामि ॥[२]

१ निर्वेधभागीयेभ्य पुन

[422] पश्चात्तु खलु[(7)]निर्वेध आर्यमार्गाह्वयस्तत ।
स यस्मान्निश्चितो वेधस्तस्मान्निर्वेध उच्यते ॥[२]

---

लोकथपिकादिसु अपवग्गगाहभूत निरोध विप्पटिपत्ति मग्गञाण कामसुखल्लिक-अत्तकिलमथानुयोगप्पभेदे अविसुद्धिमग्ग विसुद्धिमग्गगाहवसेन पवत्त उपाय विप्पटिपत्ति निब्बत्तति। *Vm* xvi 85

[१] Cf छहाकारेहि सुञ्ञत परिगण्हाति। छहाकारेहि सुञ्ञत परिग्गहेत्वा पुन अट्ठहाकारेहि परिगण्हाति। पुन दसहाकारेहि परिगण्हाति। द्वादसाकारेहि परिगण्हाति। एव द्वादसाकारेहि सुञ्ञत परिग्गहेत्वा पुन तीरणपरिञ्ञावसेन द्वाचत्तालीसाय आकारेहि सुञ्ञत परिगण्हाति। रूप अनिच्चतो दुक्खतो रोगतो गण्डतो सल्लतो अघतो समुदयतो अत्थङ्गमतो आदीनवतो नि सरणतो पस्सति। वेदन पे विञ्ञाण अनिच्चतो पे निस्सरणतो पस्सति। *Vm* xxi 56 59 Also see *Vm* xvi 15 48 *Patisambhida* vol i 118 vol ii 104 5 and *Chulla n ddesa* pp 279 280 283

[२] Cf निर्वेधभागीयानीति कोऽर्थ। विध विभाग। निश्चितो वेधो निर्वेध आर्यमार्गस्तेन विचिकित्साप्रहाणात सत्याना च विभजनादिद दु खमय यावत मार्ग इति। तस्य भागा दर्शनमार्गैकदेश। तस्यावाहकत्वेन हित वा निर्वेधभागीयानि। *Akb* vi 20 ab

Cf also इध भिक्खवे अरियसावको आरद्धविरियो होति उदयत्थगामिनिया पञ्ञाय समन्नागतो अरियाय निब्बेधिकाय सम्मादुक्खक्खयगामिनिया। इद पञ्ञाबल *Ang* iii p 2 For *n bbedhabhag ya s la* see *Vm* i 39 For *n bbedhabhag ya samadh* see *D gha* xxx v 1 6

The *V bhanga* g ves the follow ng def n on of *n bbedhabhag n panna* — निब्बिदासहगता सञ्ञामनसिकारा समुदाचरन्ति विरागूपसहिता निब्बेधभागिनी पञ्ञा। *Vbh* p 330 — निब्बिदासहगता ति तमेन पठमज्झाना वुट्ठित निब्बिदासङ्खातेन विपस्सनाञाणेन सहगता विपस्सनाञाण हि झानङ्गभेदे वत्तन्ते निब्बिन्दति उक्कण्ठति तस्मा निब्बिदा ति वुच्चति। समुदाचरन्ती ति निब्बाणसच्छिकिरियाय चोदेन्ति तुदन्ति। विरागूपसहिता ति विरागसङ्खातेन निब्बाणेन उपसहिता विपस्सनाञाणम्हि सक्का इमिना मग्गेन विराग निब्बाण सच्छिकातु ति पवत्तिता विरागूपसहिता ति वुच्चति। त सम्पयुत्ता सञ्ञामनसिकारा पि विरागूपसहिता एव नाम तस्मा तेस सञ्ञामनसिकारान वसेन सा पठमज्झानपञ्ञा अरियमग्गपटिवेधस्स पदट्ठानताय निब्बेधभागिनी ति वुत्ता। इतिय भानपञ्ञादीसु पि इमिनाव नयेन अत्थो वेदितब्बो। एव चतुसु ठानेसु पठमज्झानपञ्ञाव *VbhA* p 418-9 For *n bb da* and *patmedha* see *Vbh* p 330

इति प्रागाविष्कृतमेतत्[1] ॥[2]

[423] धर्मज्ञानरुचिर्दुःखे निर्मलं धर्मदर्शनम् ।
तत्स्तत्रैवावधृतिः धर्मज्ञानमनन्तरम् ॥[3]

लौकिकेभ्यः खल्वग्रधर्मेभ्यो[4] निरास्रवा लोकोत्तराः(रा) धर्ममार्गेक्षण-

---

[1] This topic is discussed earlier in *Adv* in its lost portion V supra, p 322, n 2 See also p 326, n 1

[2] Here begins a new topic—the *darśana mārga* and *bhāvanā mārga*

[3] Cf अभिसमयक्रमस्तु वक्तुमारब्ध । तत्र च यावदग्रधर्मा उक्ता । शेष वक्तव्यम् । अत इद उच्यते—

लौकिकेभ्योऽग्रधर्मेभ्यो धर्मक्षान्तिरनास्रवा ॥
कामदुःखे ततोऽत्रैव धर्मज्ञान तथा पुन । *Ak*. vi 25 cd, 26 ab

The *B Pañjikā* gives in brief the *abhisamaya krama* —तत्र वैभाषिकादय· सर्वधर्मशून्यताया सर्वावरणप्रहाणमसहमाना चतुरार्यसत्यदर्शनभावना च तदुपायमिच्छन्त प्राहु

सत्यदर्शनतो मुक्ति शून्यतादर्शनेन किम ।

तत्र वृत्तस्थस्य श्रुतचिन्तावतो भावनाया प्रवृत्तस्य । अशुभानापानस्मृत्युपस्थानभावनानिष्पत्तिक्रमेण । अनित्यतो दुःखत शून्यतोऽनात्मतश्चेत्येतै षोडशभिराकारैर्दुःखादिसत्य पश्यत । ऊष्मगतादिचतुर्निर्वेधभागीयद्वारेण दुःख धर्मज्ञानक्षान्त्यादिपञ्चदशलक्षणस्य दर्शनमार्गस्य, तत पर भावनामार्गस्याधिगमाद्दर्शनभावनाहेयत्रैधातुकक्लेशोपक्लेशराशिप्रहाणात् क्षयानुत्पादज्ञानोत्पत्तिरित्यार्यसत्येषु सक्षेपतोऽभिसमयक्रम । इत्यमायसत्यदर्शनतो मुक्तिरुच्यते । *B Pañjikā* ix 41 ab

[4] लौकिकाग्रधर्म कतम । चित्तचैतसिकधर्मा समनन्तरा सम्यक्त्वन्याममवक्रान्ता लौकिकाग्रधर्म इति । अपर आह । पञ्चेन्द्रियाणि समनन्तराणि सम्यक्त्वन्याममवक्रान्तानि लौकिकाग्रधर्म इति ।

कस्मादभिधीयते लौकिकाग्रधर्म इति । चित्तचैतसिकाधर्मा एव भवन्त्यन्येषु लौकिकेषु वरा प्रकृष्टा ज्येष्ठा प्रधाना उत्तरा परमा इत्यभिधीयते लौकिकाग्रधर्म इति । पुन खल्वेवमेते चित्तचैतसिकधर्मा समनन्तरा विहाय पृथग्जनत्व प्राप्नुवन्त्यार्यत्व विहाय मिथ्यात्व प्राप्नुवन्ति सम्यक्त्व प्रतिबलाश्च सम्यक्त्वन्यामावक्रान्तये इत्यभिधान लौकिकाग्रधर्म इति ।

लौकिकाग्रधर्मो नियतमविवर्तनीय । कस्मात् लौकिकाग्रधर्म सत्यानुसारी सत्याभिमुख सत्यनिर्वेधाशिक । अन्योन्यान्तरे नावकाशोऽसदृशचित्तोत्पादस्य येन नार्यसत्याभिसमयनिर्वेध । पुन खलु । लौकिकाग्रधर्मो दुःखधर्मज्ञानक्षान्तेर्भवति समनन्तरप्रत्यय· । *Jpś* pp 2 and 5

The *laukikagradharma* corresponds to the *gotrabhū chitta*, which is followed by the *sotapatti magga-chitta* —

अथ तस्मि निमित्तपवत्तारम्मणे पालिबोधतो उपट्ठिते अनुलोमञाणस्स आसेवनन्ते

यदवक्रान्तौ पृथग्जनभूमिं समतिक्रामति[1]" इति । तदनन्तरं दुःखे धर्म-

—'सम्यक्त्वं निर्वाणमित्युक्तम्' इति । सम्यक्त्वं कतमत् ? यत्तत् पर्यादाय राग-प्रहाणमिति विस्तरः ।···सम्यक्त्वे नियम एकान्तीभावो नियाम' इति षष्ठि रूपम् । "तस्या-भिगमनमवक्रमणम्' इति । तस्यैकान्तीभावस्याभिगमनं प्राप्तिः । तदेव विपर्यासस्यापक्र-मान्नियामावक्रान्तिरित्युच्यते । 'तस्या च' इति धर्मज्ञानक्षान्तौ । 'प्रदीपजातिवत्' इति । प्रदीपस्येव जातेरिव चेत्यर्थः । यथा प्रदीपस्यानागतस्य तमोविनाशे सामर्थ्यम्, जातेश्चाना-गताया जन्यजनने, तथा पृथग्जनत्वव्यावर्तने सामर्थ्यमनागताया धर्मज्ञानक्षान्तेरभ्युपगम्यते । *Saka* p 541

The Pali scriptures contain several references to *samyaktva* and *niyāma avakrānti* Here too, *niyāma* means the *lokottara marga* —

(१) दिट्ठिविसूकानि उपातिवत्तो पत्तो नियामं पटिलद्धमग्गो । *S. Nipāta*, 55 — उपातिवत्तो ति दस्सनमग्गेन अतिक्कन्तो । पत्तो नियामं ति अविनिपातधम्मताय सम्बोधिप-रायणताय च नियतभावं अधिगतो, सम्मत्तनियामसङ्खातं वा पठममग्गं ति; एत्तावता पठम-मग्गनिप्फत्ति च तस्स पटिलाभो च वुत्तो । इदानि पटिलद्धमग्गो ति इमिना सेसमग्गपटिलाभं दीपेति । *S Nipata A* 55 Also cf सम्बोधिपरायणो नियतो पधानवा । *S Nipata* 70, सद्धो सुतवा नियामदस्सी । *Ibid* 371

(२) ओक्कमति नियामं कुसलेसु धम्मेसु सम्मत्तं । *Ang* I p 121 —कुसलेसु धम्मेसु मग्गनियामसङ्खातं सम्मत्तं । *Ang A* II p 192

For various controversies on *niyāma* and *niyama*, see the following *kathas* in *Kathavatthu* —ओक्कन्तनियामकथा, IV 8, नियामकथा, V 4, नियामो अस-ङ्खतो ति कथा VI 1 सत्तक्खत्तुपरमो पुग्गलो सत्तक्खत्तुपरमता नियतो ति कथा, XII 5, कोलंकोलो पुग्गलो कोलंकोलता नियतो ति कथा, XII 6, एकबीजी पुग्गलो एकबीजिता नियतो ति कथा, XII 7, अनन्तरापयुत्तो पुग्गलो सम्मत्तनियामं ओक्कमेय्या ति कथा, XIII 3, नियतो नियामं ओक्कमती ति कथा, XII 4, अत्थि पुथुज्जनस्स अच्चन्तनियामता ति कथा, XIX 7 and सब्बे धम्मा नियता ति कथा, XXI 7

नियामो ति ब्रह्मचरियं ति वा अरियमग्गस्स नामं । *Kv A* IV 8 नियामगमनाय ति नियामो वुच्चति मग्गो मग्गगमनाय मग्गोक्कमनाया ति अत्थो । *Ibid* V 4 नियमो ति 'भब्बो नियामं ओक्कमितुं कुसलेसु धम्मेसु सम्मत्तं' ति [*Ang* I p 121] वचनतो अरियमग्गो वुच्चति । *Ibid* VI 1 —द्वे नियामा सम्मत्तनियामो च मिच्छत्तनियामो च । सम्मत्तनियामो अरियमग्गो । सो अविनिपातधम्मत चेव फलुप्पत्ति च नियमेति । मिच्छत्तनियामो आनन्त-रियकम्मं । तं अनन्तरा निरयूपपत्ति नियमेति । *Ibid* XII 5 · इमे द्वे नियामे ठपेत्वा अञ्ञो नियामो नत्थि । सब्बे पि हि सेसा तेभूमकधम्मा अनियता नाम । *Ibid* XIII 4 For details, see *Points of Controversy*, pp 275, 383—386, Woghihara Asanga's *Bodhisattva bhumi*, p 31, *LVPAk* VI p 180, n 6

[1] कतमो च पुग्गलो पुथुज्जनो ? यस्स पुग्गलस्स तीणि संयोजनानि अप्पहीनानि न च तेसं धम्मानं पहानाय पटिपन्नो—अयं वुच्चति पुग्गलो पुथुज्जनो । *P paññatti* p 12

ज्ञान निश्चयात्मकम् ।[1] क्षान्त्या या सयोगप्राप्ति छिनत्ति ज्ञानेन विसंयोग

पुथुज्जनतिद्देसे तीणि सयोजनानी ति सक्कायदिट्ठिविचिकिच्छासीलब्बतपरामाससयोजनानि। एतानि हि फलक्खण पहीनानि नाम होन्ति। तेस च धम्मान ति तेस सयोजन धम्मान। मग्गक्खणस्मि हि तेस पहानाय पटिपन्नो नाम होति। P pannatt A p 25

Cf पृथग्जनत्व वतमन। यन्नायधम आर्यत्वमगते आयत्याने आयमान्तो आयच्छन्ते आयप्रनायामप्राप्तिरप्राप्तता अप्राप्स्यमानता इति पृथग्जनत्वम। लौकिकाग्रधमसम्पत्तिरोधे दुःखधमज्ञानक्षान्तिसमुत्पाद। अथ तस्मिन् काले यथावत् पृथग्जनत्व व्युत्पच्छति लभ्यते तत—[पृथग्जन]स्वभावस्यानिष्पत्ति। Jpl pp 59—60

The *Samyutta n kaya* makes specif c reeference to the *prithag jana bhum samat kramana* —

चक्खु पे मनो पे विञ्ञाण अनिच्च विपरिणामी अञ्ञथाभावि। यो भिक्खवे इमे धम्मे एव सद्दहति अधिमुच्चति अय वुच्चति भिक्खवे सद्धानुसारी ओक्कन्तो सम्मत्तनियाम सप्पुरिसभूमि ओक्कन्तो वीतिवत्तो पुथुज्जनभूमि। अभब्बो त कम्म कात य कम्म कत्वा निरय वा तिरच्छानयोनिय वा पत्तिविसय वा उप्पज्जेय्य। अभब्बो च ताव काल कातु याव न सोतापत्तिफल सच्छिकरोति।

यस्स खो भिक्खवे इमे धम्मे एव पञ्ञाय मत्तसो निज्झान खमन्ति अय वुच्चति धम्मानुसारी ओक्कन्तो सम्मत्तनियाम पे सच्छिकरोति। S III pp 225 7 (*Okkanti ka samyutta*)

The Kośakara g ves two more v ews rega d ng the *prithagjanatva vya vartana* —लौकिकाग्रधर्मैरित्यपरे। न। तद्धमवाताद्विरोधित्वाद्दोष। शत्रुस्वघातवत् तद्घातनवत्। उभयैरित्यपरे। आनन्तर्यविमुक्तिमार्गसाधर्म्यादिति।

— लौकिकाग्रधमैरित्यपर इति। पृथग्जनत्व व्यावत्यत इति प्रकृतम। न। तद्धम वात इति। न युक्तमेत लौकिकरग्रधमस्तद्व्यावतनमिति। कस्मात ? तेऽपि हि पृथग्जनधमस्य पृथग्जनस्य व्यावर्तिष्यन्त इति। तद्विरोधित्वाद्दोष अग्रधर्माणा पृथग्जनत्व विरोधाददोष एव। किम ? यथा शत्रुस्वघात एव कश्चिच्छत्रु घातयत। एव त्रिलाग्रधर्मा पृथग्जनत्वशत्रुस्वघात्यास्तन्येव पृथग्जनत्व घातयन्तीति।

उभयरिति। लौकिकाग्रधर्मै क्षान्त्या च पृथग्जनत्व व्यावत्यत। कथम् ? आनन्तर्य विमुक्तिमार्गसाधर्म्याद् इति लौकिकाग्रधर्माणामानन्तर्यण साधर्म्यम। क्षान्तेविमुक्ति मार्गेण। यथा ह्यानन्तर्यमार्गेण क्लेश प्रहीयते विमुक्तिमार्गेण प्रहीण एवं लौकिकाग्रधम पृथग्जनत्व विहीयत क्षान्त्या विहीनमिति। Sakt pp 541 542.

See *Aaa* p 84 *A m* p 66 Fo he S hav avad n s v ew see *Ks* I 1 1 (सराग चित्त विमुक्तता नि कथा) and XIII. 5 (निवता नीवरण जहता नि कथा)। Cf Jpl pp 25-26

[1] Cf तत पुनः म धमज्ञानक्षान्तरनन्तरमत्रैव कामावचरे दु खे धर्मज्ञानमुत्पद्यते। तत् दु ख धमज्ञानमित्युच्यते। Akb vi. 26 ab —तत्र दु ख धर्मज्ञानमित्युच्यत इति। शास्त्र तत नाम्ना व्यवहार इति दर्शयति। Saku p 542.

प्राप्तिमावहतीति विशेषः ।[1]

[424] एवं त्रिष्वपि सत्येषु तथैवान्वयधीर्द्विधा ।[2]

द्वाभ्यां धर्मज्ञानक्षान्तिधर्मज्ञानेक्षणाभ्यां समनन्तरं(9) रूपारूप्यावचरे दु खेऽन्वयज्ञानक्षान्त्यन्वयज्ञानेक्षणमुत्पद्यते[3] । एवं त्रिष्वपि सत्येषु द्रष्टव्यम् । अत्र पुनः

---

Also cf दु खे धर्मज्ञान कतमत् ? क्षान्त्यनन्तर येन ज्ञानेन पूर्वोक्तेभ्य क्लेशेभ्यो विमुक्ति साक्षात्करोति । तस्मादुच्यत दु खे धर्मज्ञानमिति । *Asm* p 66 दु खधर्मज्ञान विमोक्षमार्ग । *Aam* p 85 V infra, *Adv karikā* 477

[1] The Kośakāra deals with this point in detail —Cf कस्मात् पुन क्षान्तयो ज्ञानानि चावश्य भवन्ति ?

क्षान्तिज्ञानान्यनन्तर्यमुक्तिमार्गा यथाक्रमम् ।

अनन्तर्यमार्गा क्षान्तय क्लेशप्राप्तिविच्छेद प्रत्यन्तरयितुमशक्यत्वात् । विमुक्तिमार्गास्तु ज्ञानानि । क्लेशप्राप्तिविमुक्ताना विसयोगप्राप्तिसहोत्पादात् । अत उभयैरवश्य भवितव्यम् । द्वाभ्या चोरनिष्कासनकपाटपिधानवत् । *Akb* vi 27 cd

आनन्तर्यमार्गा इति ' अनन्तरभवा अन तरमार्गो वा आनन्तर्यम् । तस्य मार्गा आनन्तर्यमार्गा । विमुक्तिमार्गा इति विमुक्तो मार्गा विमुक्तिमार्गा । क्लेशविमुक्त्यवस्थामार्ग इत्यर्थ । द्वाभ्या चोरनिष्कासनकपाटपिधानवदिति । यथा द्वाभ्यामकेन चोरो निष्कास्यते, द्वितीयेन तदप्रवेशाय कपाट पिधीयते । एवमानन्तर्यमार्गेण क्लेशचौरा निष्कास्यते तत्प्राप्तिच्छेदत । विमुक्तिमार्गेण च विसयोगप्राप्तिकपाट पिधीयते वर्तमानीकरणत ।'' *Saku* p 549 See *Aaa* p 177

[2] Cf शेषे दु खान्वयक्षान्तिज्ञाने सत्यत्रये तथा । *Ak* vi 26 cd

[3] Cf प्रथमता [ दु खेऽन्वयज्ञानक्षान्त्या ] धर्मतत्त्वज्ञानाद्धर्मज्ञानम् । तदन्वयादूर्ध्वं दु खालम्बनमन्वयज्ञानम् । तथैवानुगमनात् । *Akb* vi. 26 c

Also cf आनन्तर्यमार्गोऽन्वयज्ञानक्षान्ति विमुक्तिमार्गोऽन्वयज्ञान चेति'' । *Aam* p 85 दु खेऽन्वयज्ञानक्षान्ति कतमा ? दु खे धर्मज्ञानक्षान्त्या दु ख धर्मज्ञाने च प्रत्यात्म प्रत्यक्षानुभाविनी अनास्रवा प्रज्ञा उत्पद्यत यदुत्तरमन्वय एष आर्यधर्माणाम् ।' दु ख अन्वयज्ञान कतमत् ? तदनन्तरमनास्रव ज्ञानमुत्पद्यत । येन ज्ञानेन दु ख अन्वयज्ञानक्षान्तिमुपधारयति । *Asm* p 66

यतो खो भिक्खव अरियसावको एव जरामरण पजानाति' । निरोधगामिनि पटिपदं पजानाति । इदमस्स धम्मे ञाण ।

सो इमिना धम्मेन दिट्ठेन'' अतीतानागत नय नेति—ये खो केचि अतीतमद्धान '' अनागतमद्धान समणा वा ब्राह्मणा वा जरामरण ' अभिञ्ञासिंसु यथेव मय्ह त एवमभिजानिस्सन्ति सेय्यथापि एतरहि । इदमस्स अन्वये ञाण ।

[ 425 ab. ] चयोऽन्त्यो भावनामार्गाद् फलमेषोऽर्थसिद्धितः ॥

योगाचार्यस्य खल्वपि·········[Folio No. 129 lost.[1]]

······[VII. B. 3. Fol. 130 a.] [2]स्रोताश्चेति पञ्चमवन्ति ॥

---

एप आर्यधर्माणामिति प्रत्यात्मं यत्प्रत्ययज्ञानुभाविज्ञानमनाश्रव तदुच्यते दुःखान्वयज्ञानक्षान्तिः। येन ज्ञानेन तामन्वयज्ञानक्षान्तिमवधारयति तदुच्यते दुःखेऽन्वयज्ञानम्। एवमवशिष्टेष्वपि सत्येषु यथायोगं क्षान्तयो ज्ञानानि च वेदितव्यानीति षोडशक्षणिक एव दर्शनमार्गो युक्तः। पञ्चदश क्षणिकत्वे तु मार्गेऽन्वयज्ञानक्षान्तेरवधारणं न स्यात्। अदृष्टदर्शनाभावेनान्त्यो मार्गेऽन्वयज्ञानक्षणो न दर्शनमार्ग इति चेत्। यद्येवं दुःखादिसत्यत्रयेऽप्यपूर्वदर्शनवैकल्यादन्वयज्ञानक्षणो न दर्शनमार्ग इति द्वादशक्षणिक एव स्यात्। न चैतदभ्युपगमनमिति यत्किञ्चिदेतत्। तथा चोक्तम्—

क्षान्तिज्ञानक्षणैः सत्यं सत्य प्रति चतुर्विधैः।
मार्गज्ञतायां दृङ्मार्गः सानुशंसोऽयमुच्यते ॥११॥

इति तत्र धर्मज्ञानक्षान्त्या धर्मज्ञानेन च ग्राह्यावबोधः। अन्वयज्ञानक्षान्त्याऽन्वयज्ञानेन च ग्राहकावबोधः। सर्वेष्वेव क्षान्तिज्ञानेष्वनिमित्तविहारी योगी वेदितव्यः। अविकलकारणस्य प्रहातुमशक्यत्वाद् दुःखदर्शनप्रहातव्यकाले समुदय. प्रहीण.। अत एव निरोधः साक्षात्कृतस्तस्य चान्यथानुपपत्त्या मार्गो भावितः। समुदयादिष्वप्येवमित्येव कार्याभिसमयादेकक्षणाभिसमयो महायाने दर्शनमार्गो द्रष्टव्यः। प्रतिसत्य पुनर्विपर्यासनिराकरणेन प्रतिवेधाभिसमयत.। षोडशभिरेव क्षणैरभिसमीयते। *Aaa.* pp. 150-52. Also see *Aaa.* pp. 280—283.

[1] Folio No. 129 is lost. In this lost folio, the *Adv.* might have discussed the following topics which are dealt with in detail in the corresponding *Akb.* vi. 27 cd and 29—37:—(१) षोडशचित्तको सत्याभिसमयः। (२) स्रोतआपत्तिफलप्रतिपन्नकौ। (३) सकृदागामिफलप्रतिपन्नकौ। (४) अनागामिफलप्रतिपन्नकौ। (५) फलस्थौ। (६) नवप्रकाराः क्लेशा भूमौ भूमौ। तथा तत् प्रतिपक्षा अपि नव प्रकारा आनन्तर्यविमुक्तिमार्गाख्या गुणाः। (७) स्रोतआपन्न; सप्तकृत्वपरम.। (८) कुलङ्कुलः। (९) द्वितीयफलप्रतिपन्नकः। (१०) सकृदागामी। (११) एकवीचिकः। (१२) अनागामी। (१३) पञ्चविधोऽनागामी—अन्तरा परिनिर्वायी। उपपद्यपरिनिर्वायी। साभिसंस्कारपरिनिर्वायी। अनभिसंस्कारपरिनिर्वायी। ऊर्ध्वस्रोता।

[2] The topic under discussion is *Anāgāmin-pudgala.* An *anāgāmī* is defined as:—अनागामी···कामधात्वनागमनात्। 'पञ्चानामवरभागीयानां सयोजनाना प्रहाणादित्युच्यते प्रहाणसंकलनात्।' अवश्य द्वे त्रीणि वा पूर्वं प्रहीणानि भवन्ति। *Akb.* vi. 36 d.

Cf. कतमो च पुग्गलो अनागामी? इधेकच्चो पुग्गलो पञ्चन्नं ओरम्भागियानं सयोजनानं परिक्खया ओपपातिको होति तत्थ परिनिब्बायी अनावत्तिधम्मो तस्मा लोका—अयं वुच्चति पुग्गलो अनागामी। *P. Paññatti*, p. 16.—ओरम्भागियानं ति ओरं वुच्चति कामधातु।···ओपपातिको ति उपपातयोनिको। इमिनास्स गब्भसेय्या पटिक्खित्ता। तत्थ

अत्र पुनर्यं एव पञ्चम ¹ स खलु

परिनिब्बायी ति तत्थ सुद्धावासलोके परिनिब्बायिता । अनावत्तिधम्मा तस्मा लोका ति पटिसन्धिग्गहणवसेन तस्मा लोका इध अनावत्तनसभावा । बुद्धदस्सनथेरदस्सनधम्मसवणान पन यायस्स आगमन अनिवारित । P Pannatti A p 36

¹ The five *anagamins* are

सोन्तरोत्पन्नसस्कारासस्कारपरिनिर्वृति ।
ऊर्ध्वस्रोताश्च Ak vi 37 abc

अन्तरापरिनिर्वायी यो अन्तराभवे परिनिर्वाति । उपपद्यपरिनिर्वायी य उपपन्नमात्रो न चिरात परिनिर्वात्यभियुक्तवाहिमार्गत्वात । साभिसस्कार परिनिर्वात्यभियुक्तवाहिमार्गत्वात । अनभिसस्कारपरिनिर्वायी त्वनभिसस्कारेणाभियोगवाहिमार्गभावात । ऊर्ध्वस्रोता यस्योर्ध्व गतिन तत्रव परिनिर्वाण यत्रोपपन्न । Akb vi 37 abc.

The Kośakara gives another view about the *sabhisamskara* and *anabhisamskara* —सस्कृतासस्कृतालम्बनमार्गनिर्वाणादित्यपरे । तत्तु न । अतिप्रसगात । सूत्रे त्वनभिसस्कारपरिनिर्वायी पूर्व पठ्यते । तथव च युज्यते । Akb vi 37 c

—सस्कृतासंस्कृतालबनमार्गपरिनिर्वाणादिति । सस्कृत सस्कार इत्यकोऽर्थ । एव मसस्कृतमसस्कार इति । सस्कारालम्बनेन मार्गेण दु खसमुदयमार्गालम्बनेन मार्गेण य क्लेशान प्रजहाति स साभिसस्कारपरिनिर्वायी । योऽसस्कृतालम्बनेन निरोधालम्बनेन सोऽनभिसस्कारपरिनिर्वायी ति । तत्तु न । अतिप्रसगात । अन्तरोपपद्यपरिनिर्वायिणोरप्यसस्कृतालम्बनमार्गपरिनिर्वाणात प्रत्येक साभिसस्कारानभिसस्कारपरिनिर्वायितव्यप्रसग । तत्रस्थौ द्वावेव पुद्गलौ स्याताम । न पञ्चेति । अनभिसस्कारपरिनिर्वायी पूर्वं पठ्यत इति । साभिसस्कारपरिनिर्वायिण पूर्वं पठ्यते तथव युज्यत इति कथम ? अयत्नयत्नप्राप्तितस्तत्परिनिर्वाणस्य यथाक्रममित्येव । Sakv p 559

This view of Kośakara attributed to Sautrantikas (see LVPAk vi p 212 n 1) agrees with the Sthaviravadins definitions of these two kinds of *anāgamins*

Cf कतमो च पुग्गलो अन्तरापरिनिब्बायी ? इधकच्चो पुग्गलो पञ्चन्न (V supra p 337 n. 4 तस्मालोका सो उप्पन्न वा समनन्तरा अप्पत्त वा वेमज्झ आयुप्पमाण अरियमग्ग सञ्जनति उपरिट्ठिमान सयोजनान पहाणाय—अय अन्तरापरिनिब्बायी ।

कतमो च पुग्गलो उपहच्चपरिनिब्बायी ? इधकच्चो पे तस्मा लोका सो अतिक्कमित्वा वेमज्झ आयुप्पमाण उपहच्च वा कालकिरिय अरियमग्ग सजनति उपरिट्ठिमान सयोजनान पहाणाय—अय उपहच्चपरिनिब्बायी ।

कतमो च पुग्गलो असङ्खारपरिनिब्बायी ? इधकच्चो पे तस्मा लोका सो असङ्खारेन अरियमग्ग सजनति उपरिट्ठिमान सयोजनान पहानाय अय 'असङ्खारपरिनिब्बायी ।

कतमो च पुग्गलो ससङ्खारपरिनिब्बायी ? इधकच्चो पे तस्मा लोका सो ससङ्खारेन अरियमग्ग सजनति अय ससङ्खारपरिनिब्बायी ।

कतमो च पुग्गलो उद्धंसोतो अकनिट्ठगामी ? इधेकच्चो पे तस्मा लोका सो

[ 426 ] ध्यानानि व्यवकीर्यातः पञ्चमस्त्वकनिष्ठगः ।[१]

शुद्धावासोपपत्तिः खलु ध्यानव्यवकरणफला ।[२]

चतुर्धाऽऽरूप्यगाम्यन्यो दृष्टनिर्वायकोऽपरः ॥[३]

ऊर्ध्वगस्यानागामिनः पञ्चधा भेद उक्तः । [आ]रूप्यगामी तु चतुर्धा निर्दिश्यते ,पूर्वोक्तेभ्यः अन्तरापरिणि(नि)र्वायि(२)णमपास्य । इत्येते षड्[४] भवन्ति । दृष्टधर्मनिर्वायकः सप्तम इहैव जन्मनि यः परिणि(नि)र्वाति ॥

[ 427 ] पुनस्त्रिधा त्रिधा कृत्वा त्रीनतो रूपगा नव ।[५]

एते खलु रूपोपगाः पञ्चानागामिनस्त्रयो भवन्ति । अन्तरोप[प]द्यपरि-

---

अविहा चुतो अतप्प गच्छति, अतप्पा चुतो सुदस्स गच्छति, सुदस्सा चुतो सुदस्सि गच्छति, सुदस्सिया चुतो अकनिट्ठ गच्छति, अकनिट्ठे अरियमग्ग सजनेति अय…उद्धसोतो अकनिट्ठगामी । *P Paññatti* pp 16 17

—उपहच्च कालकिरिय ति उपगन्त्वा कालकिरिय । आयुक्खयस्स आसन्ने ठत्वा ति अत्थो ।…असङ्खारससङ्खारपरिनिब्बायिनिद्देसेसु असङ्खारेन अप्पदुक्खेन अधिमत्तप्पयोग अकत्वा" । *P PaññattiA* p 36

See *Ang* II p 156, IV pp 70, 380, *S* V 201, *Vm* XXII 26 and *Sakv* pp 558 ff For fortyeight kinds of *anāgamins* see *P Paññatti A* pp 37 39

[१] Cf ऊर्ध्वस्रोताश्च स ध्याने व्यवकीर्णोऽकनिष्ठग । *Ak* VI 37 cd

On *dhyāna vyavakirana*, vide infra, p 344

[२] After this the Kośakāra gives more details about the *urdhvam srota* —

ऊर्ध्वस्रोता द्विविधो हेतुतश्च फलतश्च । हेतुतो व्यवकीर्णाव्यवकीर्णध्यानत्वात् । फलतोऽकनिष्ठभवाग्रपरमत्वात् । तत्र येन ध्यान व्यवकीर्णं सोऽकनिष्ठान् गत्वा परिनिर्वाति ।

स प्लुतोऽर्द्धप्लुत सर्वप्लुतश्च

स पुनरेषोऽकनिष्ठपरम ऊर्ध्वस्रोतास्त्रिविध । प्लुतादिभेदात् ।…एव तावद् ध्याने व्यवकीर्णे कनिष्ठगो वेदितव्य । तत

अन्यो भवाग्रग ।

अव्यवकीर्णध्यान ऊर्ध्वस्रोता भवाग्रनिष्ठो भवति ।…शमथचरितो ह्येष । पूर्वकस्तु विपश्यनाचरित ।" *Akb* VI 37 d and 38 ab

[३] Cf आरूप्यगश्चतुर्धाऽन्य इह निर्वायकोऽपर । *Ak* VI 38 cd

[४] षडिति । अन्तरा परिनिर्वायी उपपद्यपरिनिर्वायी साभिसस्कारपरिनिर्वायी अनभिसस्कारपरिनिर्वायी ऊर्ध्वस्रोता आरूप्यगश्च । षष्ठश्चतुर्धाभेदमगणय्येति । *Sakv* p 561

[५] Cf पुनस्त्रींस्त्रिविधान् कृत्वा नव रूपोपगा स्मृता । *Ak* VI 39 ab

णि(नि)र्वायिणमू(र्ध्व ?)र्ध्वस्रोताश्च। द्वितीयाद्या हि त्रयोऽणा(ना)गामिन सर्वे एवोपपद्य परिणि(नि)र्वायिणो भवन्ति । अ[3]नुपपन्नाना परिणि(नि)र्वाणात्। तेषा प्रत्येक त्(त्रि)धा भेदान्नवानागामिनो भवन्ति ।[1] कथमिति ? अन्तरा परिणि(नि)र्वायिणस्तावदुत्पतत एवादूर गत्वो[2]पपत्त्यासन्नीभूतस्य च परिणि(नि)र्वानि(ण)भेदात्। उपपद्यपरिणि(नि)र्वायिण उपपद्य साभिसस्कारण(न)भिसस्कारभेदादूर्ध्वस्रोतस प्लुतादिभेदात् ।[3]

तद्विशेष' पुनर्ज्ञेय कर्मक्ले[4]शादभेदत ॥[4]

तेषा पुनस्त्रयाणा नवाना वा अनागामिना कर्मक्लेशेन्द्रियभेदाद्यथायोग विशेषो बोद्धव्य । त्रयाणा[5] तावत्कर्मत , अभिनिर्वृत्त्यु[6]पपत्त्यपरपर्यायवेदनीय कर्मोपचितत्वात्। क्लेशत मृदुमध्याधिमात्रक्लेशसमुदाचारात्[7] । इन्द्रियतोऽधिमात्रमध्यमृद्विन्द्रियभेदात् ॥

यदि तर्हि क्लेशेन्द्रियभे[5]दान्नवानागामिनो भवन्ति, कथ सूत्रे सप्त सत्पुरुषगतयो देशिता ? तदपदिश्यते—

---

[1] Cf अन्तरापरिनिर्वायिणस्तावदाश्वनाशुचिरपरिनिर्वाणात दृष्टान्तत्रयेण । उपपद्य परिनिर्वायिण उपपद्याभिसस्कारानभिसस्कारपरिनिर्वाणात । ऊर्ध्वस्रोतस प्लुतादिभेदात । सर्वेषा वा त्रयाणामाश्वनाशुचिरपरिनिर्वाणादिति त्रिविधम् । *Sakv* p 561 *Akb* vi 39 ab See

[2] See *Ang* iv pp 70 ff V nfa p 341 n 2

[3] प्लुतादिभेदादिति । प्लुतार्धप्लुतसर्वच्युतभेदादित्यर्थ । *Sakv* p 562—तत्र प्लुतो नाम य इह ध्यानानि व्यवकीर्य ध्यानत्रयात परिहीण प्रथम ध्यानमास्वाद्य ब्रह्मकायिकेषूपपन्न पूर्वाभ्यासवशाच्चतुर्थ ध्यान व्यवकीर्य तस्मात प्रच्युतेऽकनिष्ठेषूपपद्यते । एष हि मध्यमनिमज्जनात प्लुत । अर्धप्लुतो नाम यस्तत शुद्धावासेषूपपद्य मध्यादेकमपि स्थानान्तर विलङ्घ्याकनिष्ठान् प्रविशति । सर्वच्युतो नाम य सर्वाणि स्थानान्तराणि सचार्याकनिष्ठान प्रविशति । *Akb* vi 38 a See *Sakv* p 560

[4] Cf तद्विशेष पुन कर्मक्लेशेन्द्रियविशेषत । *Ak* vi 39 cd

[5] अन्तरोपपद्यपरिनिर्वायिणो ऊर्ध्वस्रोतसश्च । *Sakv* p 562

[6] अभिनिर्वृत्तिरनन्तराभव । *Ibid*

[7] कथ पुनरेते नवप्रकारा क्लेशा भवन्ति ? इह क्लेशस्त्रिप्रकारो मृदुमध्याधिमात्रतर इति *Ibid* V supra p 165 n 2

[8] Cf त एते नवप्रकारकर्मक्लेशेन्द्रियभेदान्नवानागामिनो भवन्ति । कथ तर्हि सूत्रे सप्त सत्पुरुषगतयो देशिता ? *Akb* vi 39 cd

[ 428 ] षड्धोर्ध्वस्रोतसा सार्धं सप्तधा सद्गतिर्मता ।[1]

द्वौ सत्यज्ञानागामिनो त्रिधा त्रिधा भि(त्वा) षड्धा[2] व्यवस्थापितौ ।

---

[1] Cf ऊर्ध्वस्रोतुरभेदेन सप्तसगतयो मता । *Ak* 40 ab

[2] त्रयोऽन्तरापरिनिर्वायिण, त्रय उपपद्य-परिनिर्वायिण । *Saks* p 563

The Kosakara quotes the *Satpurusha gati sutra* in the connection of *antarabhava* in *Akb* III 12 d Yasomitra gives full details —सप्त वोऽहं भिक्षव सत्पुरुषगतीर्देशयिष्याम्यनुपादाय च परिनिर्वाणम । तच्छृणुथ सप्तसत्पुरुषगतय कतमा ? इह भिक्षुरेव प्रतिपन्नो भवति । नो च स्या नो च म स्यान्न भविष्यामि न मे भविष्यति यदस्ति यद्भूत तत्प्रजहामीत्युपेक्षा प्रतिलभते । स भवेऽस्मिन न रज्यते । स भवेऽस्मिन सज्यते । अथोत्तर पद शान्त प्रज्ञया प्रतिविध्यति । तच्चानन पद कायेन साक्षात्कृत भवति । एव प्रतिपन्नस्य भिक्षो का गति स्यात कोपपत्ति । कोऽभिसम्पराय इति स्यु प्रष्टार । तद्यथा भिक्षव परीत्त शकलिकाग्निरभिनिर्वर्तमान एव निर्वायात एवमेव तस्य ताव मानाव शयमप्रहीण भवत्यपरिज्ञातम । तस्य ताव मानावशयस्याप्रहाणादपरिज्ञातात्पञ्चानामवरभागीयाना सयोजनाना प्रहाणादन्तरा परिनिर्वायी भवति । इय प्रथमा सत्पुरुषगतिराख्याता ।

पुनरपर तद्यथाऽयागुडाना वाऽय फालाना वा प्रदीप्ताग्निसप्रतप्ताना अयाघनेन हन्य मानानामय प्रपाटिका उत्पतन्त्येव निर्वायात । एवमेव अन्तरा परिनिर्वायी भवति ।

पुनरपर अय प्रपाटिका उत्प्लुत्यापतित्वेव पृथिव्या निर्वायात । एवमेव अन्तरा परिनिर्वायी भवति ।

पुनरपर अय प्रपाटिका उत्प्लुत्य पतितमात्रैव पृथिव्या निर्वायात । एवमेव उपपद्यपरिनिर्वायी भवति ।

पुनरपर अय प्रपाटिका उत्प्लुत्य परीत्त तृणकाष्ठ निपतत । सा तत्र धूममपि कुर्यात । अर्चिरपि मजनयत । सा तत्र तदेव परीत्त तृणकाष्ठ दग्ध्वा पर्यादाय निरुपा दाना निर्वायात । एवमेव अनभिसस्कारपरिनिर्वायी भवति ।

पुनरपर अय प्रपाटिका महति विपुले तृणकाष्ठे निपतेत । एवमेव साभिसस्कार परिनिर्वायी भवति ।

पुनरपर अय प्रपाटिका उत्प्लुत्य महति विपुले तृणकाष्ठ निपतेत विपुल तृणकाष्ठ दग्ध्वा ग्राममपि ग्रामप्रदेशमपि नगर नगरप्रदेशमपि जनपद षण्डमपि दहेत । दग्ध्वा निर्वायात । एवमेव ऊर्ध्वस्रोता भवति । इय सप्तमी सत्पुरुषगतिराख्याता । *Sakv* pp 270—1

Cf सत्त भिक्खवे पुरिसगतियो देसिस्सामि ।

इध भिक्खवे भिक्खु एव पटिपन्नो होति नो च' स्स नो च मे सिया, न भविस्सति न मे भविस्सति यदत्थि य भूत त पजहामी ति उपेक्ख पटिलभति । सो भवे न रज्जति, सभवे न रज्जति अथुत्तरि पद सन्त सम्मप्पञ्ञाय पस्सति तञ्च ख्वस्स पद न सब्बेन सब्ब

तृतीयस्तूर्ध्वस्रोताऽनाकुलीकरणार्थमभेदेनैवोक्तः । इति सप्तधा देशिता सत्पुरुषगतिः ।[१]

---

संच्छिन्न होति, तस्स न मन्न सन्न मान भवराग अविज्जानुसयो पहीनो होति । सो पञ्चन्नं ओरम्भागियानं संयोजनानं परिक्खया अन्तरापरिनिब्बायी होती ।

सेय्यथापि भिक्खवे दिवससन्तत्त अयोकपाले हञ्ञमाने, पपटिका निब्बत्तित्वा निब्बायेय्य, एवमेव अन्तरापरिनिब्बायी होति । एव पप्पिनो पपटिका निब्बत्तित्वा उप्पतित्वा निब्बायेय्य, एवमेव अन्तरापरिनिब्बायी होति । एवपटिपनो पपटिका निब्बत्तित्वा उप्पतित्वा अनुपहच्चतल निब्बायेय्य एवमेव अन्तरापरिनिब्बायी होति ।

एव पप्पिनो पपटिका निब्बत्तित्वा उप्पतित्वा उपहच्चतल निब्बायेय्य एवमेव उपहच्चपरिनिब्बायी होति ।

एव पप्पिना पपटिका उप्पतित्वा परित्ते तिणपुञ्जे वा कट्ठपुञ्ज वा निपतेय्य, सा तत्थ अग्गि पि जनेय्य धूम पि अनाहारा निब्बायेय्य एवमेव ··असङ्खारपरिनिब्बायी होति ।

एव पप्पिना पपटिका विपुले तिणपुञ्जे अनाहारा निब्बायेय्य, एवमेव अनाहारा ससङ्खारपरिनिब्बायी होति ।

एव पप्पिना पपटिका महन्ते तिणपुञ्जे तिणपुञ्ज परियादियित्वा गच्छम्पि दायम्पि भूमिभाग आगम्म अनाहारा निब्बायेय्य, एवमेव उद्धसोतो होति अकनिट्ठगामी ।

इमा खो भिक्खवे सत्त सप्पुरिसगतियो । *Ang* IV pp 70-4

See *P Pannatti A* pp 36-39

[१] Cf सप्त सत्पुरुषगतयो नाया इति । यत्तर्हि सूत्र एवोक्तम—'सत्पुरुष कतम ? शैक्ष्य सम्यग्दृष्ट्या समन्वागत' इति विस्तर । *Akb* VI 40 cd.

—नाया गैमा गतय इति । न स्रोतापन्नसकृदागामिगतय इत्यर्थं । गतिरुत्पत्ति सम्पराय इत्यत सूत्र पर्याया उच्यन्ते । *Skav* p 563

The term *satpurusha* is equal to *arya* सप्पुरिसानं दस्सावी अरियानं दस्सावी *M sutta* I Buddhaghosha speaks of the following seven *aryas* — ये पन वुत्त सत्तअरियपुग्गलविभागाय पच्चया होन्ती ति तत्थ, सद्धानुसारी, कायसक्खी उभतोभागविमुत्तो धम्मानुसारी दिट्ठिप्पत्तो, पञ्ञाविमुत्तो ति इमे ताव सत्त अरियपुग्गला ।

यो हि अनिच्चतो मनसिकरोन्तो अधिमोक्खबहुलो सद्धिन्द्रिय पटिलभति, सो सोतापत्तिमग्गक्खणे सद्धानुसारी होति सेसेसु सत्तसु ठानेसु सद्धाविमुत्तो । यो पन दुक्खतो मनसिकरोन्तो पस्सद्धिबहुलो समाधिन्द्रिय पटिलभति, सो सब्बत्थ कायसक्खी नाम होति । अरूपज्झानं पन पत्वा अग्गफलप्पत्तो उभतोभागविमुत्तो नाम होति । यो पन अनत्ततो मनसिकरोन्तो वेदबहुलो पञ्ञिन्द्रिय पटिलभति, सो सोतापत्तिक्खणे धम्मानुसारी होति, छसु ठानेसु दिट्ठिप्पत्तो, अग्गफले पञ्ञाविमुत्तो ति । *Vm* XXI. 74—5

See *P Pannatti*, pp 14-15 See *puristamagga Ang* II. pp 217 ff, *Digha*, XXXIII. 2. 3 and *Netti* p. 169

कस्मात् पुनः स्रोतआपन्न(6)सकृदागामिनोः सत्पुरुषगतिर्न देशिता सत्पु[रु]षसूत्रोद्देशे लक्षणेऽपि सति तदुच्यते—

सति वृत्तेरणे(नै)र्याणादुक्तैषामेव सद्गतिः ॥[1]

यस्मादनागामिनः सत्येव वृत्तिर्भवति नासती ।[2] इतरयोस्तु कुशलाकुशले वृत्तिः । यस्माच्चानागामी यतो गतस्तत्र न पुनरागच्छति, तौ तु गतागती कुर्वाते तस्मा(7)त्तस्यैव स(सा) गतिर्देशिता नेतरयोरिति[3] ॥

किं पुनः परावृत्तजन्माप्यनागामी[4] सत्पुरुषगतौ व्यवस्थापितः ? नेत्याह । यस्मात्—

[429] परावृत्तभवो ह्यार्यो नेह धात्वन्तरोपगः ।[5]

रूपधातौ हि परावृत्तजन्मनः आर्यस्य धात्वन्तरगमनेऽस्ति संभवः । कामधातौ तु परावृत्तजन्माऽऽर्यो न धात्वन्तरं गच्छति तत्रैव जन्मनि (8)परिणि(नि)र्वाणात्[7] ।[8]

---

[1] Cf. सदसद्वृत्त्यवृत्तिभ्यां गतप्रत्यागतैश्च ताः । *Ak.* vi. 40 cd.

[2] सति च कर्मणि वृत्तिः प्राणातिपाताद्यकरणात् । असति चावृत्तिरब्रह्मचर्याद्यकरणात् । अकुशलेन हि चित्तेनाब्रह्मचर्यादिकरणमिति । तेषां तु वीतरागाणां सत्येव कर्मणि वृत्तिर्नासति परिहीणाकुशलत्वात् । *Sakv.* p. 563. See *Kv.* xii 8 and 9.

[3] After this the *Akb.* (vi. 40 cd) has : अन्येषामप्यस्ति पार्यायिकं सत्पुरुषत्वम् । पञ्चविधस्य पापस्यात्यन्तमकरणसंवरप्रतिलम्भात् प्रायेणाकुशलप्रहाणाच्च । येषां तु निष्पर्यायेण तेषामिह [=सत्पुरुषगतिसूत्रे] अधिकारः ।

[4] परिवृत्तजन्मा in *Akb*—परिवृत्तजन्माऽनागामी यः प्रथमे जन्मनि स्रोतापत्तिफलं सकृदागामिफलं वा प्राप्य द्वितीये जन्मन्यनागामी भवति । *Sakv.* p. 564.

[5] Cf. न परावृत्तजन्मार्यः कामे धात्वन्तरोपगः । *Ak.* vi. 40 cd.

[6] Cf. रूपधातौ तु परावृत्तजन्मा कदाचिदारूप्यान् प्रविशति । य ऊर्ध्वंस्रोता भवाग्रपरमः । *Akb.* vi. 40 cd.

[7] तत्रैव जन्मनि परिनिर्वाणादिति । कामधातौ दुःखबहुलत्वेनास्य तीव्रसंवेगत्वात् । *Sakv.* p. 564.

[8] After this, the Kośakāra discusses one more point :—यत्तर्हि शक्रेणोक्तम्—'ये ते देवा अकनिष्ठा इति विश्रुताः अन्ते मे हीयमानस्य तत्रोपपत्तिर्भविष्यति ।' अभिधर्मानभिज्ञत्वादिति वैभाषिकाः । भगवताप्यनिवारणं संहर्षणीयत्वादिति । *Akb.* vi. 40 cd —च्युतिनिमित्तोपपत्तिदुःखोद्विग्नस्य संप्रहर्षणीयत्वादित्याचार्यसंघभद्रः । *Sakv.* p. 565.

यच्चैव कामधातौ परिवृत्तजन्माऽऽर्य उक्त

एष चोर्ध्वगतिश्चैव नाक्षम चारहाणि(नि)भाक् ॥[१]

ऊर्ध्वधातूपपन्न ऊर्ध्वगतिरार्य इत्यपि कृतं द्वयोरप्यण(न)योर्णा(र्ना)स्तीन्द्रियसचारो न परिहाणि[२]। जन्मान्तरपरिवासेनार्यमार्गस्य सन्ततौ दृढतरणि(नि)वेशात्, आश्रयविशेषलाभादार्यस्य[३] (?)जन्मान्तरे रूपारूप्यप्रवेशेन्द्रियसचारपरिहाण्यो न सन्ति ॥[४]

अथ यदुक्तं ध्यानव्यवकिरणादिति[५] तत्र कतमद्ध्यानमादौ व्यवकीर्यते ?

[ 430 ] अन्त्यमाकीर्यते पूर्वं सिद्धिर्द्विक्षणमिश्रणात् ।[६]

चतुर्थे हि प्रश्रब्धिसुखोत्कट समाधि सर्वकर्मण्यो यतस्तत्समुखीभावात् आश्रयस्योपचये सत्यामृताभिवृद्धि [VII 7 B Fol 130 b ]येन शक्नोति ध्यानानि व्यवकरितुम् ।

कथ पुनर्ध्यानानि व्यवकीर्यन्ते ? आदौ तावदनास्रव प्रवाहयुक्त चतुर्थ ध्यान समापद्यते[७]। तस्माद्व्युत्थाय तदेव सास्रव प्रवाहयुक्त समापद्यते।

---

[१] Cf न चोध्वजश्च नवाक्षसचारपरिहाणिभाक। *Ak* VI 41 ab

[२] For *ind ya sam hara* and *par han* see *Akb* VI 57 c 60 and *Sakv* p 583 592.

[३] Cf जन्मान्तरपरिवासेनेन्द्रियाणा परिपक्वतरत्वादाश्रयविशेषलाभाच्च *Akb* VI 41 ab —इन्द्रियाणा परिपाकतरत्वादिति प्रज्ञादीनामिन्द्रियाणा निष्यन्दफलपुष्टिविशेषादित्यथ। आश्रयविशेषलाभाच्च। यस्माच्चान्यविशेषमनुप्रहृत्त मार्गसम्मुखीभावानकूल प्रतिलभते। दृश्यन्ते हि तीक्ष्णन्द्रिया अपि सन्त आश्रयवगुण्याद गणभ्य परिहीयमाणा इत्यतो जन्मान्तरपरिवासेनन्द्रियाणा परिपाकतरत्वादिन्द्रियसचारो नास्ति आश्रयविशेषलाभाच्च परिहाणिर्नास्ति। अननव जन्मान्तरपरिवासेन धान्यन्तरगमन भवतीति। *Sakv* p 565

[४] Af er th s the Kośaka a deals w h one mo e po n अथ कस्माद वीतराग शक्षो नान्तराये परिनिर्वायी भवति ? मार्गस्याजितत्वादसम्मुखीभाव अनुशयाना च नातिमन्दत्वात्। दु समतिक्राम त्वात् कामधातोरिति वभाषिका। *Akb* VI 41 cd — अनुशयानां च नातिमन्दत्वात् इत्ययमाचार्यस्य परिहार। *Sakv* p 565

[५] V supra p 339 n 3

[६] Cf आकीर्यते चतुर्थ प्राग्निष्पत्तिक्षणमिश्रणात्। *Ak* VI 42 ab

[७] अहन्ननागामी वा समापद्यते। *Akb* VI 42 a

पुनश्च तदुत्थितः अनास्रवं तथैव स तान् प्रवाहान्ह्रसित्वा 'याव[त्क्षण]द्वये तिष्ठतीत्येष प्रयोगः ।[१]

सिद्धिस्तु क्षणद्वयमिश्रणात् । यदा तु (2)शक्नोत्येकेनास्रवक्षणानन्तरमेकं लौकिकं संमुखीकर्तुम्, एकलौकिकक्षणानन्तरं चैकमनास्रवमयत्नेन, एवमनास्रवाभ्यां सास्रवस्य मिश्रीकरणान्निष्पन्ना भवति ध्यानव्यवकिरणा[२]।

किमर्थं पुनर्ध्यानव्यवकिरणम् ? तदुच्यते—

उद्भवार्थं सुखार्थं च क्लेशाशङ्कार्थमेव च ॥[३]

त्रिभिः कारणैर्ध्यानानि व्य(3)वकीर्यन्ते। उपपत्त्यर्थं[४] सुखविहारार्थं[५] क्लेशपरिहाणिभीरुतया[६] च । तत्र दृष्टिप्राप्तः[७] उपपत्त्यभिलापसमापत्तिप्रियताभ्याम् । श्रद्धाधिमुक्तस्तु[८] पूर्वाभ्यां च कारणाभ्यां क्लेशभीरुतया च।

---

[१] Cf.···एव प्रवाहापह्रासेन यदा किल द्वौ क्षणावनास्रवौ द्वौ सास्रवौ पुनश्चानास्रवौ । अथ व्यवकरणस्य प्रयोग ।···अशक्य तु क्षणव्यवकिरणमन्यत्र बुद्धात् । अत इच्छातः प्रवाहत्रयसमापत्तितो निष्पन्न भवतीति पश्यामः । *Akb* VI. 41 ab.

—'यदा किले'ति किलशब्दो वैभाषिकमतद्योतकः । स्वमतं तु···'अशक्य तु क्षणव्यवकिरणमिति विस्तरेण । *Sakv.* p. 565.

[२] Cf. यदा त्वनास्रवस्य क्षणस्यानन्तर मास्रव सम्मुखी करोति सास्रवस्यानास्रवम् । एव सास्रवस्य क्षणस्यानास्रवाभ्या मिश्रणात् व्यवकिरणं निष्पन्न भवतीति वैभाषिकाः । द्वौ हि क्षणावानन्तर्यमार्गसदृशौ तृतीयो विमुक्तिमार्गसदृश इति । एव चतुर्थं ध्यान व्यवकीर्य तद्बलेनान्यान्यपि व्यवकीर्यन्ते । *Akb.* VI. 42 b —आनन्तर्यमार्गसदृशाविति अनास्रवसास्रवौ ।···विमुक्तिमार्गसदृश इत्यनास्रव । *Sakv.* p 565.

[३] Cf. उपपत्तिविहारार्थं क्लेशभीरुतयापि च । *Ak.* VI. 42 cd.

[४] शुद्धावासोपपत्त्यर्थम् । *Sakv.* p. 565

[५] दृष्टधर्मसुखविहारार्थम् । *Ibid*

[६] अपरिहाण्यर्थमिति फलान परिहीयेयमिति । *Ibid.* p. 566.

[७] कतमो च पुग्गलो दिट्ठिप्पत्तो ? इधेकच्चो पुग्गलो इद दुक्ख ति···समुदयो ति··· निरोधो ति···पटिपदा ति यथाभूत पजानाति, तथागतप्पवेदिता च'स्स धम्मा पञ्ञाय वोदिट्ठा होन्ति वोचरिता, पञ्ञाय च'स्स दिस्वा एकच्चे आसवा परिक्खीणा होन्ति···अय···दिट्ठिप्पत्तो । *P. Paññatti.* p 15

[८] कतमो च पुग्गलो सद्धाविमुत्तो ? इधेकच्चो···इद दुक्ख ति···पे···एकच्चे आसवा परिक्खीणा होन्ति, नो च खो यथा दिट्ठिप्पत्तस्स, अय वुच्चति पुग्गलो सद्धाविमुत्तो । *Ibid*

असमयविमुक्तो[1]ऽप्यर्हन् दृ(दृ)ष्टधर्मसुखविहारार्थम्[2]। समयविमुक्तश्च[3] क्लेशमात्रतया चेति ॥

यच्चैतद्ध्यानव्यवकिरणमुक्तम्,

[431] [(4)]तत्पाञ्चविध्यतः पञ्च शुद्धावासप्रसूतः स्मृताः[4] ।

तद्धि चतुर्थध्यानव्यवकिरण पञ्चप्रकारं मृदुमध्याधिमात्रतरमधिमात्रत मभेदात्। अतो हेतुपाञ्चविध्यात् फलमपि पञ्चविधं भवति।[5]

एताः पुनः शुद्धावासभूमयः

न जातु दृष्टपूर्वास्ताः सर्वैरपि पृथग्जनैः ॥

---

—सद्धाविमुत्तनिद्देसे नो च यथा दिट्ठिप्पत्तस्सा ति यथा दिट्ठिप्पत्तस्स आसवा परिक्खीणा न एव सद्धाविमुत्तस्सा ति अत्थो। किं पन नेसं किलेसप्पहाने नानत्तं अत्थी ति? नत्थि। अथ कस्मा सद्धाविमुत्तो दिट्ठिप्पत्तं न पापुणाती ति? आगमनीयनानत्तेन। दिट्ठिप्पत्तो अप्पदुक्खेन अपकसिरेन सद्धाविमुत्तो पन दुक्खेन कसिरेन किलेसे विक्खम्भेतुं सक्कोति। तस्मा दिट्ठिप्पत्तं न पापुणाति। अपि च नेसं पञ्ञाय पि नानत्तं अत्थि येव। दिट्ठिप्पत्तस्स हि उपरिमग्गत्तयेसु विपस्सनाञाणं तिक्खं सद्धाविमुत्तस्स नो तिक्खं। *P Paññatti A* p 32.

[1] कतमो च पुग्गलो असमयविमुत्तो? इधेकच्चो पुग्गलो न हेव खो कालेन कालं समयेन समयं अट्ठविमोक्खे कायेन फस्सित्वा विहरति। पञ्ञाय चस्स दिस्वा आसवा परिक्खीणा होन्ति। अयं वुच्चति पुग्गलो असमयविमुत्तो। *P Paññatti* p 11—असमयविमुत्तो ति पन सुक्खविपस्सकखीणासवस्सेतं नामं। *P Paññatti A* p 22.

[2] Cf *Diṭṭhadhammasukha-vihāra Dīgha* xxxiii 1 11 *Aṅg* iv p 362.

[3] कतमो च पुग्गलो समयविमुत्तो? इधेकच्चो पुग्गलो कालेन कालं समयेन समयं अट्ठविमोक्खे कायेन फस्सित्वा विहरति। पञ्ञाय चस्स दिस्वा एकच्चे आसवा परिक्खीणा होन्ति। *P Paññatti* p 11—अट्ठविमोक्खे ति रूपावचरारूपावचरा अट्ठ समापत्तियो। समयविमुत्तो ति पन तिण्णं सोतापन्नसकदागामिअनागामीनं एवेतं नामं। *P Paññatti A* p 21

[4] Cf. तत्पाञ्चविध्यात्पञ्चैव शुद्धावासोपपत्तयः। *Ak.* vi 43 ab

Also cf अविहा अतप्पा सुदस्सा सुदस्सी, अकनिट्ठा चेति सुद्धावासभूमि पञ्चविधा होन्ति। *A Saṅgaho* v 6

[5] The *Vyākhyā* gives one more view —श्रद्धादीन्द्रियाधिकानां पञ्चेत्यपरे। एवं यावत् प्रज्ञाधिकाया भावनाया अकनिष्ठाः फलमिति। श्रद्धाधिकाया भावनाया अवृहाः फलम्। *Sakv* p 566

भवाग्रमुपादाय ब्रह्मलोकमिन्द्रलोक (5)यावदवीचिमुपादाय सर्वबाल पृथग्जनैर्दृ(रद)ष्टपूर्वमन्यत्र शुद्धावासेभ्य इति ॥

अभिधमप्रदीपे[1] विभाषाप्रभायां वृत्तौ षष्ठस्याध्यायस्य द्वितीय पाद ॥



[1] Here the Text is called *Pradipa* At the end of the fourth *pada* of the Seventh *Adhyaya* and the third *pada* of the E ghth *Adhyaya* also it is called *Pradipa* V infra *Adv kartka* 531 and 585 Elsewhere it is uniformally called *Dipa* and the author of the Text is called *Dipakara* V supra p 169

## तृतीयपादः ।

[432] यो निरोधसमापत्तिमश्नुते कायसाक्ष्यसौ ।[1]

य' खलु निरोधसमापत्ति[2]लाभ्यनागामी[3]स कायसाक्षी[4]त्युच्यते ।

---

[1] Cf निरोधलाभ्यनागामी कायसाक्षी पुनर्मत । *Ak* vi 43 cd.

[2] V supra pp 93 ff On *nirodha samapatti* see *Vm* xxiii 16—52.

[3] श्रद्धाधिमुक्तो वा दृष्टिप्राप्तो वा [अनागामी] *Sakv* p 566

[4] कायसक्खी कायसक्खी ति आवुसो वुच्चति । कित्तावता नु खो आवुसो कायसक्खी वुत्तो भगवता ति ?

इधावुसो भिक्खु विविच्चेव कामेहि पठम चतुत्थ झान उपसम्पज्ज विहरति यथा यथा च तदायतन तथा तथा न कायेन फस्सित्वा विहरति । एत्तावता पि कायसक्खी वुत्तो भगवता परियायेन ।

पुन च पर आवुसो भिक्खु सब्बसो नेवसञ्ञा नासञ्ञायतन समतिक्कम्म सञ्ञा वेदयितनिरोध उपसम्पज्ज विहरति, पञ्ञाय चस्स दिस्वा आसवा परिक्खीणा होन्ति यथा यथा च तदायतनं तथा तथा न कायेन फस्सित्वा विहरति । एत्तावता पि खो आवुसो कायसक्खी वुत्तो भगवता निप्परियायेना ति । *Ang* iv pp 451 2.

—कायेन फस्सित्वा ति सहजातनामकायेना ति अत्थो । निप्परियायेना ति यत्तक कायेन सक्खिकातब्ब सब्बस्स कतत्ता अय निप्परियायेन कायसक्खी । *Ang A* iv p 206

कतमो च पुग्गलो कायसक्खी ? इधेकच्चो पुग्गलो अट्ठविमोक्खे कायेन फस्सित्वा विहरति पञ्ञाय चस्स दिस्वा एकच्चे आसवा परिक्खीणा होन्ति—अय कायसक्खी । *P Paññatti* p 14 —कायसक्खी निद्देसे एकच्चे आसवा ति हेट्ठिममग्गत्तयवज्झा । काय सक्खी फुट्ठन्त सच्छिकरोतीति कायसक्खी । झानफस्स पठम फुसति । पच्छा निरोध निब्बानं सच्छिकरोतीति कायसक्खी । *P Paññatti A* p 30

Also cf अष्टभूमिषु वैराग्याल्लभते निरोधसमापत्तिमित्युच्यते कायसाक्षी अनागामी । विमुक्तश्चेदहदर्ममिव निर्वाणं कायेन स्पृशति पञ्चावरभागीयाना संयोजनाना प्रहाणे प्राप्नोत्य नागामित्वम् । पञ्चोर्ध्वभागीयाना संयोजनाना प्रहाण प्राप्नोत्यर्हत्त्वम् । *Aam* p 86

कायसाक्षीति अर्हत्त्वप्रतिपन्नकोऽनागामी निरोधलाभी कायसाक्षी । तद्वदबुद्धत्वप्रति पन्न वेनायमत्रैव कायसाक्षी । *Aaa* pp 442-3

निर्वाण(6)सदृशस्य धर्मस्य कायेण(न) साक्षात्करणात् ।[1] स खलु धर्मं कायाश्रयेणोपजायते । तस्मात्तिलाभादपि निरोधलाभीत्युच्यते ।[2]

भवाग्राष्टांशहा यावदर्हत्त्वप्रतिपन्नकः ॥[3]

प्रथमध्यानवैराग्यादेकप्रकार[4]मारभ्य यावद्भवाग्राष्टप्रकारप्रहाणादर्हत्त्वप्रतिपन्नको[5]द्रष्टव्यः ॥

[ 433 ] [6]यश्चानन्तर्य(7)मार्गेऽन्त्ये वज्रौपम्याह्वये[7]स्थितः ।

॥

[1] The Kosakara discusses this point in detail —कथं पुन कायेन साक्षात्करोति । चित्ताभावात् कायाश्रयोत्पत्ते । एव तु भवितव्यम् । स हि तस्माद् व्युत्थाया प्रतिलब्धपूर्वा सविज्ञानका कायशान्ति प्रतिलभते । यतोऽस्यैव भवति शान्ता बत निरोधसमापत्तिनिर्वाणसदृशी बत निरोधसमापत्तिरिति । एवमनेन तस्या शान्तत्व कायेन साक्षात्कृत भवति । प्राप्तिज्ञानसाक्षात्क्रियाभ्या प्रत्यक्षीकारो हि साक्षात्क्रिया । *Akb* vi 43 cd

—'चित्ताभावात्' कायनैव साक्षात्करोति । कथ कायेनैवेत्याह—'कायाश्रयोत्पत्ते' 'एव तु भवितव्य'मिति स्वमतमाचार्यस्य । *Sakv* p. 566 See *LVPAk.* vi p 224, n. 2 See *Vm* xviii. 31

[2] Here the Kośakāra deals with one more point —अष्टादश शैक्षा इत्यत्र सूत्रे कि कारण कायसाक्षी नोक्त ? He also enumerates various kinds of *anagamins*— 'इत्यभिसमस्य सर्वे चत्वारिंशद्भूतानि त्रयोदशसहस्राण्यनागामिना भवन्ति । *Akb* vi. 43 cd. See *Sakv* pp 566-68 and *P Pannatti A* pp 36 37

[3] Cf आ भवाग्राष्टभागक्षिदर्हत्त्वे प्रतिपन्नक । *Ak.* vi. 44 ab

[4] Cf. प्रथमध्यानैकप्रकारवैराग्यमारभ्य । *Akb* vi 44 ab —यस्मात् कामवैराग्यादनागामी व्यवस्थाप्यते तस्मात्तत परेणार्हत्त्वफलप्रतिपन्नको भवति । *Sakv* p 568

[5] रूपराग-अरूपराग मान-उद्धच्च-अविज्जाय अनवसेसप्पहाणाय पटिपन्नो पुग्गलो अरहत्तफलसच्छिकिरियाय पटिपन्नो । *P Pannatti* p 18

[6] Cf नवमस्याप्यानन्तर्यपथे वज्रोपमश्च स । *Ak.* vi 44 cd

[7] यथा वज्र सर्वं भिनत्ति एवमय समाधि सर्वमनुशय भिनत्तीति सामर्थ्याद्वज्रोपमा अस्यति वज्रोपम । भिन्नत्वादसौ न सर्वा भिनत्ति । त्रैधातुकान् दर्शनप्रहातव्यान् भावनाप्रहातव्यांश्च कामावचरान् यावद्भावाग्रिकानष्टौ प्रकारान् ।' सर्वांस्तु भेत्तु समर्थ'इति सम्भवम् *Sakv* p 568

Cf कतमो च पुग्गलो वजिरूपमचित्तो ? इधेकच्चो आसवान खया अनासव चेतोविमुत्ति पञ्ञाविमुत्ति दिट्ठेव धम्मे सय अभिञ्ञा सच्छिकत्वा उपसम्पज्ज विहरति । सय्यथापि नाम वजिरस्स नत्थि किञ्चि अभेज्ज मणी वा पासाणो वा, एवमेव अय वुच्चति पुग्गलो वजिरूपमचित्तो । *P Pannatti* p 30 —'वजिर विय हि अरहत्तमग्गञाण दट्ठब्ब, मणिगण्ठिपासाणगण्ठि विय अरहत्तमग्गवज्झा किलेसा । 'वजिरेन निब्बिद्धवलस्स पुन अपटिपूरण विय अरहत्तमग्गेन छिन्नान किलेसान पुन अनुप्पादो दट्ठब्बो । *P Pannatti A* p 47

For details and other references, see *LVPAk.* vi. p 228

नवमस्यापि भावाग्रिकस्य प्रकारस्य प्रहाणायानन्तर्यमार्गे[१]ऽन्त्येऽन्त्य फलप्रतिपन्नक एवावगन्तव्य ।[२]

तत्फलार्थं क्षयज्ञानं तदेकालम्बनं न वा ॥[३]

तस्य वज्रोपमस्य समाधेर्बलादुत्थित तद्बलोत्थमन्त्यविमुक्तिमार्गाख्यं[४] तेन सहैकालम्बन भवति न वा । क्षयज्ञानस्य[५] चतु (8)सत्यालम्बनत्वात् ॥

[ 434 ] तदवाप्तेरशैक्षो[६]ऽसावर्हंस्त्रैलोक्यसत्कृतः ।
सर्वक्लेशनिसंयुक्तः शिक्षात्रितयपारगः ॥[७]

स खलु त्रयाणामास्रवाणा[८] निरवशेषप्रहाणात्तिसृणा च शिक्षाणां[९] पारगमनात् सब्रह्मकस्यापि लोकस्य पूजामर्हतीत्यर्हन्निरुच्यते ॥[१०]

---

१ आनन्तर्यमार्गो वज्रोपम समाधिरित्युच्यते । *Akb* vi 44 cd. Also cf रूप्यधातो संयोजनबन्धनाना निरवशेषप्रहानमुच्यते चित्तसमता वज्रोपमसमाधि । *Aam* p 86

२ The Kośakara enumerates several kinds of the *Vajropamasamadhi* — वज्रोपमाना तु बहुभेद वर्णयन्ति । त इम ज्ञानाकारालम्बनभेदभिन्ना द्वापञ्चाशद्वज्रोपमा भवन्ति । पुनर्गोत्रेन्द्रियभेदात भूयासो भवन्ति । *Akb* vi 44 cd —दशसहस्राण्यष्ट पष्ट्युत्तराणि च त्राणि शतानि वज्रोपमाना भवन्तीति । *Sakv* p 573

३ Cf तत क्षयाप्त्या क्षयज्ञानम । *Ak.* vi 45 a

४ वज्रोपमसमाधेरनन्तर पश्चिमो विमुक्तिमार्ग । अत एव तत क्षयज्ञान । *Akb* vi. 45 a

५ वज्रोपमसमाधि । क्रमेण क्षयज्ञान जायते । एतस्मिन काले अर्हत्फल भवाग्रोत्तर । अपि सर्वरागानन्तर्यमार्ग पश्चिमशैक्षचित्त । इति वज्रोपमसमाधिक्रमेण प्रथम भवाग्रोदयस्य क्षयज्ञानं जायते— प्रहीणा मे जाति प्राप्त मयार्हत्त्व क्षीणा मे सर्वसंयोजनक्लेशो पश्लेशा । इत्युच्यते अर्हन् । *Aam* p 86 V infra *Adv karika* 441 and 447

कतमो च पुग्गलो सेक्खो ? चत्तारो मग्गसमङ्गिनो तयो फलसमङ्गिनो पुग्गला सेक्खा । अरहा असेक्खो अवसेसा पुग्गला नेव सेक्खा नासेक्खा *P Pannatti* p 14

७ Cf अशैक्षोऽर्हन्नसौ तदा । *Ak.* vi. 456

८ V supra p 297 n. 1

९ शिक्षात्रय इति अधिशीलमधिचित्तमधिप्रज्ञ च । ता पुन शीलसमाधिप्रज्ञास्वभावा । *Akb* vi 45 b The Kośakara deals with this topic in detail See *LVPAk.* vi. p 230 V supra p 196 n 6

१० यस्स पुग्गलस्स रूपरागो अरूपरागो मानो उद्धच्चं अविज्जा अनवसेसा पहीणा- अय अरहा । *P Paññatti* p 180

एषां पुनस्त्रयाणां मार्गाणां कतमः सास्रवो कत(?)मो निरास्रवः ? तदुच्यते—

[ 435 ] भावनाख्यो द्विधा मार्गः समलामलभेदतः ।[1]
दर्शना(ना)ख्यस्तु विज्ञेयः सर्वस्यैव निरास्रवः ॥

[ 436 ] आनुपूर्विकयद्भूयोवीतरागावीतरागाणाम् ।
(-वीतावीतरागिणाम् )[2]
अशैक्षाख्योऽपि बोद्धव्यो नित्यमेवामलीमसः ॥

कतमत्पुनः कतमां भूमिमत्येति ? तदपदिश्यते—

[ 437 a ] भवाग्रं निर्मलोऽत्येति[3]······ [ Folios 131-133 lost ][4]

---

Cf आरकत्ता हतत्ता च किलेसारीन सो मुनि ।
हतसंसारचक्कारो पच्चयादीन चारहा ।
न रहा करोति पापानि, अरह तेन वुच्चती ति ॥ *Vm* vii 25

[1] Cf द्विविधो भावनामार्गो दर्शनाख्यस्त्वनास्रव । *Ak.* vi 1 cd

भावनामार्गो द्विविधो लौकिको लोकोत्तरश्च । दर्शनमार्गस्तु लोकोत्तर एव त्रैधातुकप्रतिपक्षत्वात् । नवप्रकाराणां दर्शनहेयानां सकृत्प्रहाणाच्च । *Akb* vi 1 cd

Also cf भावनामार्ग कतम ? दर्शनमार्गादूर्ध्वं लौकिको मार्गो लोकोत्तरमार्ग मृदुमार्गो मध्यमार्गोऽधिमात्रो मार्ग प्रयोगमार्ग आनन्तर्यमार्ग विमुक्तिमार्ग विशेषमार्गश्च । लौकिको मार्ग कतम ? लौकिक प्रथम ··नैवसंज्ञानासंज्ञायतन च । लोकोत्तरो मार्ग कतम ? दु खसमुदयनिरोधमार्गज्ञानानि धर्मज्ञानान्वयपक्ष्याणि तैश्च सप्रयुक्त समाधि · । *Asm* p 68

[2] For *anupūrvika* and *bhuyo-vītaraga*, v supra, pp 57-58

[3] Cf लोकोत्तरेण वैराग्य भवाग्रादन्यतो द्विधा । *Ak* vi 45 cd

[4] Folios 131 133 are lost In these lost folios the *Adv* might have discussed the following topics, which are dealt with in the corresponding *Akb* vi 45—61 —

(१) केनाय शैक्ष· कुतो वैराग्यमाप्नोति ? (२) कतमया पुनर्भूम्या कुतो वैराग्य भवति ? (३) क्षयज्ञानादनन्तर किमुत्पद्यते ? (४) चत्वारि श्रामण्यफलानि । किमिद श्रामण्यम् ? (५) यद्यनास्रवो मार्ग श्रामण्य कथ लौकिकमार्गप्राप्त फलद्वयं श्रामण्य फल युज्यते ? (६) धर्मचक्र ब्रह्मचक्र च । (७) कस्मिन धातौ कति श्रामण्यफलानि प्राप्यन्ते ? (८) षडर्हन्त । (९) कि पुनरेते षडर्हन्त आदित एव तद्गोत्रा भवन्त्यथ पश्चात ? (१०) क पुनरेषा कुत परिहीयन्त । कस्मात् गोत्राद्वा ? (११) कि कारण प्रथमात फलप्राप्ति परिहाणि ? (१२) कि पुनरिमऽर्हन्त एव षड्गोत्रा भवन्ति, अथाऽ-

[VII B 4 Fol 134a ] [1]तत्र तावदशैक्षस्य चत्वारि ध्यानानि त्र्यारूप्याण्यनागम्यध्यानान्तरं च। शैक्षस्य तु षडारूप्यत्रयं हित्वा।[2] किं पुनरत्र कारणम् ?

[ 438 ] सविशेषं यतस्त्यक्त्वा फलं परमुपाश्नुते ।[3]

इह खलु य फलविशिष्टमार्गस्थ इन्द्रियाणि सचरति सफलं फल[वि]-शिष्ट[4] च मृद्विन्द्रियमार्गं त्यक्त्वा तीक्ष्णेन्द्रियमार्गसगृहीतं फल[(2)]मात्रमेव प्रतिलभते। यश्चाशैक्ष आरूप्यभूमिं नि श्रित्येन्द्रियाणि(णि) सचरति नियत मनागामिफलविशेषमार्गस्थस्य न चास्त्यनागामिफलमारूप्यभूमिसगृहीतम्[5]। इत्येतत् कारणम् ।[6]

यदुक्त भगवता— [7]क्लेशात्(न्) प्रहायेह हि यस्तु पश्चादार्यधर्मा[8] परिपूर्णशैक्ष ' इति। कियता परिपूर्णशैक्षो भवति ?[9]

---

यथापि ? (१३) त्रिधा परिहाणि (१४) अथ यो — फलात परिहीयते किमसौ पुन जायते ? (१५) अथन्द्रियाणि सचरता कत्यानन्तयविमुक्तिमार्गा भवन्ति ? (१६) क पुन कतमा भूमि निश्रित्येन्द्रियाणि सचरति ? (१८) सप्त आयपदगला ।

[1] The top c under d scuss on s —क पुन कतमा भूमि निश्रित्येन्द्रियाणि सचरति ?

[2] Cf अगम्ये नव निश्रित्य भवौ न्यस्तु षट् यत । *Ak.* vi 61 cd.

[3] Cf सविशेष फल त्यक्त्वा फलमाप्नोति वधयन । *Ak* vi 62ab

[4] फल फलविशिष्ट चेति फल सकृदागामिफलम्। फलविशिष्ट प्रथमध्याना— प्रहाणाय प्रयोगानन्तयविमुक्तिविशेषमार्गलक्षणम। *Sakv* p 594

[5] न चानागामिफलमारूप्यसगृहीतमिति । पञ्चानामवरभागीयानां प्रहाणा— नागामीति सूत्र वचनात् दानमारूप्य च तदभावात । तत्भाव कामधातुवनालम्बना— न्निति । *Sakv* p 594 V sup a p 301 n 4

[6] Af er hi the Kośakā a deals w h the follow ng top c. इन्द्रियभ्रात पुद्गला नव भवन्ति—बद्ध प्रयक्तबद्ध सप्तस्थानज्ञ । *Akb* vi. 62 d 64 ab This top c migh have been d cus ed in the lo po ons of *Adv* v supra p 352, n 4

[7] Quo ed n *Akb* vi 64 cd See *LVPAK* vi p 267 n 2.

[8] पञ्चेति पञ्चावरभागीयानि संयोजनानि सत्कायदृष्ट्यादीनि युक्तानि । अहाय धर्मा इति अशैक्षधर्मानय । *Sakv* p 597

[9] Cf यतो च भिक्खु भिक्खु सद्धो च होति सीलवा च बहुस्सुतो च धम्मकथिको च परिसावचरो च विसारदो च परिसाय धम्म देसेति ... निकामलाभी

शैक्ष[3]स्य त्रिभिरन्याद्वैर्द्वाभ्यां संपूर्णताऽर्हतः ॥[1]

शैक्षस्य खलु त्रिभिः कारणैः परिपूर्णता भवति । समापत्तीन्द्रियफलैः । तद्यथा दृष्टिप्राप्तस्य कायसाक्षिणः अन्यतरवैकल्यात्तु न परिपूर्णता स्यात्प्रागेव.. सर्ववैकल्यात् । तद्यथा कामावीतरागस्य श्रद्धाधिमुक्तस्यैवं तावच्छैक्षस्य ।

अशैक्षस्य द्वाभ्यामिन्द्रियसमापत्ति[4]भ्याम् । तद्यथोभयभागविमुक्तस्य[2] असमयविमुक्तस्येति ॥

अभिधर्मदीपे विभाषाप्रभायां वृत्तौ षष्ठस्याध्यायस्य तृतीयः पादः ॥

---

होति ', आसवानं खया अनासवं चेतोविमुत्तिं पञ्ञाविमुत्तिं दिट्ठेव धम्मे सयं अभिञ्ञा सच्छिकत्वा विहरति । एवं सो तेन अंगेन परिपूरकारी होति ।···भिक्खु समन्तपासादिको च होति । सब्बाकारपरिपूरो चा ति । *Ang* IV. p. 3.

[1] Cf समापत्तीन्द्रियफलैः पूर्णं शैक्षोऽभिधीयते ।
अशैक्षपरिपूर्णत्वं द्वाभ्याम् *Ak.* VI 64 cd and 65 a.

[2] कोऽयमुभयतो भागविमुक्त ?···यो निरोधसमापत्तिलाभी स उभयतो भागविमुक्तः । प्रज्ञासमाधिबलाभ्यां क्लेशविमोक्षावरणविमुक्तत्वात् । *Akb.* VI. 64 ab.

Cf. कतमो च पुग्गलो उभतोभागविमुत्तो ? इधेकच्चो पुग्गलो अट्ठविमोक्खे कायेन फस्सित्वा विहरति, पञ्ञाय चस्स दिस्वा आसवा परिक्खीणा होन्ति । अयं ·· उभतोभागविमुत्तो । *P.Paññatti*, p. 14. —उभतोभागविमुत्तनिद्देसे···पञ्ञाय चस्स दिस्वा ति विपस्सनापञ्ञाय सङ्खारगतानं, मग्गपञ्ञाय चत्तारि सच्चानि पस्सित्वा चत्तारोपि आसवा खीणा होन्ति । अयं ' द्वीहि भागेहि द्वे वारे विमुत्तो ति उभतोभागविमुत्तो । तत्राय थेरवादो :—(१) तिपिटकचूळनागत्थेरो ताव आह—समापत्तिया विक्खम्भनविमोक्खेन, मग्गेन समुच्छेदविमोक्खेन विमुत्तो ति उभतोभागेहि द्वे वारे विमुत्तो ति । (२) तिपिटकमहाधम्मरक्खितत्थेरो नामनिस्सितको एसो ति वत्वा

"अच्ची यथा वातवेगेन खित्ता अत्थं पलेति न उपेति सङ्ख्यं ।
एवं मुनी नामकाया विमुत्तो अत्थं पलेति न उपेति सङ्ख्यं ॥"

ति वत्वा, सुत्तं आहरित्वा नामकायतो च रूपकायतो च सुविमुत्तत्ता उभतोभागविमुत्तोति आह । (३) तिपिटकचूलाभयत्थेरो पनाह—समापत्तिया विक्खम्भनविमोक्खेन एकवारं विमुत्तो, मग्गेन समुच्छेदविमोक्खेन एकवारं विमुत्तो ति उभतोभागविमुत्तो ।

इमे पन तयोपि थेरा पण्डिता तिण्णम्पि वादे कारणं दिस्सतीति तिण्णम्पि वादं तन्तिं कत्वा ठपिंसु । सङ्खेपतो पन अरूपसमापत्तिया रूपकायतो विमुत्तो, मग्गेन नामकायतो विमुत्तो ति उभतोभागेहि विमुत्तत्ता उभतोभागविमुत्तो । *P. Paññatti A.* p. 30. Also cf सर्वविमुक्त कतम । प्राप्तनिरोधसमापत्तिः सर्वविमुक्तः । *Aam* p 87.

# षष्ठाध्याये

## चतुर्थपादः ।

लौकिकलोकोत्तरदर्शण(न)भावनाशैक्ष[शैक्ष]मार्गभेदेनानेकविधो मार्ग उक्त. । स तु

[ 439 ] विज्ञातव्यः समासेन पुनर्मार्गश्चतुर्विधः ।
आनन्तर्यविमुक्त्याख्यौ प्रा(5)रम्भोत्कर्षलक्षणौ ॥[1]

तत्र प्रयोगमार्गः कुशलमूलफलस्यारम्भ इत्यर्थ ।[2] तस्यानन्तरमानन्तर्यमार्ग. येन क्लेशाञ्जहाति[3] । विमुक्तिमार्गो[4] यः तत्प्रहेयावरणविमुक्ते

---

[1] Cf मार्ग समासत । विशेषमुक्त्यानन्तर्यप्रयोगाख्यश्चतुर्विध । *Ak* vi 65 bcd

[2] प्रयोगमार्गो यस्मादनन्तरमानन्तर्यमार्ग । *Akb* vi 65 cd प्रयोगमार्ग कतम ? य संभारमार्ग स प्रयोगमार्ग । यस्तु प्रयोगमार्ग स न सभारमार्ग । सभारमार्गोपचितानि निर्वेधभागीयानि कुशलमूलानि ऊष्मगत मूर्धान सत्यानुकूलक्षान्ति लौकिकाग्रधर्मश्च । *Asm* p 65 (सभारमार्ग कतम ? पृथग्जनाना शील शमथविपश्यना कुशल श्रुतमयी चिन्तामयी भावनामया प्रज्ञा । *Ibid* )

Cf लौकिका अग्रधर्मा प्रयोगमार्ग इति गम्यते । यस्तु प्रतिलोमत क्षान्त्यादिमार्ग स कस्मिन्नन्तर्भवतीति वक्तव्यम ? आह । प्रयोगमार्ग एवान्तर्भवति । *Sakv* p 598

[3] आनन्तर्यमार्गो येनावरण प्रजहाति । *Akb* vi 65 cd — आनन्तर्यमार्गो येनावरण प्रजहातीति । अप्रहाणमार्गसभवात । अस्ति स आनन्तर्यमार्गो येनाऽवरण न प्रजहाति, इन्द्रियसचारादिषु । *Sakv* p 597

Also cf आनन्तर्यमार्ग कतम ? यस्यानन्तर निरन्तर क्लेश प्रहीणो भवति । *Asm* p 70 V supra p 350 n 1

[4] विमुक्तिमार्गो यस्तत्प्रहेयावरणविनिर्मुक्तस्तेन प्रथमत उत्पद्यते । *Akb* vi 65 cd —' आनन्तर्यमार्गस्य दुःखधर्मज्ञानक्षान्त्यादेर्येन प्रहेयमावरणम, दुःखदर्शनप्रहातव्यो मार्ग । *Sakv* p 598 Cf विमुक्तिमार्ग कतम ? येन प्रहीणे क्लेशे विमुक्ति साक्षात्करोति । *Asm* p 70 V supra, p 350, n 4

सन्ताने विसंयोगप्राप्तिसहायोत्पद्यते। विशेषमार्गो यस्तदूर्ध्वमन्यकुशलमूलप्राप्त्यर्थमुत्कर्षगमनलक्षणः ॥[1]

पुनर्मार्गो भगवता (6)मोक्षपुरप्रतिपादनात् प्रतिपच्छब्देनोक्तः[2] "चतस्रः प्रतिपदः। अस्ति प्रतिपत्सुखा धन्धाभिज्ञा। अस्ति सुखा क्षिप्राभिज्ञा। अस्ति दुःखा धन्धाभिज्ञा। अस्ति दुःखा क्षिप्राभिज्ञा।"[3] तासां पुनरिन्द्रियतो भूमितश्च व्यवस्थानं तदिदं प्रदर्श्यते—

[ 440 ] तीक्ष्णेन्द्रियस्य मौलेषु ध्यानेषु प्रतिपत्सुखा।
क्षिप्राभिज्ञाल्पबुद्धेस्तु(7) धन्धान्यत्र विपर्ययात्[4] ॥

मौलेषु खलु चतुर्षु ध्यानेषु यो मार्गः सा सुखाप्रतिपत्। सा च तीक्ष्णेन्द्रियस्य क्षिप्राभिज्ञा तत्रायत्नवाहित्वात्।[5] नैर्याणवत्सुखा तत्रायत्नवाहित्वा[त्] शमथविदर्शन(न)योः साम्यात्। तत्रैव सा मृद्विन्द्रियस्य धन्धाभिज्ञा। अन्यासु तु पञ्चसु भूमिष्वनागम्यध्यानान्तरिकारूप्य(8)त्रयसगृहीतास्वनङ्गपरिगृहीतत्वात्। शमथविदर्शनान्यूनत्वात्[6] अनागम्यध्यानान्तरिकयोरारूप्यत्रये

---

[1] य एष्य प्रयागमार्गादिभ्योस्त्रिभ्योऽन्य स विशेषमार्ग। षोडशात् मार्गान्वयज्ञानक्षणात्परेण सप्तदशादयस्तज्जातीया यस्नास्तवा क्षणास्ते विशेषमार्गस्वभावा•। एवमन्यदपि विमुक्तिज्ञानम्। *Sakv* p 598

Cf विशेषमार्ग कतम ? तदयस्य क्लेशप्रकारस्य प्रयोगानन्तर्यविमुक्तिमार्ग विशेषमार्ग। अपि खलु क्लेशप्रहाणप्रयाग निराकृत्य• धर्मचिन्ताया वा प्रयुक्तस्य अपि खलु वैशेषिकान् गुणानभिनिर्हरतो वा यो मार्ग। *Asm* p 70

[2] *Pratipat* and *marga* are often used side by side in the Pali *Pitkas* — सिया खो पन भिक्खवे कङ्खा • बुद्ध वा • मग्गे वा पटिपदाय वा। *Ang* II p 79, किं पनावुसो मग्गामग्गञाणदस्सनविसुद्धत्थं पटिपदाञाणदस्सनविसुद्धत्थं *M sutta* 24 For various interpretations of these two words and their relation, see *Childers* p 364 b, *PTSD* and *BHSD* p 364—5

[3] Cf चतस्सो पटिपदा। दुक्खा पटिपदा दन्धाभिञ्ञा, दुक्खा पटिपदा खिप्पाभिञ्ञा, सुखा पटिपदा दन्धाभिञ्ञा, सुखा पटिपदा खिप्पाभिञ्ञा। *Digha*, xxxIII 1 11 अपरा पि चतस्सो पटिपदा। अक्खमा पटिपदा, खमा,•• दमा,• समा पटिपदा। *Ibid* See *Vibhanga*, p 331, *Netti*, p 113, *Dhs A* III 375 and *Aam* p 121

[4] Cf ध्यानेषु मार्ग प्रतिपत्सुखाऽदुःखान्यभूमिषु।
धन्धाभिज्ञा मृदुमते क्षिप्राभिज्ञेतरस्य तु ॥ *Ak* VI 66

[5] अङ्गपरिग्रहणशमथविपश्यनासमताभ्यामयत्नवाहित्वाति। *Akb* VI 66

[6] शमथन्यूनत्वादनागम्यध्यानान्तरे यत्नवाहिनी। विपश्यनान्यूनत्वाच्चारूप्या यत्नवाहिन। *Sakv* p 599

चानास्रवो मार्गं तीक्ष्णेन्द्रियस्य प्रतिपत्, दु खा क्षिप्राभिज्ञा। मृद्विन्द्रियस्य दु खा धन्धाभिज्ञा।[१]

कथ पुनरार्यमार्गो दु खो भवति ? नासौ दु खात्मक न दु खसम्प्रयुक्त ?[१] नैष दोष.। यत्नया(?)हित्वाभिसन्धेर्विवक्षितत्वात् ॥

पुनरप्येष मार्गो बोधिपक्ष्यशब्देनोच्यते "सप्तत्रिंशद्बोधिपक्ष्या धर्मा।[२]

---

[१] The *Atthasal ni* gives the following details तत्थ पठमसमन्नाहारतो पट्ठाय याव तस्स तस्स झानस्स उपचार उप्पज्जति ताव पवत्ता झानभावना पटिपदा ति वुच्चति। उपचारतो पन पट्ठाय याव अप्पना ताव पवत्ता पञ्ञा अभिञ्ञा ति वुच्चति। तस्मा यो आदितो किलेसे विक्खम्भ तो दुक्खेन ससङ्खारेन सप्पयोगेन किलमन्तो विक्खम्भति तस्स दुक्खा पटिपदा नाम होति। यो पन विक्खम्भितकिलेसो अप्पनापरिवास वसन्तो चिरेन अङ्गपातुभाव पापुणाति तस्स दन्धाभिञ्ञा नाम होति। अपि च तण्हा-अविज्जावसेन समथविपस्सनाधिकारवसेन चा पि एतास पभेदो वेदितब्बो। *Dhs A* III 376-78 Also see —तथागतस्स हि सारिपुत्तत्थेरस्स च चत्तारो पि मग्गा सुखापटिपदा खिप्पाभिञ्ञा अहेसु। महामोग्गल्लानत्थेरस्स पठममग्गो सुखापटिपदो खिप्पाभिञ्ञो उपरि तयो मग्गा दुक्खापटिपदा खिप्पाभिञ्ञा। कस्मा ? निद्दाभिभूतत्ता *Ib d* III 520

[२] The Kośakata has d scussed this point earl er while dealing w th the *duhkhatā* of *marga satya* एव तर्हि मार्गस्यापि संस्कारदु खताप्रसग संस्कृत्वात ? प्रतिकूले हि दु खमिति लक्षणान्न मार्गो दु खम। नहि तस्योत्पाद आर्याणा प्रतिकूल सर्वदु ख क्षयावाहनात। *Akb* VI 3 See *Sakh* p 517 For an all ed controversy see *Kv* XVII 5—इदानि ठपेत्वा अरियमग्ग[अवसेसा सङ्खारा दुक्खा]ति कथा नाम होति। तत्थ यस्मा अरियमग्गो दुक्खनिरोधगामिनी पटिपदा ति वुत्तो तस्मा ठपेत्वा अरियमग्ग अवसेसा सङ्खारा दुक्खा ति यस लद्धि सेय्यथा पि हेतुवादान। ते सन्धाय पुच्छा सकवादिस्स। *Kv A* XVII 5 Also see *Kv* II 8

[३] V supra p 196 n 8

On the extension of *Bodl pakkh yadhamma* as a technical term see Mrs Rhys Davids Preface to *Vibhanga* pp XIV—XVI

The *Sanyutta n kāya* refers to the Five *indryas* ये केचि बोधिपक्खिया धम्मा पञ्ञिन्द्रियं तेसमग्गमक्खायति कतमे च बोधिपक्खिया धम्मा ? सद्धिन्द्रियं बोधि पक्खियो धम्मो त बोधाय सवत्तति विरियिन्द्रिय सतिन्द्रिय समाधिन्द्रिय पञ्ञिन्द्रिय तं बोधाय सवत्तति। *S* V p 227

The *Aggañña sutta* refers to Seven —सत्तन्नं बोधिपक्खियान धम्मान भावन मन्वाय *Dīgha* VVII 30

The *Vibhanga* refers to Seven —तत्थ कतमे बोधिपक्खिया धम्मा ? सत्त बोज्झङ्गा। इमे वुच्चन्ति बोधिपक्खिया धम्मा। *Vibhanga* p 249 Buddhaghosa gives the

चत्वारि स्मृत्युपस्थानानि चत्वारि सम्यक्प्रहाना(णा)नि चत्वारो ऋद्धिपादा पञ्चेन्द्रियाणि पञ्च बलाणि(नि) सप्तबोध्यङ्गान्यष्टाङ्गो मार्गः" इति ।

का पुनरियं बोधिः ?[1]

[441] क्षयज्ञानं मता बोधिस्तथाऽनुत्पादधीरपि ।

[VII A, 4 Fol 134 b]

[(1)]दश चैकश्च तत्पक्ष्याः सप्तत्रिंशत्तु नामतः ॥[2]

सा पुनरेषा बोधिः क्षयानुत्पादज्ञानरूपा [3]सती पुद्गलभेदेन त्रिधा भिद्यते ।

---

following comment —एत्तावता सब्ब पि सत्तर्तिस बोधिपक्खियधम्मे समूहतो गहेत्वा लोकिया पि भावनाय एकारम्मण एकतो पवत्तनसमत्थ बोज्झङ्ग एव दस्सन्तो सत्त बोज्झङ्गा ति आदिमाह । ते लोकियलोकुत्तरमिस्सका ति वेदितब्बा । *Vbh A* p 347

The *Sampasadn ya sutta* refers to Thirty seven but calls them merely *kusala dhamma* तत्रिमे कुसला धम्मा सेय्यथद—चत्तारो सतिपट्ठाना चत्तारो सम्मप्पधाना चत्तारो इद्धिपादा पञ्चिन्द्रियानि पञ्च बलानि सत्त बोज्झगा अरियो अट्ठङ्गिको मग्गो एतदनुत्तरिय भन्ते कुसलेसु धम्मेसु । *D gha* xxviii 3

The *Nett* speaks of Forty three —तेचत्तालीस बोधिपक्खिया धम्मा ञाण वजिर मोहजालपदालन । *Nett* p 112—तेचत्ताळीस ति अनिच्चसञ्ञा दुक्ख अनत्त पहान विराग निरोधसञ्ञा चत्तारो सतिपट्ठाना प मग्गो । *Netti A* p 237

Also see *Ang* I pp 38—43 IV p 125 *Vm* xxii 33 *Milnda* p 23 *A Sangaho* vii 25—35 *Aam* (*bodhipaksh ka n rdesa*) pp 113-17 *Asm* pp 71—74 and *S Pundarika* p 299 For deta ls and other references see *LVPAk* vi p 281 n 1 *The Bodhisattva Doctrine* chapter IV (pp 80—164) *PTSD* and *BHSD* p 402

[1] V supra p 125, n 3 See *Aaa* p 431

[2] Cf अनुत्पादक्षयज्ञाने बोधिस्तदनुलोम्यत ।
सप्तत्रिंशत्तु तत्पक्ष्या नामतो द्रव्यतो दश ॥ *Ak* vi 67

[3] क्षयज्ञान कतमत ? दुःख मे परिज्ञातमिति जानाति । समुदय प्रहाणो निरोध साक्षात्कृतो मार्गो भावित इति जानाति । तदुपादाय यत ज्ञान दर्शन विद्या बुद्धि बोधि प्रज्ञा आलोकोऽभिसमय इदमुच्यते क्षयज्ञानम ।

अनुत्पादज्ञान कतमत ? दुःख मे परिज्ञात न पुनः परिज्ञेयमिति जानाति यावत मार्गो भावितो न पुनर्भावयितव्य इति । तदुपादाय ति विस्तरेणोक्त शास्त्र । *Akb* vii 7

Cf तत्थ य च खयञाण य च अनुप्पादेञाण इमानि द्व ञाणानि एका पञ्ञा । अपि च आरम्मणसङ्केतेन द्व नामानि लभति खीणा मे जाती' ति पजानन्तस्स खयञाण ति नाम लभति 'नापर इत्थत्ताया' ति पजानन्तस्स अनुप्पादे ञाण ति नाम लभति । *Netti* p 15 V infra *Ad karika* 479

तिस्रो बोधयः।[१] बुद्धप्रत्येकबुद्धश्रावकबोधयः। उत्तमनिर्वाणाङ्गभूता तद्धि तिसृणामपि बोधीनां पुरुषकारफल तत्प्राधान्यत्वात्। मृदुमध्याधिमात्रा. सप्तत्रिंशद्बोधिपक्ष्या धर्माः मृदुमध्याधि(2)मात्रभेदभिन्ना महायाण(न)म्।[२] मृदुमध्याधिमात्रभेदभिन्नं बुद्धप्रत्येकबुद्धश्रावकयाण(न)[३]मित्युच्यते।

तस्याः पुनस्त्रिप्रकाराया बोधेरनुकूलधर्माः स्मृत्युपस्थानादयः 'सप्तत्रिंशन्नामतः'। द्रव्यतस्त्वैकादश।[३] श्रद्धादीनि पञ्च बलानि प्रीतिप्रश्रब्ध्युपेक्षासम्यक्संकल्पवाक्कर्मान्ताश्च षडिति। अत इदमुच्यते—

[ 442 ] सोपेक्षाप्री(3)तिसंकल्पं श्रद्धादीन्द्रियपञ्चकम्।
सप्रश्रब्धिर्द्विरूपीत्थं नामभेदस्त्वपेक्षया ॥
[ 443 ] बलान्यत्रेन्द्रियाण्येव प्रज्ञैव स्मृत्युपस्थितिः।
वीर्यं सम्यक्प्रधानाख्यं रि(ऋ)द्धिपादा मनस्थितिः ॥[४]

कथं पुनरेकं वीर्यं चतुर्धा निर्दिश्यते? तदपदिश्यते—

[ 444 ] दोषहाणमनुत्पादं गुणोत्पादं निवर्धनम्।
यद्वत्करोति यत्तद्धि स प्रहाणचतुष्टयम् ॥[५]

(4)उत्पन्नानां रागादीनां खलु दोषाणां प्रहाणायानुत्पन्नानां चानुत्पादाय यद्वीर्यम्, गुणानां च स्मृत्युपस्थानर्धिपादादीनामनुत्पन्नानामुत्पादाय, उत्पन्नानां च स्थितये यद्वीर्यं, तत्प्रयोजननिष्पत्तिभेदाच्चत्वारि सम्यक्प्रहाणानि भवन्ति॥

---

[१] V supra, pp 204 ff See *Vm* III 128

[२-३] These two terms are not mentioned in *Akb*

[३] Cf एवमत बोधिपक्ष्या दश द्रव्याणि भवन्ति। वैभाषिकाणामेकादश। कायवाक्कर्मणोरभिन्नत्वात् शीलाङ्गानि द्व द्रव्य इति। *Akb* vi. 69 ab —'दशद्रव्याणि' इति केचाञ्चिन्मतन। *Sakv* p 600

[४] Cf श्रद्धा वीर्यं स्मृति प्रज्ञा समाधि प्रीत्युपेक्षणे।
प्रश्रब्धिशीलसंकल्पा प्रज्ञा हि स्मृत्युपस्थिति ॥
वीर्यं सम्यक्प्रहाणाख्यं ऋद्धिपादा समाधय।
प्रधानग्रहणं सर्वे गुणा प्रायोगिकास्तु ते ॥ *Ak* vi 68-69
See *Aaa* p 116 and *A Sangaho*, vii. 33

[५] चत्तारो सम्मप्पधाना–इध भिक्खु अनुप्पन्नानं पापकानं अकुसलानं धम्मानं अनुप्पादाय छन्दं जनेति वायमति विरियं आरभति चित्तं पग्गण्हाति पदहति, उप्पन्नानं पापकानं अकुसलानं धम्मानं पहानाय, अनुप्पन्नानं कुसलानं ठितिया उप्पन्नानं कुसलानं पारिपूरिया' धम्मानं पदहति। *Vbh* p 209

[ 445 ] छन्दव्यायाममीमांसा चित्ताख्याः समाधयः ।
रि(ऋ)द्धिपादास्तु चत्वारो गुणसम्प[(5)]त्तियोग(न)यः ॥[१]

छन्दमधिपतिं कृत्वा यो णि(नि)ष्पद्यते समाधिः स छन्दसमाधिः । कुशलमूलच्छन्दमूलकत्वात् समाध्यादिगुणनिष्पत्तेः, तस्मादसौ छन्दसमाधिरित्युच्यते । तत्प्रभवाः सर्वा गुणर्धयः । एवं वीर्यं चित्तं मीमांसामधिपतिं कृत्वा निष्पन्नः समाधिः स एष च्छन्दवीर्यचित्तमीमांसासमाधिश्चतुर्विधः[२] । [(6)]प्रहाणसंस्कारैः च्छन्दवीर्यस्मृतिबुद्धिश्रद्धाप्रश्रब्धिचेतनोपेक्षाभिः प्रत्येकं समन्वागतः सर्वगुणसमृद्धिनिष्पादको भवति छन्दवीर्यचित्तमीमांसापरिग्रहः सामर्थ्यात् । कुशलधर्मच्छन्दे ह्यसति कुतस्तत् प्राप्त्यारम्भः ? आरब्धेपि च वीर्ये यदि न तत्प्रगुणमेव चित्तं भवति न कार्याभिनिष्पत्तिर्भ[(7)]वति । यथाऽरणीमभिनिर्मथ्याप्यन्तरायव्युपरमो भवति पुनः शैत्यमापद्यते तद्वदिति । वीर्यानुवृत्तये चित्तमधिपतिमिष्यते । तत्प्रवणेपि चित्ते यदि सूक्ष्मान् समाध्युपक्लेशान्नोपलक्ष्य परिवर्जयति यदि समाध्यनुगुणान्, गुणांस्तु सामान्यलक्षणशक्तिक्रियानुत्तमार्थाङ्गभूतानुपलक्ष्य, प्रज्ञया [(8)]नोपचिनोति तस्यान्यायारब्धवीर्यं त्रयमप्येतन्न प्रयोजननिष्पत्तये भवति । एवं छन्दवीर्यश्रद्धास्मृतिबुद्धिप्रश्रब्धिचेतनोपेक्षाख्यानामष्टानां प्रहाणसंस्काराणां समाधिपरिग्रहसामर्थ्यं यथायोगमवगन्तव्यम् ॥

[ 446 ] प्रोक्तं बोधित्रयेशित्वाच्छ्रद्धादीन्द्रियपञ्चकम् ।
कथितं बलशब्देन त[(9)]देवानभिभूतितः ॥

श्रद्धावीर्यस्मृतिसमाधिप्रज्ञारूपाणि खलु पञ्चेन्द्रियाणि[3] बोधिपक्ष्येषु व्यवस्थाप्यन्ते । बोधित्रयाधिगमे श्रद्धादीनां पञ्चानामैश्वर्याधिक्यात्, सर्वभूमीषूपलब्धेश्च । एतेषां चाधिमात्रमध्यमृदुतरतमविशेषादर्हत्प्रभृतीनां व्यवस्थानं भवति । तान्येव बोधिपक्ष्येष्विन्द्रियाण्यु[VII. B, 5. Fol. 135 a.][(1)]क्तानि, न चक्षुरादीन्याज्ञातवतेन्द्रियपर्यवसानानि । एषामेवै[श्वर्य]द्धिलिङ्गत्वात् ।[४] इहेन्द्राः द्विविधाः । चित्तेश्वराश्च धनेश्वराश्चेत्यतः इन्द्रलिङ्गमिन्द्रियम(मि)-

---

[१] चत्तारो इद्धिपादा—इध भिक्खु छन्द-समाधिपधानसंखारसमन्नागतं इद्धिपाद भावेति, विरिय,·· चित्त···, वीमंसा···इद्धिपाद भावेति । *Ibid.* p. 216.

[२] The Kośakāra initiates a controversy : ये त्वाहु "समाधिरेवर्द्धिःपादाश्च छन्दादय." इति । तेषा द्रव्यतस्त्रयोदश बोधिपक्ष्या प्राप्नुवन्ति । च्छन्दचित्तयोराधिक्यात् सूत्रं च विरुध्यते ।···*Akb.* vi. 69 cd. See *Sakv.* p. 602. V. infra, *Adv. kārikā* 524.

[3] V. supra, p. 54, notes.

[४] V. supra, p. 45, n. 1.

तिङ्गत्वेन्द्रियाणि। यथा पृथिवीश्वराणां पट्टादीनि लिङ्गानि भवन्ति यैः पृथिवीश्वरोयमिति प्रज्ञायते। यथा च पृथिवीश्वराः विभूषणोपभोगैः प[(2)]रिज्ञायन्ते तथा चित्तेश्वराणामार्यधनसमृद्धानां च श्रद्धादीनि विष्कम्भितप्रहीणविपक्षाणि निर्मलानि लिङ्गानि भवन्ति।

तत्र तावच्छ्रद्धायाः स्वलक्षणं[१] बुद्धधर्मसङ्घान् सम्भावयतश्चित्तं प्रसादमुपयाति सद्भूतगुणयोगादपेतदोषत्वाच्च, तद्धर्मेषु च प्रसादात्मकमेवार्थित्वमुत्पद्यते। प्रतीत्यसमुत्पा[(3)]दादीनां वा यथाभूतप्रत्यवेक्षणात् कर्मफलादिषु तत्र संभावना भवति। तथा च संभावयतो यश्चेतसः प्रसादः सा श्रद्धा नाम धर्मश्चित्तेन सम्प्रयुक्तः।[२] यद्वा(था ऽऽ)दर्शादौ धर्मसमूहे धर्मान्तरमादर्शप्रसादादय, एवमरूपिणि चित्तादिधर्मसमुदया धर्मान्तरं श्रद्धादयः, चित्तस्याश्रयभावात् प्राधान्यात् स[(4)]न्तानानुवृत्तेश्च चित्तव्यपदेशः।

वीर्यं णा(ना)म चेतसोप्यु(भ्यु)त्साहलक्षणं प्रयोजन(ने) वार्थिशक्यतां संभाव्य विविधमीर्यत इति वीर्यम्।[३]

स्मृतीन्द्रियं नाम कायादिषु प्रज्ञयोपलक्षितेषु या खल्वविपरीताभिलपना प्रत्यभिज्ञानम्, येनावधारिते विषयसंमोषश्चेतसि न भवति स खल्वसंमोषः स्मृतीन्द्रियम्।[४]

[(5)]चेतस एकाग्रलक्षणं समाधीन्द्रियम्।[५] विषयग्राहिविषयिणो धर्मास्त देकालम्बन चित्तमेकाग्रमित्युच्यते। विचित्रविषयप्रसृते ह्यनवस्थिते चेतसि तत्त्वावधारणं न भवति। यथा खलु विद्रुतजवनाश्वारूढः पुरुषः प्रतिमुखमागच्छतां दृष्टपूर्वाणामपि मनुष्यादीनां न शक्नोति व्यक्ति[(6)]मुपलक्षयितुमेवमनेकविषयप्रसृते लघुपरिवर्तिनि चित्ते न कायादिविषयतत्त्वोपलक्षणा भवति। यदा तु सुसारथिनेव समाधिनैकस्मिन् विषये चिरं चित्तमाधार्यते तदा धर्मन्तरमुपलक्षयति। तस्मात् कुड्य इव रङ्गस्य श्लेषः समाधिरालम्बने चित्तस्याधारः।

प्रज्ञेन्द्रियं[६] यत् स्वसा[(7)]मान्यलक्षणमुपलक्षयति। यच्च कायदीनां तत्त्वमभिमुखवदवस्थितं प्राप्तमिव श्लिष्टमिव पृष्टे(ष्ट इ)व च लक्षयति सोपलक्षणात्

[१] The Kośakāra does not give the definitions in detail

[२] V supra p 71 n 4

[३] V supra p 73 n 3

[४] V supra, p 69, n 4

[५] V supra p 70

[६] V supra, p 70, n. 3

प्रज्ञेन्द्रियम् । यद्यपि सर्वचित्तेषु यथाविषये प्रत्युपलक्षणा विद्यते न तु सा यथार्थप्रवृत्तेति न सेन्द्रियम् ।[१]

एतान्येवेन्द्रियाणि श्रद्धादीनि यस्माद्योगिण:(नः) क्लेश[(8)]संग्रामावतीर्णाः क्लेशानीकविजये प्रधानाङ्गभूतानि राज इव हस्त्यादयस्तस्माद्बलानीत्युच्यन्ते ।[२]

[447] बोधनार्थेन निर्दिष्टं शास्त्रा बोध्यङ्गसप्तकम् ।
प्रतीत्यादि(-त्या) परमार्थेण(न) प्रज्ञेत्यन्तमनुग्रहात् ॥[३]

समानेपि बोधिपाक्षिकत्वे विशेषेणैते सप्तधर्मा बोध्यङ्गानि भवन्ति । भावनामार्गे खल्वे[(7)]तेषां प्राधान्यं दृष्टसत्यस्या[न्]त एव । धर्मोपलक्षणोपलक्षितस्वरूपादिषु गुणदोषेषु स्मृतिप्रमोषदोषापनयनार्थमादौ स्मृतिसंबोध्यङ्गमुक्तम् ।

ह्लाद प्रश्रब्धिः[४] । रागजादिपरिदाहप्रतप्तचित्तशरीरस्य ग्रीष्मार्कप्रतप्तस्येव शीतोदकह्रदावगाहनादनालयज्ञानसंमुखीभावा[ VII A, 5 Fol 135 b ][(1)]द्यत् कायचित्तप्रह्लादः स धर्मः प्रश्रब्धि. ।

उपेक्षा[५] नाम रागद्वेषपक्षपातविपक्षेण यथाभूतज्ञेयमवेक्षमानस्य यच्चित्तसमतान्यतरपक्षाभिसंस्कारविपक्षो निर्वाणाशया सोपेक्षा बोध्यङ्गमित्युच्यते ।

अत्र पुनः प्रीत्यादीनि त्रीण्यपि कृता[वशे]षाणि चत्वारि पूर्वमेव व्याख्यातानि । तेषां पुनः सप्तानां बुद्धि[(2)]धर्मप्रविचयलक्षणा बोधिश्च बोध्यङ्गं च ।[६] ज्ञानं हि बोधि· ज्ञानं च प्रज्ञा शेषाण्यङ्गान्येव ॥

तेषामपि च

[ 448 ] प्रीतिप्रश्रब्ध्युपेक्षाणामुक्ताद्धेतोस्तदङ्गता ।

निरामिषप्रीतिप्रश्रब्ध्युपेक्षाभिः प्रीणितेन्द्रियग्रामः सुखमनुद्विग्नो बोधिम-

[१] For the difference between *prajñā* and *prajñā indriya*, see *Kr A* xix 8 V supra, p 54, n 4

[२] परित्तानि भवन्तीन्द्रियाणि महान्ति भवन्ति बलानि । *Aaa* p 115

[३] सत्त बोज्झङ्गा—सति धम्मविचय विरिय-पीति पस्सद्धि समाधि-उपेक्खासम्बोज्झङ्गो । *Vbh* p 227

[४] V supra, p 72, n , 1

[५] V supra, p 72, n 2

[६] Cf तत्र धर्मप्रविचयसंबोध्यङ्ग बोधि , बोध्यङ्ग च, सम्यग्दृष्टिर्मार्गो मार्गाङ्गञ्चेति वैभाषिका । *Akb* vi 70

धिगच्छति। यानि(नि) चैषां लक्षणनिर्देशकारणान्युक्तानि ततश्च बोध्यङ्गत्वमिति।

[3]संकल्पादेश्चतुष्कस्य पथो ज्ञेयानुकूल्यतः ॥

अङ्गतेति वर्तते। सम्यक्संकल्पसम्यग्वाक्कर्मान्ताजीवानां सम्यग्दृष्टि-सम्यग्व्यायामसम्यक्स्मृतिसम्यक्समाधीनामिव मार्गानुकूल्यादङ्गत्वम् ॥

अयं पुनरार्यमार्गसतत्त्वपिण्डार्थः—

[ 449 ] विद्याप्रमः श्लक्ष्णविकल्पभूमिः शीलानुयात्रः स्मृतिवीर्यमित्रः।
समाधिसर्वा[4]थिसुखोपभोगो मार्गो विमुक्तिद्वयधिष्ण्यगोऽयम् ॥

[ 450 ] प्राधान्यं सप्तवर्गस्य प्राग(र)म्भोष्मगतादिषु।

अत्र पुनः

यथाक्रमं विबोद्धव्यं भावनादृष्टिमार्गयोः ॥[1]

तत्र स्मृत्युपस्थानान्यादिकर्मिकावस्थाप्रभावितानि कायादिस्वभावोपलक्षणात्। सम्यक्प्रहाणान्यूष्मगतेषु। तत्र संसारणि(नि)र्वाणयोरादीनवानुशंसदर्श[5]ने बलवद्वीर्याश्रयणात् संसारपारमुत्तरति। मूर्धावस्थायामृद्धिपादाः प्रमाध्यन्ते तेषु समाधिबललाभाच्चित्तनिग्रहे सति परिहाण्याभावाच्च कदाचिद् गुणधनदरिद्रो भवति। इन्द्रियाणि क्षा(क्षा)न्तिष्वपायात्यन्तनिवृत्तौ तदाधिपत्यात्। बलान्यग्र(ग्र)धर्मेषु क्लेशानवमर्दनीयत्वात्। बोध्यङ्गानां भावनामार्गे प्रा[6]धान्यं यासीदण्डोपमया मार्गभावण(न)या निरवशेषक्लेशप्रहाणात्। नवप्रकारतया वा मलप्रहाणे सति बोधेरासन्नीभावात्। दर्शण(न)मार्गे मार्गाङ्गानि[2] दर्शनहेयक्लेशप्रहाणार्थमाशु त्रैधातुकातिक्रमनो(णो)त्पादा[त्। आ]नुपूर्व्यतिक्रमस्तु[3] देशनानुकूल्यात् ॥

अथ कस्माच्चैतसिकधर्मधर्मिभूतं चित्तं [7]बोधिपक्ष्येषु ण(न) व्यवस्था-

---

[1] Cf आदिकर्मिकनिर्वेधभागीयेषु प्रभाविता।
भावने दर्शने चैव सप्त वर्गा यथाक्रमम् ॥ *Ak* vi 70

[2] Cf बाल्यासन्नत्वात् भावनामार्गे बोध्यङ्गानि। गमनप्रभावितत्वाद्दर्शनमार्गे मार्गाङ्गानि। "तत्र धर्मप्रविचयप्रबाध्यम बाधिर्बोधि च सम्यग्दृष्टिर्मार्गो मार्गंग यति वैभाषिका। *Akb* vi. 70

[3] the Kośakāra deals with this point in detail अपरे पुनरभित्त्वैव क्रम बोधिपक्ष्याणामानुपूर्वी वर्णयन्ति *Akb* vi. 70—'अपरे पुनराहु' इत्याचार्य।"'यथा वैभाषिकैर्भिन्न क्रम, तथा तमभित्त्वा बोधिपक्षाणामानुपूर्वी वर्णयन्ति। "*Sakv* p 603

पितम् ? संज्ञाचेतनामनस्कारच्छन्दाधिमोक्षादयश्च धर्मा बोधिपक्ष्येषु क(न) व्यवस्थाप्यन्ते ?[१] तदिदमनुवर्ण्यते—

[ 451 ] न चित्तं राजकल्पत्वाद् गुणदोषानुवर्तनात् ।

राजस्थानीयं खलु चित्तं तद्बोधिपक्ष्यैर्धर्मैर्विशोध्य मोक्षसुखमुपलभ्यते । यथैव च गुणानुवर्ति चित्तं तथैव दोषा(8)नुवर्ति । यथोक्तम्—"चित्तसंक्लेशात्सत्त्वा संक्लिश्यन्ते । चित्तव्यवदानहेतोश्च विशुद्ध्यन्ते ।"[२] तस्य रागादयः संक्लेशकराः, श्रद्धादयो व्यवदानाधायिनस्तस्माच्चित्तं न व्यवस्थापितम् ।

व्यवहारानुकूल्यत्वात् संज्ञा ह्येतेषु नेष्यते ॥

प्रायो हि व्यवहारानुपतिता संज्ञा बोधिपक्ष्यास्त्वेकान्तेन परमार्थपक्षभजमानाः ॥

[ 452 ] (9)विपाकफलनिम्नत्वान्मार्गोक्तेश्च न चेतना ।

चेतना खल्विष्टानिष्टविपाकनिर्वर्तण(न)त्वात् मार्गशब्देनाभिधानाच्च नोच्यते ।

नाप्राधान्यान्मनस्कारो विद्याऽविद्याप्रवर्तणा(ना)त् ॥

मनस्कारोपि सम्यग्दृष्टेरङ्गभूतत्वादप्रधानं विद्याऽविद्याप्रवर्तणा(ना)च्च ॥

[ 453 ] क्रियारम्भप्रधानत्वान(न्न) च्छन्दो वीर्यबृंहणात् ।

छन्दः [VII. B. 6 Fol. 136 a ] (1)खलु कर्तृकामतारूपः क्रियारम्भः प्रमाण्यते । वीर्यं चानुबृंहयति । तद्वीर्यं बोधिप्रतिलम्भकर्तव्यतापरिसमाप्तेरूर्ध्वं यावदनुवर्तते ।

नाधिमोक्षः समारोपान्न स्पर्शो दौर्विभाव्यतः ॥

प्रायेण खल्वधिमोक्षोऽधिमुक्तमनस्कारेषु वर्तते । स्पर्शोपि त्रिसन्निपातमात्रविप्रतिपत्तेर्दुरवधारवृत्तिः । तस्मान्नोक्तः ॥

[ 454 ] नार्यवंश(2)द्वयपत्राप्यार्यो(– प्या) [श्र]विशारदवृत्तितः ।

---

[१] This point (*Ad. kārikās* 451-456) is not discussed in *Akb.* V. supra, p 50, n. 2.

[२] V. supra, p. 46, n. 1.

चत्वार सत्यार्यवंशा[1] इत्यपन्नाप्ये च । नवप्रव्रजितभिक्षुनदविशारद वृत्तित्वाञ्च बोधिपक्ष्यात्(क्ष्या) ।

न्ना(ना)प्रमाद पराङ्गत्वान्नानिहिंसाऽविहेठनात् ॥

वीर्यभाण्डागारिक सत्वप्रमाद । अविहिंसा च विहेठनामात्रप्रति पक्ष यान्नोक्ता ॥

[ 455 ] सत्त्वाधिष्ठानवृत्तित्वान्न मैत्रीकरुणादय ।[2]

[3] धर्माधिष्ठाना खलु बोधिपक्ष्या मैत्र्यादयस्त्वकान्तेन सत्त्वाधिष्ठाना ।

मार्गाङ्गाचैकदेशत्वान्नाप्यवेत्यप्रसत्तय ॥

अवेत्यप्रसादा खलु मार्गाङ्गैकदेशस्वभावत्वादक्षैकदेशरूपत्वाच्च न पुन र्बोधिपक्ष्येषूक्ता ।

[ 456 ] नाद्वेष शुभमूलेभ्य सत्त्वगोचरमानत ।

सत्त्वाधिष्ठानप्रवृत्ता हि अद्वेष । तस्मान्न बोधिपक्ष्य ।

[4] औदासीन्यान्न निर्वाण दर्विष्ठयान परघ्नति ॥

निष्क्रिय खलु निर्वाण क्रियाव तस्तु बोधिपक्ष्या धर्मा । परतो घोष स्त्वपि याधिपक्ष्याङ्गभावा(वो) बोधेर्बहिरङ्गभावाद्विप्रकृष्यते । तस्मात् सप्त त्रिंशदेव धर्मा बोधिपक्ष्या ॥

कति पुनर्बोधिपक्ष्या सास्रवा कत्यनास्रवा ? तदिद प्रदर्श्यते—

[ 457 ] बोध्यङ्गान्यरजस्का[5] नि बोधि(धे)र्नेदिष्टभावत ।
तदन्यान्यङ्गबोध्यानि समलान्यमलान्यपि ॥[3]

बोध्यङ्गानि खलु बोधेरासन्नतमत्वादेकान्तानास्रवाणि । तदन्ये तु सास्रवानास्रवा सर्वे हि कुशला धर्मा आर्यमार्गावाहका निर्वाना(णा)श्रयाश्च । याधिप्रयसनिकृष्टविप्रकृष्टाङ्गभावा बोधिपक्ष्या इत्युच्यन्ते । उक्तं हि भगवता—

[1] Cf चत्तारो म भिक्खवे अरियवंसा अग्गञ्ञा इध भिक्खु सन्तुट्ठो होति इतरीतरेन चीवरेन पिण्डपातेन सेनासनेन । पुन च पर भिक्खवे भिक्खु भावनारामो होति भावनारतो । *Ang* II pp 27 28

[2] V inf 2 *Adv kārikā* 588

[3] Cf अनास्रवाणि बोध्यङ्गमार्गाङ्गानि द्विधेतरे । *Ak* vi. 71 ab.

"अधिगतो (8)मे पौराणो मार्गः"[१] इति वचनात्। शास्त्रे तु बोध्यङ्गोपरि ये पठ्यन्ते सम्यग्दृष्ट्याद्यो धर्मास्तेऽनास्रवा इति॥

कस्यां पुनर्भूमौ कियन्तो बोधिपक्ष्या विद्यन्ते ?[२]

[458] आद्ये ध्यानेऽखिला मौलेऽनागम्ये प्रीत्यपाकृताः।[३]
द्वितीयेऽप्यपसंकल्पा[द्] द्वयोश्चास्मात् द्वयादृते॥[४]

[459] शीलाङ्गेभ्यश्च ताभ्यां च दृष्टव्या त्रिष्वरूपिषु।
बोध्यङ्गेभ्य(7)श्च सर्वा(र्वे)भ्यो कामे बोध्यङ्गवर्जिताः॥[५]

तत्र तावन्मौले ध्याने सर्वेपि सप्तद्(त्रि)शद्बोधिपक्ष्या विद्यन्ते। अनागम्ये तु प्रीतिवर्जिताः। तत्र प्रीतेरभावात्। वीतरागावीतरागसाधारणैषा भूमिरिति नास्ति प्रीतिः। द्वितीये तु ध्याने संकल्पवर्जिताः सर्वे विद्यन्ते। तृतीयचतुर्थयोस्तु ध्यानयोः संकल्पप्रीतिवर्ज्याः (8पञ्चत्रिंशत्। 'च'शब्दाद् ध्यानान्तरेपि पञ्चत्रिंशत् संकल्पप्रीतिवर्जिता.। त्रिष्वारूप्येषु सम्यग्वाक्कर्मान्ताजीवैस्त्रिभिः प्रीतिसंकल्पाभ्यां च। भवाग्रेपि शीलाङ्गभयप्रीतिसंकल्पबोध्यङ्गवर्जिताः पञ्चविंशतिः। कामधातावपि बोध्यङ्गवर्जितास्त्रिंशद्विद्यन्त इति। ये पुनरणा(ना)स्रवाण्येव मार्गाङ्गानीच्छ(9)न्ति[४] तेषां तैरपि वर्जिताः शेषा बोधिपक्ष्या विद्यन्त इति। गतमेतत्॥

इदं तु वक्तव्यम्। बोधिप(पा)क्षिकाधिकारे—

[460] यास्तत्प्रथमतः प्रोक्ताश्चतस्रस्तत्र कोविदैः।
न्यामानक्रान्तिवैराग्यफलाप्त्यचविशुद्धिषु॥[६]

---

१ Cf अधिगतो खो म्यायं धम्मो गम्भीरो··· *Vinaya*, I p 3

२ See *Aam* p 117

३ Cf सकला प्रथमे ध्यानेऽनागम्ये प्रीतिवर्जिता। *Ak.* vi 71 cd

४-५ Cf द्वितीयेऽन्यत्र सकल्पाद् द्वयोस्तद् द्वयवर्जिता।
ध्यानान्तरेऽपि शीलांगैस्ताभ्यां च त्रिष्वरूपिषु॥ *Ak* vi 72

४ Cf लौकिका अपि हि सम्यग्दृष्ट्यादय सन्ति। ते तु नार्यमार्गसंज्ञां लभन्ते। *Akb* vi 71 ab Also Cf तत्र सप्त बोध्यङ्गान्यनास्रवाणि। पड् विभाज्या। ते सास्रवा वा अनास्रवा वा। अपर आह। सप्त बोध्यङ्गानि आर्यमार्गश्चेति साकल्येन अनास्रवाणि। अन्ये शिष्टा द्विधा विभाज्या। *Aam* p 113

६ This topic is not disscussed in *Akb*

न्यामावक्रान्तितत्प्रथमता वैराग्यतत्प्रथमता, फलप्राप्तितत्प्रथमता इन्द्रियान्तरविवृद्धितत्प्रथ[VII A 6 Fol 136 b ](1)मता तासु खल्वेतासु चतसृषु तत्प्र[थ]मतासु—

[ 461 ] अष्टाना नीरजस्काना मार्गाङ्गाणां(ना) यथायथम् ।
तास्वेकस्याध्वसु ज्ञेयौ लाभालाभौ नवाश्रयौ ॥

बोधिपक्ष्यभावनाप्रयुक्तस्यावेत्यप्रसादप्रतिलम्भोऽवश्यम्भावीत्यतो वक्तव्य कस्मिन् सत्ये दृश्यमाने कस्यावेत्यप्रसादस्य[1] लाभ ? तदिद (2 निर्दिश्यते—

[ 462 ] त्रिसत्याधिगमे लाभ शीलधर्मप्रसादयो ।
मार्गसत्येक्षणे बुद्धसङ्घगोचरयोरपि ॥[2]

दु खसत्यमभिसमागच्छन्नार्यकान्तानि च शीलानि प्रतिलभते धर्मे चावेत्यप्रसाद । कतरस्मिन् धर्मे ? तस्मिन्नेव दु खसत्ये । धर्ममात्रमिद सर्व द्वादशायतनमात्रमित्यर्थ । नात्र (3)कश्चिदेक सर्वमेवान्वयी जातिद्र व्यारयो धर्मो विद्यते । न चात्र सन्ति पुरुषजीवपुद्गला भूतकोटय शशविषाण कल्पा निरात्मान इति । एव समुदयमभिसमागच्छता द्वयोरेव लाभ । तद्विन्निरोध समागच्छतो द्रष्टव्यम् । मार्गसत्येक्षणे तु बुद्धे भगवति प्रसादो लभ्यत तत्सङ्घे च । सद्भूतमा[4]र्गाख्यायी भगवान्मार्गज्ञो मार्गदेशक[] । येपि च त मार्ग प्रतिपन्ना श्रावका शैक्षाशैक्षा पुरुषवृषभा ये च खसद्धर्मा दि[3]प्रदीपप्रकाशितबुद्ध्याशयसा(?) च बोधिसत्त्वसिंहा दर्शनमार्गगुहा ध्यासिन तेषु च प्रसादो भवति द्विधाकारश्रद्धास्वरूप । सोऽय विस्तरेणोच्यते॥

[ 463 ] बौद्धात्सङ्घादृते मा(4)र्गाद्या श्रद्धा सत्यगोचरा ।
धर्मावेत्यप्रसादोऽसौ सप्रतीत्यप्रमानत ॥

स पुनर्धर्मो निर्वाण[4] बोधिसत्त्वसन्तानिकश्च मार्ग ॥

क पुनरेष बुद्ध को वा त प्रसाद इत्यपदिश्यते—

---

[1] Cf बुद्ध धम्म सङ्घ अवेच्चप्पसादेन समन्नागतो होति । *S* II p 69 See *Ang* II p 57

[2] Cf त्रिसत्यदर्शन शीलधर्मावेत्यप्रसादयो ।
लाभो मार्गाभिसमय बुद्ध तत्सङ्घयोरपि ॥ *Ak* VI 73 cd 74 ab

[3] V supra p 196 n. 3

[4] Cf धर्म सत्यत्रयं बोधिसत्त्वप्रत्येकबुद्धयो । *Ak* 74 cd
V supra p 126 n. 1

[ 464 ] मोहनिद्रातमोनाशाद्धीनेत्रोन्मीलना[त्] स्वयम् ।
बुद्धो यस्तद्गुणे श्रद्धा प्रसादः स जिने मतः ॥

द्विप्रकारो हि बुद्धशब्दस्यार्थो मु[6]ख्यो गौन(ण)श्च। तत्राद्यो बुद्धक(का)रका बुद्धस्याशैक्षा धर्माः। गौन(ण)स्तु तदाधारेऽपि शरीरे तत्फलभूतेषु चाष्टादशस्वावेणिकेषु बुद्धगुणेषु बुद्धशब्दसाधुत्वं पूर्वमेव प्रदर्शितम् ॥[1]

[ 465 ] शैक्षाशैक्षगुणाढ्यानां पुद्गलानां य आकरः ।
तद्गुणालम्बना श्रद्धा प्रसादः सङ्घगोचरः ॥[2]

उक्तं हि सूत्रे—"कति भदन्त लोके [7]दक्षिणीयाः ? द्वौ गृहपते शैक्षा अशैक्षाश्च।[3] तत्राष्टादश शैक्षाः नव शैक्षाः।"[4] इति विस्तरः ॥

[ 466 ] शीलानां यत्तु वैमल्यं तत्प्रसादस्तथैव तु ।

कति पुनरेषां द्रव्यतः कति नामतः ?

द्रव्यतो द्वयमेवैतन्नामतस्तु चतुष्टयम् ॥[5]

श्रद्धा रत्नत्रयालम्बनभेदेन त्रिधा भित्वार्यकान्तानि च शीलान्येकधा कृत्वा त[8]त्रापि वैमल्यप्रसादोक्तिः। यद्धि निर्मलं तत् प्रसन्नमित्युच्यते ॥

इदमिदानीं वाच्यम्। [6]अथ कस्मात्समन्वागतोऽपि शैक्षः सम्यग्ज्ञानेन सम्यग्विमुक्त्या चाष्टाभिरङ्गैः समन्वागतः शैक्षः प्रतिपद इत्युक्तं दशभिरर्हन् क्षीणास्रव इति ?[6] तदुच्यते—

[ 467 ] शैक्षस्य बन्धशेषत्वाद्विमुक्तिर्ना(र्ना)ङ्गमिष्यते ।[7]

---

[1] V supra, p 125, notes [2] V. supra, p 126

[3] Cf कति नु खो भन्त लोके दक्खिणेय्या कत्थ च दान दातब्ब ति ? द्वे खो गहपति लोके दक्खिणेय्या सेखो च असेखो च। *Ang* I p 63.

[4] V supra, p 126, n 2.

[5] Cf. मार्गश्च द्रव्यतस्तु द्वे श्रद्धाशील च निर्मला। *Ak* vi 75 ab

[6–6] Cf सूत्र उक्तम्—"अष्टाभिरङ्गैः समन्वागत शैक्षो दशभिरङ्गैः समन्वागतोऽशेक्ष" इति। कस्माच्छैक्षस्य सम्यक् विमुक्ति सम्यग्ज्ञान च नोक्तम् ? *Akb* vi 75 cd

अष्टाभिरिति।" कतमैरष्टाभि ? शैक्षया सम्यग्दृष्ट्या यावच्छैक्षेण सम्यक्समाधिनेति। दशभिरङ्गं "कतमैर्दशभि ? अशैक्ष्या सम्यग्दृष्ट्या यावदशैक्षेण सम्यक्समाधिना अशैक्ष्या सम्यग् विमुक्त्या अशैक्षेण च सम्यग् ज्ञानेनेति। *Sakv* p 606.

[7] Cf नोक्ता विमुक्ति शैक्षाङ्ग बद्धत्वात् सा पुनर्द्विधा। *Ak* vi. 75 cd

शै(१)क्षस्य विद्यमानापि अनाकारित्वान्नाङ्गमुच्यते । सत्यामपि हि तस्या क्लेशबन्धनबद्ध शैक्षो ण(न) च धिमोक्षो युज्यते ।

का पुनरिय विमुक्ति कतिधा च ? तदुपदिश्यते—

मोक्षाधिमोक्षरूपत्वान्नित्यानित्यत्वतो द्विधा ॥[१]

स्वरूपभेदादपि द्विधा प्रकारभेदादपीति। स्वभावभेदात् मोक्षाधिमोक्षस्वभावा ।[२] [Fol VII B 7 137 a] (1)प्रकारभेदोपि द्वारान्तरभेदात्,[३] सामयिकी कान्ताऽकोप्यभेदाद्वा[४] रा[ग]विरागाविद्याविरागभेदाच्च ॥

---

[१] Cf सा पुनर्द्विधा ।

असस्कृता क्लेशहानिरधिमुक्तिस्तु सस्कृता ।

साङ्ग सव विमुक्ति द्व

*Ak* vi 75 d 76 abc.

क्लेशप्रहाणमसस्कृता विमुक्ति । अशैक्षाधिमोक्ष सस्कृता विमुक्ति । *Akb* vi 76 ab The Kośakara here introduces a controversy —

सव विमुक्ती द्व

सव सस्कृता विमक्ति । द्व विमक्ती सूत्र उक्ते । चेतो विमुक्ति प्रज्ञाविमक्तिश्च । विमुक्तिस्कन्धोऽपि स एव द्रष्टव्य । यत्तर्हि सूत्र उक्तम— कतमच्च व्याघ्रबोध्यायना विमुक्तिपरिशुद्धिप्रधानम ? इह भिक्षवो रागाच्चित्त विरक्त भवति विमुक्तम् द्वषा मोहाच्चित्त विरक्त भवति विमुक्तम इत्यपरिपूणस्य वा विमक्तिस्कन्धस्य परिपूरय परिपूणस्य चानुग्रहाय च्छन्दो वीयम(Cf *Ang* ii p 194) इति विस्तर तस्मान्नाधिमोक्ष एव विमुक्ति । कि तर्हि ? तत्त्वज्ञानापनीतेषु रागादिषु चेतसो वमल्य विमुक्तिरित्यपरे । *Akb* vi 76 c

— यत एव रागादिभ्यो विमुक्ति प्रहाणमित्यव लक्षणा विमुक्तिरुक्ता सूत्र नाधिमुक्ति । तस्मान्नाधिमोक्ष एव विमुक्ति । वमल्य अनास्रवत्व अनर्थान्तरभूत घृतमण्ड स्वच्छतावत इत्यपर इत्याचाय । *Sakv* p 607 See *LVPAk.* vi pp 296-8

[२] सस्कृतासस्कृतभेदात ।

[४] Cf विमुक्ति सामयिक्यपायकोप्याकोप्यधमण ॥ *Ak.* vi 56 cd

एषा च पञ्चाना[अर्हता] सामयिकी कान्ताचेतोविमुक्तिर्वदितव्या । नित्यानुरक्ष्यत्वात् अत एवते समयविमुक्ता उच्यन्ते । समयापेक्षाश्चतेऽधिमुक्ताश्चेति । *Akb* vi 56 c

—सामयिकी इति । समये उपकरणारोग्यभक्तादिविशेषादिलक्षण भवा सामयिकी । कान्ता च । कान्ता चेतोविमुक्ति । कस्मात कान्तेति ? नित्यानुरक्ष्यत्वात । कान्त हि नित्य अनुरक्ष्यमिति लोके दृश्यते । सूत्रेप्युक्तम— तद्यथा नामकाक्षस्य पुरुषस्य ज्ञातय एकमक्षि साधु च सुष्ठु चानुरक्षितव्य मन्यरन् एवमव समयविमुक्तस्याहतोऽनुरक्ष्य एष धर्मोऽनुकम्प्योऽनुग्राह्य *Sakv* p 583

Cf अद्धान तं सामणिकारतस्स य फस्सय सामयिकं विमुत्ति । *Suttan pata* 54

—सामयिक विमुत्ति ति लोकियसमापत्तिय सा हि अप्पितप्पितसमय एव पच्चनीके

अथ सम्यग्ज्ञानं कतमत्तदुच्यते—

[ 468 ] पूर्वोक्तैव हि या बोधिः सा सम्यग्ज्ञानमुच्यते ।[1]

क्षयानुत्पादज्ञाने बोधिरित्युक्तम् ।[2] ते एव सम्यग्ज्ञानं वेदितव्यम् ।

कतरत् पुन[श्चित्तं] विमुच्यते ? किं जातनिरुद्धमथाजातनिरुद्धमथ जातमेव ?

(2)मुच्यते(ऽ)नागतं चित्तमशैक्षं क्लेशरोधतः ॥[3]

कश्चित् खल्वाह—[4]अनागतं खलु चित्तमुत्पद्यमानं विमुच्यतेऽध्वविमुक्त्या सर्वमेव त्वनागतं विमुच्यते । क्लेशावरणात् सन्तानविमुक्त्याः(क्त्या) । तत्पुनरशैक्षमेव क्लेशोपक्लेशप्राप्तिविबन्धादा(प)गमा[त्][4] । यदपि तद्रूपारूप्यप्रतिसंयुक्तं कर्मोपपत्तिफलं तदप्यर्हत्त्वप्राप्तिविबन्धक(3)रं तच्च सर्वं वज्रोपमेन प्रहीयत इत्यावरणविगमात् सर्वमेवानागतमशैक्षं चित्तं विमुच्यते ॥[5]

धर्मा एव तु परमार्थत शिक्षन्ते । यस्मात्—

---

हि विमुच्चनतो सामयिका विमुत्तीति वुच्चन्ति । *Suttanipāta A* 54 समयविमुत्तोति पन तिण्ण सोतापन-सकदागामि-अनागामीन येवेत नाम ति वेदितब्ब । *P paññatti A* p 22 See *Ang* iv p 349 V supra, p 296 n 2.

अकुप्पधम्मो ति इद पन अट्ठसमापत्तिलाभिनो अनागामिस्स चेव खीणासवस्स चाति द्विन्न पुग्गलान नाम । *P Paññatti A* p 24

[1] Cf ज्ञाने बोधिर्यथोदिता । *Ak.* vi 76 d

[2] V supra, p 357, n 3

[3] Cf विमुच्यते जायमानमशैक्ष चित्तमावृते । *Ak.* vi 77 ab

[4] Cf अनागत चित्तमुत्पद्यमान विमुच्यते । "अशैक्षमावरणेभ्य" इति सूत्रपाठ । कि पुनस्तस्यावरणम् ? क्लेशप्राप्ति, तदुत्पत्तिविबन्धत्वात् । *Akb* vi 77 ab. For details on *āvaraṇa*, see *LVPAk.* vi p 299, notes

[5] Cf ···वज्रोपमे हि समाधौ सा च प्रहीयते । तच्चोत्पद्यमानमशैक्ष चित्त विमुच्यते । *Akb* vi 77 ab

See किलेसजहनकथा, *Kv* xix 1 —इदानि किलेसजहनकथा नाम होति । तत्थ यस्मा किलेसप्पहान नाम अत्थि, पहीनकिलेसस्स च अतीतापि किलेसा पहीनाव होन्ति, अनागतापि पच्चुप्पन्नापि, तस्मा अतीतेपि किलेसे पजहति, अनागतेपि पच्चुप्पन्नेपीति येस लद्धि, सेय्यथापि एकच्चान उत्तरापथकान । यस्मा पनचेत्थ जहन्तस्स व चवर छड्डनवायामो विय किलेसे पजहन्तस्स न अतीतादिभेदेसु किलेसेसु वायामो अत्थि, निब्बाणारम्मणे पन अरियमग्गे पवत्तिते किलेसा अनुप्पन्नाव नुप्पज्जन्तीति पहीना नाम होन्ति···*KvA* xix. 1.

[ 469 ] धर्मव्यापारतो लोके धर्म्यपि व्यापृ(पृ)तो मतः ।

यौप्ययास्यस्य धर्मस्येन्धनादिदहनव्यापारे सत्यग्नेरपि धर्मिणो व्यापार उच्यते। अग्निना काष्ठं दग्धमित्यग्निदहनव्यापारे (4)च देवदत्तेन दग्धोस्मी त्युपचर्यते। तथा धर्माणा क्लेशप्रहाणशिक्षणे सति तत्सम्बन्धापेक्षया भिक्षुर शैक्ष इत्युच्यते।

मार्गस्तूपात्तकारित्रो निरस्यति तदावृतिम् ॥[1]

'तु'शब्दान्निरुध्यमान एवेत्यर्थः, वर्तमानस्य हि क्रियाबन्धात् सामर्थ्यो पपत्तेः ॥

अथ येयमसस्कृता विमुक्तिः ये च त्रयो धातवः प्रहाणधात्वादयः,[2] (5)ते ततः किमन्येऽथानन्ये ? ब्रूमः—

[ 470 ] विमुक्ति[ः] शाश्वती यैव सा विरागादयस्त्रयः ।
आख्याता धातवः सूत्रे त्रिधा भेदो ह्यपेक्षया ॥

प्रहातिविशेषापेक्षया खल्वेषा त्रैविध्यमुक्तम्। कथम्?

[ 471 ] विरागो रागनिर्मोक्षः प्रहाणाख्योऽन्यसंक्षयः।
निरोधधातुरन्यस्य सोपादानस्य वस्तुनः ॥[3]

रागप्रहाण खलु विरागधातुरित्युच्यते। (6)तदन्येषा क्लेशोपक्लेष(शा) णा(ना) प्रहाणधातुः। तदन्यस्य सोपादानस्य वस्तुन. निरोधो निरोधधातु राख्यायते ॥

येण(न) वस्तुना निर्विद्यते विरज्यतेऽपि तेन वस्तुना ? चतुष्कोटिक प्रश्नः। कथम्?

---

[1] Cf निरुध्यमानो मार्गस्तु प्रजहाति तदावृतिम्। *Ak.* vi 77 cd

[2] त्रय सावकल्पन धातव। प्रहाणधातु वैराग्यधातु निरोधधातु। जहाति राग संयोजन मत्वानन्यक्लेशानिति प्रहाणधातु। रागसयोजनप्रहाणमुच्यते वैराग्यधातु। सर्वा स्यधमप्रहाण नाम निरोधधातु। *Aam* p 129 On *nirodhadhatu* see *Digha*, xxxiii I 10

[3] Cf असंस्कृतैव धात्वाख्या विरागो रागसक्षयः।
प्रहाणधातुरन्येषां निरोधाख्यस्तु वस्तुनः। *Ak.* vi 78

[ 472 ] दुःखहेत्ववलम्बिन्या योगी निर्विद्यते धिया ।
विरज्यते तु संरक्तस्ततः कोटिचतुष्टयी ॥[1]

दुःखसमुदयक्षान्तिभिः तज्ज्ञानैश्च [7]निर्विद्यते, नान्यैः । विरज्यते तु यः संरक्तः स च सर्वैरपि दुःखसमुदयनिरोधमार्गक्षान्तिज्ञानैर्विरज्यते यैः क्लेशान् प्रजहाति । एवं चतुष्कोटिको भवति ।

तत्र निर्विद्यत एव कामवीतरागो नियाममवक्रामन् दुःखसमुदयधर्मक्षान्तिभ्यां तद्धर्मज्ञानाभ्यां च पूर्वप्रहीणत्वान्न क्षान्तिभ्यां जहात्य[8]प्रतिपक्षत्वान्न ज्ञानाभ्यामतो न विरज्यते । भावनामार्गेऽपि प्रयोगविमुक्तिविशेषा[ त् ] मार्गसंगृहीताभ्यां दुःखसमुदयज्ञानाभ्यां न विरज्यते विमुक्त्यानिविद्धवस्त्वालम्बनत्वात्तु निर्विद्यते ।

द्वितीयो(या) कोटिः—विरज्यते एवावीतरागः कामेभ्यो नियाममवक्रामन्निरोधमार्गधर्मान्वयक्षान्तिभिः भावनामा[9]र्गे च निरोधमार्गज्ञानैस्त्रैधातुकाद्वैराग्यं गच्छन्न निर्विद्यते ।

प्रामोद्यवस्त्वालम्बनत्वादुभयम् । वीतरागः कामेभ्यो नियाममवक्रामन् दुःखसमुदयधर्मान्वयक्षान्तिभिर्भावनामार्गे च दुःखसमुदयज्ञानैस्त्रैधातुकाद्वैराग्यं गच्छन् ।

नोभयम्—कामवीतरागो नियाममवक्रामन्निरोधमार्गधर्मज्ञानक्षान्तिभ्यां [ VII. A 7. Fol. 137 b. ][1]तद्धर्मज्ञानाभ्यां च भावनामार्गे चानन्तर्यमार्गेतराभ्यां निरोधमार्गधर्मज्ञानाभ्याम् ॥

य एते त्रयो धातवस्ता एव तिस्रः संज्ञाः प्रहाणविरागनिरोधसंज्ञाः ।[2] विस्तरेण तु

[ 473 ] संज्ञा अनित्यसंज्ञाद्या दश[3] ताभ्योऽशुभादयः ।
तिस्रो मार्गविधिर्मार्ग[श्रुत]स्रोऽन्त्यास्त्रयी फलम् ॥

---

[1] Cf निर्विद्यते दुःखहेतुक्षान्तिज्ञानैर्विरज्यते ।
सर्वैर्जहाति यैरेव चतुष्कोटिकसम्भव ॥ *Ak.* vi 79

(This is the last *kārikā* of the Sixth *Kośa-sthāna*)

[2] This topic is not discussed in *Akb*

[3] Cf दस इमे भिक्खवे सञ्ञा···आमतपरियोसाना ।···असुभसञ्ञा, मरणसञ्ञा, आहारे पटिकूलसञ्ञा, सब्बलोके अनभिरतिसञ्ञा, अनिच्चसञ्ञा, अनिच्चे दुक्खसञ्ञा, दुक्खे अनत्तसञ्ञा, पहानसञ्ञा, विरागसञ्ञा, निरोधसञ्ञा । *Ang* v p. 105.

अशुभसंज्ञा मरणसंज्ञा सर्वलोकेऽनभिरतिसंज्ञा । (2)मार्गप्रयोगस्तिस्रः . भिराभिरुक्तः । चतसृभिश्च मार्गोऽनित्यदुःखशून्यानात्मसंज्ञाभिः । प्रहाण-विरागनिरोधसंज्ञाभिः फलमाख्यातमिति ॥

कति पुनरासां सास्रवाः कत्यनास्रवाः ?

[ 474 ] त्रितय्यशुभसंज्ञाद्या ज्ञेया तत्खलु सास्रवाः ।
समला निर्मलास्त्वन्या बोध्या नव सुधो[ऽ]मलाः ॥

अशुभा मरणसर्वलोकानभिरतिसंज्ञास्तिस्रः (3)समलाः । शेषास्तु साव-धानास्रवाः, नवभूमिका वा(चा)[ना]स्रवा अवबोद्धव्याः ॥

[ 475 ] भूमिष्वेकादशस्वन्त्या ध्यानाद्यास्तूपलक्षयेत् ।
चतुर्थी पञ्चमी षष्ठी विद्या[त्] सप्तसु भूमिषु ॥

अभिधर्मदीपे विभाषाप्रभायां वृत्तौ षष्ठस्याध्यायस्य चतुर्थः पादः ॥

समाप्तश्च षष्ठोऽध्यायः ॥

# सप्तमोऽध्यायः

## प्रथमः पादः।

अत्राह। भगवतोक्तस्त्रिस्कन्धोऽयं (4)मार्गः। तत्र शीलस्कन्धः कर्माध्याये[1] विस्तरेण व्याख्यातः। समाधिस्कन्धोऽष्टमेऽध्याये व्याख्यास्यते। प्रज्ञास्कन्ध इदानीं व्याख्यातव्यः। सोऽयमारभ्यते—

[ 476 ] लोकोऽयं तत्त्वसंमुग्धो ज्ञेयतत्त्वे प्रमुह्यति।
तानि ज्ञानानि वक्ष्यामि स्वरूपादिप्रपञ्चतः॥

कानि पुनस्तानि कियन्ति चेति? तदुच्यते—

[ 477 ] जातिद्रव्ये निराकृत्य प्र(5)तिपक्षाद्यपेक्षया।
तद्भेदो दशधा प्रोक्तो धर्मज्ञानादिनामभिः॥

जात्याश्रयणे खल्वेकत्वप्रसङ्गो द्रव्याश्रयणे ह्यानन्त्यं[2] तथाशक्यं वक्तुम्। तस्मादुभयमेतदुपेक्ष्य यथापेक्षया दश[3] भवन्ति यत्र तेषां स्वलक्षणं सामान्यलक्षणं च तत्सर्वं विस्तरेण वक्ष्यामः॥

तत्र तावत्—

[ 478 ] धर्मान्वयविशेष्ये[4] द्वे दुःखाद्यैश्च चतुष्टयम्।
(6)द्वे संवृत्यन्यचित्ताभ्यां क्षयेणाजन्मना द्वयम्॥

---

[1] Fourth *Adhyaya*

[2] The *Patisambhida magga* (vol 1 pp 1-3) enumerates Seventy-three *ñānas* —इमानि तेसत्तति ञाणानि, इमेसं तेसत्ततिया ञाणानं सत्तसट्ठिञाणानि सावकसाधारणानि, छ ञाणानि असाधारणानि सावकेहि...। The *Vibhanga* enumerates several kinds of *ñānas* See *Ñānavibhanga*, *Vbh* pp 306—344 and *VbhA* pp 396—465

[3] दश ज्ञानानि। धर्मज्ञानं अन्वयज्ञानं संवृतिज्ञानं परचित्तज्ञानं दुःखज्ञानं समुदयज्ञानं निरोधज्ञानं मार्गज्ञानं क्षयज्ञानं अनुत्पादज्ञानं च। *Akm* p 89.

[4] धर्मज्ञानं कतमत्। कामधातुप्रतिसंयुक्तसंस्कारदुःखे... समुदये...निरोधे... मार्ग ...अनास्रवज्ञानं...इत्युच्यते धर्मज्ञानम्। अन्वयज्ञानं कतमत्। रूपारूप्यधातुप्रतिसंयुक्तसंस्कारदुःखे...मार्गेऽनास्रवज्ञानं ...इत्युच्यते ज्ञानम्। *Ibid* V. supra, p. 335, n. 3

धर्मान्वयज्ञाने तु धर्मान्वयाभ्यामेव विशेष्य(ष्ये)ते। दुःखादीनि तु चत्वारि स्वविपक्षैरेव चतुर्भिरार्यसत्यैः विशेष्यन्ते। संवृत्या परचित्तेन च संवृतिपरचित्तज्ञाने[1] विशेष्येते। क्षयेणापुनरुत्पत्त्या च क्षयानुत्पादज्ञानद्वयं[2] विशिष्यते।

अथवा

[ 479 ] प्रतिपक्ष[प्र]योगा(?)भ्यां स्वभावाकारगोचरैः।
तद्व्यवस्था निबोद्धव्या कृत्येनोपचयेण(न) वा ॥[3]

तत्र कामधातुविपक्षप्रतिपक्षो धर्मज्ञानम्। रूपारूप्यावचरविपक्षप्रतिपक्षोऽन्वयज्ञानम्। प्रयोगतः परचित्तज्ञानं चित्तं ज्ञास्यामीति तत्प्रयोगात्। स्वभावतः संवृतिज्ञान(न) पिपीलिकादिष्वपि तद्भावात्। सत्याकारे[4]गोचरे[5]-

---

[1] संवृतिज्ञानं कतमत्। सर्वा सास्रवा प्रज्ञा कुशला वा अकुशला वा अव्याकृता वेत्युच्यते संवृतिज्ञानम्। परचित्तज्ञानं कतमत्। ध्यान भावनाबलेनावाप्नोति कामधातौ परस्य चित्तचैतसिकधर्माणां ज्ञानमित्युच्यते परचित्तज्ञानम्। *Aam* p 89 See *Yogabhasya* III 19 20 See *sammutinanakatha* and *chittarammana katha Kv* v 6-7

[2] The Kośakara deals with this topic in detail अथ क्षयानुत्पादज्ञानयोः को विशेषः?

क्षयज्ञानं हि सत्येषु परिज्ञातादिनिश्चयः।
न परिज्ञेयमित्यादिरनुत्पादमतिर्मता ॥ *Ak* vii 7

क्षयज्ञानं कतमत्? (V supra p 357 n 3) विस्तरेणोक्तं शास्त्रे। कथम नास्रवेण ज्ञानेनैव जानाति? तत पृष्ठलब्धेन व्युत्थित एव जानाति। अतस्तद्विशेषणं तयोर्विशेष शास्त्रे ज्ञापित इति काश्मीराः। अनास्रवेणाप्येव जानातीत्यपरे। दर्शनवचनं तु भाष्याशयात्। *Akb* vii 7 See *Sakv* p 614 and *LVPAk* vii pp 10 11

[3] Cf स्वभावप्रतिपक्षाभ्यामाकाराकारगोचरात्।
प्रयोगकृतकृत्यत्वहेतूपचयतो दश ॥ *Ak* vii 8

[4] आकारतो दुःखसमुदयज्ञाने इति। आकारत एव नालम्बनतः पञ्चोपादानस्कन्धलक्षणत्वेन तयोरभेदात्। तथा हि शास्त्र उक्तम्— दुःखज्ञानं कतमत्? पञ्चोपादानस्कन्धान् अनित्यतो मनसिकुर्वतो यदनास्रवं ज्ञानं। समुदयज्ञानं कतमत्? सास्रवहेतुकं हेतुतः समुदयतः प्रभवतः प्रत्ययतश्च मनसिकुर्वतो यदनास्रवं ज्ञानम्। *Sakv* p 617

[5] आकारालम्बनतो निरोधमार्गज्ञाने इति। आकारतश्च आलम्बनतश्च निरोधमार्गज्ञाने व्यवस्थाप्येते। तथा हि शास्त्र उक्तम् 'निरोधज्ञानं कतमत्? निरोधं निरोधतः शान्ततः ... मनसिकुर्वतो यदनास्रवं ज्ञानं। मार्गज्ञानं कतमत्? मार्गं मार्गतो न्यायतः मनसिकुर्वतो यदनास्रवं ज्ञानम्'। *Ibid*

श्चत्वारि ज्ञानानि । (8)कृत्यतः क्षयज्ञानं कृत्यपरिसमाप्तेः । हेतूपचयतोऽनुत्पादज्ञानं सर्वैरणा(ना)स्रवैर्ज्ञानैस्तत्सभागहेतूपचयात् ॥

[ 480 ] धातुसत्यार्थचित्तेषु जातिध्वंसाप्रजन्मनोः ।
संमोहस्य निवृत्त्यर्थं तद्भेदो दशधैव वा ॥[1]

तत्र धातुसंमोहो द्वाभ्यां धर्मान्वयज्ञानाभ्यां निवर्त्यते । सत्यसंमोहश्चतुर्भिः दुःखज्ञानादिभिः । अर्थ(9)संमोहः संवृतिज्ञानेन । चित्तसंमोहः परचित्तज्ञानेन । जातिसंमोहः क्षयज्ञानेन । पुनरुत्पत्तिसंमोहोऽनुत्पादज्ञानेनेति दशैव ज्ञानानि भगवानवोचत् । नातिभूयांसि नाल्पीयांसीति ॥

अत्र पुनः

[ 481 ab. ] परिज्ञाताद्यवगमः दुःखादौ द्वयधी फलम् ।

"दुःखं परिज्ञातं समुदयो मे प्रहीणः," ···[2] [Folio No 138 lost][3]

···[ VII. B, 8. Fol. 139. ]···(1)मिति वादविपक्षेण वा अनारम्भिणां संसारेणैव शुद्धिरिति वादविपक्षेण प्रतिपदाकारः । लौकिकवैराग्यमार्गमारसत्वाविपक्षेण वा अनात्यन्तिकवैराग्यगमनविप्रलम्भात् सर्वभावहुमानविपक्षेण नैर्याणिकाकारः ॥[4]

अथाकारो [ना]म क एष धर्मः । किं वा तेनाकार्यत इति ? तदुभयं निर्दि(2)श्यते —

[ 482 cd ] धीराकारः सदाकार्यं साकारास्त्ववलम्बिनः ॥[5]

---

[1] Cf. धर्मज्ञानंनिरोधे मन्मार्गे वा भावनापथे ।
त्रिधातुप्रतिपक्षस्तु कामधातोस्तु नान्वयम् ॥ *Ak.* vii 9

[2] Cf. "दुःखं मे परिज्ञातमिति जानाति । समुदय प्रहीणो निरोध साक्षात्कृतो मार्गो भावित इति जानाति ।"··· *Akb* vii. 7. (V. supra, p 357, n 3) See तिपरिवट्ट द्वादसाकार यथाभूत ञाणदस्सन'—*Vinaya*, i. p 11.

[3] Folio No. 138 is lost. In this lost folio, the *Adi*. might have discussed the following topics, which are dealt with in the corresponding *Akb*. vii 10-13 a.—(१) एषां दशानां ज्ञानानां आकाराः । (२) परचित्तज्ञानं समलं निर्मलं च । तस्याकाराः । (३) किमनास्रवं स्वलक्षणाकारोऽस्त्यथ न ? (४) किं पुनरिमे षोडशाकारा नामतः आहोस्वित् द्रव्यतः ? See *Sakv* pp 618-624.

[4] V. supra, p 329, n. 1

[5] Cf द्रव्यतः षोडशाकाराः प्रज्ञाकारस्तया सह ।
आकारयन्ति सालम्बाः सर्वमाकार्यते तु सत् ॥ *Ak* vii. 13

प्रज्ञा खल्वाकार इत्युच्यते। न तर्हि प्रज्ञा साकारा भवति द्वयो प्रज्ञयोः यौगपद्याभावात्। ततश्च न सर्वे चैतसिकाः साकाराः प्राप्नुवन्ति। न खलु ब्रूम प्रज्ञासम्प्रयोगात्साकारा वैकाकारा वा। किं तर्हि? स्ववृत्ति निराकरणादालम्बनग्रहणादित्यर्थः।[1]

(3)किं पुनस्तदात्का(का)र्यम्? सदाकार्यम्। यत्किञ्चिद् द्रव्यत प्रज्ञप्तितो वा विद्यते य(त)दाकार्यते। चित्तचैत्तास्तु साकारा विषयग्राहिण[2] इत्यर्थः॥[3]

किं पुनर्ज्ञानं कति स्मृत्युपस्थानानि?

[483] परचित्तमतिस्त्रीणि धर्मसंज्ञं निरोधधीः।
चत्वारि स्मृत्युपस्थानान्यतोऽन्यज्ज्ञानमिष्यते॥[4]

परचित्तज्ञानं खलु त्रीणि वेदनाचित्तधर्माख्या(4)नि। निरोधज्ञान धर्म स्मृत्युपस्थानम्। परचित्तनिरोधज्ञानाभ्यामन्यानि ज्ञानानि चत्वारि स्मृत्युपस्थानानि॥

अथ कतमस्य ज्ञानस्य कति ज्ञानान्यालम्बनम्?

[484] मार्गधर्मान्वयज्ञानगोचरो नवशो धियः।[5]

---

[1] Cf एवं तर्हि प्रज्ञा साकारा न भविष्यति। प्रज्ञान्तरासंयोगात्। एवं तु युक्तं स्यात्। सर्वेषां चित्तचैत्तानां आलम्बनग्रहणप्रकार आकार इति। *Akb* vii 13 b एवं तु युक्तं स्यात् इति सौत्रान्तिकमतम्। आलम्बनग्रहणप्रकार इति। नैरुक्तां विधिरिति दर्शयति—आलम्बनशब्दाद् आकारं गृहीत्वा प्रकारशब्दाच्च कारशब्दम्। शेषवर्णलोपे च कृते आकार इति रूपं भवति। तदेव सति प्रज्ञाऽपि साकारा भवतीति सिद्धम्। *Sakv* p 629

[2] Cf पञ्चन्नं खन्धानं कति सारम्मणा, कति अनारम्मणा? रूपक्खन्धो अनारम्मणो। चत्तारो खन्धा सारम्मणा। *Vbh* p 428 See *Dhs* 1185, 1508 In this connection, see the following controversies —(१) रूपं सारम्मणं ति कथा (२) अनुसया अनारम्मणा ति कथा (३) ञाणं अनारम्मणं ति कथा (४) अतीतारम्मणकथा। *Kv* ix 3–7

[3] The Kośakāra discusses here the *kuśalādi bheda* of the ten *jñānas* in *Akb* vi 14 15 This topic is perhaps discussed in the lost portions of *Adv* V supra, p 375 n 3

[4] Cf स्मृत्युपस्थानमेकं धीर्निरोधे परचित्तधीः।
त्रीणि चत्वारि शेषाणि। *Ak.* vii. 16 a-c.

[5] Cf धर्मधीर्गोचरो नव। *Ak.* vii. 16 d

मार्गधर्मान्वयज्ञानानां प्रत्येकं नवज्ञानान्यालम्बनम् । मार्गज्ञानस्य तावत्संवृतिज्ञानं हित्वा । धर्मज्ञानस्यान्व(5)यज्ञानम् । अन्वयज्ञानस्य धर्मज्ञानम् ।

दुःखहेतुधियोर्द्वे द्वे

दुःखसमुदयज्ञानयोः संवृतिज्ञानं सास्रवं च परि(र)चित्तज्ञानमालम्बनम् ।

चतुर्णां दश

संवृतिपरचित्तक्षयानुत्पादज्ञानानां सर्वाण्ये(ण्ये)व दशज्ञानान्यालम्बनम् ।

नापरम् ॥[1]

निरोधज्ञानं खलु नैव ज्ञानालम्बनम् ॥

पुनरपि दशधर्मान् स्थापयि(6)त्वा कस्य ज्ञानस्य कति धर्मा विषय इति वाच्यम् । कथम् ? तदुच्यते—

[ 485 ] पञ्चधर्मांस्त्रिधात्वाप्तान् मार्गरूपान् सनातनान् ।
व्युत्पत्त्यर्थं द्विधा कृत्वा दर्शयेज्ज्ञानगोचरम् ॥[2]

त्रैधातुकान् धर्मात्(न्) प्रत्येकं द्विधा कृत्वा संप्रयुक्ता विप्रयुक्ताश्च[3], अप्रतिसंख्यांश्च द्विधा कृत्वा संप्रयुक्तविप्रयुक्तभेदेनैव. असंस्कृतमपि द्विधा (7)कृत्वा कुशलाव्याकृतभेदेनैवं[4] कृत्वा दश भवन्ति ।

तत्र तावत्संवृतिज्ञानस्य सर्व एव दशधर्मा विषयः ।[5] धर्मज्ञानस्य पञ्च

[1] Cf नव मार्गान्वयधियो दुःखहेतुधियोर्द्वयम् ।
चतुर्णां दश नैकस्य योज्या धर्मा पुनर्दश ॥ *Ak* vii 17

[2] Cf त्रैधातुकामला धर्मा असंस्कृताश्च द्विधा द्विधा । *Ak* vii 18 ab

[3] सम्प्रयुक्ताश्चित्तचैत्ता इति । विप्रयुक्ता प्राप्त्यादयः । *Sakv* p 630

[4] कुशलाव्याकृतभेदादिति । कुशलः प्रतिसंख्यानिरोधः परमशोभनत्वात । अव्याकृताव्याकाशाप्रतिसंख्यानिरोधाविति । *Ibid*

[5] The Kośakara discusses this point in detail स्यादेकेन ज्ञानेन सर्वधर्मान् जानीयात् ? न स्यात् । अपि तु

स्वात्मसहभूत्यनु(?)पस्यैकं विहायान्यद्विपश्यते ।

संवृतिज्ञानं स्वस्मात्कलापादन्यान् सर्वधर्माननात्मतो जानीयात् सर्वधर्मा अनात्मान इति । स्वभावस्य सहभुवश्च धर्मस्यास्य स्वकलापः । तेषामग्रहणं विषयविषयिभेदादेवालम्बनत्वादिति । सन्निकृष्टत्वाच्च । तच्च कामावचरं श्रुतचिन्तामयं रूपावचरं श्रुतमयं भावनामयम् । तस्य व्यवच्छिन्नभूम्यालम्बनत्वात् । अन्यथा हि युगपत्सर्वतो वैराग्यं स्यात् । *Akb* vii 18 cd —स्यादेकेन ज्ञानेन सर्वधर्मान् जानीयात् ? न स्यात् इति । कथं गम्यते ? सूत्रात् ।

कामप्रतिसंयुक्तानास्रवाः संप्रयुक्तविप्रयुक्ताकुशलं चासंस्कृतम्। अन्वय ज्ञानस्य सप्त रूपारूप्यप्रतिसंयुक्तानास्रवा[:] संप्रयुक्तविप्रयुक्तकुशलं चासंस्कृतम्। परि(र)चित्तज्ञानस्य [8]त्रयः कामरूपप्रतिसंयुक्तानास्रवासंप्रयुक्ता एव। दुःखसमुदयज्ञानयोः षट्कामरूपारूप्यप्रतिसंयुक्तासंप्रयुक्तविप्रयुक्ताः। निरोधज्ञानस्यैको[ऽ]संस्कृतमेव कुशलम्। मार्गज्ञानस्य द्वावनास्रवः संप्रयुक्तो विप्रयुक्तश्च। क्षयानुत्पादज्ञानयोर्नव धर्मा विषयोऽसंस्कृतमव्याकृतं मुक्त्वा॥

[9]इदमिदानीं वक्तव्यम्। कः कतिभिर्ज्ञानैः समन्वागतः? सर्वस्ता वत्पृथग्जन· संवृतिज्ञानेनैव। अथ तु नियमः—

[ 486 ] दृङ्मार्गे प्रथमे ज्ञाने त्रिभिर्ज्ञानैः समन्वितः।

द्वितीयक्षणे त्रिभिः संवृतिज्ञानदुःखज्ञानधर्मज्ञानैः।

चतुर्ष्वेकैकवृद्ध्योर्ध्वं निरक्तो

[VII A 8 Fol 139 b] [1]ऽन्यमनो धिया ॥[१]

अतः परं चतुर्षु चित्तक्षणेष्वेकैकं ज्ञानं वर्धते। त[द्यथा] दुःखेऽन्वय ज्ञानेऽन्वयज्ञानं वर्धते। समुदयधर्मज्ञाने समुदयज्ञानम्। निरोधधर्मज्ञाने निरोधधर्मज्ञानम्। मार्गधर्मज्ञाने मार्गधर्मज्ञानं वर्धते। समुदयनिरोधमार्गा· न्व[यज्ञा]नेषु क्षान्तिषु च नास्त्यपूर्वज्ञानवृद्धिः। सर्वत्र तु वीतरागस्य पर[2]· चित्तज्ञान वर्धत इति वाच्यम्॥

अभिधर्मदीपे विभाषाप्रभायां वृत्तौ सप्तमस्याध्यायस्य प्रथम पाद· ॥

---

"इहास्माक भो गौतम उपस्थानशालायां सन्निषण्णानां सन्निपतितानां एवरूपान्तराकथा समुदाहारोऽभूत्। श्रमणो गौतम किमेवमाह। नास्ति स कश्चिच्छ्रमणो वा ब्राह्मणो वा य सकृत् सर्वं ज्ञास्यति सर्वं द्रक्ष्यतीति। तथ्यमिद भो गौतम स्मरामि भवतोऽहमेव वक्तुम्। अपि तु नास्ति स कश्चिच्छ्रमणो वा ब्राह्मणो वा य सकृत् सर्वं ज्ञास्यति वा द्रक्ष्यति वेति। Sakv pp 630-1 For details, see I VPAk vii pp 45 47, notes

For an allied controversy see Ks v 9 —इदानि पच्चुप्पन्नञाणकथा नाम होति। तस्स यस्स सब्बसङ्खारेसु अनिच्चतो दिट्ठेसु तं पि ञाणं अनिच्चतो दिट्ठं होतीति वचनं निस्साय अविसेसेन सब्बस्मिं पच्चुप्पन्ने ञाणं अत्थीति लद्धि सेय्यथापि अन्धकानं। Ks A v 9 Also see Ks v 8

[१] Cf एकज्ञानान्वितो रागी प्रथमेऽनास्रवे क्षणे।
द्वितीये त्रिभिरूर्ध्वं तु चतुर्ष्वेकैकवृद्धिमान्॥ Ak vii 19

## द्वितीयपादः ।

इदमिदानीं वक्तव्यम् । कस्यां भूमौ कस्यां वावस्थायां कस्य वा पुद्गलस्य कति ज्ञानानि भाव्यन्ते ? तदारभ्यते—

[ 487 ] त्रिध्यानकामवैराग्ये पश्चिमे मुक्तिवर्त्मनि ।
मौलध्यानप्रयोगे च ज्ञेयानागतभावना ॥

[ 488 ] बाल(3)स्य स्मृत्युपस्थानध्यानाद्युत्पादने तथा ।
प्रयोगमुक्तिमार्गेषु संवृत्यान्यमनोधियः ॥

बालस्य खल्वाद्यध्यानत्रयवैराग्ये पश्चिमे विमुक्तिमार्गे मौलध्यानप्रयोगमार्गे च स्मृत्युपस्थानादिकुशलमूलोत्पादने च प्रयोगविमुक्तिमार्गे च संवृतिज्ञानस्य परचित्तज्ञानस्य चानागतभावना वेदितव्या ॥

आर्य(4)स्य तु

[ 489 ] क्षान्तिज्ञानानि भाव्यन्ते स्वजातीयानि दृक्पथे ।

दर्श(न)मार्गे खलु यद्येव संमुखीभूतं भवति क्षान्तिर्वा ज्ञानं वा तज्जातीयमेवानागतं भाव्यते । नान्यजातीयमन्यविषयं वा पृथक्कार्यत्वात् ।

सांवृतं चान्वयज्ञाने दुःखहेतुसमाह्वये ॥[1]

संवृतिज्ञानं खलु दर्श(न)मार्गे त्रिषु चित्तेषु दुःखसमुदयनिरोधान्वयज्ञानाख्ये(5)षु भाव्यते । न धर्मज्ञानेषु, अकृतार्थत्वादालम्बनाकारपरिज्ञयो हि नाद्यापि परिसमाप्तः ॥[2]

कस्मात्पुनः संवृतिज्ञानं तत्र भावनां गच्छति ? तदुच्यते—

[ 490 ] समानप्रतिपक्षत्वात्तेषु मार्गायितत्वतः ।

---

[1] Cf यथोत्पन्नानि भाव्यन्ते क्षान्तिज्ञानानि दर्शने ।
अनागतानि तत्रैव सांवृत चान्वयागमे ॥ *Ak.* vii 20

[2] Cf न धर्मज्ञानेष्वकृत्स्नाभिसमयात् । *Akb* vii 20—न हि तदानीं रूपारूप्यावचरदुःख परिज्ञान समुदय प्रहाण निरोध साक्षात्कृत इति। *Sakv* p 633

यथैवान्वयज्ञान्तिज्ञानानि त्रीणि तत्प्रहातव्यक्लेशप्रतिपक्ष, तथा तान्यपि सवृतिज्ञानानि प्रतिपक्ष । तैरपि तत्र मार्गायित नि(?)र्वेधभागीयावस्थायाम्।

अतोऽभिसमयान्त्याख्यं तत्त्रिसत्यान्तलाभतः ॥[1]

अत एव तदाभिसमयान्तिकं सवृतिज्ञानमित्याख्यायते। धर्मज्ञानेषु खलु तद्भावनायामभिसमयमध्यानि स्युरिति। तच्चैतदनुत्पत्तिधर्मकमपि[2] सद्भर्मनया चिन्त्यते।

[3]कस्मात्पुनस्तदनुत्पत्तिधर्मकमेव? श्रद्धाधर्मानुसार्याश्रयेण तदुत्पत्ति(?)प्रतिबद्धत्वात्। दर्शनमार्गे च समुखीभूते तत्रापत्रम्। तस्मादनुत्पत्तिक धर्ममेव भावना गच्छति।[3] तत्पुनरेतत्सप्तभूमिक कामावचर दर्शनमार्ग समानभूमिक[4] च। उक्ता दर्शनमार्गभावना ॥

—

[1] Cf अतोऽभिसमयान्त्याख्यम । Ak vii 21 a
अत एव तदभिसमयान्तिक सवृतिज्ञानमाख्यायत । एवकमयाभिसमयान्ते भावनात । कस्मान्न मार्गान्वयनात भावना गच्छति ? मा [illegible] यस्य पूर्व लौकिकेन मार्गेणानभिसमितत्वात अद्ध्याभिगमयाच्च । कृत्स्न हि दृष्ट [illegible] परिज्ञातु समुत्प्य प्रहातु निराध [illegible] न तु मार्ग शक्यत कृत्स्नो भावयितुम । अभिसमयान्ताभावात तस्मिन्नाभिसमयान्तिक भाव्यत । दर्शनमार्गपरिवार [illegible] । [illegible] । Akb vii 21 a—दर्शनमार्गपरिवारत्वादिति । दर्शनमार्गस्य परिवार सवृतिज्ञानम् । अत [illegible] एव दर्शनमार्गो भाव्यत । न मार्गस्यान्त तस्य भावनामार्गत्वात । [illegible] इति । [illegible] दर्शनमार्गपरिवार एव । न भावनामार्गपरिवारोऽस्ति । [illegible] हि भावनामार्गपरिवारोऽपि नास्ति दृष्ट । Sakv p 633
[2] Cf कि पुनस्तदभिसमयान्तिक सवृतिज्ञान कदाचित्समुखी क्रियत ? न कदाचित् । [illegible] हि तदनुत्पत्तिधर्मकम । Ak vii 21 b
[3-3] Cf कथ पुनरनुत्पत्तिक भवति [illegible] यदि नैव [illegible] । [illegible] तस्मात्तत्र भावना सिध्यति । एवन्तु सिध्यति यदाहु पूर्वाचार्या । कथं च पूर्वाचार्या आहु ? [illegible] भाव्यत । [illegible] । [illegible] vii 21 । [illegible] भवति [illegible] । Akb [illegible] । अथ कस्मात्तत्र [illegible] ? दर्शनमार्गस्य [illegible] । [illegible] भावनामार्ग [illegible] । Sakv p 633 [illegible] P Ak vii p 50/52
[4] Cf कतिभूमिक पुनरतत्सवृतिज्ञान भाव्यत ? दर्शनमार्गस्य [illegible] समानभूमिकम । Ak vii 21 cd

भावनामार्गे वक्तव्या ।

[ 491 ] मार्गाख्ये त्वन्वयज्ञाने ष[ड् भाव्य]न्तेऽथ सप्त वा ।[१]

षोडशे[तु वर्त]मानान्वयज्ञानचित्ते भावना[(8)]धर्मन्यवीतरागस्य षड् भाव्यन्ते। संवृतिपरचित्तक्षयानुत्पादज्ञानानि हित्वा। वीतरागस्य तु सप्ता-नागतानि भाव्यन्ते परचित्तज्ञानं वर्धयित्वा ।

आनन्तर्यपथे चोर्ध्वं भाव्यते नान्यचित्तधीः ॥[२]

सरागस्यापि भावनामार्गे तस्माद् षोडशात्क्षणादूर्ध्वं यावत्कामे वीत-रागो भवति तावत्सर्वेषु प्रयोगानन्तर्यविमुक्तिवि[(9)]शेषमार्गेषु सप्त ज्ञानानि भाव्यन्ते। अन्यत्र परचित्तक्षयानुत्पादज्ञानेभ्यः ॥

[ 492 ] प्रहाणमुक्तिमार्गेषु विनान्त्याया विमुक्तितः ।
भवाग्रप्रतिपक्षत्वात्संवृतस्य न भावना ॥[३]

ध्यानचतुष्टयारूप्यत्रयवैराग्ये पञ्चस्वभिज्ञासु,[४] अकोप्याप्रतिवेधे च व्यवकीर्ण[भाविते च] ध्याने। शैक्षस्य सर्वेष्वानन्तर्यविमुक्तिमार्गेषु सप्तैव ज्ञानानि [Folio no. 140 lost][५]

[ •• अभिधर्मदीपे विभाषाप्रभायां वृत्तौ सप्तमस्याध्यायस्य द्वितीयपादः समाप्तः ॥ ][६]

---

[१] Cf षोडशे षड् सरागस्य वीतरागस्य सप्त तु । *Ak* vii 22 ab

[२] Cf सरागभावनामार्गे तदूर्ध्वं सप्त भावना ॥ *Ak* vii 22 cd

[३] Cf सप्तभूमिजयाऽभिज्ञाऽकोप्याप्त्याकीर्णभाविते ।
आनन्तर्यपथेषूर्ध्वं मुक्तिमार्गाष्टकेऽपि च ॥ *Ak* vii 23

[४] V infra, *Ad kārikā* 515

[५] Folio No 140 is lost In this lost folio, the *Adv* might have discussed the following topics —(१) शैक्षस्य ज्ञानभावना । (२) कस्मिन्मार्गे कतिभूमिकं ज्ञानं भाव्यते । (३) चतुर्विधा भावना—प्रतिलम्भभावना निषेवणभावना प्रतिपक्षभावना विनिर्धावनभावना च । (४) बुद्धस्याष्टदशावेणिका धर्माः ।

These topics are discussed in the corresponding *Akb* vii 24 28

[६] A major portion of the second *pada* of the Seventh *Adhyaya* is lost

## तृतीयपादः । [1]

[VIII B 1 Fol 141 a] [2](1)स्थानवस्तुहेतुविपाकप्रतिनिस्तरैर्योद्द
व्यम् । तथातीतानागते प्रत्युत्पन्ने च [त]दाक्षेपाक्षेपवैचित्र्य प्रतिकर्मसमादान

---

[1] The beginning portion of this pada is lost V supra p 381 n 5

[2] The topic under discussion is asadharanah Buddhadharmah —

अष्टादशावेणिकास्तु बुद्धधर्मा बलादय । *Ak* vii 28 ab

य बुद्धस्यैव भगवत क्षयज्ञाने भावना गच्छन्ति नान्यस्य । कतमेऽष्टादश ? दश बलानि चत्वारि वैशारद्यानि त्रीणि स्मृत्युपस्थानानि महाकरुणा च । असाधारण ह्यावे णिकम । *Akb* vii 28 a

—एत बलान्या महाकरुणा ता अष्टादशावेणिका वैभाषिकव्यवस्थाप्यन्ते । बलादिव्य तिरिक्त कचिद यानष्टादशावेणिकान बुद्धधर्मान वर्णयन्ति । तद्यथा—नास्ति तथागतस्य स्खलितम । नास्ति रवितम । नास्ति द्रवता । नास्ति नानात्वसंज्ञा । नास्त्यव्याहृत मन । नास्त्यप्रतिसंख्यायोपेक्षा । नास्त्यतीतेषु नास्त्यनागतेषु नास्ति प्रत्युत्पन्नेषु प्रतिहत ज्ञानदर्शनम । सर्व कायकर्म वाक्कर्म मन कर्म ज्ञानानुपरिवर्ति । नास्ति छन्दहानि । नास्ति वीर्यहानि । नास्ति स्मृतिहानि । नास्ति समाधिहानि । नास्ति प्रज्ञाहानि । नास्ति विमुक्तिज्ञानदर्शनहानिरिति ।

दशबलानि । स्थानास्थानज्ञानबलम । कर्मविपाकज्ञानबलम । ध्यानविमोक्षसमाधि समापत्तिज्ञानबलम । इन्द्रियपरापरज्ञानबलम । नानाधिमुक्तिज्ञानबलम । नानाधातुज्ञान बलम सर्वत्रगामिनीप्रतिपज्ज्ञानबलम । पूर्वनिवासानुस्मृतिज्ञानबलम । च्युत्युपपत्तिज्ञानबलम । आस्रवक्षयज्ञानबल च ।

सूत्र तु— दशायुष्मन्तस्तथागतबलानि । कतमानि दश इहायुष्मन्तस्तथागत स्थान च स्थानतो यथाभूत प्रजानाति । अस्थान चास्थानत । इद प्रथम तथागतबलम । यन बलन समन्वागतस्तथागतोऽर्हन सम्यक्सम्बुद्ध उदारमार्षभस्थान प्रतिजानाति ब्रह्मचक्र प्रवर्तयति । पर्षदि सम्यक सिंहनाद नदति । *Sakv* p 641

Cf दस खो पनिमानि सारिपुत्त तथागतस्स तथागतबलानि यहि समन्नागतो तथागतो आसभ ठान पटिजानाति परिसासु सीहनाद नदति ब्रह्मचक्क पवत्तेति कतमानि दस ? इध सारिपुत्त तथागतो ठान च ठानतो अट्ठान च अट्ठानतो यथाभूत पजानाति तथागतो अतीतानागतपच्चुप्पन्नान कम्मसमादानान ठानसो हेतुसो विपाक यथाभूत पजानाति । तथागतो सब्बत्थगामिनि पटिपद यथाभूत पजानाति । तथागतो अनेकधातुनानाधातुलोक यथाभूत पजानाति । तथागतो परसत्तान परपुग्गलान इन्द्रियपरोपरियत्त यथाभूत

भवति। किञ्चिद्धि सहसा प्रत्ययवृ(व)शात्क्रियते। किञ्चिद् दुष्प्रचेतसा। किञ्चित्पुनः समादाय क्रियते तेन कर्मणा मया जीवि[तव्य]मिति। तथा धर्मोऽयमधर्मो वेति समादायासमादाय करोति। स्थानादि[2]प्रविभागतश्च गाम्भीर्यं बोद्धव्यम्। तत्र स्थानमायत्युत्पत्त्यायत्तानामवकाशकारणात्। हेतुरपि येन हेतुना क्रियते[1]। यथोक्तम्—"वस्तु स्थानाधिकरणमुच्यते। साधिकरणं वस्तु स्थानम्। तद्यथा प्राणिवधकर्मणः स्वभावः। स च प्राणी यस्य चार्थे वध्यते यया प्रत्ययसामग्र्या सर्वमेतद्वस्तु सम्भवति। कुतः? स्थानहेतुविपाका[3]नां पृथगुक्तेः। यस्य खल्वेत[त्] स्थानं यद्वास्य स्थानं क्रियते यस्य तत्कर्म हेतुः, यद्धेतुकं च तत्, अयं चास्य कर्मणो विपाकोऽयमन्यस्य" इति।[2] तदेतदष्टज्ञानस्वभावं निरोधमार्गज्ञाने हित्वा ॥[3]

[ 493 ] ध्यानादीनां स्वभावादाव्याघातविसारि यत्।
ध्यानादिज्ञानसंज्ञं तन्नवज्ञानमयं बलम् ॥[4]

---

पजानाति···। ···तथागतो झानविमोक्खसमाधिसमापत्तीनं सङ्किलेसं वोदानं वुट्ठानं यथाभूतं पजानाति···। ·तथागतो अनेकविहितं पुब्बेनिवासं अनुस्सरति···। ···तथागतो दिब्बेन चक्खुना विसुद्धेन ··यथाकम्मूपगे सत्ते पजानाति··। तथागतो आसवानं खया अनासवं चेतोविमुत्तिं पञ्ञाविमुत्तिं दिट्ठेव धम्मे सयं अभिञ्ञा सच्छिकत्वा उपसम्पज्ज विहरति··। *M sutta* 12 See *Aṅg* v pp 33—36, *Vbh* pp 335—344 For details, see *Vbh A* pp 423—464, *LVPAk* vii pp 68—72

[1] The discussion on *sthānāsthāna jñānabalam* is lost (V supra, p 381, n 4) The *karma-vipaka jñana balam* is under discussion

Cf तत्थ कतमं तथागतस्स अतीतानागतपच्चुप्पन्नानं कम्मसमादानानं ठानसो हेतुसो विपाकं यथाभूतं ञाणं ?

इध तथागतो पजानाति—अत्थेकच्चानि पापकानि कम्मसमादानानि गति सम्पत्तिपटिबाळ्हानि न विपच्चन्ति,·· उपधिसम्पत्तिपटिबाळ्हानि···कालसम्पत्ति पटिबाळ्हानि ·· ···पयोगसम्पत्तिपटिबाळ्हानि न विपच्चन्ति, अत्थेकच्चानि पापकानि कम्मसमादानानि गतिविपत्तिं··· उपधिविपत्तिं ···कालविपत्तिं पयोगविपत्तिं आगम्म विपच्चन्ति, अत्थेकच्चानि कल्याणानि कम्मसमादानानि ···*Vbh* p 338 See *Vbh A* pp 439 454

[2] This passage is not quoted in *Akb*

[3] Cf स्थानास्थाने दशज्ञानान्यष्टौ कर्मफले नव ॥ *Ak* vii 28 cd

—अष्टौ कर्मफले इति। कर्मणः सास्रवस्य तद्विपाकस्य च दुःखसमुदयसत्यसंगृहीतत्वात्। निरोधमार्गज्ञाने न भवत इति। अतोऽन्यानि तदालम्बनान्यष्टौ ज्ञानानि सम्भवन्ति। *Sakv* p 643

[4] Cf. नव ॥ ध्यानाद्यक्षाधिमोक्षेषु। *Ak* vii 28 d, 29 a

ध्यानविमोक्षसमाधिसमापत्ति[1]ज्ञानबलं तु[(4)] यत्संक्लेशव्यवदानव्यवस्थानविशुद्धिषु निवृत्तिपक्षे ध्यानानां विमोक्षाणां समाधीनां समापत्तीनां च संक्लेशव्यवदानव्यवस्थानविशुद्धिषु यद्बलमव्याहतम्। तत्र संक्लेशादि चतुष्टयं हानि(न)विशेषस्थितिनिर्वेधभागीयं सास्वादशुद्धकानास्रवादिभेदात्। तदेतद्ध्यानविमोक्षसमाधिसमापत्तिज्ञानबलं नवज्ञा[(5)]नात्मकं[2] बोद्धव्यम् ॥

[ 494 ] यत्सत्त्वानाममृदुत्वादौ परिच्छेदे प्रवर्तते।
अव्याहतमपरज्ञानबलं तन्नवधीमयम् ॥

इन्द्रियपरापरज्ञानबलम्[3] यत्सर्वसत्त्वानां श्रेयःप्राप्तिशक्तिवैचित्र्ये ज्ञानमव्याहतं तदिन्द्रियपरापरज्ञानबलं नवज्ञानात्मकं निरोधज्ञानं हित्वा ॥

[ 495 ] यत्सत्त्वाधिरुचिवैचित्र्ये हीनादौ सम्प्रवर्तते।
नानाधिमुक्तिधीसंज्ञं[(6)]बलं तच्च नवात्मकम् ॥[4]

यत्खलु सर्वसत्त्वानां हीन(न)मध्यमोत्तमाधिमुक्तिष्वव्याहतं ज्ञानं तद्‌ नानाधिमुक्ति[5]ज्ञानबलं नवज्ञानात्मकमेव निरोधज्ञानं हित्वा ॥

[ 496 ] यन्नानाधात्वपेक्षाख्यं[6] सत्त्वार्थाय प्रवर्तते।
नवज्ञानमयं तद्धि नानाधातुधीबलम् ॥

---

[1] ध्यानानि चत्वारि। विमोक्षा अष्टौ। समाधयस्त्रयः शून्यतादयः। समापत्ती द्वे असंज्ञिनिरोधसमापत्ती। नवानुपूर्वविहारसमापत्तयः। *Sakv* p 643 See *Vbh* p 342-3

[2] तेषु नव ज्ञानानि निरोधज्ञानं हित्वा। कथं कृत्वा? ध्यानादीनां सास्रवानास्रवसम्प्रयुक्तविप्रयुक्तभेदात् तदालम्बनानि नव ज्ञानानि सम्भवन्ति। निरोधज्ञानं तु न भवति तेषां संस्कृतत्वात्। *Sakv* p 643

[3] Cf तत्थ कतमं इन्द्रियपरोपरियत्तं ञाणं? इध तथागतो सत्तानं आसयं जानाति अनुसयं पजानाति चरितं पजानाति अधिमुत्तिं पजानाति अप्परजक्खे महारजक्खे तिक्खिन्द्रिये मुदिन्द्रिये स्वाकारे द्वाकारे सुविञ्ञापये दुविञ्ञापये भब्बाभब्बे सत्ते पजानाति। *Vbh* p 340 342 see *Vbh A* pp 458 462

[4] इध तथागतो पजानाति—सन्ति सत्ता हीनाधिमुत्तिका पणीताधिमुत्तिका इति तथागतस्स सत्तानं नानाधिमुत्तिकतं यथाभूतं ञाणं। *Vbh* p 340

[5] प्रधानादिषु रुचयो नानाधिमुक्तयः। *Sakv* p 643

[6] इध तथागतो खन्धनानत्तं पजानाति धातुनानत्तं आयतननानत्तं अनवधातुनानत्तं लोकनानत्तं पजानाति। *Vbh* p 339

—धातुनानत्तं ति अयं चक्खुधातु—प—अयं मनोविञ्ञाणधातु नाम। अट्ठारसधातु नानाधातुयो ति इदं न केवलं उपादिन्नकसङ्खारलोकस्सेव नानत्तं पजानाति अनुपादिन्न

ते पुनः पूर्वाभ्यासवासनाधातवः[१] पूर्वजन्मसु गुणदोषविद्याशिल्प-[(7)] कर्माभ्यासेभ्यो या वासनास्ताः खल्विह धातवो विशेषेण बोद्धव्याः। गोत्रा-र्थेणा(ना)वस्थानां त एवाशया इत्यवगन्तव्याः, तद्वशाच्चरि(रती)त्युच्यते। उक्तं च भगवता—"धातुशः सत्त्वाः संस्यन्दन्ते" इति ॥[२]

[ 497 ] गतिधर्मार्यभेदं यद्वेत्ति प्रत्ययभेदतः।
तद्वियो दश सर्वत्रगामिनीप्रतिपद्बलम् ॥

यत्खलु सत्त्वोपपत्तिनिर्वर्तकेषु[(8)] तत्क्षयकरेषु च धर्मेषु ज्ञानमव्याहतं तत्सर्वत्रगामिनीप्रतिपज्ज्ञानबलम्।[3] भव्यविशेषोपधवद् द्रष्टव्यम्। मोक्ष-भव्यानां नानाधातूनां सत्त्वानामनेकधातूनां सर्वक्लेशप्रहाणायोपधविशेषवत्सा-मान्यप्रतिपक्षविशेषप्रतिपदं च सर्वथ जानीते गतिहेतुं चानेन धातुरेकसन्ताने यो यद्गतचित्त[(9)]स्तद्वशेन तद्वत्तरणभव्योऽभव्यश्च भवति तत्सर्वं यथावत्प्रति-जानातीति सर्वाकारज्ञानाप्युक्ता[४] भवति। तदेतत् सफलमार्ग[५]प्रहाणाद्दश-ज्ञानात्मकं भवति। केचित्तु केवलमार्गप्रहणात्सवज्ञानात्मकम् ॥

---

: महारल्गोरस्मापि नानत्त तथागतो पजानाति एवाति दस्सेतु सहिन। पच्चेकबुद्धा हि द्वे च अग्गसावका उप्पादितमहारल्गोरस्सापि नानत्त एकदेसतो व जानन्ति न निप्पदेसतो। अनुप्पादितरल्गोरस्स पन नानत्त न जानन्ति। *VbhA* p 456

[१] Cf तत्र हि धातु। पूर्वाभ्यासवासनासमुदागताशयो धातुरित्याचार्यसंघभद्र। *Saks* p. 643. The *Vbh* includes the knowledge of *ālaya* in the *indriya-parāparajñāna* See *LVPAk.* vii. p. 70, n 3

[२] Cf धातुसो भिक्खवे सत्ता संसन्दन्ति समेन्ति। हीनाधिमुत्तिका सत्ता हीनाधि-मुत्तिकेहि सद्धिं…कल्याणाधिमुत्तिका सत्ता कल्याणाधिमुत्तिकेहि सद्धिं संसन्दन्ति समेन्ति। *S* ii. p 154.

[३] Cf इध तथागतो अय मग्गो अय पटिपदा निरयगामिनी ति पजानाति,…तिरच्छा-नगामिनी ति…पित्तिविसयगामिनी ति…मनुस्सलोकगामिनी ति…देवलोकगामिनी ति…-निब्बानगामिनीति पजानाति…इद सब्बत्थगामिनिं पटिपदं यथाभूतं ञाण। *Vbh.* p. 339.

Also cf प्रतिपत्तु इति विस्तर। मार्गोऽत्र प्रतिपदो नरकादिगामिन्य। नरक-गामिनी प्रतिपत् यावद् देवगामिनी। निरोधगामिनी च। *Sakv.* p 643

[४] See *Aas.* p. 20.

[५] मार्गो हि प्रतिपदुच्यते। तेन हि विसयोग प्राप्यते। निरोधस्तु कथम्? स चापि प्रतिपत्। प्रतिपद्यते स इति कृत्वा। प्रतिपत्फल वा प्रतिपदित्युच्यते। अत एवाह। यदि सफला प्रतिपद् गृह्यत इति। हेतुहि सर्वत्र गामिनीप्रतिपदिहेष्यते। तथा हि व्याचक्षते… *Sakv.* p 644.

[ 498 ] यत् स्वान्यातीतजन्मेविसंवृतिज्ञानसंज्ञकम् ।
प्राग्जात्यानुस्मृतिज्ञानबलं तत्सफलं मतम् ॥[१]

स्वपरसन्ता[VIII A, 1 Fol 141 b ](1)निकानामतीतजन्मपरम्पराणा विचित्रसुखदुःखेषु प्राणिष्वयममुष्यकर्मणो विपाकोऽयममुष्यस्वप्रनिमित्तध्यायिमनसिकारचिह्नार्थावधारणवदनेकविधसम्बन्धावबोधवशित्वमस्य सूचित भवति । यथा खलु भव्यार्थसूचकानि(न्) स्वप्नाननेकशो दृष्ट्वा ताश्चार्था नभिनिष्पन्नात्(न्) प्रायश सदृशानपेक्ष(क्ष्य) निश्चयो (2)भवति तद्वदिति । यथा च ध्यायिना मनसिकारेषु धर्मचिह्नान्युत्पद्यन्ते तैश्च सुव्यक्तो धर्मपरिच्छेदो भवति । तद्वत्सर्वधर्मेषु मुद्रा भगवतो विदिता । किं पुनस्तत्कर्म विपाक सम्बन्धमुद्रास्विति ? तदेतद्बल संवृतिज्ञानात्मकमेव ॥

[ 499 ] सत्त्वाना च्युतिसम्भूत्योर्ज्ञानमन्याप्यवृत्ति यत् ।
तच्च्युत्युत्पत्तिबुद्ध्याख्य बलं पूर्ववदुच्यते ॥[२]

(3)दिव्यचक्षुराश्रयाच्च ज्ञानात्कर्मफलवैचित्र्यचरिताधतरणज्ञानपरप्रत्ययो भवति । प्रत्युत्पन्नविषयमप्येवम् । तद्दिव्यचक्षुराश्रयज्ञान सह प्रणिधिज्ञाने नापरान्ते प्रमाव्यते । तदेतत्संवृतिज्ञानात्मकमेव ॥

[ 500 ] आस्रवक्षयधीसंज्ञं षड्ज्ञानान्यथवा दश ।[३]

अत इदानीं भगवतो विनेयकार्यं किमवशिष्टम् ? आस्रवक्षय । तस्मिन्य(4)ज्ज्ञान यस्य यदा यैरवतरणदेशनाविधिभिरकृच्छ्रेण संपद्यते तद्भगवान् सर्वाकारमनेन ज्ञानेन वेत्ति नान्य कश्चित् । अतोऽस्यैव तद्बल नान्यस्य । तत्पुनरेतत् षड्ज्ञानस्वभाव दशात्मक वा । यथास्रवक्षये ज्ञानम्,[४] षड

[१] तत्थ कतम तथागतस्स पुब्बेनिवासानुस्सति ञाण ? इध तथागतो पुब्बेनिवास अनुस्सरति एक पि जाति द्वे पि जातियो … जातिसतसहस्स पि अनेके पि सवट्टकप्पे अनेके पि विवट्टकप्पे अनेके पि सवट्टविवट्टकप्पे Vbh p 343

[२] Cf तत्थ कतम तथागतस्स सत्तान चुतूपपात यथाभूत ञाण ? इध तथागतो दिब्बेन चक्खुना विसुद्धेन अतिक्कन्तमानुसकेन सत्ते पस्सति चवमाने उप्पज्जमाने हीने पणीते यथाकम्मूपगे पजानाति Vbh p 344

[३] Cf तत्थ कतम तथागतस्स आसवान खये यथाभूत ञाण ? इध तथागतो आसवान खया अनासव चेतोविमुत्ति पञ्ञाविमुत्ति दिट्ठेव धम्मे सय अभिञ्ञा सच्छिकत्वा उपसम्पज्ज विहरति Ibid

[४] 'यदि निरोधज्ञानमेवास्रवक्षयज्ञानम्' इति । आस्रवान क्षय निरोध ज्ञानम् । आस्रवनिरोधालम्बनमित्यर्थ । एव सति षड् ज्ञानानि भवन्ति । निरोधज्ञानजातिरेव षड्ज्ञानाभिभिन्नाइत्वा । Saku p 644

भवन्ति। परचित्तदुःखसमुदयमार्गज्ञानानि हित्वा। अथ सोपाये क्षये[1] ज्ञानं दर्शन(नं) भवति, [[2]दशज्ञानानि भवन्ति[2]]।

उक्तो दशबलस्व(5)भावः।[3]

आकारनि(नि)यमो वक्तव्यः। सोऽयमुच्यते—

षोडशाकारमन्त्रा(त्रा)द्यमन्यैश्चाप्युत्तरं ध्रुवा ॥

[ 501 ] सप्तमं षोडशाकारमविभक्ताकृतिद्वयम्।
अष्टाकारं द्वितीयं तु नवज्ञानमयं तु यत् ॥

[ 502 ] तथागतबलं प्रोक्तं तज्ज्ञेयं द्वादशाकृति।

स्थानास्थानज्ञानबलं षोडशभिराकारैः प्रवर्तते। अन्यैश्च तन्निर्मुक्तैरास्रवक्षयज्ञानबलमपि (6)यदि सोपायं क्षयं विवक्षति तदपि षोडशाकारम्। अथ क्षयमात्रं तत्, षड्ज्ञानमयैराकारैः सर्वत्रगामिनीं प्रतिपद्ज्ञा(ज्ञा)नबलं सप्तमं तदपि तथैव षोडशाकारम्। द्वयं तु पूर्वनिवासानुस्मृतिच्युत्युपपत्तिज्ञानबलमविभक्ताकारबलम्। द्वितीयं तु कर्मविपाकज्ञानबलमष्टाकारम्। यत्तु समाधिसमापत्तिज्ञान(7)बलं तस्य नवज्ञानस्वभावं तैरेव द्वादशभिराकारैः प्रवर्तते। अन्यद्यन्नोक्तं तदभ्यूह्यम्।

किं पुनः किं गोचरम्?

सर्वगोचरमन्त्राद्यमन्त्यं शान्त्यबलस्य वा(वा) ॥

सर्वविषयं स्थानास्थानबलम्। आस्रवक्षयज्ञानबलं निर्वाणविषयं वा चतुःसत्यविषयं वा ॥

---

[1] 'अथ क्षीणास्रव सन्तान' इति। आस्रवक्षये सति यज्ज्ञानम्। तदास्रवक्षयज्ञानमित्यर्थः। क्षीणास्रवसन्ताने सर्वाणि ज्ञानानि समुदाचरन्तीति 'दश ज्ञानानि भवन्ति।' *Ibid*

[2] Added from *Akb*

[3] The *Vbh A.* gives the following details.—"अथ तावेत्थ आचरियानं समानत्थकथा। परवादी पनाह—दसबलञाणं नाम पाटियेक्कं नत्थि, सब्बञ्ञुतञ्ञाणस्सेव अयं पभेदो ति। तं न तथा दट्ठब्बं। अञ्ञं एव हि दसबलञाणं। अञ्ञं सब्बञ्ञुतञ्ञाणं। दसबलञाणं हि सकसककिच्चं एव जानाति।"'सब्बञ्ञुतञ्ञाणं पन एतेहि जानितब्बञ्च ततो उत्तरिञ्च पजानाति।"'सब्बञ्ञुतञ्ञाणं पन सविचारमविचारमेव सामावचरमेव लोकियमेवाति"'। *VbhA.* p. 464

स्प्रष्टव्यमधिकं तत्तु [ VIII. B, 2. Fol. 142 a. ][(1)]
दश हस्त्यादिसप्तकात् ॥[१]

नारायणं नाम बलमुच्यते । तच्च भगवतो मर्मणि मर्मणि विद्यते । नागग्रन्थिशङ्कलाशङ्कुसन्धयश्च यथाक्रमं बुद्धप्रत्येकबुद्धचक्रवर्तिणः(नः) ।

किं प्रमानं(णं) पुनस्तन्नारायणं बलम् ? यत्खलु दशानामितरहस्तीनां बलं [त]द्विकस्य गन्धहस्तिनः । एवं दशोत्तरवृत्त्या महानग्नि(ग्न)[२] प्रस्कन्दिवराङ्गचानूरणा(ना)रा[(2)]यणानां वाच्यम् ।[३] ऐरावन(ण)सहस्रस्येत्यन्ये । स हि देवोद्यानयात्रासमये त्रयस्त्रिंशच्छिरस्समात्मानमभिनिर्मायात्यद्भुतविचित्रोद्यानायायमानानि तावन्त्येव देवकुलान्यनेकसहस्रपरिवाराणि भूर्जपत्रवदादाय गच्छत्येष बलसमुदयस्तस्य । एवं तु [वर्णयन्ति] मानसबलवदनन्तं कायिकमपि बलं बुद्धानां भगवतामिति ।[४] त[(3)]त्पुनः कायिकं बलं स्प्रष्टव्यायतनसंगृहीतम् । गुरुत्वेन बलसंग्रहो लघुत्वेन दौर्बल्यस्येति वर्णयन्ति ।

[ 506 ] स्वपरार्थान्तसम्प्राप्तेर्वै(र्वै)शारद्यचतुष्टयम् ।
आद्यन्तबलरूपे द्वे द्वे कर्म प्रतिपद्धियोः ॥[५]

---

[१] Cf. नारायणं बलं काये सन्धिष्वन्यं दशाधिकम् ।
हस्त्यादिसप्तकबलं स्प्रष्टव्यायतनं च तत् ॥ *Ak.* vii 31.

[२] महानग्न in *Akb* and *Sakv*. p. 645.

[३] प्रकृतगन्धहस्तिमहानग्नप्रस्कन्दिना दशोत्तरवृद्ध्यार्धनारायणं बलं तद् द्विगुणं नारायणमित्यपरे । यथा तु बहुतरं तथा युज्यते । *Akb* vii 31 cd—तथा युज्यत इत्याचार्यः । *Sakv*. p. 645.

Cf तत्थ दुविधं तथागतस्स बलं कायबलञ्च ञाणबलञ्च । तत्थ कायबलं नाम हत्थिकुलानुसारेन वेदितब्बं । वुत्तं हेतं पोराणेहि :—

काळावकञ्च गङ्गेय्यं पण्डरं तम्बपिङ्गलं ।
गन्धमङ्गलहेमञ्च उपोसथछद्दन्तं इमे दसा ति ॥

इमानि हि दस हत्थिकुलानि । तत्थ काळावकं ति पकतिहत्थिकुलं दट्ठब्बं । य दसन्न पुरिसानं कायबलं तं एकस्स काळावकहत्थिनो । य दसन्नं काळावकानं बलं, तं एकस्स गङ्गेय्यस्स…य दसन्नं छद्दन्तानं तं एकस्स तथागतस्स, नारायणसङ्घातबलं ति पि इदमेव वुच्चति । *Vbh A*. p 397.

[४] Cf मानसवत् कायिकमप्यनन्तं बलमिति भदन्तः । *Akb* vii. 31 cd
See *LVPAk*. vii. p 73, n. 2

[५] *Cf* वैशारद्यं चतुर्धा तु यथाद्यदशमे बले ।
द्वितीये सप्तमे चैव । *Ak*. viii 32 abc.

सूत्र उक्तम्—"सम्यक्सम्बुद्धस्य वत मे सत इमे धर्मास्त्वयाऽनभिसम्बुद्धाः" इति विस्तरः[1]। [अत्र हि प्रथम]द्वितीयाभ्यां स्वार्थसम्पद्भगवतोद्भाविता। (4पूर्वेण ज्ञानसम्पत्। द्वितीयेण(न) प्रहाणसम्पत्। द्वाभ्यामन्याभ्यां परार्थसम्पदा[2] दर्शिता व्यवदानसंक्लेशोद्भावनात्।

कतरत्पुनर्वैशारद्यं कति ज्ञानात्मकम्? तदुच्यते। स्थानास्थानबलरूपमाद्यम्। आस्रवक्षयज्ञानरूपं द्वितीयम्। कर्मस्वकज्ञानबलं तृतीयम्। सर्वत्रगामिनीप्रतिप[त्]ज्ञानबलं चतुर्थं वैशारद्यम्। तथावज्ज्ञानस्वभावान्ये (5)तानि बलानि[3] तावत्स्वभावानि यथाक्रमं चत्वारि वैशारद्यानि बोद्धव्यानि।

सूत्र उक्तम्—"त्रीणीमानि स्मृत्युपस्थानानि यान्यार्यः सेवते" इति विस्तरः[4]। तेषां पुण(न)रिदं लक्षणम्—

---

[1] Cf चत्तारिमानि भिक्खवे तथागतस्स वेसारज्जानि' कतमानि चत्तारि? सम्मासम्बुद्धस्स ते पटिजानतो इमे धम्मा अनभिसम्बुद्धा ति—तत्र वत मं समणो वा ब्राह्मणो वा ... सहधम्मेन पटिचोदेस्सती ति—निमित्तमेतं भिक्खवे न समनुपस्सामि। ' खीणासवस्स ते पटिजानतो इमे आसवा अपरिक्खीणा ति ... ये खो पन ते अन्तरायिका धम्मा वुत्ता ते पटिसेवतो नालं अन्तराया ति 'यस्स खो पन ते अत्थाय धम्मो देसितो सो न निय्याति तक्करस्स सम्मा दुक्खक्खयाया ति' ... I *Ang* II pp 8-9 See *Sakr* pp 645-6, *LVPAk* VII p. 74, n 7

[2] V supra, p 3

[3] Cf कथं ज्ञानमेव वैशारद्यम? निर्भयता हि वैशारद्यम्। एभिश्च निर्भयो भवति। ज्ञानहेतु वैशारद्यं युज्यते। न ज्ञानमेव। *Akb* VII 32 abc
—एभिश्च ज्ञानैर्निर्भयो भवतीति ज्ञानानि वैशारद्यानीति वैभाषिका। आचार्य आह। 'ज्ञानहेतु तु वैशारद्यम्। न ज्ञानमेव ति। अथवा आचार्यवचनमवैनतमतम्। '*Sakr* p 646.

[4] Cf त्रीणिमानि भिक्षव स्मृत्युपस्थानानि। यान्यार्य सेवते। यान्यार्यं सेवमानोऽर्हति गणमनुशासितुम्। कतमानि त्रीणि? इह भिक्षव शास्ता श्रावकाणां धर्मं देशयति अनुकम्पक हितैषी अर्थकामो कारुणिकोऽनुकम्पामुपादाय। इदं वो हिताय इदं वो सुखाय इदं वो हितसुखाय। तस्य न श्रावका शुश्रूषन्ते। श्रोत्र अवदधति। आज्ञाचित्तं प्रतिष्ठापयन्ति धर्मानुधर्मं प्रति। न व्युत्क्रम्य वर्तन्ते शास्तु शासनं। तेन तथागतस्य न नन्दी भवति न सौमनस्य न चेतसा उत्प्लावितत्वम्। उपेक्षकश्च तथागतो विहरति स्मृत सम्प्रजानन्। इदं प्रथमं स्मृत्युपस्थानम्।... पुनरपरं शास्ता धर्मं देशयति ... तस्य श्रावका न शुश्रूषन्ते। व्युत्क्रम्य वर्तन्ते शास्तु शासनं। तेन तथागतस्य आघातो भवति अनात्तमना नाप्यसन्तोषो न चेतसा अनभिराद्धि। उपेक्षकश्च तथागतो विहरति स्मृत सम्प्रजानन्। इदं द्वितीयं स्मृत्युपस्थानम्। ...पुनरपरं भिक्षव ... तथागतस्य न नन्दी ...भवति उपेक्षकश्च तथागतो विहरति ... इदं तृतीयं स्मृत्युपस्थानम्। *Sakr* pp 646–7 See [illegible] 56, 103

[ 507 ] श्रोतृसम्पत्त्रयापेक्षा त्रिविधा स्मृत्युपस्थितिः ।[१]
संस्माराहितसामर्थ्यसंप्रजन्यस्वलक्षणा ॥

शुश्रूषकाशुश्रूषकादिभेदाद्विनेयाणां(नां)(6)त्रैविध्येन व्यवस्थानम्। शुश्रूषकादिवर्गत्रयाभिसन्धेः। स्वभावः पुनः स्मृतिविशिष्टसंप्रजन्यत्रयस्वभावानि त्रीणि स्मृत्युपस्थानानि। स्मृतिविशिष्टसंप्रजन्यतो हि भगवतः शुश्रूषमाना(णा)शुश्रूषमान(ण)तदुभययुक्तेषु विनेयसमूहेषु नानन्दो भवत्याघातो वा ॥

महाकरुणा पुनः

[ 508 ] संवृतिज्ञानरूपत्वाद्दीर्घकालानु(7)सारतः ।
सर्वत्र समवृत्त्यादेर्बुद्धस्यैव महाकृपा ॥[२]

यदा श्रावकस्यापि करुणा विद्यते प्रत्येकबुद्धस्यापि कस्माद् बुद्धस्यैव महाकृपेत्युच्यते ?[३] यस्मादियं संवृतिज्ञानस्वभावा श्रावकादीनामद्वेषस्वभावा बुद्धस्य च दीर्घकालानुगता सूक्ष्मानुगता सर्वसत्त्वसमग्रहप्रवृत्ता सर्वत्रानुगता च द्वात्रिंशन्महा(8)पुरुष[लक्षण]विद्योतितशरीराध्यासिनी दशबलपरिगृहीता च। तस्माद् बुद्धस्यैव भगवतो महाकृपेत्युच्यते। उक्ता असाधारणगुणाः[४]॥[५]

---

[१] Cf स्मृतिप्रज्ञात्मकं त्रयम्। *Ak.* vii 32 d.

[२] Cf महाकृपा संवृतिधीः सम्भाराकारगोचरा।
समत्वादधिमात्रत्वाच्च नानाकरणमष्टधा॥ *Ak* vii 33

[३] करुणामहाकरुणयोः किं नानाकरणम् ? ···स्वभावतोऽद्वेषामोहस्वभावत्वात्। आकारत एकत्रिदुःखताकारत्वात्। आलम्बनत एकत्रिधात्वालम्बनत्वात्। भूमितश्चतुर्थध्यानभूमित्वात्। सन्तानतः श्रावकादिबुद्धसन्तानजत्वात्। लाभतः कामधातुभवाग्रवैराग्यलभ्यत्वात्। अपरित्राणपरित्राणतः। अतुल्यतुल्यकरुणायनाच्च। *Akb* vii 33 d See *Sakv* pp 648—9, *LVPAk* vii p 77

[४] कस्मादेते आवेणिका बुद्धधर्मा उच्यन्ते ? सवासनप्रहाणात्। अथवा यस्य श्रावका तस्य···*Akb* vii 32 d—सवासनानां आनन्दादीनां प्रहाणात्। का पुनरियं वासना नाम श्रावकाणाम् ? यो हि यत्क्लेशचरितः पूर्वं तस्य तत्कृतः कायवाक्चेष्टाविकारहेतुसामर्थ्यविशेषश्चित्ते वासनेत्युच्यते। अव्याकृतश्चित्तविशेषो वासनेति भदन्तानन्तवर्मा। अथवेति विस्तरेणाचार्यः। *Sakv* p 647

[५] The Kośakara discusses one more point —
किं पुनः सर्वे बुद्धाः सर्वप्रकारसामान्या भवन्ति ? न।
सम्भारधर्मकायाभ्यां जगतश्चार्थचर्यया।
समता सर्वबुद्धानां नायुर्जातिप्रमाणतः॥ *Ak.* vii. 34
*Adv* might have discussed this topic in Third *Adhyaya*, which is lost V supra, p 115, n. 1

श्रावकसाधारणा उच्यन्ते—

[ 509 ] अरणा प्रणिधिज्ञानं चतस्र. प्रतिसंविदः ।
अर्हत्सान्तानिका ह्येते पञ्च तु प्रान्तकोटिकाः ॥[1]

[ 510 ] इतरैरपि सामान्या अप्रमादादयो गुणा॰ ।
ए(4)षां यथोपदिष्टाणा(नां) शृणु वक्ष्यामि लक्षणम् ॥

तत्र तावत् ।

[ 511 ] अरणा संवृतिज्ञान नृजाऽन्त्यध्याननिश्रयात् ।[2]
आर्यसन्तानिका जाता सनस्तुकमलेक्षिणी ॥

इह कश्चिदर्हन्नकोप्यधर्मा सर्वक्लेशप्रहाणात्परमामृतसुखमनुभवत्ये व चित्तमुत्पादयति—कथ नाम परेऽपि [इ]मे सन्तानालम्बनाद् क्लेशान् नोत्पा[ VIII A 2 Fol 142 b ](1 दयेयु कथश्च तमनिष्फल नानुभवेयु । चतुथ ध्यान विशुद्धिकाष्ठागत समापद्य तथा करोति यथाऽस्य चारविहार गतस्य सन्ताने न कश्चित्क्लेशमुत्पादयति ॥

[ 512 ] प्रणिधिज्ञानमप्येव सर्वधर्मालम्बि तु ।[3]
अकोप्यधर्मनो(णो) ख्याते तथैव प्रतिसंविदः ॥

प्रणिधिज्ञानमपि सवृतिज्ञानस्वभाव प्रान्तकोटिकचतुर्थध्यानलाभात्,[1] (2)अर्हद्यद्यत्प्रणिधत्ते तत्तज्जानीते प्रणिधिज्ञानस्य सर्वधर्मालम्बनत्वात् ॥[4]

---

[1] Cf शिष्यसाधारणा अन्य धर्मा केचित पृथग्जन ।
अरणाप्रणिधिज्ञानप्रतिसंविद्गुणादय ॥ *Ak* VII 35

[2] Cf सवतिज्ञानमरणा ध्यानेऽन्त्येऽकोप्यधर्मण ।
नृजाऽनुत्पन्नकामाप्तसवस्तुक्लेशगोचरा ॥ *Ak* VII 36

The d fference between the *aranasamadh* of *Buddha* and *sravaka* is g ven in *Aaa* —श्रावकस्यारणादृष्टनृक्लेशपरिहारिता ।
तन् क्लेशस्रोत उच्छित्य ग्रामादिषु जिनारणा ॥ *Aaa* p 524
See *LVPAk* VII p 87

[3] Cf तथव प्रणिधिज्ञान सर्वालम्ब तु तत्तथा । *Ak* VII 37 ab
Also cf अनाभोगमनासङ्गमव्याघात सदा स्थितम ।
सवप्रश्नापन्नुदीढ प्रणिधिज्ञानमिष्यते ॥ *Aag* p 524

[4] सवधर्मालम्बन तु प्रणिधिज्ञानमित्येव विशेष । आरूप्यास्तु न साक्षात् प्रणिधि ज्ञानेन ज्ञायन्ते । कि तर्हि ? निष्यन्दचरितविशेषात् । कृषकनिदर्शनेन जानाति यथा धिया । प्रणिधिपूर्वक ज्ञानं प्रणिधिज्ञानम् *Akb* VII 37 ab See *Sakv* p 651

प्रतिसंविदः खल्वपि

[ 513 ] विषयितार्थसम्बन्धिनामसंमोहभेदिनी ।
आद्याऽन्या तदभिव्यङ्ग्या ज्ञेया ज्ञानविचारिणी ॥

[ 514 ] तृतीया शब्दसंस्कारा ज्ञानसंमोहघातिनी ।
तुरीया तु प्रबन्धोक्तिर्ध्यानाद्युत्पादनोन्मुखी ॥[1]

तत्र द्वादशाङ्गप्रवचनसंगृहीतेषु[2] वक्ष्य(3)माना(णा)र्थसम्बन्धिषु विवक्षितेषु नामकायादिषु यदविवर्त्यं ज्ञानं सा धर्मप्रतिसंवित् । तदवद्योत्येषु पौरुषेयापौरुषेयसम्बन्धेषु परार्थसंवृत्यर्थराशिषु यदविवर्त्यं ज्ञानं साऽर्थप्रतिसंवित् । नामकायादिवाचक एव वाक्छन्देष्वरूपद्रव्यलिङ्गसंख्यासाधनक्रियाकालपुरुषोपग्रहसम्बन्धिनि यदविवर्त्यं ज्ञानं (4)सा निरुक्तिप्रतिसंवित् ।[3] धर्मार्थनिरुक्तिषु ध्यानविमोक्षसमाधिसमापत्तिवशित्वसंप्रख्याने यदविवर्त्यं ज्ञानं सा [4]प्रतिभान[प्रति]संवित् [4]।[5]

[1] Cf धर्मार्थयोर्निरुक्तौ च प्रतिभाने च संविद ॥
तिस्रो नामार्थवाग्ज्ञानमविवर्त्यं यथाक्रमम् ।
चतुर्थी युक्तमुक्ताभिलापमार्गवशित्वयो ॥ *Ak* vii 37 cd, 38

[2] सूत्रं गेयं व्याकरणं गाथोदानावदानकम् ।
इतिवृत्तकं निदानं वैपुल्यञ्च सजातकम् ॥
उपदेशाद्भुतौ धर्मौ द्वादशाङ्गमिदं वचः । *Aaa* p 35

Cf कथं भगवतो नव अङ्गानी ति ? सब्बमेव हि'दं 'सुत्तं गेय्यं वेय्याकरणं गाथा उदानं इतिवुत्तकं जातकं अब्भुतधम्मं वेदल्लं'ति नवङ्गप्पभेदं होति । *Dhs A* 1. 66

[3] उत्तरोत्तरा प्रतिभा प्रतिभानमित्यपरे । *Akb* vii 406

[4] चतस्सो पटिसम्भिदा नाम अत्थादिसु पभेदगतानि चत्तारि ञाणानि । वुत्तं हेतं—"अत्थे ञाणं अत्थपटिसम्भिदा । धम्मे ञाणं धम्मपटिसम्भिदा । अत्थधम्मनिरुत्ताभिलापे ञाणं निरुत्तिपटिसम्भिदा । ञाणेसु ञाणं पटिभानपटिसम्भिदा" ति [*Vbh* p 293]

तत्थ अत्थो ति सङ्खेपतो हेतुफलस्सेतं अधिवचनं ।…पभेदतो पन यं किञ्चि पच्चयसम्भूतं, निब्बानं, भासितत्थो, विपाको, किरिया ति इमे पञ्च धम्मा अत्थो ति वेदितब्बा ।…धम्मो ति सङ्खेपतो पच्चयस्सेतं अधिवचनं ।…यो कोचि फलनिब्बत्तको हेतु, अरियमग्गो, भासितं, कुसलं, अकुसलं ति इमे पञ्च धम्मा धम्मो ति वेदितब्बा ।… अयमेव हि अत्थो अभिधम्मे • दस्सितो । तत्थ धम्मनिरुत्ताभिलापे ञाणं ति तस्मिं अत्थे च धम्मे च या सभावनिरुत्ति…तस्सा धम्मनिरुत्तिसञ्ञिताय मागधिकाय मूलभासाय पभेदगतं ञाणं निरुत्तिपटिसम्भिदा । …ञाणेसु ञाणं ति सब्बत्थ ञाणमारम्मणं कत्वा पच्चवेक्खन्तस्स ञाणारम्मणं ञाणं…पटिभानपटिसम्भिदा ति अत्थो । *Vm* xiv 21—25 See *LVPAk* vii, p 89, n 3

[5] The Kośakāra gives some more details —आसां च किल प्रतिसंविदां गणित

त एते षड्गुणा' प्रान्तकोटिकमित्युच्यन्ते ॥[१]

का कति भूमिका पुनरासां प्रतिसंविदां का वा कति ज्ञानमयी ?[२] तदपदिश्यते—

**[ 515 ] अर्थाख्या खलु सर्वत्र षड्ज्ञानान्यथवा नव ।**

अर्थप्रतिस(ं)वित् सर्वासु भूमिषु कामधातौ यावद्भवाग्रे श(न)यज्ञान स्वभावा णि(नि)रोधज्ञानं वर्जयित्वा षड्ज्ञाना[नि] निर्वाणस्ये(स्यै)व परमार्थत्वात्, परचित्तदु:खसमुदयमार्गज्ञानानि वर्जयित्वा ।

**प्रतिभानाह्वयाप्येवं दशज्ञानमयी त्वसौ ॥[३]**

प्रतिभानप्रतिसंविदपि सर्वासु भूमिषु दशज्ञानमयी ।

[तत्र]

**[ 516 ] [कामे ध्यानेषु धर्माख्या](७) तदन्या त्वाद्यकामयो' ।[४]**

धर्मप्रतिसंवित् कामधातौ चतुर्षु ध्यानेषु निरुक्तिप्रतिसंवित् कामधातौ प्रथमे च ध्याने ।

**संवृतिज्ञानमय्यौ तु द्वे एते प्रतिसंविदौ ॥**

उभे अप्येते संवृतिज्ञानस्वभावे धर्मनिरुक्तिप्रतिसंविदाविति ॥

अभिधर्मदीपे विभाषाप्रभायां वृत्तौ सप्तमस्याध्यायस्य तृतीय(8) पाद समाप्त ॥

---

बुद्धवचनं शब्दविद्या हेतुविद्या च पूर्वप्रयोगो यथाक्रमम् । नाप्यतेष्वकृतकौशल्यस्ता उत्पादयितुं शक्नोतीति बुद्धवचनमेव तु सर्वासां प्रयोगं वर्णयन्ति । यस्य चैका तस्यावश्य चतस्रः प्रतिसंविदो भवन्ति । *Akb* 40 b —यथाक्रममिति धर्मप्रतिसंविदो गणितं पूर्वप्रयोग । अर्थप्रतिसंविदो बुद्धवचनम । निरुक्तिप्रतिसंविदः शब्दविद्या । प्रतिभानप्रतिसंविदो हेतुविद्येति । बुद्धवचनमेव इति वर्माणिकाः । *Sakv* p 653

[१] Cf य चैते उपदिष्टा अरणादयो गुणा

षडेते प्रान्तकोटिका ।

प्रान्तकोटिकध्यानबलेनैषां लाभ ।

तत् षड्विध ध्यानमन्त्य सर्वभूम्यनुलोमितम ।

वृद्धिकाष्ठागतं तच्च बुद्धान्यस्य प्रयोगजा ॥ *Ak.* VII. 40 d and 41

See *LVPAk.* VII. p 97

[२] See *Patisambh dakatha Kv* v 5

[३] Cf. वाङ्मार्गालम्बना धर्मो नव ज्ञानानि सर्वम् ।

दश षड् वाऽर्थसंवित् सा सर्वत्रान्य तु सावृतम ॥ *Ak.* VII 39

[४] Cf कामध्यानेषु धर्मे वित् वाचि प्रथमकामयो ।

विकलाभिन तल्लाभी षडेते प्रान्तकोटिका ॥ *Ak.* VII. 40

## चतुर्थपादः ।

पृथग्जनसाधारणाः इदानीमभिज्ञादयो गुणा वक्तव्याः । त इम उच्यन्ते—

[ 517 ] रि(ऋ)द्धौ श्रोत्रेऽन्यचित्ते प्राग्भावे च्युत्युदये क्षये ।
ज्ञानसाक्षात्क्रियाऽभिज्ञा षड्वा धी[:] मुक्तिवर्त्मनि ॥[1]

ज्ञानसाक्षात्क्रिया खलु विमुक्तिमार्गसंगृहीताऽभिज्ञेत्युच्यते । केषां पुनर्गुणानां ज्ञानसाक्षात्क्रिया ? तदप(8)दिश्यते । रि(ऋ)द्धिपाददिव्यश्रोत्रचेतः-पर्यायपूर्वनिवासानुस्मृतिच्युत्युपपादास्रवक्षयज्ञानानां या ज्ञानसाक्षात्क्रिया साऽभिज्ञा । अभिजानातीत्यभिज्ञायते वा तयेति अभिज्ञा ।

कस्मात्पुनर्विमुक्तिमार्गा ये(ए)वाभिज्ञा श्रामन्य(ण्य)फलवत्[2] [[न] आनन्तर्य]मार्गस्वभावाः ? परचित्तज्ञानस्यानन्तर्यमार्गप्रतिषेधादर्हतश्चास्र-व(7)क्षयानन्तर्यमार्गत्यागे कस्यचिन्निरभिज्ञत्वप्रसंगात् ॥

आसां पुनः

---

[1] Cf ऋद्धिश्रोत्रमनःपूर्वजन्मच्युत्युदयक्षये ।
ज्ञान साक्षात्क्रियाभिज्ञा षड्विधा मुक्तिमार्गधी· ॥ *Ak* vii 42

षडभिज्ञा । ऋद्धिविषयज्ञानसाक्षात्क्रिया, दिव्यश्रोत्रचेत पर्यायपूर्वनिवासच्युत्युप-पाद–आस्रवक्षयज्ञानसाक्षात्क्रियाऽभिज्ञा । *Sakv* p 654 Yaśomitra gives full details

*Cf* सो एव समाहिते चित्ते परिसुद्धे परियोदाते अनङ्गणे विगतूपक्किलेसे मुदुभूते कम्मनिये ठिते आनेञ्जप्पत्ते इद्धिविधाय चित्त अभिनीहरति · सो अनेकविहित इद्धिविध पच्चनुभोति··· ।···सो दिब्बाय सोतधातुया विसुद्धाय अतिक्कन्तमानुसिकाय उभो सद्दे सुणाति, दिब्बे च मानुसे च, ये दूरे सन्तिके च ।· चेतोपरियञाणाय चित्त अभिनीहरति··· सो परसत्तान परपुग्गलान चेतसा चेतो परिच्च पजानाति ·· ।···पुब्बेनिवासानुस्सतिञाणाय चित्त अभिनीहरति · सो अनेकविहित पुब्बेनिवास अनुस्सरति··· ।···चुतूपपातञाणाय चित्त अभिनीहरति ···। आसवान खयञाणाय चित्त अभिनीहरति ।···*Digha*, ii. 87—97 See *M sutta* 6, *Vm* Chapters xii and xiii

[2] श्रामण्यफलवदिति । यथा सस्कृत श्रामण्यफल विमुक्तिमार्गस्वभावम् । तद्वत् । *Sakv* p 655

[ 518 ] चतस्रः संवृतिज्ञानं पञ्च ज्ञानानि चित्तधीः ।
सर्वास्त्रिक्षयाभिज्ञा षड्ज्ञानान्यथवा दश ॥[१]

चेतःपर्यायास्रवक्षयाभिज्ञे हित्वा । चेतःपर्यायाभिज्ञा पञ्चज्ञानानि धर्मान्वयमार्ग[संवृतिपर]चित्तज्ञानानि । आस्रवक्षयज्ञानसाक्षात्क्रियाऽभिज्ञा षड्ज्ञाना[VIII B, 3 Fol 143 a ](1)नि दश वा परचित्तदुःखसमुदयमार्गज्ञानानि हित्वा 'अथवा दशे'ति ॥

[ 519 ] षष्ठी सर्वत्र पञ्चान्या मौलीषु ध्यानभूमिषु ।[२]

आस्रवक्षयज्ञानसाक्षात्क्रिया सर्वासु भूमिषु । शेषा मौलीषु चतसृषु ध्यानभूमिष्विति ।

यत्नवैराग्यतो लभ्याः स्वभूम्यधरगोचराः ॥[३]

सर्वा [अभिज्ञा.] यत्नतो लभ्यन्ते वैराग्य(2)तश्च । तत्रानुचिता यत्नत । उचिता वैराग्यत । जन्मान्तराभ्यस्ता. खल्वभिज्ञा वैराग्यतो लभ्यन्ते। वैशेषिक्यो यत्नत । 'स्वभूम्यधरगोचरा'श्चैता । रि(ऋ)द्धया स्वभूमिं गच्छत्यप(ध)रां च भूमिम् । निर्मितनिर्माणमप्येवम् । दिव्यश्रोत्राभिज्ञयापि स्वभूमिकमधो[भूमिक]ं च शब्दं शृणोति । एव परचित्तज्ञानं पूर्वनिवासानुस्मृतिज्ञानं च । (3)च्युत्युपपादाभिज्ञया च स्वाधोभूमिविषयं रूपं जानाति ॥

कतमा पुनरासां कति स्मृत्युपस्थानानि ?

[ 520 ] स्मृत्युपस्थितयस्तिस्रश्चेतःपर्यायधीर्मता ।
ऋद्धिश्रोत्राद्यभिज्ञास्तु प्रथमा स्मृत्युपस्थितिः ॥[४]

परचित्ताभिज्ञा त्रीणि स्मृत्युपस्थानानि कायस्मृत्युपस्थानं हित्वा । चित्तचैत्तालम्बना ह्येषा । ऋद्धिश्रोत्रचक्षुरभिज्ञा काय(4)स्मृत्युपस्थानं रूपालम्बनत्वात् । ऋद्धि खलु चतुर्बाह्यायतनालम्बना । दिव्यश्रोत्रचक्षुषी यथाक्रमं शब्दरूपायतनालम्बने ।

---

१ Cf चतस्र संवृतिज्ञानं चेतसि ज्ञानपञ्चकम ।
क्षयाभिज्ञा बले यद्वत *Ak* vii 43 abc

२ Cf पञ्च ध्यानचतुष्टये ॥ *Ak.* vii 43 d
The Kośakāra discusses in detail —पञ्चाभिज्ञा चतुर्थध्यानभूमिका । कस्मादारूप्यभूमिका न सन्ति ? *Akb* vii 43 d See *LVPAk.* vii pp 102-3

३ Cf स्वाधोभूविषया' लभ्या उचितास्तु विरागत । *Ak* vii 44 ab

४ Cf तृतीया त्रीण्युपस्थानान्याद्या श्रोत्रर्द्धिचक्षुषि ॥ *Ak.* vii 44 cd

कुशलादिभेदेन तु

[ 521 ] दिव्यमव्याकृतं श्रोत्रं नेत्रं चान्या शुभा मताः ।[१]

दिव्यश्रोत्रचक्षुषी किलाव्याकृते। तच्च न। अभिज्ञानां विमुक्तिमार्गस्वभा[व्याच्चक्षुःश्रोत्रविज्ञानयोश्चा]विकल्पत्वाद्विमुक्तिज्ञानानुत्प(5)त्तिः। चतुर्ध्यानेषु तु अस्ति प्रज्ञाविशेषः स्वभूमिकभूतफलो यत्संमुखीभावात्स्वभूमिकफलमेव चक्षुःश्रोत्रं संमुखीभावं गच्छति। यत्तच्चक्षुःश्रोत्रविज्ञानयोराश्रयी भवति तस्माच्च तद्विज्ञाने संप्रयुक्ता प्रज्ञाऽभिज्ञेति।

कथं पुनरेतयोरभिज्ञाशब्दः? तदुच्यते—

अभिज्ञाफलताऽभिज्ञा [मनोविज्ञानप्रज्ञया] ॥

अभिज्ञाफलमा(6)(म)त्राभिज्ञाशब्देनोक्तम्। मनोविज्ञानसंप्रयुक्तया तु प्रज्ञयाऽभिजानातीति। सैवाभिज्ञा निरूपकत्वात्।[२]

कति पुनरासां विद्या?

[ 522 ] तिस्रो विद्या[३] मतास्त्र्यध्वस(सं)मोहादिव्युदस्तये।
एका स्वभावतोऽशैक्षी द्वे त्वशैक्षाश्रयोदयात् ॥[४]

पूर्वणि(नि)वासच्युत्युपपादास्रवक्षयज्ञानतत्साक्षा[त्]क्रियास्तिस्रः खल्वशैक्ष्यो [विद्या उच्यन्ते। कस्मादेता एव? एता] (6)एव तिस्रो विद्याः यस्मादाभिरविद्यात्रयं विनिवर्तते। पूर्वेनिवासाभिज्ञा[नया] पूर्वान्तसंमोहः निवर्तते। च्युत्युपपादाभिज्ञया त्वपरान्तसंमोहो निवर्तते। आस्रवक्षयाभिज्ञया मध्याध्वसंमोहः।[५]

---

[१] Cf अव्याकृते श्रोत्रचक्षुरभिज्ञे इतरे शुभा। *Ak* vii 45 ab.

[२] See *abhiññā*, *PTSD*

[३] तिस्सो विज्जा। पुब्बेनिवासानुस्सतिञाण विज्जा, सत्तान चुतूपपातञाण विज्जा, आसवान खये ञाण विज्जा। *Digha*, xxxiii 1 10 See *Vm* vii 30

[४] Cf तिस्रो विद्या अविद्याया पूर्वान्तादौ निवर्तनात्। *Ak* vii 45 cd

पूर्वेनिवासच्युत्युपपादास्रवक्षयज्ञानसाक्षात्क्रिया तिस्र अशैक्ष्यो विद्या उच्यन्ते। एतानि हि पूर्वापरान्तमध्यसमोहं व्यावर्तयन्ति यथाक्रमम्। *Akb* vii 45 cd.

[५] This view is identical with the view of Āchārya Saṃghabhadra as quoted and supported of Yasomitra —

'पूर्वान्तादौ निवर्तनात्' यावद्यथाक्रममिति। भगवद्विशेषादयस्तावदाहु'—'पूर्वान्तसम्मोहं' पूर्वे निवासानुस्मृत्या 'निवर्तयति'। च्युत्युपपादाभिज्ञया 'मध्यसमोहम्'।

यद्यपि च तिस्रोऽप्यशैक्षास्तथापि 'एका स्वभावतोऽशैक्षी द्वे त्वशैक्षा श्रयोदयात्'। अन्त्या ह्यऽशैक्षी स्वभावत सन्तानतश्च। आद्ये (6)द्वे त्वशैक्ष सन्तानादशैक्षावित्युच्यन्ते ॥[1]

कति पुनरासा प्रातिहार्याणि ?[2]

[ 523 ] रि(ऋ)द्धिचित्तद्वयाभिज्ञा प्रतिहार्यत्रयं स्मृतम् ।
हरतो द्वे कुशास्त्रभ्यो मारेभ्यो हरते परम् ॥[3]

ऋद्ध्यादेशनाप्रातिहार्ये खलु कुशास्त्रभ्य कपिलोलूकाक्षपादादिभ्यो विनेयजनचित्तमपहृत्य बुद्धे भगवति परमार्थशास्तरि संनियोजयत । अनु शा(4)सनाप्रतिहार्यं मारेभ्योऽपहृत्य सर्वज्ञे मार्गदेशिके प्रवरे प्रतिष्ठापयति ॥

का पुनरियमृद्धि ?[2]

[ 524 ] समाधिर्(धी ऋ)द्धिरित्युक्ता फलमैश्वर्यमष्टधा ।[1]
द्विधैतद्गतिनिर्माणे त्रिविधा गतिरिष्यते ॥

---

आस्रवक्षयाभिज्ञया अपरान्तसमोहम । नापरमस्माद्भव प्रजानामीति तेषा व्याख्यानकाराणामभिप्राय । अतीत प्रत्युत्पन्नोऽनागतोऽवेयध्वानुक्रम । तस्मादेवमयगतिरिति ।

आचार्यसघभद्रस्तु व्याचष्ट—पूर्वान्तादौ निवर्तनात । पूर्वनिवासाभिज्ञा हि पूर्वान्तसमोह व्यावर्तयति। अपरान्तसमोह च्युत्युपपादाभिज्ञा। मध्यसमोह आस्रवक्षयाभिज्ञा। इयतस्तिसृणामेव विद्यात्वम । पूर्वयाऽमपरविपद्दर्शनात सवेगोत्पत्त । परया परेषामेव। तथा सविग्नस्य भूतार्थावगमात ततीयति। किमत्र प्रतिपत्तव्यम ? आचार्यसघभद्रव्याख्यानमेव युक्तरूप पश्याम । आचार्यस्यापि तथवाभिप्रायो लक्ष्यते। तथा हि पूर्वनिवासच्युत्युपपादास्रवक्षयज्ञानसाक्षात्क्रियास्तिस्र इत्युक्त्वा आह—एते हि पूर्वापरान्तमध्यसमोह व्यावर्तयन्ति यथाक्रमम् इति। *Sdkv* pp 657 8

[1] Cf अग्रक्षान्त्या तदास्य द्व तत्सन्तानसमुद्भवात ।
इष्ट शैक्ष्यस्य नोक्ते तु विद्य शाविद्यसन्तते ॥ Cf *Ak.* vii 46

[2] विनयमनसामादितो अयर्थं हरणात प्रातिहार्याणि प्रतिशब्दयोरादिकमभशार्थत्वात । प्रतिहन्मध्यस्थान मनास्यभि प्रतिहरतीति प्रातिहार्याणि वा । *Akb* vii 47 See *Vm* xii 84 तीणि पाटिहारियानि । इद्धिपाटिहारिय आदेसनापाटिहारिय अनुसासनिपाटिहारिय । *Digha* xxxiii 1 10 See *Kevaddhasutta Digha* vi

[3] Cf आद्या तृतीया षष्ठी च प्रतिहार्याणि शासनम ।
अग्रयमव्यभिचारित्वाद्धितेष्टफलयोजनात ॥ *Ak* vii 47

[4] V supra p 359 n 2.

[5] Cf केयमद्धि ? सभाविवनयन
ऋद्धि समाधिगमन निर्माणं च गतिस्त्रिधा । *Ak.* vii. 48 ab

**ऋद्धिः खलु समाधिरूपा[1] तत्फलत्वात्तु प्रातिहार्यमृद्धिरित्युक्तं सूत्रे। अङ्गपरिगृहीते समाधौ सति सर्वमेतत्प्रातिहार्य[VIII. 3. Fol. 143 b.]मृद्ध्यति। तस्मात्समाधिरेव रि(ऋ)द्धिः।[1] तस्याः फलमष्टगुणमैश्वर्यमनि(णि)मादि।[2]**

---

[1] ऋद्धिपादाः समाधयः। *Ak* vi 69d. While dealing with the *samādhi* and *riddhipādas*, the Kosakāra initiates a controversy: समाधिः कस्मात् ऋद्धिपाद उक्तः? तत्प्रतिष्ठितत्वात् सर्वगुणसंपत्ते। ये त्वाहुः 'समाधिरेवर्द्धिः पादास्तु च्छन्दादय." इति। तेषा द्रव्यतस्त्रयो एव बोधिपक्ष्याः प्राप्नुवन्ति। च्छन्दचित्तयोराधिक्यात्। सूत्रं च विरुध्यते—"ऋद्धिं वो भिक्षवे देशयिष्यामि ऋद्धिपादांश्च यावद् ऋद्धिः कतमा? इह भिक्षुरनेकविधमृद्धिविषयं प्रत्यनुभवति। एको भूत्वा बहुधा भवती"ति विस्तर. *Akb.* vii. 69 d. Yasomitra gives the following comment—ऋद्धिपादाः समाधय इति कुत एतत्? सूत्रात्। उक्त हि छन्द चापि भिक्षवो भिक्षुरधिपतिं कृत्वा लभते समाधिम्। सोऽस्य भवति छन्दसमाधि.। चित्त वीर्यं मीमांसां चापि भिक्षवो भिक्षुरधिपतिं कृत्वा लभते समाधिं। सोऽस्य भवति मीमांसासमाधिरिति।···

ये त्वाहुः समाधिरेवर्द्धिः पादास्तु च्छन्दादयः। तेषामेववादिना वैभाषिकाणां···। "एको भूत्वा बहुधा भवति···यावद् ब्रह्मलोक कायेन वशे वर्तयत" इति। इयमुच्यते ऋद्धिः। ऋद्धिपादा कतमे? छन्दसमाधिः। वीर्यसमाधिः। चित्तसमाधिः। मीमांसासमाधिः। इम उच्यन्ते ऋद्धिपादा." इति। एवं लक्षण. समाधिः। तस्मान्न समाधिरेवर्द्धिः इति।

अत्राचार्यसंघभद्र आह। न भवत्येष तेषां दोषः। समाधिं हि ते ऋद्धिपादमिच्छन्ति। ऋद्धिरपीति। छन्दादयस्तूच्यन्ते समाधेश्चतुष्त्वज्ञापनार्थम्। कश्चिद्धि समाधि. कुशलमूलप्रयोगावस्थायां प्रधानीभवति। कश्चित् कुशलमूलनिष्पन्नावस्थाम्। पूर्वोन ऋद्धिपादः। उत्तरर्धिरिति। सूत्रविरोधोऽपि चैवा न भवति। ऋद्धिफल ऋद्धिशब्देनोक्तम्। प्रज्ञाफलस्य तच्छब्दाभिधानत्वादित्यादि। *Sakv.* p. 602.

See *Vm.* xii 50-55, *Patisambhidā*, vol. ii. pp. 205-6.

[2] तत्राणिमा भवत्यणु.। लघिमा लघुर्भवति। महिमा महान्भवति। प्राप्तिरङ्गुल्यग्रेणापि स्पृशति चन्द्रमसम्। प्राकाम्यम् इच्छानभिघातः भूमावुन्मज्जति निमज्जति यथोदके। वशित्वं भूतभौतिकेषु वशी भवत्यवश्यश्चान्येषाम्। ईशितृत्वं तेषां प्रभवाप्ययव्यूहानामीष्टे। यत्र कामावसायित्वं सत्यसंकल्पता यथा सकल्पस्तथा भूतप्रकृतीनामवस्थानम्। ···एतान्यष्टावैश्वर्याणि। *Yogabhāshya*, iii 45.

Also see, अणिमा लघिमादिकं वा लोकियसम्मत···*Vm.* v. 61 —अणिमालघिमादिक ति आदिसद्देन महिमा पत्ति पाकम्मं ईसिता वसिता यत्थकामावसायिता ति इमे छपि सङ्गहीता···। *Vm T.* p 210. D. Kosambi quotes the following verse:

गण्ठियम्पि वुत्त—

"अणिमा महिमा लघिमा पत्ति पाकम्ममेव च।
ईसितञ्च वसितञ्च यत्थकामावसायिता ति॥ *Vm. Dipikā*, vii. 61.

यच्च सूत्रेऽपदिष्टमेकानेकयथेच्छितरूपावस्थानादिस्तत्पुनरेतदृद्धिफलं[१] द्विविधं गतिश्च निर्माणं च। गतिरपि त्रिविधा। तत्र

[ 525 ] मनोमयी गति[ः] शास्तुरिच्छामात्रप्रवृत्तितः।
अधिमोक्षकृताऽन्येषां ततो देहाभिवाहिनी ॥[२]

मनोजवा[३] खलु ऋद्धिर्बुद्धस्यैव। म(2)नस इव जवस्तस्याः। यावता कालेन चक्षुर्विज्ञानं नीलं प्रतिपद्यते यावता कालेन भगवाञ्छरीरेण सर्वलोकान्तराणि व्याप्नोत्यनन्तर्द्धिशरीरा हि बुद्धा भगवन्तो[ऽ]नाभोगेन यथेच्छिताभिप्रायसिद्धेः भगवतो बुद्धस्य। श्रावकादीनां पुनः शरीरवाहिनी गतिर्भवति (3)यथा देवानां पक्षिणां वा। आधिमोक्षिकी च दूरमप्यासन्नमधिमुच्यास्तद्गमनं संपद्यते। बाहुप्रसारणमात्रेण सुमेरुमूर्द्धनि प्रादुर्भवति।[४] व्याख्यातं समाधिफलम् ॥

गमनं निर्माणमिदानीं वक्तव्यम्। त[द्] द्विविधं कामावचरं रूपावचरं च। तत्र तावत्—

[ 526 ] रूपगन्धरसस्पर्शाः कामे निर्माणमिष्यते।
रूपस्पर्शौ मतौ रूपे स्वे (4)शरीरेऽथ वा बहिः ॥[५]

कामावचरं खलु बाह्यमायतनचतुष्टयं निर्मीयते। नान्यदीश्वरकर्तृत्ववादाभ्युपगमप्रसंगात्। रूपावचरं त्वायतनद्वयं तत्र गन्धरसाभावात्। तत्पुनरेतत् स्वशरीरे परशरीरे च द्रष्टव्यम्। एतच्चतुर्विधं निर्माणं कामधातावेवं रूपधातौ द्रष्टव्यम्। इत्यष्ट[विधं निर्माणम्]।[६]

[किं खलु नि(5)र्माणम]भिज्ञया निर्मीयते? किं तर्हि?

---

१ 'कतमा दस इद्धियो? अधिट्ठाना इद्धि, विकुब्बना इद्धि, मनोमया इद्धि, ञाणविप्फारा इद्धि, समाधिविप्फारा इद्धि अरिया इद्धि कम्मविपाकजा इद्धि पुञ्ञवतो इद्धि, विज्जामया इद्धि, तत्थ तत्थ सम्मापयोगपच्चया इज्झनट्ठेन इद्धी' ति—*Paṭisambhidā*, vol. II. p. 205.

२ Cf. शास्तुर्मनोजवाऽन्येषां वाहिन्यप्याधिमोक्षिकी। *Ak.* VII 48cd.

३ V. supra, p. 37.

४ See *LVPAk.* VII p. 113, n. 2.

५ Cf. कामाप्तं निर्मितं बाह्यं चतुरायतनं द्विधा। रूपाप्तं द्वे तु *Ak.* VII 49.

६ See *Yogasūtra*, IV 4-5.

[527] अभिज्ञाफलचित्तेन तचानि तु चतुर्दश।[1]
आद्यध्यानफलं द्वे ते(तै)रूर्ध्वंभूम्येकवृद्धितः॥

प्रथमध्यानफले खलु निर्माणचित्ते कामावचरं प्रथमध्यानभूमिकं च, द्वितीयध्यानफलानि त्रीणि, तृतीयध्यानफलानि चत्वारि, चतुर्थध्यानफलानि पञ्च॥

कथं पुनर्निर्माणचित्तानि लभ्यन्ते?

[528] [6]तल्लाभो ध्यानव[त्] ज्ञेयः

यथा खलु ध्यानानि वैराग्यत उपपत्तितः प्रयोगतश्च लभ्यन्ते तथा निर्माणचित्तानि।

कथं पुनस्तदुत्पद्यते?

शुद्धकाच्च स्वतश्च तत्।[2]

शुद्धकाद् ध्यानादनन्तरं णि(नि)र्मान(ण)चित्तमुत्पाद्यते निर्माणचित्तादेव वा नान्यतः। ततः खल्वपि निर्माणचित्तादनन्तरं शुद्धकध्यानं निर्माणचित्तं चोत्प[7]द्यते नान्यत्। सर्वस्य च निर्मितस्य

स्वभूमेनैव निर्माणमप(ध)रेणापि भाषणम्॥[3]

न खल्वन्यभूमिकं निर्माणमन्यभूमिकेन निर्माणचित्तेन निर्मीयते। भाषणं तु स्वभौमेनाप(ध)रभौमेन च। कामधातुप्रथमध्यानभूमिको हि निर्मितः स्वभूमिकेनैव चित्तेन भाष्य(ष)ते। ऊर्ध्वभूमिकास्तु प्रथमध्यानभूमिकेन, तत्रैव [8]विज्ञप्तिसमुत्थापकचित्तसद्भावात्॥

किं पुनर्निर्मितनिर्मात्रोः क्रमेन(ण) वाग्भाषणं भवत्यथ युगपत्? तदुच्यते—

[529] निर्मात्रैव सहैतेषां भाषणं सुगतादृते।[4]

---

[1] Cf. निर्माणचित्तैस्तानि चतुर्दश। *Ak.* VII 49 d

[2] Cf. यथाक्रमं ध्यानफलं द्वे यावत्पञ्च नोर्ध्वजम्।
तल्लाभो ध्यानवच्छुद्धात् तास्वतश्च ततोऽपि ते॥ *Ak* VII. 50.

[3] Cf. स्वभूमिकेन निर्माणं भाषणं त्वधरेण च। *Ak.* VII. 51 ab.

[4] Cf निर्मात्रैव सहाशास्तुः। *Ak.* VII. 51 c.

उक्तं हि

"एकस्य भाषमाणस्य सर्वे भाषन्ति निर्मिताः ।
एकस्य तूष्णीं भूतस्य सर्वे तूष्णीं भवन्ति ते ॥"[१]

भगवतस्तु इच्छातः पूर्वं पश्चाद्युगपद्वा निर्मिता भाषन्ते । तेषा [(4)]पुन'

एकस्य ब्रुवतः सर्वे निमिता ब्रुवते समम् ॥

[ 530 ] अधिष्ठाय तु निर्माणं भाषन्तेऽन्येन चेतसा ।[२]

'अधिष्ठाय तु निर्माणं' सस्थाप्येत्यर्थं । अन्येन चेतसा विज्ञप्तिसमुत्थापकाख्येन वाच प्रवर्तयतीत्यतोऽपि नास्ति निर्माणान्तर्धाणो(नो) दोष । तत्पुनरेतदधिष्ठानं न केवलं जीवत एव । किं तर्हि ?

अधिष्ठानं मृतस्यापि [ VIII B 4 Fol 144 a ]
[(1)]स्थिरस्यैव तु वस्तुनः ॥[३]

आर्यमहाकाश्यपाधिष्ठानेन तदस्थिशंकलावस्थानश्रवणात् स्थिरस्यास्थिलक्षणस्य न मासरुधिरादीनामस्ति ॥

किं पुनरेकचित्तेनैकं निर्मितं निर्मिणोत्यथ बहून् ?

[ 531 ] अजय्येक्रमनेकेन जयिणस्तद्विपर्ययः ।[४]

आद्याभिनिर्ह्रारैर्बहुभिर्निर्माणचित्तैरेकं सोपादानं च निर्मितं निर्मिणोति ।

---

[१] Quoted in *Akb* VII 57 c
Cf एकस्मि भासमानम्हि सब्बे भासन्ति निम्मिता ।
एकस्मि तुण्हीमासीने सब्बे तुण्ही भवन्ति ते ॥ *Digha*, XVIII. 21 See *LVPAk.* VII p 118 n 3

[२] Cf अधिष्ठायान्यवर्तनात । *Ak.* VII 51 d.

[३] Cf मृतस्याप्यस्त्यधिष्ठानं नास्थिरस्यापरे तु न । *Ak.* VII. 52 ab
—आर्यमहाकाश्यपाधिष्ठानेन तदस्थिशंकलावस्थानात । तत्तु 'नास्थिरस्य' । आर्यकाश्यपेन तु मासादीनामधिष्ठानात । अपरे पुनराहुर्नास्ति मृतस्याधिष्ठानम् । अस्थिशकलावस्थानं तु देवतानुभावादिति । *Akb* VII 52 ab
Cf मन्त्रय काश्यपस्य भिक्षारविकोरितमस्थिसंघात दक्षिणेन पाणिना गृहीत्वा *Divyavadana* 61 See *LVPAk.* VII p 120, n. 1

[४] Cf आद्यादेकमनेकेन जितानां तु विपर्ययात् । *Ak.* VI. 52 cd.

जितायां त्व(2)भिज्ञायां निर्मातुरिच्छया बहून्यप्येकचित्तेन निरुपादानमपि च निर्मिनो(णो)ति ।

तत्पुनरेतन्निर्माणचित्तं द्विविधं भावनामयमुपपत्तिप्रातिलम्भिकञ्च । तत्र

अव्याकृतमभिज्ञोत्थं उपपत्त्य त्वयं त्रिधा ॥[१]

यत्खलु भावनाफलं निर्माणचित्तं तदव्याकृतं भवति । उपपत्तिप्रातिलम्भिकं तु कुशलादि[ना] त्रिप्रकारम् । [तदुपपत्तिफलं] (3)दशातिशययुक्तम्[२] ।

[ 532 ] अर्हतां दशधा त्वेतदैश्वर्यमुपपद्यते ।
सर्वास्रवक्षयज्ञानविमुक्तिद्वययोगतः ॥

यदेतदणिमादिशैक्षान्तं[२] दशविधमैश्वर्यसुखं तदतिशययुक्तमर्हतामेवोपपद्यते ॥

यदि तर्हि त्रयाणामर्हतामेतदैश्वर्यं समानमस्ति कस्तर्हि विशेषः शास्तृशिष्ययोः ?[४] तत्रेदमुपदिश्यते—

[ 533 ] ऐश्वर्ये[पि स](4)मानेऽस्मिन्यथोक्ते शास्तृशिष्ययोः ।
अन्तरं सुमहच्छास्तुर्यत्तत्पूर्वमुदाहृतम् ॥

दशबलाद्यावेणिकबुद्धगुणचिन्तायां चतुष्प्रत्ययता नद्युत्तरणे गन्धहस्त्यश्वशशकदृष्टान्तैश्च विशेषान्तरं बोद्धव्यमिति ॥

अभिधर्मप्रदीपे[५]विभाषाप्रभाया वृत्तौ सप्तमस्याध्यायस्य चतुर्थः पादः ॥

समाप्तश्च ज्ञानविभागो नाम (5)सप्तमोऽध्यायः ॥

---

[१] Cf. अव्याकृतं भावनाजं त्रिविधं तूपपत्तिजम् । *Ak.* vii. 53 ab.

[२] The eight *aiśvaryas*, (V. supra, p. 399, n. 2) the *āsravakṣaya-jñāna* and *vimukti-jñāna*.

[३] V. supra, p. 399, n. 2.

[४] The Kośakāra does not discuss this point, but instead devotes three *kārikās* (*Akb.* vii. 53cd to 56) dealing with the following :—(१) पञ्चविधा ऋद्धि । (२) दिव्यश्रोत्र दिव्यचक्षुस्व । (३) विमूढिरेवोपपत्तिलाभिका भवस्यपान्यदपि ? (४) चेतोज्ञानम् ।

[५] V. supra, p. 347, n. 1.

# अष्टमोऽध्यायः ।

## प्रथमः पादः ।

व्याख्याता हि विस्तरशो निदर्शना । शमथ इदानीं वक्तव्यः । स खल्वेष शमथश्चतुर्ध्या[ना]रूप्यसंगृहीत । तत्र तु

[534] साङ्गा चित्तस्थितिर्ध्यानं तच्चतुर्धाऽङ्गभेदतः ।[1]

शमथ खलु साङ्गा कुशला चित्तैकाग्रता ध्यानमित्युच्यते ।[2] यस्य खलु धर्मस्याङ्गपरिगृहीततो(स्यो ? )द्रेका[त्] चित्तचैत्तान्यालम्ब(?)नान्तर न प्रति पद्यन्ते स धर्मश्चैतसिक समाधि[3]रित्याख्यायते । तदङ्गभेदेन चतुर्विधमिति वक्ष्याम । तस्या पुनश्चित्तस्थितौ

ध्यानोक्तिराञ्जसी तत्र भाक्तो तत्सहभूष्वपि[4] ॥

---

[1] Cf द्विधा ध्यानानि चत्वारि प्रोक्तास्तदुपपत्तय ।
समाधि शुभैकाग्र्यं *Ak.* viii 1 abc

[2] The Kośakāra discusses this point in detail —कथमेकाग्रता नाम ? एकालम्बनता । एवं तर्हि चित्तान्येवैकालम्बनानि समाधिर्न चैतसिक धर्मान्तरमिति प्राप्नोति । न वै चित्तान्येव समाधि । येन तु तान्येकाग्राणि वर्तन्ते स धर्म समाधि । नैव चित्तैकाग्रता । ननु च क्षणिकत्वात् सर्व चित्तमेकाग्रं द्वितीयस्य तस्मात् दिशाऽन्यत्र संप्रयुक्ते समाधि समाधेः सर्वचित्तानामेकाग्रताप्रसङ्ग । न । ... महाभूमिकत्वात् तथा ह्यपि चित्तं निरोधादिप्रधान च सूत्र चत्वारि ध्यानानि युक्तानीत्यपरे । *Akb* viii 1 —समाधिरर्थ आह न चित्तान्येव समाधि, येन तु तान्येकाग्राणि वर्तन्ते स धर्म समाधि ।' यथा ... । स एव गुणो ... *Sakv* p 663 See *LVPAK* viii pp 129 ff

[3] Cf या या आयुष्मन्तो विहार चित्तस्यैकाग्रता अयं समाधि ... या सर्व पश्यन आसेवना अयं मया समाधिभावना ति । *Majjh* 44. *Vm* iii 3 See *Lerakhu by* iii 11 12 & 41 and *LVPAK* viii p 128, n 3

[4] Cf तत्त्वारस्यानु भावुकम् । *Ak.* viii 1 d.

समाधिस्वभावं खलु परमार्थेण(न) ध्यानम्[1]। सपरिवारं तु गृह्यमानं(णं) पञ्चस्कन्धस्वभावम्। भक्तिकल्पनया [तत्सहभूष्वपि] धर्मेषु तच्छब्दः ॥

[ 535 ] सं(7)क्षेपादियमाख्याता ध्यानजातिश्चतुर्विधा।

प्रथमं ध्यानं द्वितीयं तृतीयं चतुर्थमिति।[2]

द्रव्यभेदानहं तस्याः प्रवक्ष्यामि यथागमम् ॥

द्रव्यभेदस्तु ध्यानजातेश्चतुर्विधायाः समापत्तिजातेश्च तावत्या एव समासेन वक्ष्यामि ॥

तत्र तावत्।

[ 536 ] सहारूप्यचतुष्केन समापत्तिर्मताष्टधा।
[चतुः पञ्चेषु स्कन्धेषु][3][त](8)दुक्तेर्वर्गवृत्तितः ॥[4]

पञ्चस्कन्धेषु वर्गीभूतेषु ध्यानसमापत्तिः प्रज्ञाप्यते। चतु[:]पञ्चेष्वारूप्यसमापत्तिरिति ॥

[ 537 ] भेदेन तु समापत्तिद्रव्यानि(णि) दश सप्त च।
सामन्तकैः सहाष्टाभिर्ध्यानान्तरिकयाऽपि च ॥

अष्टाणा(नां) खलु समापत्तिभूमीनामष्टाणा(ना)मेव सामन्तकद्रव्याणां तत्प्रवेशोपायभूतानि ध्याना(9)न्तरिका च प्रथमध्यानसंगृहीता। एतानि खलु सप्तदश यथास्थौल्यं भिद्यमानानि सप्तदश भवन्तीत्यत आह—

[ 538 ] तद्भेदाः खल्विमेऽन्येऽपि वक्ष्यन्ते शास्त्रचोदिताः।

---

[1] ध्यानमिति कोऽर्थः ? ध्यायन्त्यनेनेति। प्रजानन्तीत्यर्थ। चिन्तानार्थो हि एष धातु। चिन्तन च प्रज्ञेति सिद्धान्त। एव तर्हि सर्वसमाधिध्यानप्रसङ्ग ? न, प्रकर्षयुक्ते तन्नामविधानाद्भास्करवत्। कश्च प्रकर्षयुक्त। योऽङ्गसमायुक्त समाधि।···*Akb* VIII 1 See *Sakv* pp 664-5 आरम्मणूपनिज्झानतो पच्चनीकझापनतो वा झान। *Vm* IV 119 On *jhana* and *samādhi* see *PTS D*

[2] झान ति चत्तारि झानानि। पठम झान दुतिय ·ततिय ·चतुत्थ झान। *Vbh* p 342

[3] The Ms is erazed here

[4] Cf विचारप्रीतिसुखवत् पूर्वपूर्वाङ्गवर्जितम्।
तथाऽऽरूप्याश्चतु स्कन्धा अधोभूमिविवेकजा ॥ *Ak* VIII 2.

अन्येऽपि खलु समापत्तिभेदास्तदन्तर्गता एव सूत्राभिधर्मोदिता वक्ष्यन्ते।

उद्धवृद्धेस्तु ते सर्वे तत्त्वेनायान्ति गोचरम् ॥

भगवानेव हि [VIII A 4 Fol 144 b ](1)सर्वप्रथमध्यानसमापत्त्यादिभेदेषु, अनन्तस्वभावप्रभावक्रियाफलेष्वपरोक्षबुद्धिवृद्धि(त्ति)रिति ॥

[1]त एते ध्यानारूप्यास्त्रिप्रकारा । कथम् ? तदारभ्यते—

[ 539 ] त्रिधा ध्यानानि मौलानि सास्वादादिप्रभेदतः ।
तथैव त्रय आरूप्या भवाग्रं तु द्विधा मतम् ॥[2]

तत्र मौलानि तावद् ध्यानानि त्रैविध्यान्यास्वादनासंप्रयुक्तशुद्धकानास्र(2)वभेदात् । एवं त्रयो मौला आरूप्याः । भवाग्रं तु नास्त्यनास्रवम्[3] । कामधातोर्भवाग्रस्य च भवमूलत्वात् ॥

[ 540 ] सामन्तानि द्विधा सप्त प्रथमं तु त्रिधा मतम् ।
ध्यानान्तरं त्रिधा तद्वदक्लिष्टं त्वधराश्रयम् ॥

प्रथमध्यानसामन्त[4] हित्वाऽन्यानि सप्त सामन्तानि द्विप्रकाराण्य(एव) न्यथानास्रवात् । प्रथमध्यानसामन्तकं तु त्रिप्रकारम् । केचित्तु आस्वाद(3)-नासंप्रयुक्तं नेच्छन्ति । तद्वद् ध्यानान्तरिका त्रिधेति वर्तते । यत्त्वाक्लिष्टं तदधराश्रयं द्रष्टव्यमिति ॥

किं पुनरेषामास्वादनादिसंप्रयुक्तानां त्रयाणां लक्षणम् ? उच्यते—

[ 541 ] आस्वादवत्सतृष्णं यच्छुद्धकं लौकिकं मतम् ।
अद्वे(षो ?)षस्तं तदास्वाद्यमतिलोभमनास्रवम् ॥[5]

[1] The Kośakāra here deals with the *Arūpa dhyāna* (*Ak* viii 2-4) V infra *Adv kar kās* 551—553

[2] Cf इति मौलं समापत्तिद्रव्यमष्टविधं त्रिधा ।
सप्तास्वादनवच्छुद्धानास्रवाण्यष्टमं द्विधा ॥ *Ak* viii 5

[3] [भवाग्रं] अनास्रवं नास्ति हि मार्गाभावात् । *Sakv* p 671

[4] सामन्तं सर्वास्रवम् । *Sakv* p 57

[5] Cf आस्वादनासंप्रयुक्तं सतृष्णं लौकिकं शुभम् ।
शुद्धकं तदास्वाद्यं लोकोत्तरमनास्रवम् ॥ *Ak* viii 6

यत्खलु सतृष्णं तदास्वादनासंप्रयुक्तमित्युच्यते ।[1] तृष्णाया आ[स्वा-दप(4)]र्यायत्वात् । यत्तु न संप्रयुक्तं तदपि तृष्णासहगतत्वादास्वादवदित्युच्यते तृष्णयैकफलत्वात् । यत्तु सास्रवं कुशलं समापत्तिद्रव्यं तच्छुद्धकमाख्यायते । क्लेशमलासंपर्कादलोभादिशुक्लधर्मयोगाच्च ।

तदेतच्छुद्धकं तस्यास्वादनासंप्रयुक्तस्यास्वाद्यम् । तेन हि तत्समनन्त-रातीतमास्वाद्यते । येनास्वादयति तमापन्नो यदा(5)स्वादयति तस्माद्व्यु-त्थितः ।[2] अन्योन्यसंसर्गादि(द्धि) तृष्णासमाध्योर्नामनिर्वृति(त्तिः) । तृष्णा-वशात्समाधेरास्वाद नाम, समाधिवशात्तृष्णायाः ध्याना(न) नाम, [अ]न्यथा विप्रतिषिद्धं स्यात् । न हि कश्चित्तृष्णां समापद्यते, न च समाधिनाऽऽस्वादय-तीति । लोकोत्तरं तु समापत्तिद्रव्यमनास्रवमित्युच्यते ॥

आसां पुनः समापत्तीनां ध्या(6)नान्येवाङ्गवर्ति नारूप्याः । कति पुनः कस्य ध्यानस्याङ्गानि ?[3] तदिदं प्रस्तूयते—

[ 542 ] अङ्गान्याद्ये शुभे पञ्च वितर्कश्चित्तसूक्ष्मता ।[4]
प्रीतिः सुखं समाधानं क्लिष्टं सुखविवर्जितम् ॥

प्रथमे तावच्छुभे ध्याने पञ्चाङ्गानि वितर्कविचारप्रीतिसौख्यसमाधयः ।[5] क्लिष्टे[6] चत्वारि सुखं हित्वा ॥

[ 543 ] साध्यात्मसंप्रसादास्तु सुखप्रीतिसमाधयः ।
द्वि(7)तीयेऽङ्गानि चत्वारि क्लिष्टे श्रद्धा सुखादृते ॥[7]

---

[1] Cf. इध भिक्खवे एकच्चो पुग्गलो विविच्चेव कामेहि···पठमज्झानमुपसम्पज्ज विहरति । सो तदस्सादेति तं निकामेति तेन च वित्तिं आपज्जति । *Ang* II p. 126.

[2] 'यदास्वादयति तस्माद्व्युत्थित' इति शुद्धकात् । येनास्वादयति त समापन्न' इति । आस्वादनासंप्रयुक्तम् । *Sakv.* p 671.

[3] For details, see *Vm.* XV 79-202.

[4] Cf. पञ्चाद्ये तर्कचारौ च प्रीतिसौख्यसमाधयः । *Ak.* VIII. 7 ab.

[5] 'यथा चतुरङ्गसेना' नाङ्गेभ्योऽर्थान्तरभूता । 'एव पञ्चाङ्गध्यान' नार्थान्तर-भूतमिति स्वमतं दर्शयति । *Sakv.* p 671.

[6] The *angas* of *klishta-dhyāna* are given in a separate *kārikā* in *Ak.*—
क्लिष्टेष्वसत्प्रीतिसुख प्रसादः सम्प्रधीः स्मृतिः ।
उपेक्षास्मृतिशुद्धिश्च केचित् प्रश्रब्ध्युपेक्षणे ॥ *Ak.* VIII. 10,
—केचित् पुन प्रथमद्वितीययोः क्लिष्टयो प्रश्रब्धिर्नास्ति । तृतीयचतुर्थयोरुपेक्षा नास्ति कुशलमहाभूमिकत्वादनयोरिति । *Akb.* VIII. 10 d.

[7] Cf प्रीत्यादय प्रसादश्च द्वितीयेऽङ्गचतुष्टयम् । *Ak.* VIII. 7 cd.

द्वितीये कुशले ध्याने चत्वार्यङ्गानि। आध्यात्मसंप्रसादः प्रीतिः सुखं चित्तैकाग्रता च। क्लिष्टे द्वे श्रद्धा सुखं हित्वा ॥

[ 544 ] तृतीये पञ्चमे प्रज्ञा स्मृत्युपेक्षा सुखं स्थितिः।[1]
क्लिष्टे त्वङ्गद्वयं ज्ञेयं समाधिर्वेदनासुखम् ॥

तृतीये शुभे ध्याने उपेक्षा स्मृतिः सम्प्रज्ञानं सुखं समाधिश्च। क्लिष्टे (B)तु द्वे 'समाधिर्वेदनासुखम्' ॥

[ 545 ] अन्ये(न्त्ये) चत्वार्युपेते द्वे समाधिः स्मृतिरेव च।
क्लिष्टे ध्याने चतुर्थे तु द्वे अङ्गे वेदना स्थितिः ॥[2]

चतुर्थे खलु ध्याने शुभे चत्वार्यङ्गानि। अदुःखासुखावेदना उपेक्षा च स्मृतिपरिशुद्धिः समाधिश्च। क्लिष्टे तु द्वे वेदना स्थितिश्च ॥

कति पुनरेषां द्रव्यतो भवन्ति कति नामतः ?

[ 546 ] द्रव्यात्मना द(B)शैकं च नाम्ना त्वष्टौ दशैव च।[3]
अङ्गान्येतानि कथ्यन्ते चतुष्कोटिरतः स्मृतः ॥

द्रव्यतः एकादश भवन्ति। प्रथमे ध्यानाङ्गानि पञ्च। द्वितीये ऽध्यात्मसंप्रसादो वर्धते। तृतीये समाधिवर्ज्यानि वर्धन्ते। चतुर्थे त्वदुःखासुखा वेदनेति ॥

ननु च यत् तृतीये ध्याने सुखमुक्तं[4] [तथा] प्रथमद्वितीययोः[5] [Folio

---

[1] Cf तृतीये पञ्च त्वुपेक्षा स्मृतिः प्रज्ञा सुखं स्थितिः। Ak viii 8ab

[2] Cf चत्वार्यन्त्येऽसुखादुःखोपेक्षास्मृतिसमाधयः। Ak viii 8cd.

[3] Cf द्रव्यतो दश चैकं च। Ak viii 9a

[4] V supra, p 52, n. 3.

[5] The topic under discussion is —कस्मात् तृतीये ध्याने सुखं द्रव्यान्तरमुक्तम्? यस्मात्तत्र वेदना सुखम्। ध्यानयोस्तु प्रश्रब्धिसुखमाद्ययोः। प्रथमद्वितीययोस्तु ध्यानयोः प्रश्रब्धिसुखमित्युक्तम्। ... किं पुनः कारणम्। [illegible] सुखेन्द्रियाभावात्। नहि तयोः कायिकं सुखम्। [illegible] न च सुखेन्द्रियम् [illegible]। [illegible] चैतसिकं [illegible]। [illegible] ध्यानेषु [illegible]

546 ]



No 145 lost[१] ]

[ अभिधर्मदीपे विभाषाप्रभायां वृत्तौ अष्टमस्याध्यायस्य प्रथमः पादः समाप्तः[२] ॥ ]

---

सुखमङ्गं व्यवस्थापितमिति । यत्तर्हि सूत्र उक्तम् । *Akb* VIII 9 b The Kośakara discusses this point in detail and says at the end—तस्माद्विचार्यमेतत् ।

Yośomitra says — सुखेन्द्रियापायोगादि'ति । नास्त्येव चैतसिकं सुखेन्द्रियं त्रिष्वपि हि ध्यानेषु । किं तर्हि ? कायिकमेव सुखमङ्गं व्यवस्थापितम् समाहितावस्थान्तरालस मुदाचारात् । दार्ष्टान्तिकानां किलैष पक्ष । तेषां हि न द्विभूमिकमेव सुखेन्द्रियम् । कामप्रथमध्यानभूमिकमिति । किं तर्हि ? चतुर्भूमिकमपि सुखेन्द्रियं भवति । कामावचरं यावत् तृतीयध्यानभूमिकमिति । अत एव च विभाषायां भदन्तेन सौत्रान्तिकेनोक्तम्— 'आभिधर्मिकाणां अत्यद्भुतम् चक्षुर्विज्ञानादिकमधस्तादूर्ध्वं चारभ्यत इति । तस्माद्विचार्यमेतत्' इति । योगाचारभूमिदर्शनेन विचार्यमेतदित्यत्र कौतूहलं पातयत्याचार्य । *Sakv* pp 672—676 See *LVPAk* VIII pp 150—160 V supra p 72 n 1, p 139, n 4

[१] Folio No 145 is lost In this lost folio the *Adv* might have discussed this controversial topic viz *prasrabdhi* and *sukha* and also the nature of *prasada* and *priti* See *Akb* VIII 9—10

[२] A large portion of the first *pada* of the Eighth *Adhyaya* is lost in the lost folio

# अष्टमाध्याये

## द्वितीयपादः ।[1]

[ 547 ] [ VIII B, 5 Fol 146 a ] शमथस्य च ।

ध्यानसामन्तकारूप्येष्वङ्गानामव्यवस्थितिः ॥

ध्यानसामन्तकेषु खलु विदर्श[नोद्रिक्ता] शमथो न्यूनः। आरूप्येषु सर्वत्र शमथोऽधिकवृत्तिर्विपश्यना न्यूनतरा। विपश्य पश्यतो संज्ञायामिति वचनादङ्गान्यपि पश्चादुद्देशो भवति। ततः सिद्धं विपश्यनाः ॥

यदा खलु चत्वार्यपि ध्यानानि विपाकं प्रति नेञ्जन्ते कस्माच्च(2)तुर्थमेवानेञ्ज्यमुच्यते ?[2] तथापदिश्यते—

[ 548 ] वितर्कचारविध्वंसात्प्रश्वासाश्वाससंक्षयात् ।
[उपे]क्षावेदिताभावादन्त्यमानेञ्ज्यमुच्यते ॥[3]

त्रीणि खल्वपि ध्यानानि सेञ्जितान्युक्तानि भगवता वितर्काद्यपक्षालयोगात्। वितर्कविचाराश्वासप्रश्वासौ सुखदुःखसौमनस्यदौर्मण(न)स्यानीत्यष्टापक्षालाः।[4] तैश्चतुर्थं ध्यानमकम्प्य(3)मित्युक्तमभिधर्मे। वितर्कविचारप्रीतिसुखैरकम्पनीयत्वादानेञ्ज्यं चतुर्थमुक्तं[5] सूत्रे[6]। आभिप्रायिकः सूत्रनिर्देशो लाक्षणिकस्त्वभिधर्मे। तथाहि "सुखदुःखयोः प्रहाणात्सौमनस्यदौर्मण(न)स्ययोश्चास्तङ्गमाच्चतुर्थं ध्यानमुपसम्पद्य विहरति" इत्युक्तम्। अभिधर्मे वितर्कविचारप्रीतिसुखान्येवेञ्जितम् ॥

---

[1] The beginning portion of this *pāda* is lost in the lost folio V supra, p 409, n. 6

[2] V supra, p 45, n 4, p 137, notes

[3] Cf अपक्षालविमुक्तत्वादानिञ्ज्यं तु चतुर्थकम् ।
वितर्कचारौ श्वासौ च सुखादिश्च चतुष्टयम् ॥ *Ak.* viii 11

[4] V supra, p 115, n 4

[5] V supra p 138 n 5 See *M suttas* 66, 106.

[6] यथा पूर्वकाणि त्रीणि ध्यानानि वितर्कादिभिः कम्प्यन्ते नैवमिदं चतुर्थं कम्प्यते। 'यथा निवाते दीपो न कम्प्यते वायुना' तद्वदिदमुक्तं सूत्र इत्यपर आहुः। *Sakv* p. 677

[7] Cf सुखस्स च पहाना दुक्खस्स च पहाना पुब्बे व सोमनस्सदोमनस्सानं अत्थङ्गमा अदुक्खमसुखं उपेक्खासतिपारिसुद्धिं चतुत्थं झानं उपसम्पज्ज विहरति। *M sutta* 51

इदमिदानीं वक्तव्यम् । इह [4]ध्यानसमापत्तिषु प्रथमद्वितीययोर्ध्यानयो सौमनस्यमुक्तं प्रीतिवचनात् । प्रीतिर्हि सौमनस्यम् ।[1] तृतीये सुख चतुर्थे उपेक्षा । तत्किमुपपत्तिध्यानेष्वप्येष एव वेदनानियम ? नेत्युच्यते । किं तर्हि ?

[ 549 ] आद्ये प्रीतिसुखोपेक्षा द्वितीये तु सुखादृते ।
सुखोपेक्षे तृतीयेऽन्त्ये उपेक्षैव निदिष्यते ॥[2]

[3]प्रथमध्यानोपपत्तौ खलु तिस्रो [5]वेदना । सुख त्रिविज्ञानकायिक, सौमनस्य मनोभौममुपेक्षा चतुर्विज्ञानकायिकी । द्वितीयध्यानोपपत्तौ द्वे वेदने सौमनस्योपेक्षे मनोभूमिके । नात्र सुखमस्ति पञ्चविज्ञानकायाभावात् । तृतीय ध्यानोपपत्तौ द्वे वेदने मनोभूमिके । चतुर्थध्यानोपपत्तावुपेक्षैव वेदना विद्यत इति ॥[3]

ननु च द्वितीयादिषु ध्याने[6]षु रूपशब्दस्प्रष्टव्यानामुपलब्धय. सन्ति विज्ञप्तिसमुत्थापक च चित्तम् । तत्कथ तत्र त्रिविज्ञानकायिका वेदना नास्ती त्युच्यते, वितर्कविचारौ चेति ? नैष दोष. । स्वभूमिकप्रतिषेधात् । कुतस्तेन तर्हि रूपादयो विज्ञायन्ते कायविज्ञप्तिश्चोत्थाप्यते ? तदपदिश्यते—

[ 550 ] चक्षुःश्रोत्रकायविज्ञानं विज्ञप्तिजनकं तथा ।
यद्भूमा[7]ववितारायामाद्याद्व्याहृतं तु तत् ॥[4]

द्वितीयध्यानोपपन्ना खलु रूपशब्दस्प्रष्टव्यान्युपलिप्सवो जिगमिषवो वा प्रथमध्यानभूमिकानि चक्षुर्विज्ञानादीनि त्रीणि विज्ञानानि विज्ञप्तिसमुत्थापक च समुखीकृत्य निर्माणचित्तवदुपलभन्ते स्पन्दन्ते चेति । तत्पुन प्रथमध्यान भूमिक चित्तमव्याकृतमेव स[8]मुखीकुर्वन्ति न कुशल न्यूनेनाबहुमानत्वाच्च क्लिष्ट वीतरागत्वात् । तद्यथा कश्चिदीश्वरो दरिद्रमित्रगृह गत । तेनासौ सुहृदा सर्वस्वप्रदानेनोपनिमन्त्रितो मित्रचित्तानुवर्तनया हीनोत्कृष्ट वस्तु हित्वा यत्किञ्चिद् गृह्णीते तद्वदिति । व्याख्यातस्वरूपाणि ध्यानानि ॥

---

१ V supra p 52, n 3

२ Cf सौमनस्यसुखोपेक्षा उपेक्षासुमनस्कते ।
सुखोपेक्षे उपेक्षा प्रविदो ध्यानोपपत्तिषु ॥ *Ak* viii 12

३-३ From प्रथमध्यानोपपत्तौ to विद्यत इति is identical with *Akb* viii 12

४ Cf कायाक्षिश्रोत्रविज्ञान विज्ञप्त्युत्थापक च यत ।
द्वितीयादौ तदाद्याप्तमक्लिष्टाव्याकृत च तत ॥ *Ak* viii 13

For an allied controversy, see वचोभेदकथा, *Kv* ii 5

आरूप्याः वक्तव्याः ।[१] तदारभ्यते—

[ 551 ] खनिमित्तोद्ग्र[(1)]हाकृष्टः प्रोक्तानन्तमनस्कृतिः ।
निसर्गरूप आरूप्य आकाशानन्त्यसंज्ञकः ॥[२]

अनन्ताकाशनिमित्तोद्ग्रहः तत्संज्ञाप्रवृत्तिनिमित्तं पश्चात्तु चतुःस्कन्धालम्बनास्तदन्यतमालम्बना अन्यधर्मालम्बना वा मनस्काराः समुखीभावं गच्छन्ति । उक्तं हि भगवता—"सर्वशो रूपसंज्ञानां समतिक्रमात्प्रतिघसंज्ञानामस्तंगमान्नानात्वसंज्ञा[ VIII A, 5. Fol 146 b ]नाममनसिकारादनन्तमाकाशमानन्त्यायतनमुपसम्पद्य विहरति" इति ।

कः पुनरासां तिसृणां रूपादिसंज्ञानां विशेषः ?[४] [प्रपञ्च]रूपसंज्ञाभिरत्र विशेषो बोद्धव्यः । तदस्मादागमाद्द्विविधाश्च रूप्या(पा)रूप(प्य)स्कन्धाः संगृहीताः । तत्र समापत्तिलक्षणा चित्तानुपरिवर्तिणा(ना) शीलेन वियुता शेषेनोपपत्ति लक्षणात् । त एत आ[(2)]रूप्याः प्रथमारूप्यसामन्तकं हित्वा विभूतरूपसंज्ञा भवन्ति । प्रथमसामन्तकं तु चतुर्थध्यानविद्रू[पितवृत्ति त्वाद्गाढ]बन्धनमिति । अतस्तदेकं न विभूतरूपसंज्ञाख्यं लभते ।[५]

कथं पुनर्निर्धार्यते नारूप्येषु रूपमस्तीति ?[६] आगमाद्युक्तितश्च ।

---

[१] See *Vm* x 1—66

[२] *Cf* तथाऽऽरूप्याश्चतुस्कन्धा अधोभूमिविवेकजा ॥
विभूतरूपसंज्ञाख्या सह सामन्तकैस्त्रिभिः । *Ak.* VIII 2 cd, 3 ab

[३] *Cf* सब्बसो रूपसञ्ञानं समतिक्कमा पटिघसञ्ञानं अत्थगमा नानत्तसञ्ञानं अमनसिकारा अनन्तो आकासो ति आकासानञ्चायतनमुपसम्पज्ज विहरति । *Vbh* p 245

[४] तत्थ कतमा रूपसञ्ञायो ? या रूपावचरसमापत्तिसमापन्नस्स वा उपपन्नस्स वा दिट्ठधम्मसुखविहारिस्स वा सञ्ञा । कतमा पटिघसञ्ञायो ? रूपसञ्ञा सद्दसञ्ञा गन्धसञ्ञा रससञ्ञा फोट्ठब्बसञ्ञा । इमा वुच्चन्ति पटिघसञ्ञायो । कतमा नानत्तसञ्ञा ? या असमापन्नस्स मनोधातुसमङ्गिस्स वा मनोविञ्ञाणधातु समङ्गिस्स वा सञ्ञा *Vbh* pp 261—2.

[५] आकाशानन्त्यायतनसामन्तकं चतुर्थध्यानालम्बनत्वाद्विभूतरूपसंज्ञाख्यां न लभते । न हि तत्र रूपसंज्ञा विभूता न विगतरूपत्वं । *Akb* VIII 3 ab

[६] This topic is discussed in detail in *Akb* —यदुक्तं चतुःस्कन्धा' इति ज्ञाप्यं नारूप्येष्वारूप्येषु रूपं नास्तीति । यदि हि स्यात् कथमारूप्या उच्यरन् । *Akb* VIII 3 ab
'ज्ञाप्यं तावदस्तीति निकायान्तरीयाः । यदि हि स्यात् इति वैभाषिका *Sakv* p 666
See आरुप्पे रूपकथा । *Kv* VIII 8—इदानि आरुप्पे रूपकथा नाम होति । तत्थ यस्स विञ्ञाणञ्चायतनं ... नि वचनतो अकम्मन नि ओळारिकरूपा निस्सटं सुखुमरूपं अत्थी ति यदि ... सम्पत्तं । *KvA.* VIII 8.

आगमस्तावत्—"सर्वशो रूपसंज्ञानां समतिक्रमात्" इत्यादिष्वृतमिदम् ।[१] अन्यदाप्त[(4)]वचनम्—"अरूपिणः सन्ति सत्त्वाः" इति ।[२] ईषद्रूपत्वादरूपिणोनूदरादिकन्यायदिति चेत् ।[३] न । सर्वश इत्यपदेशात्, निःसरणोक्तेश्च । उक्तं हि "रूपाणां निःसरणमारूप्याः" [४]इति । यथा हि "यत् किञ्चिदभिसंस्कृतमभिसंचेतितं निरोधस्तस्य निःसरणम् ।"[४] निरोधे खलु सर्वसंस्कृतवियोगोऽभ्युपगम्यते । न हि मूर्तिविग्रहलक्षणो मोक्षः तत्प्रवृत्तिनिरो[(4)]धित्वात् ।

युक्तिरपि ।[५] रूपाश्रयादीन्यवधूय स्वोद्वेगमुखेन तदाश्रयाद्दस्यूपद्रुततद्वियुक्तदेशाश्रयवत् । उक्तस्तर्ह्यारूप्येभ्यो रूपिरु(पू)पपद्यमानानां रूपमुत्पद्यते हेतुप्रत्ययाधिपतिप्रत्ययबलात्, नामरूपस्यान्योन्यहेतुत्वाच्च । तत्र समागविपाकहेत्वोरेव तयोरप्यस्तित्वात् कारणत्वं रूपप्रत्ययेण(न) च विज्ञानोत्पत्तिद[(5)]र्शनात्, चित्तविशेषोत्पादात् महाभूतेन्द्रियप्रसादादिरूपोत्पत्तिदर्शना(ना)च्चान्योन्यहेतुत्वसिद्धिः ॥[६]

---

[१] V supra, p 412.

[२] Cf ये च रूपूपगा सत्ता ये च अरूपट्ठायिनो । *Itivuttaka*, p 87

See *Milinda*, p 310

[३] Cf ईषद्रूपत्वादापिङ्गलवत् । कीदृग तावदीषद्रूप तत्रष्यते ? यदि कायवाक् । संवरमात्र कथ तदभाव तत्संवरो भविष्यन ? न चासति भूत भौतिक युज्यत ।…परिमाणाल्पत्वाच्चेत । उदकजन्तुवत्स्वप्यदृश्यरूपेषु प्रसग । अच्छत्वाच्चेत । अन्तराभवरूपावचरेष्वपि प्रसग ।" *Akb* viii 3 ab See *Sakv* p 667

[४-४] Cf निस्सो निस्सरणीया धातुया । कामानमेत निस्सरण यदिद नेक्खम्म, रूपानमेत निस्सरण यदिद आरुप्प, य खो पन किञ्चि भूत सङ्खत पटिच्चसमुप्पन्न निरोधो तस्स निस्सरण । *Digha* xxxiv 1-4 See *Ang* iii p 245

[५-६] Cf कात्र युक्ति ? आयुष्मणो ससृष्टवचनात्प्रङकलापीडयवनामरूपयोरन्याश्रितवचनात्, "विज्ञानप्रत्यय नामरूपम्" इति वचनात्, अन्यत्र रूपाद्यावस्थस्यारेभ्या विज्ञानस्यागतिप्रतिषेधाच्चारूप्येषु रूपास्तित्वसिद्धिरिति चेत् । न । सप्रधार्य तावदेतत् । यदिदमायुष्मणो ससृष्टत्वमुक्तम् । किमिद कामावचरमायु सन्धायोक्तमाहोस्वित्सर्वमिति । यच्च नामरूपयोरन्योन्याश्रितत्वमुक्त किमिद कामरूपावचर नाम सन्धायोक्तमाहोस्वित्सर्वमिति । यच्च विज्ञानप्रत्यय नामरूपमुक्त किमत्र सर्व विज्ञान नामरूपस्य प्रत्ययम्, आहोस्वित् सर्व नामरूप विज्ञानप्रत्ययमिति । यच्चान्यत्ररूपादिभ्यो विज्ञानस्यागतिगतिप्रतिषेध, किमत्र सर्वैरेव तैर्विना तत्प्रतिषेध आहोस्वित् एकेनापीति । तस्मात्

नारूप्ये रूपसद्भाव

कथमिदानीमनल्पकल्पोच्छिन्नाद्रूपात् पुनरपि रूपोत्पत्तिस्तत प्रच्युतानाम् ?

रूपोत्पत्तिस्तु चित्तत ॥ *Akb* viii 3cd

See *Sakv* pp 667—671 and *LVPAk* viii. pp 137—143

उक्त प्रयोगप्रथमारूप्य । द्वितीयोऽप्युच्यते—

[ 552 ] तद्वच्चित्तविमुत्वेदी विज्ञानानन्त्यलक्षणः ।[1]

आकाया(शा)नन्त्यसञ्ज्ञाद्वेषी तदालम्बनानन्त्यविज्ञानाधिमोक्षाभिमुख बुद्धिरनन्त विज्ञानानन्त्यायतनमुपसम्पद्य विहरति। अत्रापि ⁽⁶⁾पञ्चाच्चतु[ ]स्कन्धालम्बनास्तदन्यतमस्कन्धालम्बना शाश्वतधर्मालम्बनाश्च मनस्कारा सम्मुखीभवन्ति । तद्विक्षिप्तसञ्ज्ञक

[ विज्ञानानन्त्यद्वेषी च ][2] अकिञ्चन्याह्वयः पुन ॥[3]

स खलु योगी विज्ञानानन्त्यसञ्ज्ञाद्वेषी तथाकिञ्चनसञ्ज्ञित्वादाकिञ्चन्यायतनमुपसम्पद्य विहरति ।[4] अथवा नास्ति किञ्चिदुपेक्षाप्रयोगनिष्पत्तिराकिञ्चन्यायतन⁽⁷⁾मित्युच्यते । अनन्ताकारौदारिकदर्शनो हि तद्विवेके सञ्ज्ञाविमोक्ष प्रवर्तते । अत एवाकिञ्चन्यायतन(न)परमोपेक्षेत्युच्यते । यस्मात्तत्रानन्ताकारानभिलचेतना चेतसाऽनाभोगता सतिष्ठते ॥

[ 553 ] तद्विच्छेदशङ्की च न सञ्ज्ञासञ्ज्ञसंज्ञकः ।[5]

स खलु सञ्ज्ञितामपि विमुत्यसञ्ज्ञा सञ्ज्ञाशल्य इति कृत्वा तामल्पामपि विस्पष्ट⁽⁸⁾परिच्छिन्नरूपा सञ्ज्ञासु सूज्योच्छेदशङ्की च विस्पष्टरूपां सतीं नैवसञ्ज्ञ नासञ्ज्ञमुपसम्पद्यते ।[6] अतो नैवसञ्ज्ञानासञ्ज्ञायतन समापद्यते । न सञ्ज्ञावेदितनिरोध नापि विस्पष्ट पूर्वसमापत्तिसञ्ज्ञाम् । सर्वेषु चारूप्येषु

आदौ तथा प्रयुक्तत्वा[त्] तत्सना व्यव(प)दिश्यते ॥

न तु तन्मात्रसञ्ज्ञा एवारूप्या इत्याविष्कृतमेतत्सू⁽⁹⁾त्रमेवेति । व्याख्यातानि मौलान्यपी समापत्तिद्रव्याणि ॥

[1] Cf सब्बसो आकासानञ्चायतनं समतिक्कम्म अनन्तं विञ्ञाणं ति विञ्ञाणञ्चायतनं उपसम्पज्ज विहरति । Vbh p 245

[2] Added from Id

[3] Cf आकाशानन्त्यविज्ञानानन्त्याकिञ्चन्यसामन्तका । तत्प्रयोगात Ak. viii 4 abc.

[4] Cf सब्बसो विञ्ञाणञ्चायतनं समतिक्कम्म नत्थि किञ्चि ति आकिञ्चञ्ञायतनं उपसम्पज्ज विहरति । Vbh p 245

[5] Cf मान्द्यात् न संज्ञा नाप्यसंज्ञ । Ak. viii 4 d

[6] सब्बसो आकिञ्चञ्ञायतनं समतिक्कम्म नेवसञ्ञानासञ्ञायतनं उपसम्पज्ज विहरति । Vbh viii 22 ab.

सामन्तकानां[१] पुनरादिध्यानसामन्तकस्यानागम्याख्यस्य किं रूपम् ? तदपदिश्यते—

[ 554 ] सवितर्कविचारं यत्सापेक्षं सानुवर्तकम् ।
चित्तमार्येतराकारं तदानागम्यमुच्यते ॥[२]

यत्खलु प्रथममौलध्यानप्रवेशोपायचित्तं सवितर्कं सविचारमुपेक्षा-वेदनासम्प्रयुक्तं सानुपरिव[र्तकं][२]......[Folio No 147 lost][३]

.... *[अभिधर्मदीपे विभाषाप्रभाया वृत्तौ अष्टमस्याध्यायस्य द्वितीयपाद ॥ ]......

---

[१] कति पुन सामान्तकानि ?

अष्टौ सामन्तकान्येषा शुद्धादुःखासुखानि हि ।

एकैकस्यैकैक येन तत्प्रवेश । किं तान्यपि त्रिविधानि तथैव च तेषु वेदना । नेत्युच्यते । शुद्धकानि च तान्युपेक्षेन्द्रियसम्प्रयुक्तानि च यत्नवाह्यत्वादधोभूम्युद्वेगानपगमात् वैराग्यपथत्वाच्च नास्वदनासम्प्रयुक्तानि । *Akb* VIII 22 ab. See *Saki* p 681

[२-२] Cf आद्यं चाद्य त्रिधा केचिद्वितर्कं ध्यानमन्तरम् ॥ *Ab* VIII 22 cd.

आद्य सामन्तकमनागम्य तच्छुद्धक चानास्रव च । यद्यपि सामन्तकचित्तेन प्रतिसन्धि-बन्ध क्लिष्टो भवति । समाहितस्य तु क्लिष्टत्व प्रतिषिध्यते । केचित्पुनरिच्छन्ति । अस्वादनासम्प्रयुक्तमप्यनागम्य सामन्तक चोच्यते ध्यानान्तर च । किमिदमेकार्थमाहोस्वि-न्नानार्थम् ? सामान्तक हि वैराग्यमार्ग । तत्पुनर्ध्यानान्तरम्

त्रिधाऽदुःखासुख तच्च महाब्रह्मफल च तत् । *Ak* VIII 23 ab

—'यद्यपि सामन्तकचित्तेन सन्धिबन्ध'इति । अष्टास्वपि ध्यानारूप्येषु यस्य यत् सामन्तके । तस्य तेन सामन्तकचित्तेन क्लिष्टेनासमाहितेन सन्धिबन्ध इत्येष सिद्धान्त इति । अत इदमुच्यते । यद्यपि सामन्तकचित्तेनेति विस्तर । 'आस्वादनासम्प्रयुक्तमप्य-नागम्यम्, इति । अनागम्यस्य पटुत्वात् । यथा हि तदनास्रवमपि सम्भवति तथा आस्वा-दनासम्प्रयुक्तमपीत्यभिप्राय । मौलप्रतिस्पर्धित्वादास्वादनासमुत्पत्तिसद्भावादित्याचार्यसङ्घभद्र । *Sakv* p 682. For details, see *LVPAk* VIII pp 178—183

[३] Folio No 147 is lost In this lost folio the *Adv* might have discussed the following topics —(१) सामन्तकाना ध्यानान्तरिकाना च क स्वभाव ? (२) शुद्धकादीना ध्यानारूप्याणा कथ लाभ ? See *Akv* VIII 14—16 and 22—23

# अष्टमाध्याये

## तृतीयपादः ।[1]....

[VIII B, 6 Fol 148 a ]...[व्यु]त्क्रान्तकसमापत्तिं[2] समापद्यन्ते तदप दिश्यते—

[ 555 ] चत्वारो ध्यायिनः प्रोक्ताश्चतुर्ध्यान[वि]दर्शना(ना)त् ।
सम्पद्विपत्तिसंज्ञाद्या हानपत्त्यादिवेदिनः ॥[3]

चत्वारो हि ध्यायिनो भगवतोक्ता: । "तेषामेकः समापत्तौ विपत्तिसंज्ञी, द्वितीयो विपत्तौ सम्पत्तिसंज्ञी, तृतीयः सम्पत्तौ सम्पत्तिसंज्ञी, चतुर्थो विपत्तौ विपत्तिसंज्ञी" इति[4] । (2)एते हानस्थितिविशेषोत्कर्षध्यानभेददर्शन(न)योगा(त्) चत्वारो भवन्ति ॥

क. पुनरत्र ध्याता कानि वा ध्यानध्येयध्यानफलानि ?[5] तदपि दिश्यते—

[ 556 ] ध्याता प्रोक्तस्तथा ध्येयं ध्यानं ध्यानफलं तथा ।
सर्वमेतच्चतुष्टयं पूर्वमेव विस्तरेणाभिहितम् ।[6] भवतस्तु
अभिदेरकदोषत्वान्नास्त्यात्मादिचतुष्टयम् ॥

न हि तवैतच्चतु(3)ष्टयं सिद्धम् औपनिषदसांख्यवैशेषिकादिपरिकल्पित-प्रमातृप्रमाणप्रमेयप्रमाणफलानि पूर्वमेवोक्तदोषाणि ॥[7]

---

[1] The beginning portions of this *pāda* are lost  V supra, p 415, n 3

[2] V infra, *Ad kārikā* 566

[3] This topic is not discussed in *Akb*  V supra, p 247

[4] Cf चत्तारो मे भिक्खवे झायी—इधेकच्चो झायी समापत्ति यव समानं विपत्तीति पस्सति, इधेकच्चो झायी विपत्ति यव समानं समापत्तीति पस्सति, इधेकच्चो झायी समापत्ति यव समानं समापत्तीति पस्सति, इधेकच्चो झायी विपत्ति यव समानं विपत्तीति पस्सति । *VM* p 342

[5] This topic is not discussed in *Akb*

[6] This discussion is lost in the lost portions. V supra, p. 22, n. 1.

[7] *Ibid*

किं पुनः कर्मानुष्ठानान्मोक्षो भवति, आहोस्विज्ज्ञानानुष्ठानादिति ?[१] तत्र ब्रूमः—

[ 557 ] कर्मानुष्ठानतो मोक्षो ज्ञानानुष्ठानतस्तथा ।
व्यापारे सति सद्भावाद्याथात्म्यावगमेऽपि च ॥

त्रीणि खलु कर्माणि । दानशी(4)लभावनाख्यान्यनुष्ठाय दश च ज्ञानानि धर्मस्वसामान्यलक्षणसंमोहप्रतिपक्षभूतान्यनुष्ठाय परं ब्रह्म प्राप्नोति नान्यथेति । तदेतदाचिकित्स्यते—

[ 558 ] कर्म त्वत्र द्विधा ज्ञेयं पुण्यापुण्यक्रियाक्रिये ।

तत्र खलु

पुण्यक्रिया त्रिधा प्रोक्ता विरतिस्तद्विधोदिता ॥

कर्मादिचिन्तायाम् ॥

[ 559 ] ज्ञानं तु नैष्ठिकं ज्ञेयं यथापूर्वमुदाहृतम् ।
(5)अतोऽन्यद्भजते यस्तु खलीनं चर्वयत्यसौ ॥

यस्तु मन्यते पश्वाद्यालंभ(भ)नादिभिः कर्मभिः भोक्तृभोग्यान्तरपरिज्ञानादिभिश्च मोक्षो भवति स वक्तव्यः 'खलीनं चर्वयते(ति) ।' यस्मात्

[ 560 ] परपीडाप्रवृत्तत्वाद्वधलोभानृतादयः ।
अपायहेतवो ज्ञेयाः श्रेयोद्वारविबन्धिनः ॥

हिंसानृतलोभादयो हि दोषाः कुगतिग(6)मनहेतवो न स्वर्गापवर्गगमनोपायाः । शास्त्रचोदिता हिंसा नाधर्म इति चेत्[२] । न । शास्त्रलक्षणो(णा)परिज्ञानात् । कथम् ? यस्मात्

[ 561 ] युक्तार्थचोदनाद् दुःखत्राणाद्दोषानुशासनात् ।
शास्त्रमित्युच्यतेऽतोऽन्यज्ज्ञेयं वार्तिकभाषितम् ॥

यत्खलु प्रमाणत्रय[३]विरुद्धार्थं वाक्यम्, यच्च पापकेभ्यः कर्मभ्यः कुगतिगमनहेतु(7)भ्यो निवारणेन त्रायते, यच्च रागद्वेषमोहाननुशास्ति तद्वाक्यं

[१] This topic (*kārikās* 557-562) is not discussed in *Akb*

[२] V. supra, p. 169.

[३] *Pratyaksha-anumāna-āgama.*

शास्त्रमित्युच्यते। नान्यदिति। तस्मादन्यदनाप्तवचनम्। न। वेदमन्त्राणा विषोपशमनसामर्थ्यदर्शण(ना)त्। प्रत्यक्ष हि प्रमाण बलीयस्तत्पूर्वके च द्वे प्रमाणे त्रयीधर्माभिहिते प्रमाणमिति। तत्रेदं प्रत्युच्यते—

[ 562 ] पारसीकादिमन्त्राणा विषोत्सद[8]बलं क्वचित्।
दृश्यते न तु सर्वस्मिन्नरिष्टाद्यनिवर्तणा(ना)त् ॥

दृष्ट हि सामर्थ्यं पारस्वी(सी)कशवरकापालिकादिमन्त्राणामपि न तु तैर्मन्त्रैः पापनाशोऽभ्युपगम्यते भवद्भिः, न च सर्वस्य विषय(म) प्रशमयन्ति; तद्गतारिष्टादीना(दिना) मरणदर्शणा(ना)त्। यदि च शास्त्रचोदिता हिंसा मन्त्र सामर्थ्याद्धर्माङ्ग सम्पद्यते कस्मान्न[9]मन्त्रसामर्थ्यादेव पशु घातयति? किं शस्त्र पातनगलाम्रेडकाद्युपक्रमानुष्ठानेन? मन्त्रसामर्थ्यादेव च पिष्टकृतपुरोडाशाना स्वर्गगमनहेतारपूर्वस्याभिव्यक्तिर्भवत्वल पश्वादिवधेनेति। दृष्ट च मन्त्राणा विषोपशमने सामर्थ्यं न तु विनाहारपानादिभि क्षुत्तृष्णोपशमनादिषु। एव मन्त्रा[VIII A 6 Fol 148 b][1]णा विषोपशमने सामर्थ्यं भवतु। मा भूत्पाप विनाशन इति ॥

यदप्युच्यते भवद्भि। वैतानकर्मानुष्ठातारो ब्राह्मणा एव मोक्षधर्मन्य धिक्रियन्ते नेतरे वर्णा इति तदपि डिम्भाभिहितमेव सता प्रतिभाति।[1] यस्मात्

[ 563 ] रागाद्यैर्दुष्यते चित्तं श्रद्धाद्यैश्च विशुध्यते।
विप्रस्यापि यतस्तस्माद् गुणवानेव मुच्यते ॥

यथौषध विशुद्ध[2]कोष्ठस्यैवारोग्य जनयति नोत्पनवातादिदोषस्य। तस्माद्भव्यजातीय श्रद्धादिगुणपरिभावितात्मा श्वपाकोऽपि मोक्षधर्मन्य धिक्रियते। न चतुर्वेदो रागद्वेषमोहादिदोषाश(र)ीकृतचित्तभूमिरिति। अल मतिप्रसङ्गेन प्रकृतमेव प्रस्तूयताम्। तदिदमारभ्यते—

[ 564 ] शुद्ध चतुर्विधं हाण(न)भागीयादि यथाक्रमम्।
न्यूनतुल्य[3]बलोत्कृष्टनिर्मलानुगुण हि तत् ॥[2]

चतुर्विधं खलु शुक्लं हानभागीय स्थितिभागीयं विशेषभागीय निर्वेध भागीयम्। एषमाख्यमन्यत्र भयाभ्रात्। तद्धि त्रिविधं विशेषभागीयं हित्वा ॥

किं पुन(म)स्या लक्षणम्?

[1] This is not discussed in Akb
[2] Cf चतुर्धा शुद्धं हानभागीयादि यथाक्रमम्। Ak. viii. 17 ab

[ 565 ] क्लेशस्त्वोपरिमस्थाननीरजस्कानुवर्ति वा ।[१]

यथाक्रमं खलु क्लेशोत्पत्त्यनुगुणं हानभागीयं, स्वभूम्यनुगुणं स्थिति(4)भागीयमूर्ध्वभूम्यनुगुणं विशेषभागीयमनास्रवानुगुणं निर्वेधभागीयम्। तस्मादनास्रवमुत्पद्यते।

अथैषां चतुर्णां कति कस्मादनन्तरमुत्पद्यन्ते ?

द्वे त्रीणि त्रीणि च द्वे वा हानि(न)पत्त्याद्यनन्तरम् ॥[२]

हानभागीयस्य खल्वनन्तरं द्वे उत्पद्येते हाण(न)स्थितिभागीये। स्थितिभागीयस्य त्रीण्यन्यत्र निर्वेधभागीयात्। विशेष(5)भागीयस्यापि त्रीण्य[न्य]त्र हाण(न)भागीयात्। निर्वेधभागीयानन्तरं तदेवैकमिति ॥

[ 566 ] व्युत्क्रान्तकसमापत्तिरर्हतोऽक्रोप्यधर्मणः ।[३]

स खल्वेषार्हतोऽकोप्यधर्मण एव निष्क्लेशत्वात्समाधिवशित्वाच्च। दृष्टिप्राप्तस्य यद्यपि तीक्ष्णेन्द्रियत्वात्समाधौ वशित्वं न तु निष्क्लेशा सन्ततिः। समयविमुक्तो यद्यपि निष्क्लेशो न त्वस्य समा(6)धौ वशित्वमिति।

कथं पुनरियमुत्पाद्यते ?

तत्प्रयोगो द्विधा भूमिर्गत्वागत्य(म्य) जिगीषया ॥[३]

[ 567 ] धर्मभूम्युत्क्रमेणाष्टौ शुद्धकाख्यादनास्रवम् ।
शुद्धकाच्च तृतीयं स्वं निष्ठा शुद्धाच्च निर्मलम् ॥[४]

'गत्वे'त्यनुलोममष्टौ भूमीः समापद्य। 'आगम्ये'ति प्रतिलोमं समापद्य। 'द्विधे'ति सास्रवानास्रवा। 'जिगीषये'ति जयं चिकीर्षन्य(7)र्मभूम्युत्क्रमेण जेतुकामः। शुद्धकादनास्रवं 'शुद्धकाच्च तृतीयं स्वं।' 'निष्ठा' तु शुद्धादनास्रवम्। स खल्वेव विजित्यानास्रवाश्च सप्त पश्चात्सास्रवा प्रथमाद्ध्यानात्सास्रवं तृतीयं समापद्यते। तस्मादाकाशानन्त्यायतनं तस्मादाकिञ्चन्यायतनमेवं पुनः प्रतिलोमं निर्जित्यानास्रवा अप्येकविलङ्घिता अनुलोमं (8)प्रतिलोमं च समापद्यते। एष प्रयोगो व्युत्क्रान्तकसमापत्तेः।

---

१ Cf क्लेशोत्पत्तिस्वभूम्यूर्ध्वानास्रवानुगुण हि तत् ॥ Ak VIII 17 cd

२ Cf द्वे त्रीणि त्रीणि चैक च हानभागाद्यनन्तरम्। Ak VIII 18 ab

३ Cf व्युत्क्रान्तकसमापत्ति। Ak VIII 19 a

४ Cf. गत्वागम्य द्विधा भूमिरष्टौ दिलङ्घितकलङ्घिता ॥ Ak VIII 18 ab

यदा तु प्रथमा सास्रवा तृतीयमनास्रवं ध्यानं समापद्यते तस्मात्सास्रवमाकाशानन्त्यायतनं तस्मादनास्रवाकिञ्चन्यायतनमेव पुनः प्रतिलोमम्। तदा विसभागतृतीयद्रव्यगमना(1) दभिनिष्पन्ना भवति।[१] अतिविप्रकृष्टत्वान्न चतुर्थं समापद्यते। ता च त्रिषु द्वीपेषु समापद्यते॥

[ 568 ] स्वोर्ध्वा एवोपजन्यन्ते ध्यानारूप्यभवः शुभाः।
भवाग्रस्थस्त्वगत्यादौ निर्मलामवलम्बते॥[२]

भवाग्र भवाग्रे च समुखीक्रियते। अधश्च यावत्कामधातोरेव शेषाणि स्वस्यां च भूमावधश्चेति। ऊर्ध्वो[VIII A 7 Fol 149 b][3] [पपन्ना नाधरां समापत्तिं समु]खीकरोति वैयर्थ्यात्। न हि तत्रानास्रवो मार्गोऽस्ति संसारमूलत्वात्। न च विनाऽनास्रवेन(ण) मार्गेण तत्रत्या क्लेशा हन्तुं शक्यन्ते। चैतन्यरूपं पुरुषमालम्ब्य तद्वैराग्यमिति चेत्। न। युष्मत्पुरुषस्य क्रियावत्त्वे सत्त्व(त्वा)नेकत्वैकत्वापपत्ते संसर्गिधर्मित्वोपपत्ते बुद्धिवदिति विज्ञानज्ञानोपलब्धे च(2) ति॥

कस्य पुनर्ध्यानस्य प्राप्त्या कतरद्भाव्यते ?[४] तदनुक्रम्यते—

[ 569 ] नालाद्यध्यानसंप्राप्तौ लौकिकस्यैव भावना।

यदा खलु पृथग्जनः प्रथमं ध्यानं लभते तदास्यानागतं लौकिकमेव भाव्यते।

उप्पादिवर्ज्ये चालब्धे ध्यानान्तरसमुद्भवे॥

---

Cf पथवीकसिणे पन पठमं झानं समापज्जित्वा तत्थेव ततियं समापज्जति ततो तत्थ उग्घाटेत्वा आकासानञ्चायतनं ततो आकिञ्चञ्ञायतनं ति एवं कसिणं अनुक्कमित्वा झानस्सेव एकन्तरिकभावेन उक्कमनं झानुक्कन्तिकं नाम कसिणस्सेव एकन्तरिकभावेन उक्कमनं कसिणुक्कन्तिकं नाम झानस्स चेव कसिणस्स च उक्कमनं झानकसिणुक्कन्तिकं नाम Vm xii 5 Al see झानानुलोमं झानपटिलोमं झानानुलोमपटिलोमं। Ibid xii 4 See VmT pp 374—5 DhsA iii 388 and LVPAk viii pp 173—4

[१] Cf विसभागतृतीयगा। Ak vii 19 b

[२] Cf स्वाधोभूम्याश्रया एव ध्यानारूप्या वृथा वरम्।
आर्याकिञ्चन्यमामुप्याद्भवाग्र स्वाधस्त्रयम्। Ak viii 19 cd 20 ab

[3] This folio is broken on the right A part of about fifteen letters is lost in each line

[४] This topic is discussed very briefly in Akb viii 14 16

चरमभविकस्योष्माविवर्जितेऽ(3)…………गिकस्था(?)नुचितम् । तत्र ध्यानान्तरे प्रथमं सास्रवमेव भाव्यते । उचिते तु वैराग्यलब्धत्वान्न भाव्यते। ऊष्मगतादिषु तु न भाव्यते। तान्येव ध्यानान्तरसंगृहीतानि भाव्यन्ते प्रथमं नानागम्यम् ॥

[ 570 ] वीतरागस्य चालब्धे पूर्वसामन्तके तथा ।

वीतरागस्यानागम्येऽप्यलब्धेऽनुचिते प्रथमं भाव्य(4)[ते]…………… [अ]नागम्यसंगृहीतानि भाव्यन्ते न प्रथमार्यमार्गसादृश्यात् ।

विरक्तस्य तु पूर्वस्य निर्मलस्यैव भावना ॥

वीतरागस्य त्वार्यस्य प्रथमस्यानास्रवस्यैव भावनान्यामे वा[ऽ]भिसमयान्तिकक्षणवर्ज्येषु अनास्रवमेव भाव्यते । शैक्षस्य च द्वाभ्यां क्षणाभ्यामक्षविवर्धने भवाग्रे च सप्तदशसु(5)………… …। एवं नवप्रकारतया [ऽ]कोप्यप्रतिवेधे तत्पृष्ठे च यत्किञ्चिद्भावनामयं संमुखीकरोत्यलब्धं तत्रानास्रवमेव प्रथमं भाव्यते नोभयभावनोच्यते ॥

[ 571 ] न्याममार्गान्वयज्ञाने शैक्षस्याक्षविवर्धने ।
आनन्तर्याह्वये मार्गे दृङ्मार्गे द्वादशक्षणाः ॥

[ 572 ] भवाग्रस्य च वैराग्ये क्षयज्ञानविवर्जिते ।
आकोप्या(6)………… …………॥

[ 573 ] [आ]र्यस्य कामवैराग्ये चरमे मुक्तिवर्त्मनि ।
ज्ञानत्रये त्व(अ)याख्ये च न्यामे[ऽ]नागम्यवर्जिते ॥

[ 574 ] शैक्षस्य रागिणः पूर्वत्रिभूमीन्द्रियवर्धने ।
प्रयोगमुक्तिमार्गेषु कामाद्यध्यानजस्य च ॥

[ 575 ] द्विविधार्हत्वसंप्राप्तौ मुक्तिवर्त्मनि पश्चिमे ।
विरक्तानां च शैक्षाणामभ्यग्रान्यत्रिभूजये ॥

[ 576 ] भावना द्विविधस्यापि

(7)…………………सु सास्रवानास्रवस्यापि प्रथमस्य ध्यानस्य भावना भवतीति ।

नोभयस्य तु भावनाम्।

अनागम्याश्रये न्याम तद्भागीयोऽच्चादिषु ॥

यद्यनागम्य नि श्रितो नियाममवक्रामति, तस्यानागम्यमेव भाव्यते न तु प्रथम ध्यान किञ्चिदपि भाव्यते। यदा खल्वप्यनागम्यान्निर्वेधभागीयान्युत्पादयति[8] [भाव]नया भाव्यते न तु प्रथम ध्यान दर्शनमार्गसादृश्यादित्यविघ्नमेनदिति ॥

[ 577 ] द्वितीयादिष्वनेनैव विधिनाम्युह्य युक्तितः ।
अभिधर्मनयज्ञाने ज्ञेयाऽनागतभावना ॥

द्वितीयादिषु खल्वधिध्यानेष्वनयैव प्रथमध्यानानागताभावनानीत्या तत्र युक्तिमनुसरता यथातन्त्रम[9] ।

ध्याप(न) कस्य किमालम्बनमित्यत इदमनुक्रम्यते।

[ 578 ] सास्वादः स्वभवालम्बः शुभं ध्यानं समन्तदृक् ।
आरूप्याः कुशला मौला नाधोलोकानलम्बिनः ॥[1]

आस्वादनासम्प्रयुक्त स्वभूमिक [भवमालम्बते] सास्रव वस्त्वित्यर्थ । नाधरा भूमिमालम्बते धीतरागत्वाद्योत्तरा तृष्णा[VIII B 7 Fol 149 a ][(1)]परिच्छिन्नत्वात्। नानास्रव कुशलत्वप्रसङ्गात्। कुशल तु ध्यान शुद्धकमनास्रव वा सर्वालम्बन यत्किञ्चिदस्ति सस्कृतमसस्कृत वा। मौलाना तु कुशलारूप्याणामधोभूमिक च सास्रव वस्तु नालम्बनम्। स्वभूम्योर्ध्वभूम्यालम्बन स्यात्। अनास्रव[त्वालम्बनम्। सर्वा]न्वयज्ञानपक्षो न धर्मज्ञानपक्षो नाधोभूमिनिरोध । सामन्तकानन्त[(2)र्यमार्गाणा त्वधराभूमिरालम्बनम् ॥]

[एषाञ्च पु]नस्त्रिविधाना ध्यानारूप्याणाम्

[ 579 ] ध्यानारूप्यैः प्रहीयन्ते निर्मलैर्मौल(न)म(सो) मलाः ।
अधोभूमेस्तु लभ्यन्ते सामन्तैरपि शुद्धकैः ॥[2]

अनास्रवेनै(णै)व ध्यानारूप्येण क्लेशा प्रहीयन्ते न कुशलेन। कुत एव द्विधेन ? धीतरागधाध प्रहीयन्ते तस्यैव तदप्रतिपक्षत्वात्, न स्वभूमौ

[1] Cf सतृष्णा स्वभवाम्ब्बा ध्यान सद्विषय शुभम ॥
न मौला कुशलारूप्या साम्रवाधरगोचरा । *Ak* viii 20 cd, 21 ab

[2] This f lio is broken on the right A part of about fifteen letters is lost in each l ne The rest rati ns given in the square brackets are done with the help f *Akb*

विशिष्टरत(तर)त्वा[(3)श्चोद्‌र्ध्वमिति । ध्यानारूप्यसामन्तके]न[1] शुद्धकेनापि क्लेशाः प्रहीयन्तेऽधोभूमिप्रतिपक्षत्वात् ॥[2]

पुनश्च । सर्वं समाधिं संकलय्य त्रयः समाधय उक्ताः सूत्रे—

[ 580 ] सवितर्कविचाराद्यास्त्रयः[3] प्रोक्ताः समाधयः ।
ध्यानान्तरे स चारोघः सद्वयोऽन्यत्र निर्द्वयः ॥[4]

"सवितर्कः सविचारः समाधिः अवितर्को विचारमात्रोऽवित(4)[र्कोऽ-विचारः" इति[4] । तत्र ध्यानान्तरं तावदवित]र्को विचारमात्रः[5] । सततोघः सवितर्कः सविचारः समाधिः । परतस्त्ववितर्को[ऽ]विचारश्च ॥

पुनः

[ 581 ] सास्रवानास्रवश्चान्य एकादशभ्रुयस्त्रयः ।
आर्याकारमतिद्योताः शून्यताद्यः समाधयः ॥[6]

शून्यताभिधेयः समाधिरप्रणिहित अनिमित्तश्च तृतीयः ॥[7]

---

[1] Cf. अनास्रवेण हीयन्ते क्लेशाः सामन्तकेन च । *Ak.* viii. 21 cd.

[2] See *Saks.* p 681.

[3] Cf. सवितर्कविचारोऽध. समाधि परतोऽद्वय । *Ak* viii. 23 cd.

[4] Cf. तयो समाधी—सवितक्कसविचारो समाधि, अवितक्कविचारमत्तो समाधि, अवितक्क अविचारो समाधि । *Vbh* p. 343. See *Yoga bhāshya*, i 42—44.

[5] 'ध्यानविशेषत्वात्' इति । तदेव मौल प्रथम ध्यान वितर्कापगमाद्विशिष्ट [स] ध्यानान्तरमित्युच्यते इत्यर्थ । 'विशेषाभावात्' इति । यथा प्रथमे ध्याने विशेषो भवति । क्वचिद्वितर्कविचारौ । क्वचिद्विचार एवेति । न तथा द्वितीयादिष्विति । अतो ध्यानेषु न व्यवस्थाप्यते ध्यानान्तरम् ।···*Sakv.* p. 682.

[6] Cf. अनिमित्तः समाकारैः शून्यता नात्मशून्यतः । *Ak.* viii. 1. 10.

[7] Cf. सुञ्ञतो समाधि, अनिमित्तो समाधि, अप्पणिहितो समाधि । *Dīgha*, xxxiii. 1. 10

Alco Cf. परिज्ञायै प्रहाणाय पुन. साक्षात् क्रियां प्रति ।
शून्यतादिसमाधीना त्रिधार्थः परिकीर्तितः ॥

इति वचनाद्येनाकारेण प्रतिभासते स घटाद्याकार. कल्पितस्वभावस्तस्य परिज्ञानार्थं शून्यतासमाधिरुक्त ।···सर्वधर्माभिनिवेशविविक्तमायोपमज्ञानस्य साक्षात्क्रियार्थमनिमित्तः समाधि.। योगिसवृत्या तथ्यरूपस्य परिनिष्पन्नस्याधिगन्तव्यस्वभावत्वात् पुद्गलधर्माभिनिवेशस्य परतन्त्रस्य प्रहाणार्थमप्रणिहित समाधिः । *Aaa.* pp. 536-7.

See *Sakv*. p. 682, *LVPAk* viii. p. 184, notes.

कतमे पुनरेत आ(5) [यांकारा][1] ]वत् षोडशभिरा कारैरित्यतस्त्रयोऽप्यनित्यतादिषोडशाकारमतिद्योता (?)। प्रत्येक तु

[ 582 ] दशाप्रनि(णि)हिताकारा[2] शून्यताया द्वय मतम् ।
अनिमित्तोऽमृताकारैश्चतुर्भि सम्प्रवर्तते ॥[2]

अप्र(निणि)हित खलु समाधिरणि(नि)त्यदु खाकाराभ्या सप्रयुक्तश्चतुर्भि समुदयाकारैश्चतुर्भिश्च मार्गा[(6)कारै] तानात्मा काराभ्या सप्रयुक्त । अनिमित्त समाधिर्निरोधाकारैश्चतुर्भिर्निरोधाकारादिभि सप्रयुक्त ॥

[ 583 ] विमुक्तेद्विप्रकाराया प्राप्तये निर्मला पुन ।
निमोक्षसु(मु ?)खशब्देन त एवाविष्कृतास्त्रय ॥[3]

रागविरागाच्चेतोविमुक्तिरविद्याविरागा[द्] प्रज्ञाविमुक्ति ।[4] तस्य विमुक्तिद्वयस्य(7) [आ]विष्कृतानि । तत्र शून्यताया सप्रयुक्त समाधि शून्यतासमाधि । न प्रणिधत्ते भवमित्या(त्य)प्रणिहित । दशनि मित्ता[5]पगमादनिमित्त तदालम्बनसमाधिरणि(नि)मित्त ॥ पुन

[ 584 ] त्रयोऽपरसमाध्याख्या शून्यताशून्यतादय ॥[6]

तेषा त्रयाणा समाधीनामुत्सर्गोपायप्रदर्श[(8)नार्थं शून्यताशून्यतादय त्रय ] समाधयोऽभिधर्मेऽभिहिता

---

[1] See *Vm* xxi 55—60

[2] Cf प्रवततेऽप्रणिहित सत्याकाररतपर । *Ak* vi 1 24 cd

[3] Cf शुद्धामला विमलास्तु ते विमोक्षमुखत्रयम् । *Ak* viii 25 ab
Also Cf तयो म विमोक्ख विमोक्खा—सु[ञ्ञ]तो विमोक्खो अनिमित्तो विमोक्खो अप्पणिहितो विमोक्खो । *Pat sambh da* ii p 35 —अनिच्चतो मनसिकरोन्तो अधिमो क्खबहुलो अनिमित्तविमोक्ख पटिलभति । दुक्खतो मनसिकरोन्तो पस्सद्धिबहुलो अप्पणि हितविमोक्ख पटिलभति । अनत्ततो मनसिकरोन्तो वेदबहुलो सु[ञ्ञ]तविमोक्ख पटिलभति । *Ib d* p 58 For deta ls see *DhsA* iii 483—492 *Vm* 70—73 *Sakv* p 682 *LVPAk* viii p 187

[4] V supra p 204 n 1

[5] पञ्चविषयस्त्रीपुरुषत्रिसस्कृतलक्षणानि दश । *Akb* viii 24

[6] Cf शून्यताशून्यताद्याख्यास्त्रयोऽपरसमाधय । *Ak* viii 25 cd
See *Sakv* p 683

द्वयमालम्बतेऽशैक्षं शून्यतोऽनित्यतस्तथा ॥[१]

[ 585 ] त्रयमप्रतिसंख्याख्यमन्त्यो गृह्णाति शान्ततः ।[२]

शून्यताद्यालम्बनत्वात्तन्नाम अशैक्षं समाधिं द्वावपरसमाधी आलम्बेते। शून्यताशून्यता अशैक्षं शून्यतासमाधिमालम्बते शून्याकारेण। अप्रणि[(१)हिता-प्रणिहितोऽप्यशैक्षमप्रणिहितम्] अनित्याकारेण। [न] दु:खतो न हेत्वादितोऽनास्रवस्य अतल्लक्षणत्वात्। न मार्गाकारैर्दूषणीयत्वात्[३]। अनिमित्ता-निमित्तत्वात् समाधिरशैक्षस्यानिमित्तस्याप्रतिसंख्यानिरोधमालम्बते। शान्ता-कारेणानास्रवस्य प्रतिसंख्यानिरोधाभावात्। न निरोधप्रणीतनिःसरणा-कारैर[III B, 2 Fol 150 a [४]]णि(नि)त्यतानिरोधसाधारणत्वादव्याकृतत्वाद-विसंयोगाच्च।

ते पुनरेते समाधयः

एकादशभुवः सर्वे सास्रवा नृप्तकोपिनः[५] ॥

तत्र सास्रवा आर्यमार्गद्वेषित्वान्मनुष्येषूत्पाद्यन्ते। अकोप्यस्यार्हतः एकादशभुवश्च सप्तसामन्तकानि हित्वाऽन्यास्वेकादशसु भूमिषु कामधात्व-नागम्यध्यानान्तरध्यानारूप्येषु।

(२)पुनः

[ 586 ] समाधिभावनाध्यानं सुखाय प्रथमं शुभम्।
दर्शणा(ना)यान्यभिज्ञोक्ता प्रज्ञाभेदाय यात्तिकाः ॥[६]

"चतस्रः खलु समाधिभावनाः। अस्ति समाधिभावना आसेविता भाविता बहुलीकृता दृष्टधर्मविहाराय संवर्तते" इति विस्तरः।[७] कुशलं खलु

---

[१] Cf आलम्बेते अशैक्ष द्वौ शून्यतश्चाप्यनित्यत । *Ak* viii 26 ab

[२] Cf अनिमित्तानिमित्तस्तु शान्ततोऽसंख्यया क्षयम् ॥ *Ak* viii 26 cd

[३] 'न मार्गाकारैर्दूषणीयत्वात्' इति। साऽशैक्ष समाधिर्दूषयितव्यो न च मार्गाकारा दूषणीया इति। अतो न मार्गाकारैस्तं समाधिमालम्बते। *Sakv* p 683

[४] This folio is misplaced in the sheet No III B

[५] Cf सास्रवा नृप्तकोप्यस्य सप्तसामन्तवर्जिता । *Ak* viii 27 ab

[६] Cf समाधिभावना ध्यान शुभमाद्य सुखाय हि ॥
दर्शनायाऽस्यभिज्ञोप्ता धीभेदाय प्रयोगजा । *Ak* viii 27 cd, 28 ab

[७] 'अस्ति समाधिभावना आसेविता भाविता बहुलीकृता दृष्टधर्मसुखविहाराय संवर्तते। अस्ति दिव्यचक्षुरभिज्ञा ज्ञानदर्शनाय संवर्तते। अस्ति प्रज्ञाप्रभेदाय संवर्तते। अस्ति आस्रवक्षयज्ञानाय संवर्तते' इति सूत्रम्। *Sakv* p 684

प्रथम ध्यान शुद्धकमनास्रव या दृष्टधर्मसुखविहाराय समा(3)धिभावना। तदधिकचा[त्] अन्यान्यपि ज्ञेयाणि(नि)। नावश्य सम्परायसुखविहाराय (य), परिहीणार्ध्नोपपन्न परिणि(नि)र्वितदभावात्। दिव्यचक्षुरभिज्ञा दर्शणा(ना)य समाधिभावना।[१] प्रयोगना खनु सर्वे गुणास्त्रैधातुकाणा(ना) स्वया प्रज्ञाप्रभेदाय समाधभावनात्(ना) ॥

[ 587 ] योऽन्त्यो वज्रोपमे ध्याने सर्वक्लेशक्षयाय सा।[२]

य(4)श्चतुर्थे ध्याने वज्रोपम समाधि स आस्रवक्षयाय समाधिभावना।

सूत्रं चैतत्समाख्यात बुद्धेनात्मोपनायिकम् ॥[३]

यतश्चतुर्थमेव ध्यानमुक्तमिति ॥

अभिधमप्रदीपे[४] विभाषाप्रभाया वृत्तौ अष्टमस्याध्यायस्य तृतीय पाद समाप्त ॥

---

Cf चतस्सो समाधिभावना। अत्थि समाधिभावना भाविता बहुलीकता दिट्ठ धम्मसुखविहाराय संवत्तति ञाणदस्सनपटिलाभाय सतिसम्पजञ्ञाय आसवान खयाय संवत्तति। *Ang* II p 44

[१] आह। दिव्यचक्षुरभिज्ञा ज्ञानदर्शनाय सवतत इत्युक्तम। न च दिव्यचक्षुरभिज्ञासमाधिभावना। अत्रोच्यत अथ फले हेतूपचार यस्य हेतो समाधिभावनाय दिव्यचक्षुरभिज्ञाफल तत्र फल हेतूपचार ज्ञानदर्शनाय समाधिभावनेति यथा पुनरय पक्ष षड्विधा भक्तिमार्गवी इति ध्यानमगृहीता एव मानसा विमुक्तिमार्गा षडभिज्ञा उपामवायमवनन। तथा विमुक्तिमार्गाणा समाहितवान। पूर्वक एव तु पक्षो अभिधर्मकोशचिन्तकानामिष्यवगन्तव्यम। *Saku* p 685

[२] Cf वज्रोपमेऽन्त्य यो ध्यान सास्रवक्षयभावना ॥ *Ak* VIII 28 cd

[३] आत्मोपनायिका किलया भगवतो धर्मोपदेशिता इति। आत्मना उपनायिका आत्मनो दर्शिकेत्यथ बोधिसत्त्वो हि कमान्तप्रत्यवेक्षणाय निष्क्रान्तो जम्बूमूले प्रथम ध्यानमुत्पादितवान्। बोधिमूले च देवपुत्रमार भक्त्वा प्रथम याम दिव्य चक्षुरुत्पादितवान्। तत द्वितीय यामे सत्त्वानां च्युत्युपपत्तिमकटस्थानभिवीक्ष्य तत परित्राणाय मध्यम याम ध्यानविमोक्षसमापत्ता सम्मुखीकृतवान। तेऽस्य प्रायोगिका गुणा प्रज्ञाप्रभेदाय जायन्ते। ततोऽनन्तराय याम चतुर्थ ध्यान निश्रित्य नियामसमवक्रम्य यावत् वज्रोपमेन समाधिना सर्वमास्रवप्रहाण कृतवानिति। यस्माच्चैव आत्मोपनायिका धर्मदेशना। *Saku* p 685 See *M* sutta 4

[४] V supra p 347 n. 1

# अष्टमाध्याये

## चतुर्थपादः ।

निर्दिष्टाः समाधयः । अतः परं समाधिसन्निश्रिता (5)गुना(णा) निर्दिश्यन्ते ।

अप्रमाना(णा)नि चत्वारि मैत्री करुणा मुदितोपेक्षा च ।[1] अप्रमाणा(नाः), सत्त्वाधिष्ठानप्रवृत्तेरप्रमान(ण)पुण्यनिर्वर्तकत्वादप्रमेयेषु फलहेतुत्वाच्च ।

अथाप्रमाणानां कः स्वभावः ?

[ 588 ] चतुर्णामप्रमाणानां मैत्र्यद्वेषस्तथा कृपा ।
मुदिता प्रीतिरेकेषामुपेक्षाऽलोभ इष्यते ॥[2]

अद्वे(6)षस्वभावा मैत्री । तथा करुणा अद्वेषस्वभावा । कस्तर्ह्येतयोरप्रमान(ण)योर्विशेषः ? उभयोरद्वेषात्मकत्वेऽपि मैत्री सत्त्वापरित्यागवर्तिनो द्वेषस्य प्रतिपक्षो हर्षाकारप्रवृत्ता च । करुणा ताडनपीडनाभिप्रायवर्तिणो(नो) द्वेषस्य प्रतिपक्षो दैन्याकारप्रवृत्ता च । इत्यस्ति विशेषः । "सौमनस्यस्वभावा(7) मुदिता"[3] इति पौराणाः । उपेक्षाप्यलोभात्मकैव । एषोऽप्रमाणानां स्वभावः ।

कस्माच्चत्वार्येव न न्यूनान्यधिकानि वा ?[4]

---

[1] चतस्सो अप्पमञ्ञायो । इधावुसो भिक्खु मेत्तासहगतेन चेतसा एकं दिसं··· सब्बधि सब्बत्तताय सब्बावन्तं लोकं मेत्तासहगतेन चेतसा विपुलेन महग्गतेन अप्पमानेन अवेरेन अब्यापज्झेन फरित्वा विहरति । करुणासहगतेन चेतसा · मुदितासहगतेन चेतसा···उपेक्खासहगतेन चेतसा···विहरति । *Dīgh.* xxxiii. 1. 11. See *Vbh.* p. 272-282; *Dhs A.* iii. 399-416; *Vm* ix 1-124, *Yogasūtra*, i. 33, iii. 23.

[2] Cf. अप्रमाणानि चत्वारि व्यापादादिविपक्षतः ।
मैत्र्यद्वेषोऽपि करुणा मुदिता सुमनस्कता ॥ *Ak.* viii. 29.

[3] V. supra, p 52, n. 3

[4] Cf. कस्मा च चतस्सो वा ति ?···
विसुद्धिमग्गादिवसा चतस्सो, हितादिआकारवसा पनासं ।
कमो, पवत्तन्ति च अप्पमाणे ता गोचरे येन तदप्पमञ्ञा ॥ *Vm.* ix. 107.

[ 589 ] व्यापादस्य विहिंसाया अरतेस्तद्द्विपस्तथा ।
प्रतिपक्षोऽयमाख्यातो दमनार्थं स्वचेतसः ॥

सूत्र उक्तम्—[1]"मैत्री आसेविता भाविता बहुलीकृता व्यापादप्रहाणाय संवर्तते । करुणा विहिंसाप्रहा(b)णाय । अरतिप्रहाणाय मुदिता । कामराग व्यापादप्रहाणायोपेक्षा[2] ॥"

वृत्ति पुनर्दृष्टव्या—

[ 590 ] सुखाधाने सुखा मैत्री दुःखनाशोन्मुखी कृपा ।
मुदिता मोदनानिष्ठा सत्त्वा एम्येव पश्चिमा ॥[3]

[ 591 ] द्रष्टव्या वृत्तिरेतेषा

आकारस्तु पुनः कथं प्रतिपत्तव्य इति ? तदुपदिश्यते—

आकारैः सुखितादि(c)भिः ।[4]

सुखिता बत सन्तु सत्त्वा[5] इति मनसि कुर्वन् मैत्रीं समापद्यते । दुःखिता बत सत्त्वा इति करुणाम् । मोदन्ता बत सत्त्वा इति मुदिताम् । सत्त्वा इत्येव मनसि कुर्वन्नुपेक्षा समापद्यत माध्यस्थ्यात् ।

एभ्यस्त्वन्यतमेनापि ब्रह्मसायुज्यमश्नुते ॥[6]

---

[1] Cf. निस्सरण हेतं आवुसो व्यापादस्स यदिदं मेत्ता चेतोविमुत्ति निस्सरण विहेसाय यदिदं करुणा चेतोविमुत्ति, निस्सरण अरतिया यदिदं मुदिता चेतोविमुत्ति निस्सरण रागस्स यदिदं उपेक्खा चेतोविमुत्ति । *Dīgha* xxxiii 2. 2.

[2] The Kośakara discusses one more point कामरागप्रतिपक्ष क्व किन्तु ... अशुभा । मैथुनरागस्यापहर्तृत्व अशुभायाः । एव तु युज्यते मैथुनरागस्याशुभा मातापितृरागस्योपेक्षेति । *Akb* viii. 29 b

[3] See *Vm* ix. 92.

[4] Cf. उपेक्षाख्यात आकार सुखिता दुःखिता बत ।
मोदन्तामिति सत्त्वाश्च *Ak* viii 30 abc.

Also cf कतमेहि पञ्चहाकारेहि अनोधिसो फरणा मेत्ता चेतोविमुत्ति ? सब्बे सत्ता अवेरा अब्यापज्झा अनीघा सुखी अत्तानं परिहरन्तु *Paṭisambhidā* ii. p 130

[5] Cf सुखिनो वा खेमिनो होन्तु सब्बे सत्ता भवन्तु सुखितत्ता । *Suttanipata* 145

[6] See *Tevijja sutta* *Dīgha* xiii 81

एभ्योऽप्रमाणेभ्य एकेण(ना)पि भावितेन ब्रह्मत्वं[१] प्रतिलभ्यत इति ॥

[III. A, 2. Fol. 150b.[२]](1)किमालम्बना अप्रमाणाः, कति भूमिका चेत्यपदिश्यते—

[ 592 ] तृषु कामावलम्बीनि ध्यानयोर्मुदिताम्य(द्व)योः ।
षड्भौमानि तदा(द)न्यानि केचिदिच्छन्ति सप्तसु ॥[३]

[४]मैत्रीकरुणामुदितास्त्रयः कामावचरसत्त्वालम्बनाः । उपेक्षा अनियता इति । येषां तावद्धा[वना]मयान्येतानि मुदिता च सौमनस्येन्द्रियं तेषां प्रथमद्वितीययो(2)र्ध्यानयोर्मुदिता । नोर्ध्वं सौमनस्येन्द्रियाभावात् । अन्यानि त्रीण्यप्रमाना(णा)नि षट्सु भूमिष्वणा(ना)गम्ये ध्यानान्तरे चतुर्षु ध्यानेषु । केचित् पुनः चिन्तामयान्यप्येतानि प्रमोद्यं च प्रीतेर्धर्मान्तरं [इति] तेषां सप्तभूमिका । प्रामोद्यस्य वेदनाद्वयसंप्रयोगित्वात् ।[४] उक्तान्यप्रमाना(णा)नि ॥[५]

अथ कति विमोक्षाः ।

[ 593 ] विमोक्षाः कथिता अष्टौ[६] (8)तेषांद्वावशुभात्मकौ ।

---

[१] तत्थ सिया—कस्मा पनेता…ब्रह्मविहारा ति वुच्चति ?… विभगे कस्मा अप्पमञ्ञा ति वुत्ता ति ? वुच्चते - सेट्ठट्ठेन ताव निद्दोसभावेन चेत्थ ब्रह्मविहारता वेदितब्बा । सत्तेसु हि सम्मापटिपत्तिभावेन सेट्ठा एते विहारा ।…एतेहि सम्पयुत्ता योगिनो ब्रह्मसमा व हुत्वा विहरन्ती ति… *DhsA* III 411-412.

[२] V supra, p —n.

[३] Cf कामसत्त्वास्तु गोचरा ।

ध्यानयोर्मुदिताऽन्यानि षट्सु केचित्तु पञ्चसु ।
न तैः प्रहाण नृष्वेव जन्यन्ते त्र्यन्वितो ध्रुवम् ॥ *Ak* VIII 30 d, 31.

[४-४] Cf. प्रथमद्वितीयध्यानयोर्मुदिता । सौमनस्यत्वात् । अन्यानि त्रीण्यप्रमाणानि षट्सु भूमिषु, अनागम्य ध्यानान्तर ध्यानेषु च । सप्रयोगमौलग्रहणात् । केचित् पुन अनागम्य हित्वा पञ्चस्वेतानीच्छन्ति । दशस्वित्यपरे । कामधातु सामन्तकानि च प्रक्षिप्य समाहितासमाहितमौलप्रयोगग्रहणात् । *Akb* VIII. 31 ab

[५] The Kośakara discusses one more topic --किमप्रमाणैरपि क्लेशप्रहाण भवति ? *Akb.* VIII. 31 c.

[६] अट्ठ विमोक्खा । रूपी रूपानि पस्सति । अय पठमो विमोक्खो । अज्झत्त अरूपसञ्ञी एको बहिद्धा रूपानि पस्सति । अय दुतीयो विमोक्खो । सुभन्त्वेव अधिमुत्तो

क्रममौदारिकम् । (6)अतः सूक्ष्मसूक्ष्माख्यं भवाग्रानन्तरं तां समापत्तिं समापद्यन्ते । तथा समापन्नानां तु

व्युत्थानचित्तमप्यस्याः स्वं शुद्धं निर्मलं त्वधः ॥[1]

सास्रवानास्रवत्वात् । तद्व्युत्थानचित्तस्य सास्रवेन(ण) चेद्व्युत्तिष्ठते भावाग्रिकेण । अनास्रवेण चेदाकिञ्चन्यायतनभूमिकेन ॥

अथैते विमोक्षाः किं विषयाः ?

[ 596 ] कामाप्तचरदृश्यार्था वि(7)मोक्षाः प्रथमास्त्रयः ।

कामावचरं रूपावचरमेषामालम्बनं यथायोगमशुभतः शुभतश्च ।

अन्ये त्वन्वयधीपक्षस्वोर्ध्वदुःखाद्यवेक्षिणाः ॥[2]

आरूप्यविमोक्षाणां स्वभूम्यूर्ध्वभूमिकं दुःखमालम्बनं तद्धेतुनिरोधौ च । सर्वचान्वयज्ञानम(प)क्ष्यो मार्ग ऊर्ध्वाधरभूमिसंगृहीतः, अप्रतिसंख्यानिरोधश्च। उ(8)क्ता विमोक्षाः ॥

[ 597 ] सूत्रेऽभिभवसंज्ञाख्यं प्रोक्तमायतनाष्टकम् ।
विमोक्षाधिकवृत्त्येतच्चित्तैश्वर्यप्रदर्शकम् ॥[3]

सूत्रे[4] भगवता अष्टौ अभिभ्वायतनान्याख्यातानि[5] "अध्यात्मं रूपसंज्ञी

---

[1] Cf. स्वशुद्धकाधरार्येण व्युत्थान चेतसा ततः । *Ak.* VIII. 33 cd.

[2] Cf. कामाप्तदृश्यविषया प्रथमाः ये त्वरूपिण ।
तेऽन्वयज्ञानपक्षोर्ध्वस्वभूदुःखादिगोचराः ॥ *Ak.* VIII. 34.

[3] Cf अभिभ्वायतनान्यष्टौ द्वयमाद्यविमोक्षवत् ।
द्वे द्वितीयवदन्यानि पुन शुभविमोक्षवत् ॥ *Ak.* VIII. 35.

[4] For the different versions in *sūtra* and *Abhidharma*, see *DhsA.* III. 392.

[5] अज्झत्त रूपसञ्ञी एको बहिद्धा रूपानि पस्सति परित्तानि सुवण्णदुब्बण्णानि, तानि अभिभुय्य 'जान मि पस्सामी'ति एव सञ्ञी होति । इद पठम अभिभायतनं ।··· अप्पमाणानि···। अज्झत्त अरूपसञ्ञी···परित्तानि···।···अप्पमाणानि···।···नीलानि···। ···पीतानि···।···लोहितकानि···।···ओदातानि···। *Digha*, XXXIII. 3 1.

वहिर्धा रूपाणि पश्यति सुवर्णदुर्वर्णानि खलु रूपाणि अभिभूय जानाति, अभिभूय पश्यति, एव सज्ञी च भवतीदं [1] प्रथममभिभ्वायतनम्। अध्यात्म रूपसंज्ञी वहिर्धा रूपाणि पश्यत्यप्रमाणानि सुवर्णदुर्वर्णानीति विस्तरो यावदिद् द्वितीयमभिभ्वायतनम्। एवमध्यात्ममरूपसंज्ञी वही रूपाणि पश्यति परीत्तान्यप्रमाणानि चेति चत्वारि। अध्यात्ममरूपसंज्ञ्येव च बहिर्धा रूपाणि पश्यति नीलपीतलोहितावदात " [Remaining folios lost]

[ अभिधमदीपे विभाषाप्रभाया वृत्तौ अष्टमस्याध्यायस्य चतुर्थ पाद समाप्त ॥]

[ अष्टमोऽध्याय समाप्त ॥]

[ अभिधमदीपे विभाषाप्रभावृत्ति समाप्ता ॥ ]



## १. अभिधर्मदीपकारिकाणामकारादिक्रमेण सूची ॥

## I. Index of the *Kārikās* (a and c) of the *Abhidharma-dīpa*.

(Numbers refer to *kārikās*)


| | | | |
|---|---|---|---|
| अकर्तृकाग्निरोहाश्च, | 388 | अनागम्य तथैवाद्यम्, | 60 |
| अकार्यप्रवणो लोकः, | 259 | अनागम्यं तु निश्रित्य, | 59 |
| अकोप्यधर्मनो(णो) ध्याने, | 512 | अनागम्याश्रये ध्याम, | 576 |
| अक्लिष्टाव्याकृत चित्तम्, | 121 | अनास्रवेन(ण) मार्गेण, | 58 |
| असंकादशकोपेता, | 104 | अनित्यास्ते तु विज्ञेया, | 143 |
| अक्षोतमावरणान, | 494 | अनिमित्तोऽमृताकारैः, | 582 |
| अङ्गान्याद्ये शुभे पञ्च, | 542 | अनुशेते द्विधात्वाप्त, | 344 |
| अङ्गान्येनानि कथ्यन्ते, | 546 | अन्तग्राहार्थमन्यस्तु, | 273 |
| अजय्यैकमनेकेन, | 531 | अन्तरं सुमहच्छास्तु, | 533 |
| अजातवर्तमाना च, | 133 | अन्तराभविकप्रेत, | 102 |
| अजातैर्मान(न)संरेतैः, | 297 | अन्त्यानन्तर्यमार्गस्था, | 187 |
| अतीताद्यद्धि धात्वर्थम्, | 583 | अन्यधातुपरिज्ञानम्, | 95 |
| अतोऽन्यद्भजते यस्तु, | 559 | अन्यपूर्वनिनिवासादौ, | 418 |
| अतोऽन्यमिह यो ब्रूयात् | 235 | अन्यमाक्रोयते पूर्वम्, | 430 |
| अतोऽभिसमयान्त्यास्यम्, | 490 | अन्त्या मार्गान्वयज्ञाने, | 407 |
| अदोष्वस्त तदास्वाद्यम्, | 541 | अन्ये(न्ये) चत्वार्युपेक्षे द्वे, | 545 |
| अधिमोक्षकृताऽन्येषाम्, | 525 | अन्ये ध्याने प्रयोगादि, | 410 |
| अधिष्ठानं मृतस्यापि, | 530 | अप्रमत्यग्निणि(नि)र्दंष्यम्, | 159 |
| अधिष्ठाय तु निर्माणम्, | 530 | अन्यत्र धर्मधात्वर्या(र्था)त्, | 71 |
| अधोऽपि मध्यम कर्म, | 177 | अन्यत् पूर्वकन्तेयम्, | 340 |
| अधोभूमिस्तु लभ्यन्ते, | 579 | अन्यत्र रूपशब्दाभ्याम् | 17 |
| अध्वाद्या स्कन्धपर्याया, | 52 | अन्यस्त्वाद्यमदार्येयम्, | 343 |
| अनधिष्ठानुवत्स्वं च, | 389 | अन्यथाऽन्यथिकल्पाय, | 302 |
| अनन्तर्यास्तत्र दृङमार्गा, | 424 | अन्यसर्वत्रगैर्बद्धः, | 325 |
| अनागताध्वतीतस्य, | 319 | अन्यापेक्षयोऽप्य सवन्य, | 306 |
| अनागताश्चतस्तु, | 403 | अन्या प्रतिपदास्त्यान्या, | 295 |
| अनागतास्तु भाव्यन्ते, | 399 | अन्ये स्कन्धपर्यायः, | 596 |
| अनागतास्तु भाव्यन्ते, | 405 | अन्ये नामादय शब्दात्, | 143 |

अन्यं षट् सप्त वाऽष्टौ वा, 90
अन्योन्यसंग्रहो ज्ञेयः 10
अनर्घ्यं जिनोत्पत्तिः, 237
अनपत्रेतरौ ज्ञेया, 560
अप्राप्यग्राहिणः सिद्धाः, 46
अप्राप्यार्थं मनश्चक्षुः, 45
अभिज्ञाफलताऽभिज्ञा, 521
अभिज्ञाफलचित्तेन, 527
अभिन्नमन्त्रयज्ञाने, 577
अभिध्यास्यात्तथा द्वेषः, 370
अभिध्यादित्रयं सहन्, 202
अभिध्यादीन्यपि त्रीणि, 188
अभ्युद्गच्छति कामाप्तम्, 121
अमूर्ता ध्वनिना सार्धं, 35
अमूर्ता नीरवाधिकाः, 38
अमेयं बोधिसत्त्वाय 249
अयुक्तविहितं कर्म, 222
अयोगा(गो) नानुविध्वसात्, 169
अरणा प्रणिधिज्ञानम्, 509
अरणा संवृतिज्ञानम्, 511
अर्थतत्त्वान्यथावादः, 196
अर्थप्रत्यायकं प्राज्ञैः, 144
अर्थाग्र्या खलु सर्वत्र, 515
अर्हता दशधा त्वेतद्, 532
अर्हत्सान्तानिका ह्येते, 509
अवस्था जायते काचित्, 323
अविज्ञप्तिरतोऽन्यस्या, 167
अविद्याऽन्यस्तु मूलत्वाद्, 361
अविद्यायाश्च तृष्णा च, 291
अव्यक्ताच्यवनादानम् 195
अव्याहततद्व्यस्थापि, 291
अव्याहतमभिज्ञेयम्, 531
अव्याहतस्य ते तु द्वे, 208
अव्याहतस्वभावत्वात्, 253
अव्याहतान्निवादीति, 299
अशुभा तु दशान्यत्र, 203

अशैक्षस्योऽपि बोद्धव्यः, 436
अष्टाकारं द्वितीयं तु, 501
अष्टाना नीरजस्कानाम्, 461
अष्टाभिर्दर्शन-सेकैः, 108
अष्टाभिर्निरशुभः, 109
असंभिन्नार्थविषयम्, 385
असंवरो दमप्राप्तिः, 17
[असाधारण] वैशिष्ट्यात्, 54
असिद्धेरस्तदोषत्वात्, 556
अस्वीकाराद्विपक्षत्वात्, 286
अहं ममेति या दृष्टिः, 269
अहेतावपये चैव, 271
आकारपतितं ज्ञानम्, 394
आकाराः खलु चत्वारः, 406
आकाराः खलु सर्वेऽपि, 400
आकाराः सकला ज्ञेयाः, 403
आकाराः सकलाऽन्यत्र, 402
आकाराः सकलास्तत्र, 404
आकारात्तुल्यजातीयात्(न्), 397
आख्याता धातवः सूत्रे, 470
आगमादुपपत्तेश्च, 141
आगमाद्युक्तितश्चैव, 138
आग्नेयात्सप्तकादेकः, 152
आत्तसामान्यसंज्ञाका, 260
आत्मीयाधस्त्रयैकोर्ध्व, 329
आदिलाभे सह प्राक् च, 131
आदौ तथा प्रयुक्तत्वात्, 553
आद्य दृष्टिद्वय कामे, 289
आद्यध्यानफल द्वे ते, 527
आद्यन्तवत्क्षये द्वे, 506
आद्यस्त्वाभो नवांशः, 92
आद्यन्त्ये द्वे दृशौ काङ्क्षा, 366
आद्यवत् परावृत्ते, 343
आद्या दत्तविपाकेन, 220
आद्याऽन्या तदभिव्यक्त्या, 513
आद्ये ध्यानेऽस्थिता मौले, 458

| | | | |
|---|---|---|---|
| आद्ये प्रीतिसुखोपेक्षा, | 549 | आशयादिमृदुत्वादेः, | 248 |
| आध्यात्मिकेति साङ्ख्यात्, | 153 | आसंज्ञिकं विपाकः, | 134 |
| आनन्तर्यपथाः कामे, | 186 | आस्रवक्षयधीसज्ञम्, | 500 |
| आनन्तर्यपथे कामे, | 206 | आस्वादवत्सतृष्ण यत्, | 541 |
| आनन्तर्यपथे चोर्ध्वम्, | 491 | आह्रीक्यमनपत्राप्यम्, | 382 |
| आनन्तर्यपथे मुक्तौ, | 410 | आह्रीक्यमनपत्राप्यम, | 383 |
| आनन्तर्यपथे मुक्तौ, | 417 | इच्छत्यध्वत्रयं यस्मात्, | 301 |
| आनन्तर्यविमुक्त्याख्यौ, | 439 | इतरैरपि सामान्याः, | 510 |
| आनन्तर्याह्वये मार्गे, | 571 | इतोऽन्यधातुजाता तु, | 379 |
| आनुपूर्विकपद्भूयो, | 436 | इत्येवमादयः शब्दाः, | 119 |
| आप्तोक्तिस्वक्रियालिङ्गाः, | 128 | ईर्ष्यया दौर्मण(न)स्येण(न), | 380 |
| आभास्वराच्च वैराग्यम्, | 69 | उच्छिन्नशुभमूलस्य, | 23 |
| आयद्वारं ह्यायतनम्, | 5 | उद्भूतार्थं सुखार्थं च, | 430 |
| आयुष्परिग्रहादेवम्, | 152 | उपक्लेशास्तु विज्ञेयाः, | 371 |
| आर्यसन्तानिका जाता, | 511 | उपेक्षया तु सर्वेषाम्, | 379 |
| आर्यस्य कामवैराग्यम्, | 67 | उपेक्षायुर्मणो(नो)युक्तो, | 99 |
| आर्यस्य कामवैराग्ये, | 573 | [उपे]क्षावेदिताभावात्, | 548 |
| आर्यस्य खलु वैराग्य, | 416 | उपेक्षावेद्यमन्यत्र, | 176 |
| आर्याः शिष्यगुणाः सप्त, | 163 | ऊर्ध्वजस्तु सुखेनार्य, | 97 |
| आर्याकारमतिद्योता, | 581 | ऊर्ध्वभूमिकमानेज्यम्, | 175 |
| आरूप्यकृत्स्नयोस्त्वन्त्याम, | 415 | ऊष्मभ्योऽधिकमामप्याप्ति, | 395 |
| आरूप्यधातुजातस्य, | 355 | ऊष्मादिवर्ज्य चालब्धे, | 569 |
| आरूप्या कुशला मौला, | 578 | रि(ऋ)द्धिचित्तद्वयाश्रिता, | 523 |
| आरूप्याः सर्वगा सार्थम्, | 337 | रि(ऋ)द्धिपादास्तु चत्वारः, | 445 |
| आरूप्याणां विमोक्षाणाम्, | 414 | ऋद्धिश्रोत्राद्यभिज्ञास्तु, | 520 |
| आरूप्याख्यविमोक्षादौ, | 419 | रि(ऋ)द्धौ श्रोत्रेऽन्यचित्ते, | 517 |
| आरूप्या भावनाहेया, | 346 | रि(ऋ)द्ध्यादौ तु गुणा सर्वम्, | 417 |
| आरूप्याप्तं दशानां तु, | 331 | एकं त्रीणि द्वयं चैव, | 211 |
| आरूप्याप्तास्त्रिधात्वाप्त, | 329 | एकं वा पञ्च वा षड् वा, | 354 |
| आरूप्याप्ताश्च चत्वार, | 338 | एककारित्वनाशाभ्याम्, | 140 |
| आरूप्यार्थाऽभिमतिना च, | 203 | एकमप्यस्तु सकृद्या, | 160 |
| आरूप्यावचराः सार्धम्, | 333 | एकस्य चक्षुषः कार्यं, | 45 |
| आरूप्याप्याहृतत्वानम्, | 34 | एकस्य कुशलः सर्वे, | 529 |
| आरूप्याप्याहृते हित्वा, | 33 | एकात्मत्वं विभज्यात्मम्, | 294 |
| आलोचनोपलब्धिस्थान्, | 44 | एकादशभिरन्याभ्याम्, | 100 |
| आशिर्लिङ्गमुच्चार्य, | 311 | एकादशाभिरात्तिसु, | 92 |

क्रियारम्भप्रयातत्वात, 453
क्लिष्टं विकल्पकं चापि, 25
क्लिष्टं सभिन्नलापित्वम्, 198
क्लिष्टमेव हि विज्ञानम, 14
क्लिष्टाक्लिष्टदृशौ तद्वत्, 43
क्लिष्टानां कुशलानां च, 132
क्लिष्टे स्वङ्गद्वय प्रज्ञा, 544
क्लिष्टे ध्याने चतुर्थे तु 545
क्लिष्टे षडशुभे तु द्वे, 114
क्लेश उत्पद्यते कश्चित्, 359
क्लेशस्योपरिमस्थान, 565
क्लेशात्यन्तक्षयोऽन्त्येन, 384
क्लेशोत्पत्तौ सुखादीनाम्, 78
क्षणोन्त्यो भावनामार्गान्, 425
क्षयज्ञान मता बोधि, 441
क्षयमप्रतिसंख्याख्यम्, 585
क्षान्तिज्ञानानि भाव्यन्ते, 489
क्षिप्राभिज्ञाल्पबुद्धस्तु, 440
क्षेत्राशयविशेषाच्च, 182
क्षयात्तु पृथगाकाशात् 14
खनिर्मित्तोऽवग्रहादृष्ट, 551
गतिधर्मप्रभेद मत्, 497
गतिप्रज्ञप्त्युपादानम्, 138
गन्धधातुं रसाख्यं च, 65
गुणदुःखोपकाराद्यै, 248
गुणो विशेषण धर्मो, 119
गोत्रद्वारसमूहादीन्, 391
गोत्रलाभे तु विज्ञेया, 400
घ्राणं जिह्वा च कायश्च, 57
चक्षुः पश्यति रूपाणि, 44
चक्षुः सभागतावत्ता, 42
चक्षुरादिद्विभावेऽपि, 53
चक्षुर्यान् हि रूपाप्तम्, 61
चक्षुर्विज्ञानधातुं तु, 64
चक्षुस्तदुपलब्धिश्च, 39
चक्षुःस्पर्शस्यतमा, 398
चतस्र संवृतिज्ञानम्, 518
चतस्रो दृक्पथा दृष्टौ, 186
चतस्रोऽनागतास्तद्वत्, 407
चतस्रोऽप्येकमत्येकम, 362
[चतुः पञ्चेषु स्कन्धेषु], 536
चतुरः परिजानाति, 67
चतुर्णामपि चाक्षेप, 179
चतुर्णामप्रमाणानाम्, 588
चतुर्णामप्यधिष्ठानम्, 194
चतुर्थो पञ्चमो षष्ठो, 475
चतुर्थाऽऽरूप्यगाम्यन्य, 426
चतुर्भिः कायसुखवान्, 99
चतुर्भिस्त्वमलेनार्थम्, 206
चतुर्ष्वेकेन बुद्धयोध्वम्, 486
चत्वारः कुशलाद्रूपा, 594
चत्वारः परिवृत्ते स्वे, 333
चत्वारि स्थित्यनास्तित्वे, 139
चत्वारि स्मृत्युपस्थाना, 483
चत्वारो ध्यायिनः प्रोक्ता, 555
चत्वार्येकभुवो द्वे वा, 210
चलत्वादूर्ध्ववृत्तित्वात, 292
चितानां परमाणूनाम्, 317
चित्तं चैतसिकं साधम्, 111
चित्तं प्रधानमेतेषाम्, 120
चित्तमार्यैतदाकारम्, 554
चित्तवेगादिविच्छेदे, 172
चित्ताख्या सप्त सालम्बा, 35
चेतना न क्रियामार्गं, 200
चेतश्चतुष्टयायोगात, 137
चेतसो सह विज्ञया, 123
छन्दं वीर्याङ्गभूतत्वात, 81
छन्द स्पर्शोऽधिमोक्षश्च, 112
छन्दव्यायाममीमांसा, 445
जगदावरभागीयम्, 365
जाता यत्राप्रहीणाश्च, 296
जाति स्थितिजरा, 139

ज्ञानिद्वये निराकृत्य, 477
जात्यादयो न पारार्थ्यात्, 85
जनीहाक्तृंमाध्यत्वान्, 309
जन्मनस्त्रिभिराक्षेप:, 178
जहात्यनुशयांस्त्रींश्च, 68
ज्ञातपूर्वेषु भावेषु, 28
ज्ञानं तु नैष्ठिकं ज्ञेयम्, 559
ज्ञानत्रये श्रयात्वे च, 573
ज्ञानवध्यास्तु ये तस्मिन्, 268
ज्ञानमात्रात्क्रियाऽभिज्ञा, 517
ज्ञेय प्रवृत्तिबाहुल्यात्, 358
ज्ञेयो दृष्टिपरामर्श:, 270
ज्ञेयोऽन्तरणेष्वेव, 11
तं सत्यपक्षं प्रणिपत्य, 1
त एकादशभिर्युक्ता, 103
त एवैकोनविंशत्या, 105
तच्च दृष्टफलं विद्यात्, 183
तच्च्युत्युत्पत्तिबुद्धास्यम्, 499
ततस्तत्रैवावधूनि, 423
ततस्तत्रैव मूर्धान्तो, 395
ततोऽप्यनिर्मलं ज्ञेयम्, 207
ततोऽपि यद्वीयोऽर्थम्, 16
तत्कर्म भूयसां सद्रूप, 320
तत्पूर्वंन्वर्णमनोऽप्यत्र, 303
तत्परश्चविषयन: पञ्च, 431
तत्प्रयोगी द्विधा भूमी:, 566
तत्कार्यं समततम्, 433
तत्कार्यस्पिनस्पाधा, 218
तत्पत्रत्वं तु वैषाङ्चित्, 12
तत्समयेऽपि चार्येन, 30
तथागतवर्त्म प्रोक्तम्, 502
तथा चतुरधिष्ठानम्, 232
तथाऽन्तरणमाप्यारी, 418
तथा पार्श्मनात्मकादि, 233
तथा सप्तिमस्पता वेला, 323
तथाप्याप्तपर्यादिवलं, 122
तथा संसर्गिससर्गात्, 118
तथाऽऽरूप्याप्तमार्गेन्तु 171
तथैव च विपाकश्च, 149
तथैव चित्तवंशानाम् 117
तथैव त्रय आरूप्या:, 539
तयोपयोगा दृग्वर्जम्, 361
तथ्योहाविधुरत्वाच्च, 368
तदनित्यत्ववद् सत्वे, 387
तदन्यान्यववोध्यानि, 457
तदन्ये निर्मले स्वशे, 88
तदवाप्तेरशेशोऽसौ, 434
तदाख्या येऽन्यसूत्रोक्ता: 9
तदा जहाति षट् त्रिपत्, 66
तदा देवमनुष्याणाम्, 225
तदा सयोजन त्वार्य:, 63
तदालम्बिनि विज्ञाने, 351
तदाश्रये फले चापि, 161
तदुक्त्या च तदुक्तत्वात्, 390
तदुच्छेदध्रुवग्राही, 269
तदूर्ध्वमपि चार्यस्य, 408
तद्गुणालम्बना श्रद्धा, 465
तद्गोचरे तु विज्ञाने, 367
तद्दृश्यविषयोऽन्योऽन्यो, 283
तद्दृष्टिहेयजातीनाम्, 277
तद्विधो हता सर्वत्र, 497
तद्भूम्यपुनरुत्पत्ते, 183
तद्धेतो हता प्रोक्त, 477
तद्धेता सत्तिरमेऽन्येपि, 538
तद्विचित्तविभूयेशी, 552
तद्देव च कौकृत्यम्, 124
तद्देव द्वितीयेऽपि, 334
तद्देव द्वितीयेऽपि, 338
तद्देव मनोऽभिध्या, 202
तद्देवोपघातोऽपि, 314
तद्विकाराद्विकारित्वम्, 2
तद्विपृष्ठेऽराज्ञी च, 553

तद्विपक्षसमाङ्गं च, 255
तद्विशेषः पुनस्त्रयः, 427
तद्व्यवस्था त्रिधोद्धव्या, 479
तर्काभिमानिनस्त्वन्ये, 300
तल्लाभो ध्यानवत् ज्ञेयः, 528
तस्मादनुशयाद्धातोः, 62
तस्मादन्यत् त्रिभिः 21
तस्माच्च बोधिमार्गोऽन्यः, 235
तस्यास्तु समुखीभावः 595
तस्यैवं पश्यतः साक्षात्, 385
तादात्म्यं प्रतिघातत्वात्, 145
तानि ज्ञानानि वक्ष्यामि, 476
तावाद्यध्यानयोरन्त्ये, 593
तास्वेकरस्याध्वसु ज्ञेयौ, 461
तिस्रः प्रत्वसमुत्पन्नाः, 415
तिस्रो मार्गविधिर्मार्गैः, 473
तिस्रो विद्या मतास्त्र्यध्व, 522
तिस्रस्तु नवमे विद्यात्, 411
तीक्ष्णेन्द्रियस्य मौलेषु, 440
तुरीया तु प्रकाश्योदितः, 514
तुल्येऽपि साधनोपाये, 239
तृतीयवत्परावृत्ते, 340
तृतीया द्वयमुक्तस्य, 221
तृतीया द्वयसङ्कुला, 219
तृतीया शब्दसंस्कारा, 514
तृतीये खल्वपि स्वे च, 342
तृतीये पञ्चमे प्रज्ञा, 544
तृतीयोभयमुक्तस्य, 217
तैजसा सप्तकान्त्यैषा, 151
तेजोनामाप्तबीजस्त्वम्, 205
ते स्वभ्यासमहेयस्य, 212
तेनावभुनक्षणेनैते, 56
तेषां सहभुवो धर्मा 281
ते हैमरूप्यताम्रायसवका, 238
तैस्तैर्विरोध्यते सर्वैः 116
त्रयाणां(णां) वर्णावृत्तिज्ये, 74
त्रयाणां(णा) त्रीण्यपि, 50
त्रयोऽन्त्यास्त्रिविधा, 40
त्रयोऽप्यरससाध्याख्याः, 584
त्रयो रूपभवादन्याद्, 349
त्रिकालेभ्यस्तु मौलेभ्यः, 165
त्रितयशुभसंज्ञाद्याः, 474
त्रिद्वीपनरकोत्पन्नाः 101
त्रिधाऽप्युपशमनादिभ्यः, 275
त्रिधातुसंगृहीतास्तु, 351
त्रिधा ध्यानानि मौलानि, 539
त्रिधेह द्वयमार्गस्य 26
त्रिध्यानकामवैराग्ये, 487
त्रिपुण्यकृतिवस्त्वाद्याः, 232
त्रिवेदनानुशायित्वात्, 369
त्रिसत्याधिगमे लाभः, 462
त्रीणि चत्वारि चैकं च, 212
त्रीण्येवाशुभमूलानि, 290
त्र्यधिकैर्दशभिर्युक्ता, 102
त्वक्श्रोत्रव्यञ्जनैः कामे, 96
दश चैकश्च तत्पक्ष्याः, 441
दशधर्मा महाभीमा, 112
दशभिः सचतुष्कैस्तु, 106
दश सावयवा मूर्ता, 36
दशाग्नि(णि)हिताकाराः, 582
दशाष्टौ नव चत्वारि, 91
दशेह तु चतुर्ध्येषा, 265
दर्शना(ना)ख्यतु विशेष, 435
दर्शनापायभिज्ञोक्ता, 586
दानं हि दीयते येन, 243
दातृवस्त्वादिवैशिष्ट्यात्, 246
दाहकास्तोलकाद्यैते, 37
दिव्यमभ्याहृतं श्रोत्रम्, 521
दिव्याक्षिभुग्यभिज्ञायाम्, 412
दुःखं दर्शनहेयादे, 353
दुःखभ्रान्त्यपवादनात्, 271
दुःखहेतुदृगभ्यास, 345

